श्री

हरिदाससंस्कृतग्रन्थमालासमाख्य-

काशीसंस्कृतसीरिज़पुस्तकमालायाः

# ४९

काव्यविभागे (४) चतुर्थपुष्पम् ।

श्रीमम्मटाचार्यविरचितः

# काव्यप्रकाशः ।

दरभङ्गा मण्डलान्तर्गत ठाढीग्रामनिवासिना
श्रीहरिशङ्करशर्मणा मैथिलेन संगृहीतया
नागेश्वरीटीकया समलङ्कृतः ।

काशिस्थ-
न्यायोपाध्याय पं० ढुण्ढिराजशास्त्रिणा संशोधितः

प्रकाशकः—
जयकृष्णदास हरिदासगुप्तः ।
चौखम्बासंस्कृतसीरिज आफिस,
विद्याविलासप्रेस, गोपालमन्दिर के उत्तर फाटक
बनारस सिटी ।

१९८३

KASHI-SANSKRIT-SERIES;
(HARIDÂS SANSKRIT GRANTHAMÂLÂ.)
49.
(Kavya section No 4.)



# KÂVYA PRAKÂSA.

BY

ŚRĪ MAMMAṬÂCHÂRYA.



With a Commentary Called

NÂGEŚWARI by Pandit Srī Hari Shankara Sarma



EDITED BY

NYÁYOPÂDHYÂYA

PANDIT ḌHUNḌHI RÂJ SHÂSTRI



Printed Published & sold by—
JAI KRISHṆA DÂS HARI DÂS GUPTA.
The Chowkhambâ Sanskrit Series Office,
Vidyâ Vilâs Press, North of Gopâl Mandir Benares City.



1926

श्रीवाग्देव्यै नमः

# भूमिका।



श्रीमद्गुरुप्रेरणयाऽत्र ग्रन्थे सुभूमिकालेखनतत्परोऽभवम्।
स्यादत्र कुत्रापि प्रमादशुद्धिस्तां बुद्धिमन्तो हि क्षमध्वमार्याः॥१॥

विदाङ्कुर्वन्तु विविधविद्याविद्योतितस्वान्ताः वाग्वैलक्षण्यविजितवाचस्पतयो विद्वन्मण्डलीमण्डनाः विद्वरिष्ठाः। यत्किल काव्यप्रकाशो हि नामा ग्रन्थः सर्वेषु साहित्यालङ्कारग्रंथेषु चूडामणित्वमुपगतो विभाति नितराम्। अस्य हि विद्वत्सर्वस्वभूतस्य ग्रन्थप्रवरस्याद्यावधिकालं बहुभिर्मान्यैर्गण्यविद्वद्भिरार्यैः सुविहिताः नैकविधाष्टीका विद्यन्ते मुद्रिताः भूतले ह्यस्मिन् तत्प्रचारश्च विद्यते कोविदसंसारे प्राचुर्येण, किं च मम मते—

दुर्बोधं यदतीव तद्धि जहति स्पष्टार्थमित्युक्तिभिः
स्पष्टार्थेष्वतिविस्तृतिं विदधति व्यर्थैः समासादिकैः।
अस्थानेऽनुपयोगिभिश्च बहुभिर्जल्पैर्भ्रमं तन्वते
श्रोतॄणामिति वस्तुविप्लवकृतः सर्वेऽपि टीकाकृतः॥

इति भोजोक्तरीत्या बहुशो ग्रन्थेषु टीकाकर्तृशैलीदर्शं दर्शं प्रचलितासु द्वात्रिंशतोप्यधिकासु टीकासु साधारणजनबोधनाक्षमत्वं मूलग्रन्थस्य याथातथ्येनानवलोकयन् श्रीवाग्देव्याः पुरुषावतारेणावतीर्णानां श्री १०८ मम्मटशर्म्मविदुषां काव्यप्रकाशविधातॄणाम् हार्दभावं सामान्यपण्डितपरिषद्यपि विशेषविदुषां विदुषामिव प्रकाशयितुमनाः स्वीयेन जनुषा विदेहनगरप्रान्तं श्रीठाढ़ीग्राममलङ्कुर्वाणान् सर्वतन्त्रस्वतन्त्रश्रीशिवशंकरशर्मणामवरजान् छात्रसंसदि प्रलब्धप्रचुरकीर्तीन् विद्वत्समाजे सकलेऽपि विश्रुतयशसो नैकविधन्यायव्याकरणकाव्यसाहित्यग्रन्थभाष्यकर्तॄन् बरेलिजा-

नपदानां सौभाग्येनाष्टदशहायनकालादप्यधिकसमयतः बरेलिनगरस्थश्रीविष्णुविद्यालये सुहृद्भावेन प्रथमाध्यापकपदं समास्थाय विविधशास्त्राणि सम्यगध्यापयतः प्रत्यब्दं बहून् छात्रान् विदुषो विधाय चतुर्दिक्षु विद्यालयसंस्थापकानां "श्रीमद्रामकृष्णदासानां भूतपूर्वमहन्तवराणां" किं च वर्तमान "महन्तमहावीरदासाभिधेयानां" च कीर्तिंपताकाः संस्फारयतः परमकारुणिकतया प्रतिवत्सरं छात्रहितमाकलय्य निजलेखन्या कमप्येकं ग्रन्थरत्नं सुव्याख्याय मुद्राप्य जगति प्रकाशयतः सुगृहीतनाम्नः सर्वतन्त्रस्वतंत्रान् कैलासवासिनां प्रातःस्मरणार्हाणां श्री १०८ महामहोपाध्यायानां शिवकुमारशर्मणां प्राथमिकाशिष्यान् श्री ५ श्रीहरिशंकरझाशास्त्रिणो निजकृपालुगुरून् बह्वीभिः प्रार्थनावाग्भिः सन्तोषयन् याचनामकरवम् काव्यप्रकाशटीकाकरणमुद्दिश्य । प्रावर्तन्त च ते तथा कर्तुम् सोऽयमिदानीं तदशेषकृपाफलरूपो टीकाग्रन्थः विद्यते विद्वत्समक्षम् । उदाराशयाः गुणैकपक्षपातिनो विद्वांसः विहाय दूरतः गुणवत्सु मात्सर्यं चाण्डालमिव स्निग्धदृष्ट्या वास्तविकत्वं विलोकयन्तः टीकाकृत्श्रमं सफलयन्तु । यद्यप्यस्मिन् ग्रन्थे—माणिक्यचन्द्रः सरस्वतीतीर्थः, जयन्तभट्टः, सोमेश्वरः, विश्वनाथचक्रवर्ती, आनन्दकविः, श्रीवत्सलाञ्छनः, प्रदीपकारः, कमलाकरभट्टः, महेश्वरनरसिंहठक्कुरः वैद्यनाथः, भीमसेनः, नागोजीभट्टः, महेशचन्द्रः, इत्यादिकाः बहवो व्याख्यातारः व्याख्याः व्यधुः परं च नैतादृशी कापि व्याख्या ययाऽनायासेन मन्दधियोऽपि ग्रन्थकर्तृहार्दं भावं ज्ञातुं शक्नुयुरिति । काव्यप्रकाशस्य टीकाबहुत्वे च हेतुरयम् । यदयं हि काव्यप्रकाशाभिधो निबन्धप्रवरः सर्वांशं नितरामुत्कर्षमावहति । किंचात्र यस्यकस्यचिदंशस्याभिप्रायोऽतीव दुरधिगमः यं सम्यक्परिनिष्ठितमतयोऽपि याथातथ्येन मनोविषयं कर्तुमक्षमाः । अत एवास्य बह्व्यष्टीकाः संदृष्टाः । महेश्वरभट्टाचार्यैरप्युक्तम्—

'काव्यप्रकाशस्य कृता गृहे गृहे टीकास्तथाप्येष तथैव दुर्गम' इति।

'अस्मद्गुरुपादैरुपर्य्युक्तहीनतामवलोक्य तथाविधटीकाकरणे प्रवृत्तं यथाऽस्य हार्दं दुरधिगमस्थलं च सुखबोध्यं सत् सहृदयजनहृदयाह्लादि भवेन्नितराम्। श्रीमम्मटाचार्य्याणामितिवृत्तं तत्त्वतो नोपलब्धं गवेषणापरैर्यद्यपि तथापि निश्चिनोम्यत्र विषये जनश्रुतिमिमां सोपपत्तिकाम् यत्किल शब्दव्यापारविचाराख्यग्रन्थस्य रचयितारो महाशया एत एव सोऽयं ग्रन्थः पुण्यपत्तनस्थराजकीयप्रधानविद्यालये दृष्टिपथमलङ्करोति साम्प्रतिकेऽव्यनेहसि। जनुषा कं जनपदमलञ्चक्रुरिमे ह्युदाराशया इति निर्णेतुं प्रवृत्तः काश्मीरं जनपदमेतेषां निवासभूमिं जाने यतो हि श्रीमम्मटेतिनाम देशान्तराऽसुलभानां जैयट कैयट वज्रट उवट औवट उद्भट रुद्रट धम्मट कल्लट मल्लट लोल्लट अल्लट इत्याद्यभिधानानां तुल्यत्वमनुधावति परमाचार्य्याणाम्। एतेषां काश्मीरदेशवासित्वादेव काव्यप्रकाशदर्पणे पंचमोल्लासे (२३८ पृष्ठे) चिक्कुपदस्य व्याख्यावसरे श्रीविश्वनाथेनोक्तम्—चिक्कुपदं हि काश्मीरदेशभाषायां प्रसिद्धमश्लीलार्थबोधकम्—इति। इत्याद्यनुसंधानपरैः काश्मीरदेशीयतैव स्वीक्रियतेऽहत्तमैर्विद्वद्भिरार्यैः।

श्रीमन्तोऽस्मद्गुरुपादाः काव्यप्रकाशस्यानेकविधासु टीकासु सतीष्वपि यत्परिश्रमबाहुल्यमनपेक्ष्य परोपकारबद्धहृदयत्वेनेमां टीकां विधाय वाराणसीस्थ—काशीसंस्कृतसीरीज—पुस्तकमालाध्यक्षाणां बाबू जयकृष्णदासगुप्तमहोदयानामनुग्रहेण तत्साहाय्येन च मुद्राप्य विद्वत्समक्षं प्रकाशितवन्तोऽतो महोदारचरितानामेतेषां परिश्रमफलरूपया टीकयाऽनया विद्वत्समाजस्य बहूपकृतं भविष्यतीति विद्यते मे मनसि विपुलतराशाया अवकाशः।

अस्यां हि टीकायां प्रमाददाद्दोषाद्यत्र कुत्रापि स्खलनं भवेत्तत् गुणैकपक्षपातिनो विद्वद्वरिष्ठाः संशोध्य शान्तेन स्वान्तेनैव

सूचयितुं दयालवो भविष्यन्ति येन संस्करणान्तरे तत्सम्वलनं शोधितं भवेत् । किं बहुना विज्ञापितेन विज्ञसमाजे ।

प्रथम चैत्र शुक्ल ११ बुधे
सं० १९८३ शकः १८४८

निवेदकः—
विद्यारत्नः पण्डित ब्रजेन्द्रचन्द्रशर्ममिश्रः
शास्त्री, आयुर्वेदविशारदः
आयुर्वेदाचार्यः, कविसार्वभौमः।
श्रीकल्पद्रुमचिकित्सानिकेतनम्
बरेली।



# काव्यप्रकाशस्थविषयानुक्रमणिका ।

( प्रथमोल्लासे )



( द्वितीयोल्लासे )



( तृतीयोल्लासे )



( चतुर्थोल्लासे )

इति ।

ॐ नमः शिवाय ।

# काव्यप्रकाशः ।

## श्रीहरिशङ्करशर्म्मप्रणीतनागेश्वरीटीकोपेतः ।

---

ग्रन्थारम्भे विघ्नविघाताय समुचितेष्टदेवतां ग्रन्थकृत्परामृशति—

---

चञ्चच्चन्द्रकरस्पर्शसंकुचद्गिरिजानने ।
नयने संक्षिपञ्छम्भुः सस्मितः पातु सर्वदा ॥ १ ॥

काव्यप्रकाशरसिकैः कतिभिः कवीन्द्रैः
संग्रथ्यमानविवृतीर्बहुधा विलोक्य ।
तत्त्वार्थरत्ननिचयं तत एव लब्ध्वा
नागेश्वरीकरणतत्पर एष दीनः ॥ २ ॥

ठाढीपुरीमधिवसन्हरिशङ्करो यः
श्रीमद्रमेश्वरनराधिपलब्धलेखः ।
तेनेयमद्भुतगिरां कविकुञ्जराणां
कृत्या कृता कृतिरियात्समतां लघुत्वात् ॥ ३ ॥

निजकारिकां व्याख्यातुकामो महामहोपाध्याय-मम्मटो निजमङ्गलस्यावतरणिकामाह—ग्रन्थेति । ग्रन्थो नाम सम्बन्धप्रयोजनज्ञानाहितशुश्रूषाजन्यश्रुतिविषयशब्दसन्दर्भः । सम्बन्धश्च वाच्यवाचकत्वरूपः । आरम्भशब्दस्य झटिति विघ्नविघातसामर्थ्यप्रतिपत्तिरूपप्रयोजनवत्या लक्षणया तत्प्राक्कालोऽर्थः । विघ्नविघातायेति । विघ्नो नाम प्रतिबन्धकादृष्टविशेषः तस्य विघातः विशेषध्वंसस्तस्मै "तादर्थ्ये चतुर्थी" । समुचिताम् प्रतिपाद्यविषयानुरूपाम् इष्टदेवताम् ग्रन्थकृन्मनोऽनुकूलकविभारतीरूपाम् ग्रन्थकृत् मम्मटोपाध्यायः परामृशति स्तौति । तथा च ग्रन्थारम्भप्राक्कालिकविघ्नविघातफलकसमुचितेष्टदेवताकर्मकग्रन्थकृदभिन्न-मम्मटकर्तृकवर्तमानकालिकपरामर्शानुकूलो व्यापार इति सन्दर्भार्थः ॥

नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥ १ ॥

नियतिशक्त्या नियतरूपा सुखदुःखमोहस्वभावा परमाण्वाद्युपादानकर्मादिसहकारिकारणपरतन्त्रा षड्रसा न च हृद्यैव तैः तादृशी ब्रह्मणो निर्मितिर्निर्माणम् एतद्विलक्षणा तु कविवाङ्निर्मितिः अत एव जयति,

---

ब्रह्मणो जगन्निर्माणापेक्षया कविवाङ्निर्माणस्योत्कर्षहेतून्प्रतिपादयन् ग्रन्थादौ शिष्टपरम्पराप्राप्तमङ्गलमाचरति—नियतिकृतेति । नियतिरदृष्टमामुष्मिकस्वर्गादिजनकं तत्कृतो नियमः स्वर्गादियोग्यशरीरान्तरोत्पादनद्वारा स्वर्गोपधायकत्वरूपस्तद्रहितां कविनिर्मितौ हि "स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी" ति वचनादनेनैव देहेन स्वर्गप्राप्तेः प्रतिपादनाद् ह्लादैकमयीं सुखमात्रस्वरूपाम् । ब्रह्मनिर्मितिर्हि सुखदुःखमोहस्वभावा । शत्रुकृतपद्ये करुणादिरसे वा काव्याभिनयास्वाद्यमानतादृशायां सुखस्यैवानुभवाच्चाव्याप्तेः । अनन्यपरतन्त्राम् अन्यस्य कविभारतीभिन्नस्य समवायादिकारणस्य परतन्त्रा अधीना न भवतीति ताम् । नवरसरुचिराम् नवसंख्याका रसाः शृङ्गारादयो यस्यां सा नवरसा सा चासौ रुचिरा मनोहरा च तां निर्मितिं निर्माणम् आदधती प्रकाशयन्ती कवेः काव्यकर्तुः भारती काव्याधिष्ठातृदेवता जयति सर्वोत्कर्षेण वर्तते तां स्तौमीति परमार्थः ॥

ब्रह्मसृष्टिस्वरूपं विवृण्वन् कारिकां व्याचष्टे—नियतिशक्त्येति । नियतेरदृष्टरूपायाः शक्त्या स्वभावेन नियतं नियमितं रूपं यस्याः सा सुखदुःखमोहाः स्वभावा यस्याः सा । मोहो भ्रमः । सांख्यमते सर्वपदार्थानां त्रितयात्मकत्वात् । परमाण्वादीति परमाण्वादिकं यदुपादानकारणं समवायिकारणम् । तथा कर्म उत्क्षेपणादिकं पञ्चकमसमवायिकारणम् आदिना दण्डचक्रादिकमीश्वरेच्छादिकं च निमित्तकारणम् । एवं चासमवायिकारणनिमित्तकारणरूपं यत्सहकारिकारणमप्रधानकारणं तत्परतन्त्रा, अथ वा परमाण्वाद्युपादानकारणस्य यत्कर्मादि सहकारिकारणं तदधीनेत्यर्थः । षड्रसा मधुरादिभेदेन षड् रसा यस्यां सा न, च हृद्यैव तैः मधुरादिषड्रसैः हृद्यैव न मनोरमैव न कट्वादीनाममनोरमत्वात् शृङ्गारादीनां सर्वान्प्रति हृद्यत्वमेव । निर्माणमिति निर्मीयते इति निर्माणं जगत् विलक्षणा चारुस्वरूपा जयति उत्कर्षाश्रयो भवति

जयतीत्यर्थेन च नमस्कार आक्षिप्यत इति तां प्रत्यस्मि प्रणत इति लभ्यते ॥

इहाभिधेयं सप्रयोजनमित्याह—

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥ २ ॥

कालिदासादीनामिव यशः । श्रीहर्षादेर्धावकादीनामिव धनम् । राजादिगतोचिताचारपरिज्ञानम् । आदित्यादेर्मयूरादीनामिवानर्थनिवारणम् ।

---

जयतीत्यर्थेन । उत्कर्षेण नमस्कारः अपकृष्टत्वज्ञानबोधनानुकूलः प्रयोक्तृपुरुषविशेषनिष्ठो नमस्कार्यावधिकः करशिरःसंयोगानुकूलो मानसिको व्यापारविशेषः आक्षिप्यते व्यज्यते भारत्यपेक्षया सर्वेषामपकृष्टत्वज्ञाने सर्वान्तःपातिनि स्वस्मिन्नप्यपकृष्टत्वज्ञानं व्यञ्जनया लब्धमित्यनुवदति इति तां प्रत्यस्मि प्रणत इति लभ्यत इति दिक् ॥१॥

प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्त्तत इति न्यायात् प्रयोजनाप्रतिपादन इष्टसाधनताज्ञानाभावात्प्रेक्षावतां प्रवृत्तिर्न स्यादत आह—इहेति । अस्मिन्ग्रन्थे, अभिधेयं तददोषौ शब्दार्थौ इत्यारभ्य वक्ष्यमाणं काव्यं सप्रयोजनं यशःप्रभृतिफलसहितम् आह ग्रन्थकृदिति शेषः ।

काव्यं यशसे कीर्त्यर्थम् अर्थकृते धनकरणार्थम् व्यवहारविदे आचारवेदनार्थं शिवेतरक्षतये शिवात्कल्याणादितरद् अमङ्गलन्तस्य क्षतये नाशार्थं सद्यः श्रवणसमनन्तरमेव परनिर्वृतये परमानन्दार्थं कान्ताया मनोरमायाः सम्मितं तुल्यं तस्य भावस्तत्ता तया उपदेशयुजे युक्तोपदेशाय भवतीति शेषः । यशसे इत्यादिषु तादर्थ्यचतुर्थी । कृत इत्यादिकं सम्पदादिक्विबन्तम् ॥

काव्याद्यशःप्रभृतीनि प्रयोजनानि दृष्टान्तेनोपपादयन् कारिकां व्याकरोति—कालिदासेत्यादि । यद्यपि कालिदासादेरपि धनं धावकादीनामपि यशस्तथापि प्राधान्यादेतदुक्तम् । धावकनामा कविः श्रीहर्षनाम्ना रत्नावलीनाम्नीं नाटिकां विरच्य ततो बहुधनं लब्धवानिति लोकप्रसिद्धिः । व्यवहारविद इति व्याकरोति—राजेति राजि सचिवगुरुमुख्यादौ च गतः प्राप्तो यः समुचिताचारः पृथ्वीपालनादिव्यवहारस्तत्परिज्ञानम् । शिवेतरक्षतय इति व्याकरोति—आदित्यादेरिति । कुष्ठरोगाक्रान्तो मयूरनामा कविः शतश्लोकात्मकं सूर्यस्तुतिरूपं काव्यमकार्षीत् तेन तुष्टः सूर्यो नीरोगं रमणीयं वपुस्तस्मै द-

सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादनसमुद्भूतं विगलितवेद्यान्तरमानन्दम् प्रभुसम्मितशब्दप्रधानवेदादिशास्त्रेभ्यः सुहृत्सम्मितार्थतात्पर्यवत्पुराणादीतिहासेभ्यश्च शब्दार्थयोर्गुणभावेन रसाङ्गभूतव्यापारप्रवणतया विलक्षणं यत्काव्यं लोकोत्तरवर्णनानिपुणकविकर्म तत् का-

---

स्तवानिति जनश्रुतिः। अनर्थस्य पापस्य तत्फलस्य वा निवारणं शमनम्। सद्यः परनिर्वृतय इति व्याकर्त्तुं परपदार्थमाह—सकलेति। सकलेषु यशःप्रभृतिषु प्रयोजनेषु फलेषु मौलिभूतं प्रधानभूतम्। सद्यः पदार्थमाह—समनन्तरमिति। काव्यश्रवणानन्तरमेवेत्यर्थः। अत्र हेतुमाह—रसास्वादेति। रस्यत आस्वाद्यत इति व्युत्पत्त्या रसपदं रत्यादिस्थायिभावपरम्। एवं च रसस्य स्थायिभावस्य आस्वादनेन विभावानुभावव्यभिचारिभिः संयोजनेन समुद्भूतं निष्पन्न ननु शब्दार्थविषयव्यासङ्गाद्विलम्बः स्यादत आह—विगलितेति। विगलितमस्तमितं वेद्यान्तरं स्वातिरिक्तविषयान्तरं यत्र, अयं भावः, घटादिज्ञाने घटादिकं विषयः ज्ञानं विषयि अत्र तु ज्ञानात्मकम् आनन्द एव विषयो विषयी चेति स्वविषयातिरिक्तवेद्यान्तरसंपर्कशून्यमिति यावत्। निर्वृतिपदार्थमाह—आनन्दमिति। मोक्षकालिकब्रह्मानन्दसदृशाम्। कान्तासम्मितेति व्याकरोति—प्रभुसम्मितेति। प्रभुसम्मितानि प्रभुतुल्यानि शब्दप्रधानानि यानि वेदशास्त्राणि तेभ्यो विलक्षणमित्यग्रिमेणान्वयः। अयमाशयः शब्दस्त्रिधा प्रभुसम्मितः सुहृत्सम्मितः कान्तासम्मितश्चेति तत्र शब्दप्रधानो वेदस्मृतिरूप आद्यः, शब्दप्रधानत्वं चास्य प्रवर्त्तनारूपशासनाप्रधानत्वं तथा हि यथा राजा इष्टसाधनेऽनिष्टसाधने निष्फले च भृत्यादिकं नियोजयति तथा वेदादिरपि इष्टसाधने ज्योतिष्टोमादौ अनिष्टसाधने श्येनयागादौ निष्फले अकरणप्रयुक्तप्रत्यवायपरिहारातिरिक्तफलरहिते सन्ध्यावन्दनादौ च नियोजयतीति वेदादिशास्त्रस्य प्रभुसम्मितत्वम्। सुहृत्सम्मिताः मित्रतुल्या अर्थतात्पर्यवन्तो ये पुराणादय इतिहासाख्यानादयश्च प्राचीनवृत्तवर्णनानि तेभ्यो विलक्षणमित्यर्थः। अयं भावः यथा सुहृद् एवं कृते एवं भवति इति वस्तुतत्वमात्रं बोधयति तथैव पुराणेतिहासादिरपीति सुहृत्सम्मितत्वम्पुराणादेरिति। काव्यस्य वैलक्षण्ये हेतुमाह—शब्दार्थयोरिति। शब्दो वाचकः अर्थो वाच्यस्तयोर्गुणभावेन अप्रधानतयेत्यर्थः। तयोर्गुणभावे हेतुमाह—रसाङ्गेति। रसस्य [illegible]रङ्गभूत उपायभूतो यो व्यापारो विभावानु-

न्तेव सरसतापादनेनाभिमुखीकृत्य रामादिवद्वर्तितव्यं न रावणादिवदि-त्युपदेशं च यथायोगं कवेः सहृदयस्य च करोतीति सर्वथा तत्र यत-नीयम् ॥

एवमस्य प्रयोजनमुक्त्वा कारणमाह—

**शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्।**
**काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे ॥ ३ ॥**

शक्तिः कवित्वबीजरूपः संस्कारविशेषः यां विना काव्यं न प्रस-रेत् प्रसृतं वा उपहसनीयं स्यात्। लोकस्य स्थावरजङ्गमात्मकलोकवृ-

---

भावव्यभिचारिभावानां मेलनं व्यञ्जना वा तत्प्रवणतया तत्परत्वेने-त्यर्थः। एवं च काव्ये तादृशव्यापारानिष्पाद्यरसस्यैव प्रधानत्वमि-ति भावः। विलक्षणं विसदृशम् वैधर्म्याश्रयः। तथा च गुणीभू-तशब्दार्थोभयकत्वमेव काव्ये वैलक्षण्यम्। काव्यशब्दार्थमाह—लोको-त्तरेति। लोकोत्तरा लोकविलक्षणा चमत्कारिबोधजनिका या वर्णना मुखादेः कमलत्वादिरूपेण कथनादि तत्र निपुणस्य कवेः असाधा-रणतादृग्वर्णनात्मकं कर्मेत्यर्थः। कर्म च योजनं न तूच्चारणं मौनिपद्ये व्यभिचारात्। कान्तेव कामिनीव सरसतापादनेन रस-सहितत्वापादनेन अभिमुखीकृत्य स्वप्रतिपाद्यार्थबोधानुकूलय-त्नाश्रयीकृत्य। एतेन कान्तासादृश्यं दर्शितम्। उपदेशमाह—रामादिव-दिति। यथा कान्ता गुर्वाद्यधीनमपि कान्तं निजचातुर्येण कटाक्षभु-जविक्षेपादिना सरसतामापाद्य स्वाभिमुखीकृत्य स्वस्मिन्प्रवर्तयति-एवं काव्यमपि ललितपदसमूहोपदर्शितशृङ्गारादिरसेन नीतिशास्त्र-पराङ्मुखान् सुकुमारमतीन् राजकुमारादीन् मधुरपानादिना औ-षधपराङ्मुखान्बालानिव सदुपदेशरूपस्वार्थे प्रवर्तयतीति भावः। यथायोगं यथायोग्यं कवेः काव्यकर्तुः सहृदयस्य काव्यवासनाप-रिपक्वबुद्धेः सर्वथा सर्वप्रकारेण तत्र काव्ये यतनीयम् उत्पादनाय आस्वादनाय च यत्नः करणीयः। काव्याच्चतुर्वर्गफलप्राप्तिरिति साहित्यदर्पणे विश्वनाथेन प्रतिपादितमिति ॥ २ ॥

एवंविधं काव्यं येन कारणेन उद्भवति तदाह—शक्तिरित्यादि। श-क्तिः लोकशास्त्रकाव्याद्यवेक्षणान्निपुणता काव्यज्ञशिक्षयाभ्यास इ-ति एतत्त्रितयं तस्य काव्यस्य उद्भवे निर्माणे समुल्लासे च हेतुरि-ति कारिकार्थः।

स्य शास्त्राणां छन्दोव्याकरणाभिधानकोशकलाचतुर्वर्गगजतुरगखड्गादि-लक्षणग्रन्थानां काव्यानां च महाकविसम्बन्धिनाम् आदिग्रहणादितिहासादीनां च विमर्शनाद्व्युत्पत्तिः, काव्यं कर्तुं विचारयितुं च ये जानन्ति तदुपदेशेन करणे योजने च पौनःपुन्येन प्रवृत्तिरिति त्रयः समु-

---

एतदेव व्याकरोति—शक्तिरिति । कवित्वं पाण्डित्यं संस्कारविशेषः देवताराधनादिजन्यरसादिविषयकवासनाविशेषः तादृशशक्तेः कारणतायां प्रमाणमाह—यां विनेति । न प्रसरेत् प्रसारं न प्राप्नुयाद् न जायते वा प्रसृतं वेति वा शब्दोऽनास्थाद्योतकः, उपहसनीयं दोषवैशिष्ट्यात् । स्थावरेति स्वाधीनक्रियाशून्यः स्थावरः । तदितरो जङ्गमः । कारिकायां लोकपदं लक्ष्यते इति लोक इतिव्युत्पत्त्या लोकवृत्तपरं वृत्तं चाचरणम् । काव्यकरणोपयोगीनि शास्त्राणि दर्शयति—शास्त्राणामिति । वर्णादिनियमबोधकं शास्त्रं छन्दः, शास्त्रं प्रकृतिप्रत्ययविभागपूर्वकशब्दव्युत्पत्त्याधायकं व्याकरणम् । अभिधानानां नाम्नां कोशः सङ्ग्रहः । कला नृत्यगीतादिचतुः षष्टिकाः । चतुर्वर्गो धर्मार्थकाममोक्षाः । गजतुरगग्रन्थः शालिहोत्रादिः । खड्गः करवालः । आदिपदात् धनुर्बाणादिप्रतिपादकस्य स्त्रीपुरुषलक्षणप्रतिपादकसामुद्रिकादेरायुर्वेदज्योतिःशास्त्रादेश्च ग्रहणम् । महाकवीति । वाल्मीक्यादयः । इतिहासादीनाम् । तल्लक्षणन्तु—

> धर्मार्थकाममोक्षाणामुपदेशसमन्वितम् ।
> पूर्ववृत्तकथायुक्तमितिहासं प्रचक्षते ॥

इत्युक्तम् । यथा महाभारतादि । अवेक्षणपदार्थमाह—विमर्शनात् । पुनः पुनस्तत्तत्पदार्थरसादिगोचरानुसन्धानात् । निपुणतापदार्थमाह—व्युत्पत्तिः । तत्तदर्थरसादिगतो दृढतरसंस्कारः । काव्यज्ञपदं व्याकरोति—काव्यं कर्तुमिति । विचारयितुमिति । सदसद्वेति विवेचयितुम् । शिक्षापदार्थमाह—तदुपदेशेनेति । करणे निष्पादने योजने पदानामावापोद्वापे । अभ्यासपदं व्याचष्टे—पौनः पुन्येनेति । पूर्वपूर्वकृतिध्वंससहकृतोत्तरोत्तराकृतिः पौनःपुन्येन प्रवृत्तिः । इतिपदार्थमाह—त्रयःसमुदिता इति । त्रयः शक्तिनैपुणताभ्यासाः । तदुद्भवे इति व्याकरोति—तस्येति । समुल्लासे उत्कटत्वे । कुतः समुदितानां हेतुत्वमत आह—हेतुरिति । "जात्याकृतिव्यक्तयः पदार्थः" इति गौतमसूत्रे पदार्थ इत्यत्रैकवचनेन यथा त्रिष्वेव पदशक्यत्वं तथा हेतुरित्यत्रैकवचनेन दण्ड-

दिता न तु व्यस्तास्तस्य काव्यस्योद्भवे निर्माणे समुल्लासे च हेतुर्न्न तु हेतवः ॥

एवमस्य कारणमुक्त्वा स्वरूपमाह—

(१) तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि ॥

दोषगुणालङ्काराः वक्ष्यन्ते क्वापीत्यनेनैतदाह यत्सर्वत्र सालङ्कारौ

---

चक्रादिन्यायेन परस्परसापेक्षानामेव हेतुत्वमिति लभ्यते न तु तृणारणिमणिन्यायेन व्यस्तानामिति फलितोऽर्थ इति दिक् ॥३॥

काव्यस्य कारणमुक्त्वा लक्षणमाह—तददोषाविति। शब्दार्थौ शब्दार्थ-युगलं तत् काव्यम् आस्वादव्यञ्जकत्वस्योभयत्रापि सत्त्वेन काव्यं पठितं श्रुतं गीतं रचित बुद्धमिति व्यवहारदर्शनेन च शब्दार्थयुगलस्य काव्यत्वं-सुघटमिति भावः। सदोषेऽतिव्याप्तिवारणाय विशिनष्टि—अदोषाविति। का-व्यत्वविघटका ये च्युतसंस्कारादयः प्रबलदोषास्तद्रहिताविति। अत्र-त्यविशदविचारस्तु ग्रन्थान्तरादवसेयः। निर्गुणेऽतिव्याप्तिवारणाय—सगुणाविति। माधुर्यौजः प्रसादाख्या ये गुणास्तत्सहिताविति अर्थः। यद्यपि गुणानां रसैकनिष्ठत्वन्तथापि परम्परया रसाभिव्यञ्जकशब्दार्थनिष्ठ-त्वमिति भावः। निरलङ्कारेऽतिव्याप्तिवारणाय—अनलङ्कृती इत्यादि। अत्र नञोऽल्पार्थकत्वेनास्फुटार्थकत्वन्तेनैतदुक्तं भवति यत्सर्वत्र सालङ्कारौ शब्दार्थौ काव्यं क्वचित्स्फुटालङ्कारविरहेऽपि न काव्यत्वहानिरित्य-र्थः क्वापीतिपदस्वारस्यादिति बोध्यम्।

स्फुटालङ्कारविरहविशिष्टं काव्यमुदाहरति—यः कौमारेति। स्वाधीन-पतिकाया असकृदुपभुक्तेष्वपि वरोपकरणादिषु उत्कण्ठोत्परया तेषा-मत्यन्तोपादेयतां सूचयन्त्याः सखीं प्रत्युक्तिरियम्। अत्र सर्वत्र तच्छ-ब्द उपभुक्तार्थकः। हि शब्दो यद्यप्यर्थकः तस्य सर्वत्रान्वयः अस्तीति क्रियाध्याहारश्च तथा च यः कौमारं बाल्यं हृतवान् चोरितवानिति कौमारहरः व्रियते प्रियत्वेन स्वयमङ्गीक्रियते इति वरः यद्यपि स एवास्ति उपभुक्त एवास्ति नानुपभुक्तः चैत्रक्षपाः चैत्ररात्रयः यद्यपि ता एव सन्ति उपभुक्ता एव सन्ति नानुपभुक्ताः उन्मीलिता विकासिता या मालती वासन्तिका तया सुरभयः शोभनगन्धाः प्रौढा रत्युद्दीपकाः कदम्बस्य पुष्पविशेषस्य अनिला वायवो यद्यपि त एव सन्ति अस्मीति अहमित्यर्थकं विभक्तिप्रतिरूपकमव्ययम्।

क्वचित्तु स्फुटालङ्काराविरहेऽपि न काव्यत्वहानिः । यथा—

यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥ १ ॥

अत्र स्फुटो न कश्चिदलङ्कारः रसस्य च प्राधान्यान्नालङ्कारता ॥

तद्भेदान् क्रमेणाह—

**इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः ॥४॥**

एव शब्दोऽप्यर्थकः, एवं च अहमपि सैव उत्कण्ठाहेतुभूतमवस्थान्तरं न प्राप्तैवेत्यर्थः तथापि पूर्वोक्तोपभुक्तसकलसामग्र्याःसत्त्वेऽपि तत्रेति उपभुक्ते इत्यर्थकं सुरतेत्याद्यग्रिमसप्तम्यन्तत्रयेऽन्वेति तेन सर्वेषामुपभुक्तत्वलाभः तेन सुरतलीलाविधिरपि नान्यादृशो येनोत्कण्ठा स्यादिति व्यज्यते । रेवाया नर्मदाया रोधसि तटे वेतसी वेतसलता सैव तरुर्वृक्षः तद्वेष्टितो वा तस्य तले अधः प्रदेशे सुरतहेतुर्यो व्यापारो गमनादिस्तत्सम्बन्धिनी लीला वेषविन्यासादिस्तस्या विधौ संपादने चेतोऽन्तःकरणं समुत्कण्ठते उत्सुकं भवतीत्यर्थः । शार्दूलविक्रीडितं छन्दः । सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ॥४॥

स्फुटो न कश्चिदिति । स्फुटत्वं च झटिति प्रतीयमानत्वम् । अत्र हरो वर इत्याद्यनुप्रासस्य स्फुटस्यापि प्रकृतशृङ्गाररसप्रातिकूलवर्णघटितत्वेन नालङ्कारतेति भावः । ननु "कारणाभावेऽपि कार्योत्पत्तिकथनं विभावनेति" विभावनालक्षणस्य घटनाद्विभावनायाः स्फुटत्वं वरोपकरणादीनामनुपभुक्तत्वस्य "कारणस्य सत्त्वेऽपि कार्याभावकथनमि" ति विशेषोक्तिलक्षणस्य घटनाद्विशेषोक्तेः स्फुटत्वम् उपभुक्तत्वरूपकारणसत्त्वेपि अनुत्कण्ठारूपस्य कार्यस्याभावादिति चेन्न । अभावबोधकनञादिपदोपादाने एव तयोः स्फुटत्वस्य स्वीकारेण आर्थिकेऽनङ्गीकारादिति दिक् । नन्वत्र विप्रलम्भशृङ्गाररसस्य स्फुटत्वाद्रसवदलङ्कारः स्फुट इत्यत आह—रसस्य चेति । रसस्याप्राधान्य एव तस्यालङ्कारत्वमिति । "अयं स रसनोत्कर्षी" इत्याद्युदाहरणे पञ्चमोल्लासे वक्ष्यमाणत्वात् ॥ २ ॥

काव्यभेदान्क्रमेणाह—इदमुत्तममिति । वाच्याद् अभिधावृत्तिप्रतिपाद्यादर्थाद् व्यङ्ग्ये व्यञ्जनावृत्तिप्रतिपाद्येऽर्थे अतिशयिनि अतिचमत्का-

इदमिति काव्यं बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः । ततस्तन्मतानुसारिभिरन्यैरपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य ।

यथा—

निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो—
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे !
वापीं स्नातुमितो गताऽसि न पुनस्तस्याऽधमस्यान्तिकम् ॥२॥

अत्र तदन्तिकमेव रन्तुं गताऽसीति प्राधान्येनाऽधमपदेन व्यज्यते ।

---

रञ्जनके सति इदमेतत्काव्यं बुधैरुत्तमं काव्यं कथितं स्वीकृतम् ।
तदेव बुधैः ध्वनिपण्डितैः ध्वनिः कथितः ध्वनिरित्युच्यते ॥ ४ ॥

वैयाकरणैः महाभाष्यकारादिभिः प्रधानभूतो यः स्फोटः स्फुटयति प्रकाशयति अर्थमिति स्फोटस्तद्रूपं यद्व्यङ्ग्यं तद्व्यञ्जकस्य शब्दस्य ध्वनिः ध्वनति स्फोटं व्यनक्तीति ध्वनिरिति व्यवहारः कृतः प्रतीतपदार्थयोर्ध्वनिः शब्द इत्यादिना । अयं भावः, आशुविनाशिनां वर्णानां मेलकाभावादानुपूर्व्याः ज्ञातुमशक्यत्वात्कथं शब्दार्थबोध इत्याशङ्क्य पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितान्तिमवर्णानुभवेन स्फोटो व्यज्यते स च व्यङ्ग्यात्मकः शब्दो नित्यो ब्रह्मस्वरूपः सकलप्रत्ययप्रत्यायनक्षमोऽङ्गीक्रियते तद्व्यञ्जकश्च वर्णात्मकः शब्दः वृत्तिस्तु व्यञ्जनैव सङ्केताद्यभावात् तद्व्यञ्जकश्च शब्दो ध्वनित्वेन व्यवह्रियत इति वैयाकरणमतमिति । तत इति । यतस्तैर्व्यवहारः कृतस्तस्मात् । तन्मतेति । वैयाकरणमतानुसारिभिः । अन्यैरपीति । ध्वन्यालोककारप्रभृतिभिरलङ्कारिभिरपि । न्यग्भावितेति । न्यग्भावितमप्रधानीभूतं वाच्यं मुख्योऽर्थो येन तादृशस्य व्यङ्ग्यस्य व्यञ्जने ध्वनने क्षमस्य समर्थस्य । शब्दार्थयुगलस्येति । तद्रूपस्योत्तमकाव्यस्य ध्वनिरिति व्यवहारः कृतः ।

ध्वनिकाव्यमुदाहरति—निःशेषेति । नायकानयनाय प्रेषितां तमुपभुज्य समागतां दूतीं प्रति स्नानकार्यप्रकाशनद्वारा सम्भोगं प्रकाशयन्त्या विदग्धोत्तमनायिकाया इयमुक्तिः । अयि मिथ्यावादिनि असत्यभाषणशीले ! बान्धवजनस्य मद्रूपसुहृज्जनस्य अज्ञातोऽनालोचितः पीडाया दुःखस्यागम आगमनं यया तत्सम्बुद्धौ हे दूति संदेशहरे ! त्वमितो मत्सकाशाद्वापीं दीर्घिकां स्नातुं स्नानार्थं गतासि गतवत्यसि

(३) अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम् ।

अतादृशि वाच्यादनतिशायिनि । यथा—

ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् ।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥ ३ ॥

---

तस्य बहुधाकृतापराधस्य अत एव अधमस्य दुःखप्रयोजककर्मशीलस्य नायकस्य अन्तिकं समीपं न पुनः नैव गतासि । स्नानोपपादकान्याह निःशेषेति यतस्तव स्तनयोस्तटं प्रान्तदेशः निःशेषं यथा तथा च्युतं स्खलितं चन्दनं यस्मात्तथाभूतम् । एवमधरः अधरोष्ठः निःशेषं यथा तथा मृष्टः शुद्धो रागस्ताम्बूलरक्तिमा यस्य तथाभूतः । एवं नेत्रे चक्षुषी दूरं प्रान्तभागे एव अनञ्जने कज्जलरहिते । तथा इयं प्रत्यक्षदृश्यमाना तव तनुः शरीरं तन्वी कृशा अत एव पुलकिता पुलकाः रोमोद्गमाः संजाता अस्यास्तथाभूतेत्यर्थः । अत्र मिथ्यावादिनि इत्यनेन तदन्तिकमगतवैव मया गत्वा बहुशः प्रसादितोऽपि नागत इति मिथ्यैव वदसीति व्यज्यते । अज्ञातपीडागमं इत्यनेन स्वार्थपरायणता व्यज्यते । दूति इत्यनेन मिथ्याभाषणशीलत्वयोग्यता व्यज्यते अत एव सखि इति नोक्तं प्रतारणाकर्तृत्वात् । स्तनतटमित्यनेन तटे एव मर्दनाधिक्यात् अन्यत्र नायककरपरामर्शाभावात्तटस्यैव तथाभूतत्वमिति व्यज्यते । अधर इत्यनेन कामशास्त्रे अधरोष्ठ एव चुम्बनविधानात्तत्रैव तथात्वमिति व्यज्यते । दूरमनञ्जने इत्यनेन प्रान्ते एव कामशास्त्रे चुम्बनविधानात्तत्रैव तत्कृतमनञ्जनत्वमिति व्यज्यते । अत्राऽधमपदस्य प्राधान्येन व्यञ्जकत्वं दर्शयति-अत्रेत्यादिना । प्राधान्यं च इतरनायिकासम्भोगस्य विप्रलम्भोद्दीपकत्वेन वाच्यापेक्षयाऽतिशयितत्वादिति दिक् ॥ २ ॥

मध्यमकाव्यं लक्षयति-अतादृशीति । व्यङ्ग्ये व्यङ्ग्यार्थे अतादृशि वाच्यादनतिशायिनि वाच्यापेक्षयाऽतिशयचमत्काराऽजनके सति मध्यमं काव्यम् । तदेव गुणीभूतव्यङ्ग्यमिति बुधैः कथितमित्यर्थः ॥३॥

व्यङ्ग्यस्य वाच्यादनतिशायित्वं न्यूनत्वेन तुल्यत्वेन चेति द्विविधम् । तत्राद्यमुदाहरति-ग्रामेति । स्वयमेव सङ्केतं कृत्वा गृहकार्यव्यासङ्गवशेन सङ्केतस्थानमनागतायाः सङ्केतस्थानगमनं ज्ञापयितुं तत्रत्यवञ्जुलमञ्जरीमादाय उपगतमुपनायकं दृष्ट्वा विषण्णायाः कस्याश्चिदुपनायिकाया विप्रलम्भामासवर्णनमिदम् । नवा नूतना वञ्जुलस्याशोक-

अत्र वञ्जुललतागृहे दत्तसङ्केता नागतेति व्यङ्ग्यं गुणीभूतं तदपेक्षया वाच्यस्यैव चमत्कारित्वात् ॥

(४) शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम् ॥ ५ ॥

चित्रमिति गुणालङ्कारयुक्तम् । अव्यङ्ग्यमिति स्फुटप्रतीयमानार्थरहितम् । अवरमधमम् । यथा—

स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा-
मूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाह्नाय वः ।
भिद्यादुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुम—
द्रोहोद्रेकमहोर्मिमेदुरमदामन्दाकिनीमन्दताम् ॥ ४ ॥

---

स्य मञ्जरी तया सनाथो युक्तः करो यस्य तथाभूतं ग्रामतरुणं मुहु र्भृशं पश्यन्त्या अवलोकयन्त्यास्तरुण्या मुखच्छाया मुखकान्ति र्नितरामत्यन्तं मलिना भवतीत्यर्थः । अत्र ग्रामतरुण इत्यनेन ग्रामे एकस्तरुणस्तेन ग्रामस्थसकलयुवतिप्रार्थ्यमानतया दुर्लभत्वं व्यज्यते । तरुणं तरुण्या इत्यनेन द्वयोस्तरुणत्वेन परस्परानुरागोत्कर्षो व्यज्यते । गुणीभूतव्यङ्ग्यन्दर्शयति-अत्रेति । गुणीभूतत्वे कारणमाह—तदपेक्षयेति । उक्तव्यङ्ग्यापेक्षया वाच्यस्य मुखच्छायामालिन्यातिशयस्य चमत्कारित्वात् आस्वादजनकत्वात् । द्वितीयस्य ब्राह्मणातिक्रमत्याग इत्यादिना पञ्चमोल्लासे उदाहरिष्यते ॥ ३ ॥

अधमकाव्यं लक्षयति-शब्दचित्रमिति । अव्यङ्ग्यं काव्यमवरमधमं स्मृतम् । तदेव बुधैश्चित्रमिति कथितमित्यध्याहारलभ्यम् । तच्च चित्रं द्विविधं शब्दचित्रं वाच्यचित्रं चेत्यर्थः ॥ ४ ॥ ननु व्यङ्ग्यरहितस्य काव्यस्यासम्भवादित्याशङ्क्य अव्यङ्ग्यपदं व्याचष्टे—स्फुटप्रतीयमानेति । प्रतीयमानो व्यङ्ग्यः ।

शब्दचित्रमुदाहरति—स्वच्छन्देति । मन्दाकिनी गङ्गा वो युष्माकं मन्दतां पापमज्ञानं वा अह्नाय झटिति भिद्यात् अपनयतात् । कीदृशी स्वच्छन्दं स्ववशं यथा स्यात्तथा उच्छलदुद्गच्छत् अच्छनिर्मलं कच्छस्य तटप्रदेशस्य कुहरे तरङ्गकृतबिले छातं दुर्बलं तदितरद् वेगातिशयेन बलवद् यदम्बु जलं तस्य च्छटा परम्परा तया मूर्च्छन् विनश्यन् मोहोऽज्ञानं येषान्तै र्महर्षिभिर्हर्षेण सन्तोषेण विहिते कृते स्नानं च आह्निकञ्च स्नानाह्निके यस्यान्तादृशी अनेन महर्षिसेव्यत्वेन तीर्थान्तरादतिशयित्वे प्रदर्श्य नद्यन्तराद्विशेषं दर्शयति—

विनिर्गतं मानदमात्ममन्दिराद्भवत्युपश्रुत्य यदृच्छयाऽपि यम् ।
ससंभ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियाऽमरावती ॥५॥

इति काव्यप्रकाशे काव्यस्य प्रयोजनकारणस्वरूप-
विशेषवर्णनो नाम प्रथम उल्लासः ॥

---

उद्यदिति । उद्यन्तः प्रकाशमाना उदारा महान्तो दर्दुरा भेका यासु ए-वं विधा दर्यः कन्दरा यस्यान्तथाभूता । तथा दीर्घा आयता अदरिद्राः शाखादिबाहुल्येन अकृशा ये द्रुमास्तेषां द्रोहः पातनं तेनोद्रेक ऊ-र्ध्वप्रसरणं येषामेवम्भूता ये महोर्मयो बृहत्तरङ्गास्तैर्मेदुरो निबिडः पुष्टो वा मदो गर्वो यस्यास्तथाभूता । शार्दूलविक्रीडितं छन्दः । अत्र छकारस्य महर्षिहर्षेत्यस्य आह्निका ह्नायेत्यस्य दकारस्य मन्द-मन्देत्यस्य चानुप्रासः शब्दालङ्कारः । यद्यपि मन्दाकिनीविषयो र-त्याख्यो भावस्तीर्थान्तरादाधिक्यवर्णनाद्व्यतिरेकालङ्कारश्च व्यङ्ग्योऽ-स्ति तथापि अनुप्रासे कवेस्तात्पर्यात्स तिरोधीयते इत्यव्यङ्ग्यमिदं काव्यम् ॥ ४ ॥

अर्थचित्रमुदाहरति-विनिर्गतमिति । हयग्रीववधनाटके पद्यमिदम् । मानं द्यति खण्डयतीति मानदस्तं यं हयग्रीवं आत्मनो मन्दिरान्निज-गृहात् यदृच्छया स्वेच्छयापि न तु युयुत्सया अन्ययापि कयाचिदि-च्छया विनिर्गतं उपश्रुत्य कर्णोपकर्णिकया श्रुत्वा ससम्भ्रमेण स-भयेन त्वरायुक्तेन वा इन्द्रेण द्रुतं शीघ्रं पातिता यथाकथञ्चिन्निक्षिप्ता अर्गला कीलकं नतु कपाटफलकद्वयमेव यस्याः सा अमरावती इन्द्रनगरी भिया भयेन निमीलिते सङ्कुचिते अक्षिणी नेत्रे यया सा तथाभूतेव भवतीत्यर्थः । द्वारस्य नेत्रस्थानापन्नत्वात् सम्प्राप्ते भये नेत्रनिमीलनं स्त्रीणां स्वभावः । वंशस्थवृत्तम् । जतौ तु वंशस्थमु-दीरितं जराविति लक्षणात् । अत्र निमीलिताक्षीवेत्युत्प्रेक्षाऽर्थालङ्का-रः । उत्प्रेक्षायां कवेस्तात्पर्यात्सन्तोऽपि वीररसादयो व्यङ्ग्यास्तिरो-धीयन्त इत्यव्यङ्ग्यमिदं काव्यम् ॥ ५ ॥

इति काव्यप्रकाशे नागेश्वरीटीकायां प्रथमोल्लासः ॥

क्रमेण शब्दार्थयोः स्वरूपमाह—

**(५) स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा ॥**

अत्रेति काव्ये। एषां स्वरूपं वक्ष्यते।

**(६) वाच्यादयस्तदर्थाः स्युः**

वाच्य–लक्ष्य–व्यङ्ग्याः।

**(७) तात्पर्यार्थोऽपि केषु चित् ॥ ६ ॥**

आकाङ्क्षा–योग्यता–सन्निधिवशाद्वक्ष्यमाणस्वरूपाणां पदार्थानां समन्वये तात्पर्यार्थो विशेषवपुरपदार्थोऽपि वाक्यार्थः समुल्लसतीत्यभिहितान्वयवादिनाम्मतम्। वाच्य एव वाक्यार्थ इत्यन्विताभिधानवादिनः।

---

**शब्दार्थौ काव्यमिति लक्षणे शब्दस्य प्राथम्यात्तद्विभागप्रतिपादकसूत्रमाह**–स्याद्वाचक इति। अत्र काव्ये वाचको लाक्षणिको व्यञ्जकश्चेति त्रिप्रकारः शब्दः स्यादिति सूत्रार्थः। गौणशब्दस्य लाक्षणिकेऽन्तर्भावस्याग्रे वक्ष्यमाणत्वात्त्रिधेत्युक्तम्। व्यञ्जकशब्दस्य वैशेषिकादिशास्त्रेऽसत्त्वात्काव्य इत्युक्तम्। एषां त्रिविधानां लक्षणं वक्ष्यते ॥ ५ ॥

**अर्थान्विभजते**–वाच्यादय इति। तेषां वाचक–लाक्षणिक–व्यञ्जकानामर्थाः वाच्यलक्ष्यव्यङ्ग्याः स्युरिति कारिकार्थः ॥

**ननु वाक्यार्थस्यापि व्यञ्जनारूपव्यापाराश्रयत्वेन तद्विभागोऽपि कर्तुमुचित इत्यत आह**–तात्पर्यार्थोऽपीति। तात्पर्याख्यवृत्तिप्रतिपाद्योऽर्थोऽपि केषुचित् अभिहितान्वयवादिनाम्मते इत्यर्थः। एतद्विवृणोति–आकाङ्क्षेत्यादिना। पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षा। अर्थाऽबाधो योग्यता। पदानामविलम्बेनोच्चारणं सन्निधिः। आकाङ्क्षारहितं वाक्यं न प्रमाणं यथा गौरश्वः पुरुषो हस्तीत्यादि। योग्यतारहितं न प्रमाणं यथा वह्निना सिञ्चतीत्यादि। सन्निधिरहितं न प्रमाणं यथा प्रहरे प्रहरेऽसहोच्चारितानि गामानयेत्यादिपदानि। वशात् प्रयोजकात् वक्ष्यमाणेति जात्यादिर्जातिरेव वेत्यादिना। समन्वये परस्परसम्बन्धे बुभुत्सिते तात्पर्यार्थः तात्पर्याख्यवृत्तिप्रतिपाद्यः। विशेषवपुः वाच्याद्यर्थविलक्षणशरीरः। अपदार्थः प्रत्येकपदवृत्त्याविषयः। वाक्यार्थः पदसमूहगम्यः। समुल्लसति अनुभवविषयो भवति। अभिहितान्वयवादिनाम्। अभिहितानां स्वस्ववृत्त्या पदैरुपस्थितानामर्थानामन्वय इतिवादिनां मीमांसकानाम्। वृत्तिंविना अर्थबोधनेऽतिप्रसङ्ग इति वाक्यार्थरूपे संसर्गे शक्तस्य

(८) सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते ॥

तत्र वाच्यस्य यथा—

मा एघारोवअरणं अज्ज हुणत्थि तिसाहिअं तुमए ।
ता भण किं करणिज्जं एमेअणवासरो ठाइ ॥ ६ ॥

अत्र स्वैरविहारार्थिनीति व्यज्यते ।

---

तात्पर्याख्या वृत्तिरभ्युपगन्तव्या तत्प्रतिपाद्योऽर्थस्तात्पर्यार्थ इति हि तेषाम्मतमिति भावः । अथ गुरुसम्मतं पक्षान्तरमाह—वाच्य एवेति । पदसमूहगम्यो वाक्यार्थः । स वाक्यान्तर्गतपदार्थ एवेति । देवदत्त गामानयेत्यादिवृद्धप्रयुक्ते तादृशवाक्यसञ्चारे मध्यमवृद्धप्रवृत्तिं दृष्ट्वा बालोऽपि तस्य वाक्यस्य तदर्थबोधकतामनुमाय गां नय अश्वमाहरेति अनन्तरवाक्यप्रयोगाद्गवापसरणे अश्वाहरणे च प्रवृत्तिं दृष्ट्वा अन्वयव्यतिरेकाभ्यां कारकपदस्य क्रियापदार्थान्विते कारके क्रियापदस्य कारकपदार्थान्वितक्रियायां च शक्तिमवधारयति ततश्च प्रयोगकाले तस्य बालस्य प्रथमत एवान्वितबुद्धिर्जायते तेनाऽभिधयैवाऽन्वयबोधोपपत्तौ किन्तात्पर्यरूपवृत्त्यन्तरेणेति प्रभाकरगुरोर्मतमिति बोध्यम् ॥

केवलं शब्दस्यैव व्यञ्जकत्वमिति वाच्यस्यैवार्थस्य व्यञ्जकत्वमिति च शङ्कां वारयति—सर्वेषामिति । वाच्य-लक्ष्य-व्यङ्ग्यानामर्थानामपि प्रायशो व्यञ्जकत्वमिष्यत इति कारिकार्थः । वक्त्रादिवैशिष्ट्यानवतारेऽर्थान्तरव्यञ्जना न सम्भवतीति प्रायश इत्युक्तम् ॥८॥

वक्तृवैशिष्ट्याद्वाच्यार्थस्य व्यञ्जकत्वमुदाहरति—माए इति । उपनायकसङ्गमार्थिन्या कस्याश्चित् अज्ञेन्धनाद्यानयनव्याजेन वहिर्गन्तुं मातरं प्रत्युक्तिरियम् ।

मातर्गृहोपकरणमद्य खलु नास्तीति साधितं मया ।
तद्भण किं करणीयमेवमेव न वासरः स्थायी ॥

इति संस्कृतम् । हेमातः ! गृहस्य सम्बन्धि उपकरणमन्नेन्धनशाकादिकम् अद्य खलु निश्चितं नास्तीति त्वया भवत्या साधितं प्रतिपादितम् तत्तस्मात् भण वद अन्नेन्धनादिसंपादनार्थं बहिर्गमनमाज्ञापयेति यावत् । किं करणीयमत्र किंशब्दः क्षेपे न किञ्चित्कर्तव्यमित्यर्थः । किं च वासरो दिवसः एवमेव ईदृशावस्थ एव स्थायी स्थिरो नेत्यर्थः । अत्र मातरित्यनेनाळङ्घनीयाज्ञत्वं गृहे

लक्ष्यस्य यथा—

साहेन्ती सहि सुहअं खणे खणे दूम्मिआसि मज्झकए।
सम्भावणेहकरणिज्जसारिसअं दाव विरइअं तुम ए॥ ७॥

अत्र मत्प्रियं रमयन्त्या त्वया शत्रुत्वमाचारितमिति लक्ष्यं तेन च कामुकविषयं सापराध्वत्वप्रकाशनं व्यङ्ग्यम्।

व्यङ्ग्यस्य यथा—

उअ णिच्चलणिप्पंदा भिसिणीपत्तम्मि रेहइ वलाआ।

---

इत्यनेनावश्यकता उपकरणमित्यनेन अन्यथासिद्धिपरिहारः। अद्येत्यनेन अद्यैव सम्पाद्यम् साधितमित्यनेन गृहे सत्त्वशङ्कानिरासः त्वयेत्यनेन स्वकल्पनापरिहारः। तदित्यनेनावश्यवक्तव्यत्वं भणेत्यनेन स्वप्रेरणम् एवमेवेत्यनेन दिवसावसाने त्वत्प्रेरितयापि कुलाङ्गनया मया न गन्तव्यमेवेति च द्योत्यते। अत्र व्यभिचारिणीरूपवक्तृसम्बन्धात्स्वैरविहारार्थिनी एषेति सामाजिकैर्व्यञ्जनया बुध्यते॥

बोद्धव्यवैशिष्ट्याल्लक्ष्यार्थस्य व्यञ्जकत्वमुदाहरति–साहेन्तीति। प्रियानुनयार्थं प्रेषितान्तामुपभुज्यागतां दूतीं प्रति नायिकाया उक्तिः।

साधयन्ती सखि सुभगं क्षणे क्षणे दूनासि मत्कृते।
सद्भावस्नेहकरणीयसदृशकं तावद्विरचितं त्वया॥

इति संस्कृतम्। हे सखि मत्कृते मदर्थं सुभगं सुन्दरन्तन्नायकं साधयन्ती अनुनयन्ती त्वं क्षणे क्षणे प्रतिक्षणं दूना खिन्नाऽसि त्वया तावत्सद्भावः साधुत्वं स्नेहो वात्सल्यं तयोः करणीयं कार्यं सदृशमुचितं विरचितं कृतम्। सद्भावस्य यत्कार्यं स्नेहस्य च यदुचितं तद्विरचितमित्यर्थः। अत्र लक्ष्यं व्यङ्ग्यं च विभजति अत्रेति। अत्र क्षमिताद्यनुमितस्वप्रियोपभुक्तत्वान्मित्रत्वरूपमुख्यार्थबाधे सदृशपदेन शत्रुत्वाचरणरूपं विसदृशं लक्ष्यते। मत्कृत इत्यनेन स्वकृत इति दुनासीत्यनेन हृष्टासीत्यर्थश्च लक्ष्यते। तेन लक्ष्यवाक्यार्थेन कामुकी च कामुकश्चेत्येकशेषेण तयोर्विषयकसापराधत्वप्रकाशनं सहृदयैर्व्यञ्जनया गम्यमिति भावः॥ ७॥

व्यङ्ग्यार्थस्य व्यञ्जकत्वमुदाहरति–उअ णीति। उपनायकं प्रति कस्याश्चिदुक्तिरियम्।

पश्य निश्चलनिष्पन्दा विसिनीपत्रे राजते बलाका।
निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव॥

णिम्मलमरगअभाअणपरिट्ठिआ सङ्खसुत्तिव्व ॥ ८ ॥

अत्र निष्पन्दत्वेन आश्वस्तत्वं तेन च जनरहितत्वम् अतः सङ्केतस्थानमेतदिति कयाचित्कञ्चित्प्रत्युच्यते । अथवा मिथ्या वदसि न त्वमत्रागतोऽभूरिति व्यज्यते ॥

वाचकादीनां क्रमेण स्वरूपमाह—

(९) साक्षात्सङ्केतितं योऽर्थमभिधत्ते स वाचकः ॥ ७ ॥

इहागृहीतसङ्केतस्य शब्दस्यार्थप्रतीतेरभावात्सङ्केतसहाय एव शब्दोऽर्थविशेषं प्रतिपादयतीति यस्य यत्राव्यवधानेन सङ्केतो गृह्यते स तस्य वाचकः ।

---

इति संस्कृतम् । बिसिन्याः कमलिन्याः पत्रे पर्णे बलाका बकपङ्क्तिः राजते शोभते इति त्वम्पश्येति वाक्यार्थस्य कर्मत्वम् । कथम्भूता निश्चला चासौ निष्पन्दा स्थानान्तरप्रापिका शरीरक्रिया चलनं, स्थानान्तराप्रापिकाऽवयवक्रिया स्पन्द इत्यपौनरुक्त्यम् । शीतोष्णं जलमिति वत्कर्मधारयः । केव राजते निर्म्मलं स्वच्छं यद् मरकतस्य नीलमणेर्भाजनं पात्रं तत्र परिस्थिता विद्यमाना शङ्खशुक्तिरिव शङ्खनिर्मितं शुक्त्याकारं चन्दनादिनिधानपात्रमिवेत्यर्थः। अत्र वाक्येन निष्पन्दत्वेन आश्वस्तत्वम् अभीतत्वं व्यङ्ग्यम् । अनेन व्यङ्ग्येन जनराहितत्वं निर्जनत्वं व्यङ्ग्यम् । फलितमाह—अत इति । कञ्चित्प्रतीति । सङ्केतस्थानाभिलाषिणं प्रति उच्यते व्यञ्जनया प्रतिपाद्यते । सम्भोगाद्विप्रलम्भस्य मधुरत्वेन तत्र योजयति—अथ वेति । अत्र सङ्केतस्थाने निष्पन्दत्वेन जनगमनाभावात् त्वं नागता अहन्त्वागत इति मिथ्यावादिनं प्रति व्यज्यते ॥ ८ ॥

वाचक—लाक्षणिक—व्यञ्जकानां शब्दानां क्रमेण स्वरूपमाह—साक्षादिति । यः शब्दः साक्षात्सङ्केतितमव्यवधानेन गृहीतसङ्केतमर्थं जात्यादिरूपम् अभिधत्ते प्रतिपादयति स शब्दो वाचक इत्युच्यते इति कारिकार्थः । विवृणोति—इहेति । इह लोकव्यवहारे अन्वयव्यतिरेकाभ्यां गृहीतसंङ्केतज्ञानस्यैवार्थप्रतीतिजनकत्वेन सङ्केतग्रहसहाय एव शब्दोऽर्थविशेषं प्रतिपादयति अभिधत्ते अतो यस्य शब्दस्य यस्मिन्नर्थेऽव्यवधानेन साक्षात्सङ्केतग्रहो ज्ञाने उपयुज्यते स शब्दः तस्यार्थस्य वाचक इत्युच्यत इति ।

(१०) संकेतितश्चतुर्भेदो जात्यादिर्जातिरेव वा ।

यद्यप्यर्थक्रियाकारितया प्रवृत्तिनिवृत्तियोग्या व्यक्तिरेव तथाऽप्यानन्त्याद्व्यभिचाराच्च तत्र सङ्केतः कर्तुं न युज्यत इति गौः शुक्लश्चलो डित्थ इत्यादीनां विषयविभागो न प्राप्नोतीति च तदुपाधावेव सङ्केतः।

उपाधिश्च द्विविधः, वस्तुधर्मो वक्तृयदृच्छासन्निवेशितश्च। वस्तुधर्मोऽपि द्विविधः सिद्धः साध्यश्च । सिद्धोऽपि द्विविधः पदार्थस्य प्राणप्रदो विशेषाधानहेतुश्च । तत्राद्यो जातिः । उक्तं हि वाक्यपदीये "न हि गौः स्वरूपेण गौर्नाप्यगौः गोत्वाभिसम्बन्धात्तु गौरिति"। द्वि-

---

अथ विभागपूर्वकसङ्केतितमर्थन्दर्शयति-सङ्केतित इति । सङ्केतग्रहविषयोऽर्थश्चतुर्भेदश्चतुर्विधो भवति । तानाह-जात्यादिरिति । जाति-गुण-क्रिया-यदृच्छारूपः । एतन्महाभाष्ये स्पष्टम् । जातिरेव वेति मीमांसकमतमेतत् ।

ननु शक्तिग्राहकव्यवहारस्य व्यक्तावेव दर्शनात्तत्रैव शक्तिर्युक्तेत्याशयेनाशङ्कते-यद्यपीति । अर्थाय प्रयोजनाय या क्रिया गोरानयनादिरूपा तत्कारितया तन्निर्वाहकत्वेन प्रवृत्तिनिवृत्त्योर्योग्या विषयीभूता व्यक्तिरेव जात्याद्यर्थाश्रय एव न जात्यादिः । समाधत्ते-तथापीति । सर्वासु व्यक्तिषु सङ्केतग्रहो व्यवहारनिर्वाहक इति स्वीकारे व्यक्तीनामानन्त्यादेकपदोपस्थित्यसम्भवेन तत्र संकेतो ग्रहीतुमशक्यः । एकस्यां व्यक्तौ सङ्केतग्रहो व्यवहारनिर्वाहक इति स्वीकारे च यस्यां व्यक्तौ संकेतग्रहः स्वीकृतस्तदतिरिक्तायास्तच्छब्दाद्भानं न स्यादिति व्यभिचार इति हेतोर्व्यक्तौ संकेतग्रहः कर्त्तुमशक्य इति तदुपाधावेव तस्या व्यक्तेरुपाधौ व्यवच्छेदकधर्मे जात्यादावेव संकेतः कर्तुं युज्यते, किं च गोत्वरूपजातिमान् शुक्लत्वरूपगुणवान् चलनरूपक्रियावान् डित्थनामाऽयमिति तात्पर्येण गौः शुक्ल इत्यादिप्रयोगे चतुर्भिर्गवादिशब्दैः सैवैको गोव्यक्तिरुच्यत इति प्रवृत्तिनिमित्तभेदाभावेन घटः कलश इतिवत्पर्यायतया सहप्रयोगो न स्यात् । व्यक्तिवादे व्यक्तेरेव प्रवृत्तिनिमित्तत्वात्तस्याश्चैकत्वाद् उपाधिवादिमते तु उपाधेर्जात्यादेः प्रवृत्तिनिमित्तत्वेन तस्य च भेदाद्गवादिशब्दानां पर्यायत्वाभावेन सहप्रयोगः सुलभ इति भावः । विषयविभाग इति । विषयस्य प्रवृत्तिनिमित्तस्य विभागो भेदो न प्राप्नोति न स्यादित्यर्थः। वस्तुधर्मो वस्तुनि व्यक्तौ समवेतो ध-

तीयो गुणः शुक्लादिना हि लब्धसत्ताकं वस्तु विशिष्यते । साध्यः पूर्वापरीभूतावयवः क्रियारूपः ।

डित्थादिशब्दानामन्त्यबुद्धिनिर्ग्राह्यं संहृतक्रमं स्वरूपं वक्त्रा यदृच्छया डित्थादिष्वर्थेषूपाधित्वेन सन्निवेश्यते इति सोऽयं संज्ञारूपो यदृच्छात्मक इति । गौः शुक्लश्चलो डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिरिति **महाभाष्यकारः** । परमाण्वादीनान्तु गुणमध्यपाठात् पारिभा-

---

र्मो जातिगुणक्रियारूपः वक्ता यदृच्छया स्वेच्छया सन्निवेशितः सङ्केतसम्बन्धेन तत्तद्धर्मिणि स्थापितो देवदत्तादिनामरूपश्च साध्यः साध्यत्वेन विवक्षितो धात्वर्थरूपः पदार्थस्य गवादेः प्राणप्रदः प्राणो व्यवहारयोग्यता तत्प्रदः तन्निर्वाहकः सकलव्यक्तिवृत्तिर्जातिरिति यावत् । विशेषाधानहेतुः विशेषस्य सजातीयेभ्यो व्यावर्त्तनस्य आधानं प्रत्ययस्तस्य हेतुः । अत्र मानमाह—उक्तं हीति । न गौः गोव्यक्तिः स्वरूपेण जातिरहितव्यक्तिमात्रेण न गौः गौरिति व्यवहारविषयो न नाप्यगौः अगौरिति व्यवहारविषयोऽपि न किन्तु गोत्वाभिसम्बन्धात् गोत्वसमवायात् गौः गौरिति व्यवहारविषयः नित्यमेकमनेकानुगतमिति जातिलक्षणात् । विशेषाधानहेतुः, तदेव दर्शयति—शुक्लादिनेति । लब्धसत्ताकं जात्या प्राप्तव्यवहारयोग्यताकं वस्तु व्यक्तिः शुक्लादिगुणेन विशिष्यते सजातीयेभ्यो व्यावर्त्यते । पूर्वोक्तसाध्यस्य लक्षणमाह—साध्य इति । पूर्वापरीभूताः क्रमिका अवयवा एकदेशा अधिश्रयणाद्यवतारणान्ता यस्य तथाभूतः । बोद्धो हि अधिश्रयणाद्यवतारणान्तव्यापारसमूहः पाकक्रिया विक्लित्त्यनुकूलत्वेन तेषामनुगमान्न नानार्थता तथा च भासमानपौर्वापर्यकावयवकत्वसमानाधिकरणो धर्मविशेषः साध्यत्वमिति फलितम् । क्रियारूपः धातुवाच्यः ।

चतुर्थमुपाधिं विवृणोति—डित्थादीति । डित्थादिसंज्ञाशब्दानाम् अन्त्यो यो वर्णस्तद्बुद्ध्या निर्ग्राह्यं निःशेषतो ग्राह्यं पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतयाऽन्त्यवर्णबुद्ध्याऽभिव्यक्तं संहृतक्रमं वर्णक्रमग्रहशून्यं स्वरूपं स्फोटाख्यशब्दस्वरूपं वक्त्रा पालकादिना यदृच्छया डित्थादिपदमेतन्नामविशिष्टतत्तदर्थबोधकं भवत्वित्याकारया स्वेच्छया उपाधित्वेन विशेषणतया सन्निवेश्यते स्थाप्यते कल्प्यते यो यदृच्छाकल्पितत्वाद्यदृच्छाशब्द इति व्यवह्रियते । स्वमते सम्मतिमाह—गौः शुक्ल इति । शब्दानां प्रवृत्तिः प्रवृत्तिनिमित्तं चतुष्टयी चतुर्विधम् । तथा च प्रवृ-

षिकं गुणत्वम् । गुणक्रियायदृच्छानां वस्तुत एकरूपाणामप्याश्रयभेदाद्भेद इव लक्ष्यते यथैकस्य मुखस्य खड्गमुकुरतैलाद्यालम्बनभेदात् ।

हिमपयःशङ्खाद्याश्रयेषु परमार्थतो भिन्नेषु शुक्लादिषु यद्वशेन शुक्लः शुक्ल इत्याद्यभिन्नाभिधानप्रत्ययोत्पत्तिस्तच्छुक्लत्वादि सामान्यं, गुडतण्डुलादिपाकादिष्वेवमेव पाकत्वादि बालवृद्धशुकाद्युदीरितेषु डित्थादिशब्देषु च प्रतिक्षणं भिद्यमानेषु डित्थाद्यर्थेषु वा डित्थत्वाद्यस्तीति सर्वेषां शब्दानां-

---

त्तिनिमित्तस्य चातुर्विध्याच्छब्दस्यापि जातिशब्दो गुणशब्दः क्रियाशब्दो यदृच्छाशब्द इति चातुर्विध्यम् । प्रवृत्तिनिमित्तत्वं च यज्ज्ञानाच्छब्दस्य प्रवृत्तिस्तत्त्वम् महाभाष्यकारः पतञ्जलिः ऋलृक्सूत्रे उक्तवान् । ननु परमाणुत्वस्य प्राणप्रदत्वेन जातितया परमाण्वादिशब्दानामपि जातिशब्दतया वैशेषिकशास्त्रादौ कथं गुणशब्दत्वेन व्यवहार इत्यत आह–परमाण्वादीनामिति । आदिना परममहच्छब्दसंग्रहः । पारिभाषिकं परिभाषया प्राप्तं स्वसङ्केतितमिति यावत् । एवं च वैशेषिकमते गुणत्वव्यवहारो भाक्तः अस्मन्मते परमाण्वादयो जातिशब्दा एवेति न विरोधः । ननु शङ्खादिवृत्तीनां शुक्लत्वादिगुणानां तण्डुलादिनिष्ठानां पाकादिक्रियाणां धर्मिभेदेन भेददर्शनान्नानात्वेन तत्र शक्तावानन्त्यव्यभिचारदोषयोर्व्यक्तिपक्षवत्तुल्यत्वमित्यत आह–गुणक्रियेति । वस्तुतः स्वरूपतः भेद इवेति स एवायमिति प्रत्यभिज्ञया शुक्लादीनामेकत्वसिद्धौ भेदप्रतीतिराश्रयभेदोपाधिका यथा एकस्यापि मुखस्य दर्पणाद्यालम्बनभेदाद्भिन्नत्वम् आलम्बनम् प्रतिबिम्बाश्रयः ।

जातिरेव वेति । मीमांसकमतमुपपादयति–हिमपय इति । हिमादय आश्रया येषान्तेषु परमार्थतः वस्तुतः भिन्नेषु इदं शुक्लमिदं शुक्लतरमिदं शुक्लतममिति नानाप्रतीतेः । अभिन्नेति । अभिन्नमेकं यदभिधानं शब्दस्तेन या ज्ञानोत्पत्तिः सा यद्वशेन यत्सहायेन भवति तत्सामान्यं जातिस्तत्रैव सङ्केत इति शेषः । एवमेवेति क्रियाशब्देष्वपि अयं पाकोऽयं पाक इत्यभिन्नाभिधानप्रत्ययोत्पत्तेः पाकत्वादिसामान्य एव सङ्केतः । एवं बालाद्युच्चरितडित्थादियदृच्छाशब्देषु तारत्वमन्दत्वादिना भिन्नेषु डित्थत्वादिजातेरेव वाच्यत्वम् । शब्दगता जातिरिति मते शब्दे नानात्वं प्रदर्श्य अर्थगता जातिरिति मते अर्थे नानात्वं प्रतिपादयति–प्रतिक्षणमिति । प्रतिक्षणं क्षणे क्षणे भिद्यमानेषु भिन्नेषु डित्थाद्यर्थेषु मांसपिण्डेषु डित्थत्वा-

जातिरेव प्रवृत्तिनिमित्तमित्यन्ये तद्वान् अपोहो वाशब्दार्थः कैश्चि-
दुक्त इति ग्रन्थगौरवभयात्प्रकृतानुपयोगाच्च न दर्शितम् ।

(११) स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते ८

स इति साक्षात्सङ्केतितः । अस्येति शब्दस्य ।

(१२) मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।
अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया ॥ ९ ॥

---

दिसामान्यमस्तीति । सर्वेषां गौः शुक्लश्चलो डित्थ इत्यादीनां जातिरेव प्रवृत्तिनिमित्तं सङ्केतविषय इति । अन्ये मीमांसकाः । उपाधिवादे जातिवादे च व्यक्तेराक्षेपाज्ज्ञानमिति बोध्यम् । ननु मतान्तरस्यापि सत्त्वेन तत्कुतो नोक्तमत आह-तद्वानिति नैयायिकमते व्यक्तिविशेषमनुपादाय तद्वान् सामान्यतो जातिमाञ्छब्दार्थः, अर्थाज्जातिविशिष्ट एव शक्तिः । बौद्धमते क्षणिकवादिमते अपोहोऽतद्व्यावृत्तिस्तत्रैव सङ्केतः स एव शब्दार्थः इत्यादिमतानां ग्रन्थगौरवभयाद् उपाधिशक्तिवादे उपाधेयस्य व्यञ्जयत्वसम्भवात्तन्मतानुवादः प्रकृतोपयोगी तदतिरिक्तवादस्तु प्रतिकूलतयाऽनुपयोगी इति च हेतो न दर्शितमिति भावः ॥

ननु पदार्थेषु मुख्यार्थस्याकथनेन न्यूनतेत्यत आह-स मुख्य इति । स साक्षात्सङ्केतित एवार्थो मुख्यो मुख्यत्वेन प्रसिद्धः न तु विलक्षणः मुखमिव प्रधानत्वान्मुख्यः । अभिधां लक्षयति-तत्र मुख्य इति । तत्र साक्षात्सङ्केतितेऽर्थे अस्य शब्दस्य यो मुख्यः वृत्त्यन्तरानुपजीवको व्यापारो वृत्तिः सा अभिधा इत्युच्यत इत्यर्थः । अत एव शक्त्यपरपर्यायः सङ्केतितार्थबोधजनको व्यापारोऽभिधा सङ्केतश्च शक्तिग्राहकः समयः स च अस्माच्छब्दादयमर्थो बोद्धव्य इत्याकारकइत्युक्तिः सङ्गच्छते ॥ ८ ॥

लाक्षणिकशब्दनिरूपणस्य लक्षणानिरूपणाधीनत्वात्तां लक्षयति-मुख्यार्थबाध इति । मुख्यार्थस्य प्रवाहादिशक्यार्थस्य बाधे घोषाद्याधिकरणत्वाद्यसम्भवरूपे बाधे सति तस्य मुख्यार्थस्य योगे तटादिलक्ष्यार्थेन सह सामीप्यादिसाक्षात्सम्बन्धे सति रूढितः प्रसिद्धेः प्रयोगप्रवाहाद् अथ वा प्रयोजनाल्लक्ष्यार्थे मुख्यार्थगतशैत्यपावनत्वादिप्रतीतिरूपफलात् । यदिति ययेत्यर्थकमव्ययम् । शब्देन कर्त्रा इति पूरणीयम् । एवं च यया वृत्त्या करणभूतया शब्देन कर्त्रा

कर्मणि कुशल इत्यादौ दर्भग्रहणाद्ययोगाद् गङ्गायां घोष इत्यादौ च गङ्गादीनां घोषाद्याधारत्वासम्भवाद् मुख्यार्थस्य बाधे विवेचकत्वादौ सामीप्ये च सम्बन्धे रुढितः प्रसिद्धेः तथा गङ्गातटे घोष इत्यादेः प्रयोगाद् येषां न तथाप्रतिपत्तिः तेषां पावनत्वादीनां धर्माणां तथाप्रतिपादना-

---

अन्योऽर्थः मुख्यभिन्नस्तटादिरूपः लक्ष्यते प्रतिपाद्यते सा वृत्तिर्लक्षणेत्युच्यते। अन्यार्थप्रतिपत्तिहेतुः शब्दव्यापारो लक्षणा। लक्षणास्वरूपमाह—आरोपितेति। सा हि लक्षणा आरोपिता शब्दे कल्पिता साक्षात्सम्बन्धेन मुख्यार्थनिष्ठा परम्परासम्बन्धेन तु शब्दनिष्ठा क्रिया व्यापाररूपा चेति कारिकार्थः। मुख्यार्थबाधे इत्येवोक्तौ तु गङ्गापदाद्यमुनापदस्यापि लक्षणयोपस्थित्याऽतिप्रसङ्गः स्यादतस्तद्योगे इत्युक्तम्। रुढिप्रयोजनान्यतराभावेऽपि यदि लक्षणा स्यात्तदा रूपवान्घट इत्यर्थे लक्षणया रूपो घट इति प्रयोगापत्तिरतस्तयोरुपादानम्। नागेशमते तु तात्पर्यानुपपत्तिरेव लक्षणाबीजम्। अत एव काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदस्य दध्युपघातके लक्षणा। गङ्गायां घोष इत्यत्र घोषपदेन मकरादिलक्षणा गङ्गायां पापी गच्छतीत्यत्र गङ्गापदस्य न नरके लक्षणा किन्तु पापिपदस्य भूतपूर्वपापावच्छिन्नलक्षकत्वे तात्पर्यान्न दोष इत्यादिमञ्जूषायां द्रष्टव्यम्॥

रूढिहेतुकायाः प्रयोजनहेतुकायाश्चास्या उदाहरणमुखेन कारिकां व्याचष्टे—कर्मणीति। कुशान्दर्भान् लाति आदत्ते इति व्युत्पत्त्या कुशलपदं कुशग्राहिणि शक्तं चतुरे तु रूढ्या लाक्षणिकम्। कर्मणीत्यस्य चित्रकर्मणीत्यर्थः। अत्र मुख्यार्थबाधं दर्शयति—दर्भेति। दर्भग्रहणाद्यर्थस्यायोग्यत्वादित्यर्थः। प्रयोजनहेतुकायां मुख्यार्थबाधन्दर्शयन्नुदाहरति—गङ्गायामिति। मुख्यार्थस्य प्रवाहादिरूपस्य। मुख्यार्थलक्ष्यार्थयोः सम्बन्धमाह—विवेचकेति। विवेचकत्वं च सतो ग्रहणमसतः परित्यागरूपं तच्च कुशग्राहिणि चतुरे चास्ति, सामीप्ये सामीप्यरूपे च सम्बन्धे सतीत्यर्थः। कुशलपदे रूढितः अस्यैवार्थमाह—प्रसिद्धेः प्रयोगाद् गङ्गापदलक्षणायां प्रयोजनमाह—तथेति। येषां पावनत्वादीनां तथा विशेषतस्तीरगतत्वेन प्रतिपत्तिः प्रतीतिः तथाप्रतिपादनात्मनः पावनत्वादिप्रतिपादनरूपाद् मुख्येन उपलक्षितोऽमुख्योऽर्थो लक्ष्यते प्रतिपाद्यते आरोपितः शब्दे कल्पितः। क्रियापदस्य व्याख्यानं शब्दव्यापारः व्यापारो वृत्तिः। आरोपे हेतुमाह सान्तरेति। अन्तरं व्यवधानन्तेन सह वर्तते

त्मनः प्रयोजनत्वाच्च मुख्येनामुख्यो लक्ष्यते यत् स आरोपितः शब्दव्यापारः सान्तरार्थनिष्ठो लक्षणा ॥

(१३) स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम् ।
उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ॥ १० ॥

कुन्ताः प्रविशन्ति इत्यादौ कुन्तादिभिः प्रवेशसिद्ध्यर्थं स्वसंयोगिनः पुरुषा आक्षिप्यन्ते तत उपादानेनेयं लक्षणा । गौरनुबन्ध्य-इत्यादौ श्रुतिचोदितमनुबन्धनं कथं मे स्यादिति जात्या व्यक्तिराक्षिप्यते न तु शब्देनोच्यते ।

विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे ।

---

इति सान्तरो व्यवहितः योऽर्थो लक्ष्यरूपस्तन्निष्ठस्तद्विषयकः इदञ्च शब्दव्यापार इत्यस्य विशेषणम् ॥ ९ ॥

अथ कारिकात्रयेण लक्षणाया षड्विधत्वं दर्शयति—स्वसिद्धय इति । स्वस्य शक्यार्थस्य सिद्धयेऽन्वयसिद्धये परस्याशक्यार्थस्य आक्षेप उपादानमुपादानलक्षणेत्युच्यते । परार्थं परस्याशक्यस्यावयवोधार्थं स्वसमर्पणं स्वस्य शक्यार्थस्य समर्पणं त्यागः लक्षणं लक्षणलक्षणेत्युच्यत इति इत्थमुभाभ्यामुपादानलक्षणरूपाभ्यामुपाधिभ्यां द्विविधा सा लक्षणा शुद्धैव उक्ता न गौणीति, तथा च स्वार्थापरित्यागेन परार्थोपस्थापकमुपादानं, स्वार्थपरित्यागेन परार्थोपस्थापकं लक्षणमिति फलितमिति कारिकार्थः ॥

उपादानलक्षणामुदाहरति कुन्ता इति । अचेतनस्य कुन्तादेः प्रवेशनक्रियायामन्वयासम्भव इति मुख्यार्थबाधः । स्वसंयोगिनः कुन्तादयः । अनेन मुख्यार्थयोगो दर्शितः । आक्षिप्यन्ते लक्षणया बोध्यन्ते । ततो हेतोः उपादानेन स्वार्थापरित्यागपूर्वकपरार्थग्रहणेन-इयं लक्षणा उपादानलक्षणा अत्र च कुन्ताग्रगततैक्ष्ण्यस्य पुरुषेषु प्रतीतिः प्रयोजनम् । काकेभ्यो दधि रक्ष्यतामित्यप्यस्या पयोदाहरणम् । अत्र काकपदेन दध्युपघातकं लक्ष्यते छत्रिणो यान्तीत्यत्राप्यनयैव लक्षणया प्रधानभूतेन छत्रिणा साहचर्याच्छत्रशून्या अप्यवगम्यन्ते । मण्डनमिश्रमतमनूद्य दूषयति—गौरनुबन्ध्य इति । इत्थं हि तन्मतम् "गौरनुबन्ध्योऽजोऽग्नीषोमीय" इतिप्रभुसम्मितश्रुतिविहितानुबन्धनक्रिया मम कथं स्यात् जातिपदार्थवादे गोत्वजातेरनुबन्धनासम्भवादिति हेतोः गोत्वरूपया जात्या उपादानलक्षणया व्यक्तिर्बोध्यते

इति न्यायादित्युपादानलक्षणा तु नोदाहर्त्तव्या न ह्यत्र प्रयोजनमस्ति न वा रूढिरियम्। व्यक्त्यविनाभावित्वात्तु जात्या व्यक्तिराक्षिप्यते यथा क्रियतामित्यत्र कर्त्ता कुर्वित्यत्र कर्म प्रविश पिण्डीमित्यादौ गृहं-भक्षयेत्यादि च। पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र च रात्रिभोजनं न लक्ष्यते श्रुतार्थापत्तेरर्थापत्तेर्वा तस्य विषयत्वात्। गङ्गायां घोष-इत्यत्र तटस्य घोषाधिकरणत्वसिद्धये गङ्गाशब्दः स्वार्थमर्पयति इत्येव-

---

न तु अभिधया शब्देन बोध्यते यतोऽभिधा शक्तिर्विशेष्यं व्यक्ति-रूपधर्मिणं न गच्छेत् न स्पृशेत् यतो विशेषणे जातिरूपे क्षीणश-क्तिः "नागृहीतविशेषणा बुद्धिर्विशेष्ये चोपजायते" इतिन्यायेन विशेषणं प्रत्याय्य विरामात् तथा च "अनन्यलभ्यो हि शब्दार्थः"-इति न्यायेन जातिरेव शब्दार्थो व्यक्तेराक्षेपलभ्यत्वादिनि तं दूषयति-इत्युपादानेति। कथन्तर्हि व्यक्तिप्रतीतिरित्यत आह-व्यक्ति विनेति। व्यक्तिं-विना जातेरभानाज्जात्या व्यक्तिरनुमीयते। अविनाभावेनाक्षेपे दृष्टा-न्तमाह-यथेति। यत्तु पीनोऽयं देवदत्तो दिवा न भुङ्क्ते इति वाक्ये उ-पादानलक्षणया रात्रिभोजनवानिति लक्ष्यते। अर्थवादवाक्ये प्राश-स्त्यलक्षणावद्वाक्येऽपि लक्षणा साध्वी इत्याह—तन्मतं मीमांसकम-तानुसारेण दूषयति—पीन इति। कुतो न लक्षणेत्याशङ्क्य भट्टमते श्रुता-र्थापत्त्या दिवाभोजनाभाववतः पुरुषस्य पीनत्वं रात्रिभोजनं विनाऽ-नुपपन्नमित्यनुपपत्त्या रात्रौ भुङ्क्ते इति शब्दः कल्प्यते इत्याशयेन समाधत्ते-श्रुतार्थेति। यत्रानुपपद्यमानः शब्दः शब्दान्तरं कल्पयति सा श्रुतार्थापत्तिः इयमेव शब्दाध्याहार इत्युच्यते यथा द्वारमिति शब्दः पिधेहीतिक्रियापदं यत्र च दृष्टः श्रुतो वाऽर्थोऽनुपपन्नोऽर्थान्तरं-कल्पयति सा अर्थापत्तिः इयमेवार्थाध्याहार इत्युच्यते। यथा द्वार-मित्यर्थोऽनुपपन्नः पिधेहीति क्रियां कल्पयतीति न लक्षणाया उपयोग-इति भावः। लक्षणलक्षणामुदाहरति-गङ्गायामिति। स्वार्थं प्रवाहरूपम-र्पयति त्यजति लक्षणेन स्वार्थसमर्पणेनोपलक्षिता एषा लक्षणलक्षणा। शुद्धात्वे हेतुमाह-उपचारेति। सादृश्याख्यसम्बन्धेन प्रवृत्तिरूपोपचारः तेन अमिश्रितत्वाद् असम्बन्धात् तेन उपचारामिश्रिता शुद्धा उपचारमिश्रिता गौणीत्युक्तिः सङ्गच्छते॥

केचित्तु गौर्वाहीक इत्यादिगौणलक्षणायां शक्यार्थलक्ष्यार्थयोः सादृश्याख्यसम्बन्धेनाभेदः प्रतीयते शुद्धायान्तु शक्यार्थलक्ष्यार्थयो-

मादौ लक्षणेनैषा लक्षणा । उभयरूपा चेयं शुद्धा उपचारेणामिश्रितत्वात् । अनयोर्लक्ष्यस्य लक्षकस्य च न भेदरूपं ताटस्थ्यं तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसम्प्रत्ययः गङ्गासम्बन्धमात्रप्रतीतौ तु गङ्गातटे घोष इति मुख्यशब्दाभिधानाल्लक्षणायाः को भेदः ।

(१४) सारोपाऽन्या तु यत्रोक्तौ विषयी विषयस्तथा ॥

आरोप्यमाणः आरोपविषयश्च यत्रानपन्हुतभेदौ सामानाधिकरण्येन निर्दिश्येते सा लक्षणा सारोपा ॥

---

भेदः प्रतीयते तदेव च औदासीन्यापरपर्य्यायं भेदप्रतीतिरूपं ताटस्थ्यं नाम इदमेव च शुद्धाया गौणीतो भेदकं । न तूपचारामिश्रणमित्याहुस्तन्निराकरोति-अनयोरिति । उपादानलक्षणा लक्षणलक्षणारूपयोः शुद्धाया भेदयोः लक्ष्यस्य तीरादेः लक्षकस्य गङ्गादेश्च भेदरूपं-भेदप्रतीतिरूपं ताटस्थ्यम् औदासीन्यं न नास्ति किन्तु अभेदप्रतीतिरेव अभेदबुद्धिं विना प्रयोजनप्रतिपत्तेरभावात् तदेव विशद्य दर्शयति-तटादीनामिति । लक्ष्यार्थानां गङ्गादिशब्दैः । गङ्गादिबोधकशब्दैः प्रतिपादने बोधने सति तत्त्वप्रतिपत्तौ हीति तत्त्वं गङ्गादित्वं तस्य प्रतिपत्तौ ज्ञाने अथ वा-हिशब्द एवार्थे शक्यलक्ष्ययो गङ्गातीरयोरभेदप्रतिपत्तौ सत्यामेवेत्यर्थः प्रतिपादयितुमिष्टस्य प्रयोजनस्य गङ्गागतशैत्यपावनत्वादेः संप्रत्ययः प्रतीतिः तीरादाविति शेषः न तु भेदप्रतीतौ, अभेदबुद्धिं विना प्रयोजनाप्रतीतेः अतो न ताटस्थ्यं भेदकम् । अन्यत्रान्यशब्दप्रयोगस्तद्धर्मप्राप्त्यर्थं इतिन्यायेन तीरे गङ्गाशब्दप्रयोगो गङ्गागतशैत्यपावनत्वादिप्रतीत्यर्थः, शैत्यादिप्रतीतिस्तु गङ्गात्वेन तटस्य प्रतीतावेव जायते न तु गङ्गासम्बन्धमात्रप्रतीतौ तथा सति गङ्गातटे घोष इत्यत्रापि सम्बन्धप्रतीतेः शक्यलक्ष्यप्रतीत्योः फलभेदो न स्यात् । तदेव दर्शयति-गङ्गासम्बन्धेति । मुख्यशब्दाभिधानाद् मुख्यशब्दप्रयोगापेक्षया को भेदः कः फलातिशयः गङ्गातटे घोष इति वाचकं शब्दं विहाय गङ्गायां घोष इत्यवाचकशब्दप्रयोगानुपपत्तिरेव स्यादिति भावः ॥ १० ॥

शब्दो हि मुख्या-गौणी-लक्षणाभिर्वृत्तिभिरर्थविशेषप्रतिपत्तिनिमित्तामिति सरस्वतीकण्ठाभरणादौ प्रतिपादनेन कथं शब्दार्थयोस्त्रिविध्यमित्याशङ्क्य गौणीं लक्षणायामन्तर्भावयन् लक्षणाया भेदान्तरमाह-सारोपेति । विषयी आरोप्यमाणो गवादिः विषयः आरोपस्याश्रयो-

(१५) विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात्साध्यवसानिका ॥११॥

विषयिणाऽऽरोप्यमाणेनान्तःकृते निगीर्णे अन्यस्मिन्नारोपविषये सति साध्यवसाना स्यात् ।

भेदाविमौ च सादृश्यात्सम्बन्धान्तरतस्तथा ।
गौणौ शुद्धौ च विज्ञेयौ

इमावारोपाध्यवसानरूपौ सादृश्यहेतू भेदौ गौर्वाहीक इत्यत्र गौ-

---

वाहीकादिः यत्र यादृशलक्षणास्थले तथा तेनैव गोत्ववाहीकत्वादि-रूपधर्मप्रकारेण उक्तौ सामानाधिकरण्येन शब्दप्रतिपाद्यौ भवतः सा अन्या शुद्धा गौणी च सारोपा सारोपलक्षणेत्युच्यते इति कारिकार्थः ॥

व्याकरोति–आरोप्येति । विषयीत्यस्यार्थः । आरोपेति । विषय इत्य-स्यार्थः यत्र यादृशलक्षणास्थले तथेत्यस्य अनपह्नुतभेदावित्यर्थः । प्रकाशितवैधर्म्यौ गोत्ववाहीकत्वादिकौ उक्तौ भवत इत्यस्य सामाना-धिकरण्येन निर्दिश्येते इत्यर्थः समानविभक्तिकपदाभ्यां सप्रयोजन-मुपस्थाप्यते सारोपा विषयविषयिणोर्भेदेनोपन्यास आरोपस्तेन स-ह वर्तत इति सारोपा । उदाहरणं गौर्वाहीक इत्यग्रे स्पष्टम् ।

अस्या भेदान्तरमाह–विषय्येति । अन्यस्मिन्नारोपाश्रये वाहीकादौ विषय्यन्तःकृते विषयिणा आरोप्यमाणेन गवादिना अन्तःकृते निगीर्णे सति सा साध्यवसानिका साध्यवसानलक्षणा स्यादिति कारि-कार्थः ॥ ११ ॥

व्याकरोति–विषयिणेति । निगीर्णे विषयवाचकवाहीकादिपदेनानुक्ते विषयनिष्ठासाधारणग्रहं विना विषयिणा स्वतादात्म्येन प्रत्यायिते इति यावत् । साध्यवसाना विषयिवाचकपदेनैव विषयप्रतिपादनमध्य-वसानं यथा गौरयमित्युदाहरणे विषयिणा गवा विषयो वाहीको निगीर्ण इति साध्यवसानलक्षणा तथा च यत्र विषयनिष्ठासाधा-रणधर्मप्रतिपत्तिसहकृतान्यस्यान्यतादात्म्यप्रतीतिः सा सारोपा । यत्र विषयनिष्ठासाधारणधर्मप्रतिपत्त्यसहकृतान्यस्यान्यतादात्म्यप्र-तीतिः सा साध्यवसानेति बोध्यम् ॥

सारोपा–साध्यवसानयोर्लक्षणयोरेव गौणशुद्धभेदाभ्यां प्रत्येकं द्वैविध्यं सूचयन् गौणी–शुद्धयोर्लक्षणमाह–भेदाविति । सारोप–साध्यव-सानरूपौ भेदौ विशेषौ सादृश्यात् सादृश्याख्यसम्बन्धात् । गौणौ गौ-णशब्दवाच्यौ तथा सम्बन्धान्तरतः सादृश्येतरसम्बन्धात् शुद्धौ वि-ज्ञेयाविति कारिकार्थः । एवं च मुख्यार्थबाधादित्रयहेतुसत्त्वाद् गौ-

रयमित्यत्र च। अत्र हि स्वार्थसहचारिणो जाड्यमान्द्यादयो लक्ष्यमाण-गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिमित्तत्वमुपयान्ति इति केचित्। स्वार्थसहचारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्ते न तु परार्थोऽभिधीयत इत्यन्ये। साधारणगुणाश्रयत्वेन परार्थ एव लक्ष्यत इत्यपरे उक्तं चान्यत्र

---

ण्या लक्षणायामन्तर्भावान्न पृथग्वृत्तित्वमिति तत्त्वम्। मुख्यार्थलक्ष्यार्थयोश्च सजातीयगुणवत्त्वं सम्बन्धः। सारोप-साध्यवसानौ गौणीभेदौ व्याख्यामुखेनोदाहरति-इमाविति। सादृश्यहेतू सादृश्याख्यसम्बन्धहेतुकौ। गौणसारोपामुदाहरति-गौर्वाहीक इति। बहिर्भवो वाहीकः शास्त्रीयाचाराद्बहिर्भूतो गवाभिन्नो वाहीक इति बोधः। गौणसाध्यवसानाया उदाहरणमाह-गौरयम्। अयमिति पुरोवर्तिवाहीकादिः। मतभेदेन लक्ष्यविकल्पमाह-अत्र हीति। स्वस्य गोशब्दस्य अर्थो गोत्वं तस्य सहचारिणः समानाधिकरणा लक्ष्यमाणा गोशब्देन लक्षणया बोध्यमानाः। नन्वेवं कथं वाहीकेनान्वय इत्यत आह-परेति। परार्थस्य वाहीकरूपस्य अभिधाने आभिधया बोधने प्रवृत्तिनिमित्तत्वं शक्यतावच्छेदकत्वम् उपयान्ति प्राप्नुवन्ति गोशब्दात्प्रथमं लक्षणया जाड्याद्युपस्थितिः ततोऽभिधया वाहीकस्य बोधः वाहीकसमानाधिकरणो गोशब्दो बाधितमुख्यार्थः सन् स्वार्थसहचारित्वसम्बन्धेन जाड्यादिगुणान् लक्षयित्वा तानेव प्रवृत्तिनिमित्तीकृत्य वाहीकमभिधया बोधयतीति यावत्। मतान्तरमनुवदति-स्वार्थेति। गुणाभेदेन गुणसाजात्येन गुणा एवेति न तु गुणी तस्याक्षेपेण वाहीकशब्दादेव लाभात् तेनान्यलक्ष्यत्वेन नाभिधेत्यत आह-न त्विति। गोशब्देन परार्थो वाहीको नाभिधीयते नाभिधया प्रतिपाद्यते तथा चैतन्मते गोगतजाड्यसजातीयजाड्यवान्वाहीक इति बोधः॥

स्वमतमाह-साधारणेति। साधारणाः सजातीया गुणा जाड्यादयस्तदाश्रयत्वेन परार्थ एव वाहीक एव लक्ष्यते लक्षणया बोध्यते एवं च जाड्यादिगुणविशिष्टे एव लक्षणायां सामानाधिकरण्यञ्चानुपपन्नमिति भावः॥

स्वोक्तेऽर्थे मीमांसकसम्मतिमाह-उक्तञ्चेति। अन्यत्र भट्टवार्तिके। वार्तिकमाह-अभिधेति। "मानान्तरविरुद्धे तु मुख्यार्थस्य परिग्रहे" इत्यनन्तरमेतद्वार्तिकं तथा च मुख्यार्थस्य परिग्रहे स्वीकारे मानान्तरेण प्रत्यक्षादिना विरुद्धे सति या अभिधेयेन वाच्येन अविनाभूतं सम्ब-

अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ।
लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता

इति । अविनाभावोऽत्र सम्बन्धमात्रन्न तु नान्तरीयकत्वम् । तत्त्वे हि मञ्चाः क्रोशन्तीत्यादौ न लक्षणा स्याद् अविनाभावे चाक्षेपेणैव सिद्धेर्लक्षणाया नोपयोग इत्युक्तम् ।

आयुर्घृतम् आयुरेवेदमित्यादौ च सादृश्यादन्यत्कार्यकारणभावादि संबन्धान्तरम् । एवमादौ च कार्यकारणभावादिलक्षणपूर्वे आरोपाध्यवसाने । अत्र गौणभेदयोर्भेदेऽपि ताद्रूप्यप्रतीतिः सर्वथैवाऽभेदावगमश्च प्रयोजनम् । शुद्धभेदयोस्त्वन्यवैलक्षण्येनाव्यभिचारेण च कार्यकारित्वादि । क्व चित् तादर्थ्यादुपचारो यथा इन्द्रार्था स्थूणा इन्द्रः । क्व चित् स्वस्वामिभावाद् यथा राजकीयः पुरुषो राजा । क्व चिद् अवयवावयविभा-

---

द्धं तटादि तस्य प्रतीतिः प्रतीतिकरणभूतो व्यापारो लक्षणेत्युच्यते । यथा गङ्गायां घोष इत्यादौ मुख्यार्थः प्रवाहे घोषाधिकरणत्वासंभवात्प्रत्यक्षविरुद्धः ॥

अथोपचारमिश्रां गौणीमाह–लक्ष्यमाणेति । लक्ष्यमाणा लक्ष्यार्थविशेषणतया लाक्षणिकबोधविषया ये गुणा जाड्यादयस्तैर्योगात् सम्बन्धाद् या वृत्तिः गोशब्दस्य वाहीकार्थोपस्थापकता तस्या गौणता इष्टा । ननु व्याप्तिरूपस्य अविनाभावस्यानुमानोत्थापकत्वान्न लक्षणहेतुत्वमत आह–अविनाभाव इति । अत्र वार्तिके नान्तरीयेति । 'अन्तरा विनाभावस्तत्र भवोऽन्तरीयः गहादित्वाच्छः ततः स्वार्थे कः पुनर्नञेकधेतिवत्नशब्देन समासः तस्य भावो नान्तरीयकत्वम्' येन । विना यन्न भवति तन्नान्तरीयकं तत्सत्तानियतसत्ताकत्वमिति यावद् यथा जातिव्यक्त्योर्नान्तरीयकत्वं तथा वाक्यार्थलक्ष्यार्थयोर्न किन्तु तयोः सम्बन्धमात्रम् । तत्त्वे हि व्याप्तिरूपनान्तरीयकत्वे हि लक्षणा न स्यादिति मञ्चस्य भूतलवृत्तितया मञ्चस्थबालकस्य मञ्चवृत्तितया तयो दैशिकव्याप्तेरभावात् । ननु क्रोशनकाले व्याप्तिरस्त्येवेत्यतो दूषणान्तरमाह–अविनेति । व्याप्तौ सत्यान्तु आक्षेपेण अनुमानादिना नोपयोगः शब्दसहकृतानुमानेनोपस्थिते तटादौ घोषाधिकरणत्वान्वयसिद्धेर्लक्षणाया नोपयोग इत्युक्तं स्वसिद्धये इति कारिकाव्याख्यायाम् ॥

सादृश्येतरसम्बन्धमूलकयोः शुद्धयोः सारोपा-साध्यवसानयो-रुदाहरणमाह-आयुर्घृतमिति । अत्रायुर्जनकत्वाद् घृतमायुःशब्देन लक्ष्यते घृतं जनकम् आयुर्जन्यन्तेन जन्य-जनकभावः सम्बन्धः तयोश्च लक्षणया अभेदः आयुरभिन्नं घृतमिति बोधः ॥

शुद्धसाध्यवसानाया आयुरेवेदमित्युदाहरणम् अत्रेदंशब्देन घृतादेरुपस्थितिः एवमायुः पीयत इत्यप्युदाहरणम् । इत्यादाविति । आदिना इन्द्रार्थाः स्थूणा इन्द्र इति । कार्यकारणभावादि आदिना वक्ष्यमाणतादर्थ्यादिपरिग्रहः । ननु सम्बन्धान्तरं न शुद्धात्वप्रयोजकन्तथा सति गौर्वाहीक इत्यत्राप्येकबुद्धिविषयत्वादेः सम्बन्धान्तरस्य सत्वेन शुद्धात्वापत्तेः किन्तु तत्तत्सम्बन्धपूर्वकत्वं शुद्धात्वप्रयोजकन्तत्कथं सादृश्यान्यसम्बन्धसत्तामात्रेण शुद्धयोस्तयोरिदमुदाहरणमित्यत आह-एवमादाविति । कार्यकारणभावादि लक्षणं स्वरूपं यस्य तथाभूतः सादृश्यातिरिक्तः सम्बन्धः पूर्वो हेतुभूतो ययोस्ते । एवं च प्रकृते न तादृशसम्बन्धस्य सत्तामात्रमपि तु तत्पूर्वकत्वमपीति नोदाहरणत्वाक्षतिः ॥

अथोक्तेषु चतुर्षु गौणीशुद्धोदाहरणेषु रूढ्यभावात्प्रयोजनविवेकं क्रमेणाह-अत्रेति । गौर्वाहीक इत्याद्युदाहरणचतुष्टये मध्ये गौणभेदयोः गौर्वाहीको गौरयमित्यनयोर्मध्ये गौर्वाहीक इत्यत्र भेदेऽपि वाहीकपदप्रयोगाद्वैधर्म्ये भासमानेऽपि ताद्रूप्यस्य तादात्म्यस्य प्रतीतिः प्रयोजनं गौरयमित्यत्र च सर्वथैव गोत्ववाहीकत्वयोर्भेदप्रतीतिं विनैवाभेदावगमोऽभेदप्रतीतिः प्रयोजनं व्यङ्ग्यं भवतीति भावः । शुद्धभेदयोः । आयुर्घृतम् आयुरेवेदमित्यनयोर्मध्ये आयुर्घृतमित्यत्र अन्यवैलक्षण्येन आयुर्जनकान्तरवैलक्षण्येन कार्यकारित्वम् आयुरेवेदमित्यत्र अव्यभिचारेण घृतं क्षीरादिवदायुष्यं प्रति न व्यभिचरतीति नियमेन कार्यकारित्वं प्रयोजनमिति भावः ॥

तादर्थ्यादिसम्बन्धिन उदाहरन्ति—कचिदित्यादि । तादर्थ्याद् उपकार्योपकारकभावरूपसम्बन्धाद् उपचारः लक्षणा इन्द्रार्था इन्द्रपूजाप्रयोजनिका स्थूणा स्तम्भः अत्र स्थूणायां प्रयुक्त इन्द्रशब्दो लाक्षणिकः अभीष्टप्रदत्वं प्रयोजनं व्यङ्ग्यं स्वस्वामिभावाद् एतद्रूपसम्बन्धाद् राजकीयेऽमात्यादौ प्रयुक्तो राजशब्दो लाक्षणिकः अलङ्घनीयाज्ञत्वं प्रयोजनं व्यङ्ग्यम् । अग्रहस्तः अत्र कर्मधारयसमासेऽवयवावयविभावसम्बन्धेन अग्रमात्रे लक्षणा तेन हस्तावयवेन हस्तव्यापारं करोतीति बलाधिक्यं प्रयोजनं व्यङ्ग्यम् । तात्कर्म्यात् तत्कर्मकारित्वरूपसम्बन्धात् । आ-

वाद् यथा अग्रहस्त इत्यत्राग्रमात्रेऽवयवे हस्तः। क्वचित् तात्कर्म्याद् यथा अतक्षा तक्षा॥

(१७) लक्षणा तेन षड्विधा॥ १२॥

आद्यभेदाभ्यां सह। सा च

(१८) व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने।

प्रयोजनं हि व्यञ्जनव्यापारगम्यमेव॥

---

१यस्तगृहकर्मणि तक्षातिरिक्ते प्रयुक्तस्तक्षेतिशब्दो लाक्षणिकस्तत्कर्मनिपुणत्वादिकं प्रयोजनं व्यङ्ग्यम्॥

लक्षणामुपसंहरति—लक्षणा तेनेति। षड्विधा शुद्धा-गौणी-सारोपा-साध्यवसानोपादानलक्षणैः षड्भेदा लक्षणेति कारिकार्थः। ननु सारोपान्या त्वित्यादिना भेदचतुष्टयमेवोक्तन्तथा च कथं षड्विधत्वमत आह—आद्यभेदाभ्यामिति। उपादानलक्षणा लक्षणलक्षणाभ्यां सह। अयमत्र सङ्ग्रहः शुद्धागौणीभेदेन प्रथमतो लक्षणा द्विविधा तत्र उपादानलक्षणा लक्षणलक्षणा सारोपा साध्यवसानेति भेदेन शुद्धा पुनश्चतुर्द्धा गौणी तु सारोपा-साध्यवसानेति भेदेन द्विविधेति षड्विधा लक्षणा केचित्तु शुद्धा गौणीभेदेन लक्षणा द्विविधा तयोराद्या द्विविधा उपादानलक्षणा लक्षणलक्षणा चेति भेदात्। उपादानलक्षणा-लक्षणलक्षणे च प्रत्येकं द्विविधे सारोपा साध्यवसानाभेदात्। एवं शुद्धायाश्चत्वारो भेदाः। गौणी तु सारोपा साध्यवसानेति भेदेन द्विविधेवेति। उपादानसारोपायाः कुन्ताः पुरुषाः प्रविशन्ति। उपादानसाध्यवसानायाः कुन्ताः प्रविशन्ति। लक्षणसारोपाया आयुर्घृतमिति। लक्षणसाध्यवसानाया आयुरेवेदं गङ्गायां घोष इति च गौणसारोपायाः गौर्वाहीकः। गौणसाध्यवसानाया गौरयमित्युदाहरन्ति।

अथोपाधिकृतम्भेदषट्कं प्रतिपाद्य व्यञ्जनकृतं भेदत्रयं प्रतिपादयति—सा चेति। सा लक्षणा रूढौ प्रसिद्धौ सत्यां व्यङ्ग्येन व्यङ्ग्यार्थेन रहिता भवति, प्रयोजने सति व्यङ्ग्यार्थेन सहिता भवतीति कारिकार्थः। अव्यङ्ग्या रूढिलक्षणा,'सव्यङ्ग्या प्रयोजनवतीति भावः। ननु प्रयोजनवत्यां कथमव्यङ्ग्यत्व'नियम इत्यत आह—प्रयोजनंहीति। व्यञ्जनरूपो यो व्यापारस्तद्गम्यमेव इदं चाग्रे स्पष्टम्॥

(१९) तच्च गूढमगूढं वा ।

तच्चेति व्यङ्ग्यम् । गूढं यथा—

मुखं विकसितास्मितं वशितवक्रिमप्रेक्षितं-

समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः ।

---

सव्यङ्ग्यायामपि व्यङ्ग्यभेदेन द्वैविध्यमाह—तच्च गूढमिति । सहृदयमात्रवेद्यं गूढम् । तदितरैरपि वेद्यमगूढम् । काव्यवासनापरिपक्वबुद्धिः सहृदयः एवं च अव्यङ्ग्या-गूढव्यङ्ग्या-अगूढव्यङ्ग्येति त्रिविधा॥

गूढव्यङ्ग्यामुदाहरति—मुखं विकसितेति । कश्चित्पुरुषः काञ्चिद्युवतिमालोक्याह । इन्दुवदनायाः चन्द्रमुख्याः तनौ शरीरे तरुणिम्नः तारुण्यस्य उद्गम आविर्भावो मोदते स्फीतो भवति वर्तते हर्षे हर्षश्च अहो भाग्येन परमोत्सवस्थानमुपसम्पन्नं युवजननयनानामिति । अनेकस्थानेऽनेकविधकार्यजननं स्फीतताचिह्नं तदेव दर्शयति—मुखमिति । विकसितं प्रसृतं स्मितं हास्यविशेषरूपं यत्र तथाभूतं मुखं वक्त्रं वशितः स्वायत्तीकृतः वक्रिमा तिर्यग्गामित्वं येन तथाभूतं प्रेक्षितमवलोकनं समुच्छलिताः निरन्तरमतिशयेन प्रादुर्भूता विभ्रमा हावविशेषा यस्यान्तादृशी गतिर्गमनम् अपास्ता त्यक्ता संस्था नियतविषयवर्तित्वं यया तथाभूता मतिर्बुद्धिः मुकुलितौ ईषदुन्नतौ मुकुलाकारौ वा स्तनौ यत्र तादृशम् उरो वक्षःस्थलम् असबन्धेन अवयवानां दृढबन्धेन उद्धुरं विलक्षणरतियोग्यं जघनमूरुमूलभागः । अत्र स्मिते पुष्पधर्मस्य विकासस्य बाधितत्वात् प्रसृते सातिशयत्वे च लक्षणा सौरभादि व्यङ्ग्यम् । प्रेक्षिते चेतनधर्मस्य वशीकरणस्य बाधितत्वात्स्वाधीनत्वे लक्षणा युक्तानुरागित्वं व्यङ्ग्यम् । विभ्रमे मूर्तद्रवधर्मस्य ऊर्ध्वगतिविशेषरूपसमुच्छलनस्य बाधितत्वाद् बाहुल्यं लक्ष्यते बहुलं हि समुच्छलति सकलमनोहारित्वं व्यङ्ग्यम् । मतौ चेतनधर्मस्य मर्यादात्यागस्य बाधितत्वाद्धीरत्वं लक्ष्यते पूर्वं मुग्धतया गुरुजनसन्निधौ प्रियतमेऽपि अङ्गीकृतमर्यादा मतिरासीद् इदानीं मौग्ध्यत्यागान्न तथेत्यनुरागातिशयो व्यङ्ग्यः । स्तनयोः पुष्पधर्मस्य मुकुलितत्वस्य बाधितत्वात्काठिन्यं लक्ष्यते आलिङ्गनयोग्यत्वं व्यङ्ग्यम् । जघने चेतनधर्मस्य उत्कृष्टधुरावत्त्वरूपस्य उद्धुरत्वस्य बाधितत्वाद्विलक्षणरतियोग्यत्वं लक्ष्यते रमणीयत्वं व्यङ्ग्यम् । यौवनोद्गमे चेतनधर्मस्य मोदस्य बाधितत्वादुत्कर्षो लक्ष्यते स्पृहणीयत्वं व्यङ्ग्यमिति सहृदयैरेव ज्ञायमानानीति

उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं-
बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥ ९ ॥

अगूढं यथा—

श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम्।
उपदिशति कामिनीनां यौवनमद एव ललितानि ॥ १० ॥

अत्रोपदिशतीति।

(२०) तदेषा कथिता त्रिधा ॥ १३ ॥

अव्यङ्ग्या गूढव्यङ्ग्या अगूढव्यङ्ग्या च।

(२१) तद्भूर्लाक्षणिकः।

शब्द इति सम्बध्यते तद्भूस्तदाश्रयः।

(२२) तत्र व्यापारो व्यञ्जनात्मकः।

---

गूढव्यङ्ग्यमिदं काव्यम्। पृथ्वीच्छन्दः। जसौ जसयलावसुग्रहयतिश्च पृथ्वी गुरुरिति लक्षणात् ॥ ९ ॥

अगूढमुदाहरति—श्रीपरिचयादिति। जडा अनभिज्ञा अपि श्रियो-लक्ष्म्याः परिचयात् सम्बन्धात् विदग्धानि चतुराणि यानि चरितानि चरित्राणि तेषामभिज्ञाः ज्ञातारो भवन्ति, अर्थान्तरं न्यस्यति-यौवनस्य तारुण्यस्य मदो भर एव कामिनीनां ललितानि अङ्गानां विन्यासान् उपदिशति। अत्रोपदिशतीति पदमगूढव्यङ्ग्यम्। यौवनमदे चेतनधर्मस्य उपदेशकर्तृत्वस्य बाधितत्वादाविष्कारमात्रं लक्ष्यम् अनायासेन ललितज्ञानं व्यङ्ग्यम्। तच्चेतरैरपि वेद्यमिति अगूढव्यङ्ग्यमिदं काव्यम् ॥ १० ॥

उक्तमुपसंहरति—तदेषेति ॥ १३ ॥

अवान्तरभेदसहितां लक्षणां प्रदर्श्य पूर्वोक्तं लाक्षणिकं शब्दं लक्षयति—तद्भूर्लाक्षणिक इति। यः शब्दो यदर्थविषयकलक्षणाश्रयः स तल्लाक्षणिक इत्युच्यत इत्यर्थः।

अथ व्यञ्जकशब्दमवतारयितुं व्यञ्जनास्वरूपमाह—तत्र व्यापार इति। तत्र पावनत्वादिप्रयोजनविषये व्यापारः शब्दस्य वृत्तिः व्यञ्जनात्मकः व्यञ्जनास्वरूपः। अथ वा लक्षणाप्रस्तावाल्लक्षणामूलां व्यञ्जनां निरूपयति—तत्रेति। लाक्षणिके शब्दे व्यापारो व्यङ्ग्यार्थप्रकाशानुकूलो व्यञ्जनात्मक इत्यर्थः ॥

कुत इत्याह—

(२३) यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ॥ १४ ॥

फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ।

प्रयोजनप्रतिपिपादयिषया यत्र लक्षणया शब्दप्रयोगस्तत्र नान्यतस्तत्प्रतीतिरपि तु तस्मादेव शब्दात् । न चात्र व्यञ्जनादृतेऽन्यो व्यापारः ।

तथा हि—

(२४) नाभिधा समयाभावात् ।

गङ्गायां घोष इत्यादौ ये पावनत्वादयो धर्मास्तटादौ प्रतीयन्तेन तत्र गङ्गादिशब्दाः सङ्केतिताः ॥

(२५) हेत्वभावान्न लक्षणा ॥ १५ ॥

मुख्यार्थबाधादित्रयं हेतुः ॥

---

अत्र कुत इत्यनेन प्रमाणाभावमाशङ्क्य अर्थापत्तिप्रमाणं दर्शयति-यस्य प्रतीतिरिति । यस्य शैत्यपावनत्वादिफलस्य प्रतीतिमनुभवमाधातुं-जनयितुं लक्षणा लाक्षणिकशब्दः समुपास्यते वाचकशब्दं विहाय आद्रियते शब्दैकगम्ये लाक्षणिकशब्दमात्रबोध्ये अत्र फले शैत्यादिप्रयोजनविषये व्यञ्जनाद् व्यञ्जनं विहाय अपरा क्रिया अन्यो व्यापारो नास्तीत्यर्थः । प्रतीतिमाधातुमिति व्याकरोति—प्रयोजनेत्यादि । यत्र यस्मिन्वाक्ये तत्र तस्मिन्वाक्ये गङ्गायां घोष इत्यादौ नान्यतो-न प्रमाणान्तरात् तत्प्रतीतिः प्रयोजनप्रतीतिः तस्मादेव लाक्षणिकादेव अत्र प्रयोजनविषये ॥ १४ ॥

ननु पावनत्वादिप्रतिपादने अभिधादिरेव व्यापारोऽस्तु किं व्यञ्जनयेत्यत आह—नाभिधेति । न शक्तिः प्रयोजनप्रतिपादनसमर्था समयाभावाद् गङ्गादिपदस्य शैत्यादौ सङ्केताभावात् पावनत्वादिकं-प्रयोजनं न गङ्गापदाभिधाप्रतिपाद्यं, गङ्गापदनिष्ठसङ्केताविषयत्वादित्यर्थः ॥

ननु तीरादौ लाक्षणिकस्य पुनः शैत्यादौ लक्षणैवास्तु किं व्यञ्जनयेति मतं निराकरोति—हेत्वभावादिति । मुख्यार्थबाधः मुख्यार्थयोगः रूढिप्रयोजनान्यतरदिति त्रयं लक्षणाहेतुः तस्याभावान्न पुनर्लक्षणायाः सम्भव इत्यर्थः । पावनत्वादिकं न गङ्गापदलक्षणाप्रतिपाद्यं प्रकृतपदलक्षणाजन्यज्ञानसामग्रीरहितत्वात् ॥ १५ ॥

तथा च—

**(२६) लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो।**
**न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः॥ १६॥**

यथा गङ्गाशब्दः स्रोतसि सबाध इति तटं लक्षयति, यदि तद्वत् तटेऽपि सबाधः स्यात् तत् प्रयोजनं लक्षयेत् न च तटं मुख्योऽर्थः, नाप्यत्र बाधः, न च गङ्गाशब्दार्थस्य तटस्य पावनत्वाद्यैर्लक्षणीयैः सम्बन्धः, नापि प्रयोजने लक्ष्ये किञ्चित् प्रयोजनम्, नापि गङ्गाशब्दस्तटमिव प्रयोजनं प्रतिपादयितुमसमर्थः॥

**(२७) एवमप्यनवस्था स्याद् या मूलक्षयकारिणी।**

एवमपि प्रयोजनं चेल्लक्ष्यते तत् प्रयोजनान्तरेण तदपि प्रयोजनान्तरेणेति प्रकृता प्रतीतिकृद् अनवस्था भवेत्॥

---

हेत्वभावं दर्शयति—तथा चेति। अत्र चशब्दो ह्यर्थे तथा हीत्यर्थः लक्ष्यं तीरादिकं न मुख्यं न शक्यम् अत्र लक्ष्ये बाधः घोषाधिकरणत्वासंभवोऽपि न फलेन पावनत्वादिना प्रयोजनेन योगः तीरस्य साक्षात्सम्बन्धो न एतस्मिन् प्रयोजने प्रयोजनम् अन्यत्प्रयोजनञ्च एतेन बीजत्रयं विना कथं लक्षणा स्यादित्युक्तम्। ननु मुख्यार्थबाधादिहेतुत्रयं विनैव लक्षणाऽस्त्वित्यत आह—न च शब्दः। शब्दो लाक्षणिकशब्दः। स्खलन्ती प्रच्युता भवन्ती गतिः प्रयोजने बोधकतारूपसामर्थ्यं यस्य तादृशो न गङ्गाशब्दादेव प्रयोजनप्रतिपादनादिति कारिकार्थः॥१६॥

लक्ष्यं न मुख्यमिति व्याकरोति—यथेति। नाप्यत्र बाध इति व्याकरोति—नाप्यत्र बाध इति। योगः फलेन नो इति व्याकरोति—न च गङ्गेति। सम्बन्धः साक्षात्सम्बन्धः। न प्रयोजनमित्यादि व्याकरोति—नापीति। न च शब्द इत्यादि व्याकरोति–नापि गङ्गेति। यथा गङ्गाशब्दो मुख्यार्थबाधादिकं विना तटं प्रतिपादयितुमसमर्थः तथा पावनत्वादिप्रयोजनप्रतिपादनेऽसमर्थो नेति व्यतिरेकदृष्टान्तः॥

प्रयोजनस्य लक्ष्यत्वाभावं प्रतिपाद्य तस्य लक्ष्यत्वे दूषणमप्याह—एवमप्यनेति। प्रयोजनस्य लक्ष्यत्वेऽपि अनवस्था अनवस्थितिः स्यात्। ननु बीजाङ्कुरन्यायेनानवस्था न दोषायेत्यत आह—या मूलेति। स्पष्टमेतत्। कारिकां व्याचष्टे—एवमपीति। प्रयोजनान्तरेण प्रयोजनान्तररूपेण हेतुना लक्ष्यत इत्यर्थः। मूलक्षयेत्यादि व्याचष्टे—

ननु पावनत्वादिधर्मयुक्तमेव तटं लक्ष्यते गङ्गायास्तटे घोष इत्यतोऽधिकस्यार्थस्य प्रतीतिश्च प्रयोजनमिति विशिष्टे लक्षणा तत्किं व्यञ्जनयेत्याह—

(२८) प्रयोजनेन सहितं लक्षणीयं न युज्यते ॥ १७ ॥

कुत इत्याह—

(२९) ज्ञानस्य विषयो ह्यन्यः फलमन्यदुदाहृतम् ।

प्रत्यक्षादेर्नीलादिर्विषयः फलं च प्रकटता संवित्तिर्वा ।

(३०) विशिष्टे लक्षणा नैवम् ।

व्याख्यातम्

(३१) विशेषाः स्युस्तु लक्षिते ॥ १८ ॥

---

प्रकृतेति । प्रयोजनस्यापर्यवसानेन प्रस्तुतस्य तीरादेः पावनत्वादेर्वा बोधानुदयप्रसङ्ग इति भावः ।

ननु प्रयोजनसहितमेव तटादिकं लक्ष्यते न केवलं प्रयोजनमित्याशङ्क्योत्तरसूत्रमवतारयति—नन्वित्यादिना । विशिष्टस्य लक्ष्यत्वे प्रयोजनाविरह इत्यत आह—गङ्गायास्तट इत्यादि । गङ्गायास्तटे घोष इति प्रयोगापेक्षया अधिकस्य पावनत्वादिवैशिष्ट्यरूपस्य प्रयोजनं फलं विशिष्टे पावनत्वादियुक्ते तटे । प्रयोजनेनेति लक्षणीयं लक्षणाजन्यज्ञानविषयन्तथा हि प्रयोजनेन प्रयोजनीभूतज्ञानविषयपावनत्वादिना सहितं न युज्यते युक्तं न भवतीति कारिकार्थः ॥ १७ ॥

ज्ञानस्येति । यथा ज्ञानस्य विषयो ज्ञानादन्यो भवति तथा ज्ञानस्य फलमपि ज्ञानादन्यद्भवति तथा च यथा प्रत्यक्षस्य विषयफलयोः प्रत्यक्षाद्भिन्नत्वं प्रसिद्धन्तथा लक्षणाजन्यज्ञानात् तत्फलस्य पावनत्वादिज्ञानस्यान्यत्वमवश्यमेषितव्यमिति कारिकार्थः । प्रत्यक्षादेरिति । इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम् आदिनाऽनुमानादिर्गृह्यते प्रकटतेति । मीमांसकमते घटज्ञानानन्तरं ज्ञातो घट इति प्रत्ययात्तज्ज्ञानेन तस्मिन्घटे ज्ञाततारूपा प्रकटता जायते तथा च ज्ञेयधर्मः प्रकटता प्रत्यक्षादिज्ञानस्य फलमिति सिद्धम् । नैयायिकमते घटज्ञाने सति घटमहं जानामीत्यनुव्यवसायरूपा संवित्तिर्घटज्ञानाज्जायते तथा च ज्ञातृधर्मः संवित्तिः प्रत्यक्षादिज्ञानस्य फलमिति सिद्धम् ।

उपसंहरति—विशिष्टेति । एवमुक्तयुक्त्या व्याख्यातमिति व्याख्यातप्रा-

तटादौ ये विशेषाः पावनत्वादयस्ते चाभिधा-तात्पर्य-लक्षणाभ्यो व्यापारान्तरेण गम्याः । तच्च व्यञ्जन-ध्वनन-द्योतनादिशब्दवाच्यमवश्यमेषितव्यम् ॥

एवं लक्षणामूलं व्यञ्जकत्वमुक्तमभिधामूलं त्वाह—

(३२) अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम् ॥ १९ ॥
संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥ इत्युक्तदिशा

सशङ्खचक्रो हरिः । अशङ्खचक्रो हरिरित्युच्यते । राम-लक्ष्मणाविति दाशरथौ । रामार्जुनगतिस्तयोरिति भार्गव-कार्त्तवीर्ययोः । स्थाणुं भज भवच्छिदे इति हरे । सर्वं जानाति देव इति युष्मदर्थे । कुपितो मकरध्वज इति कामे । देवस्य पुरारातेरिति शंभौ । मधुना मत्तः कोकिल इति वसन्ते । पातु वो दयितामुखमिति साम्मुख्ये । भात्यत्र परमेश्वर इति राजधानीरूपाद्देशाद्राजनि । चित्रभानुर्विभातीति दिने

---

यम् । पाठमात्रेणैवावगतार्थमिति न मया व्याख्यातमिति यावत् । कथन्तर्हि पावनत्वादयो ज्ञायन्तेऽत आह—विशेषा इति । व्याकरोति—तटादाविति । लक्षिते लक्षणाबोधिततटादौ तच्चेति व्यापारान्तरं चेत्यर्थः॥

अनेकार्थेति। अनेक अर्था यस्य तस्य अनेकत्र गृहीतशक्तिकस्य शब्दस्य वाचकत्वे अभिधायां संयोगाद्यैः वक्ष्यमाणसंयोगादिभिः नियन्त्रिते एकत्र नियमिते सति अवाच्यार्थस्य अभिधया प्रतिपादयितुमशक्यस्य धीकृत् प्रतीतिहेतुर्या व्यापृतिर्व्यापारः सा अञ्जनम् व्यञ्जनमेवेत्यर्थः । अभिधया बोधयितुमशक्यार्थस्य बोधने समर्था वृत्तिर्व्यञ्जना नामेति भावः । इयं चाभिधामूला शाब्दी व्यञ्जनेत्युच्यते ॥ १९ ॥

अत्र भर्तृहरिसम्मतिमाह-संयोग इति । संयोगः प्रसिद्धसम्बन्धः विप्रयोगः प्रसिद्धसम्बन्धविभागः साहचर्यम् एकस्मिन्कार्ये मिथः सापेक्षत्वं सादृश्यं वा विरोधिता बध्यघातकत्वं सहानवस्थानं च अर्थः अनन्यथा साध्यं फलम् प्रकरणम् वक्तृश्रोतृबुद्धिस्थता लिङ्गं

रवौ, रात्रौ वन्हौ। मित्रं भातीति सुहृदि। मित्रो भातीति रवौ। इन्द्र-शत्रुरित्यादौ वेद एव न काव्ये स्वरो विशेषप्रतीतिकृत्॥

---

संयोगातिरिक्तसम्बन्धेन परपक्षव्यावर्तको धर्मः शब्दस्यान्यस्य सन्निधिः समासाद्यनधीनसमानार्थताकशब्दान्तरसमभिव्याहारः सामर्थ्यम् कारणता औचिती योग्यता देशकालौ तद्विशेषौ व्यक्तिः पुंस्त्वादिलिङ्गं, स्वर उदात्तादिः एते शब्दवाच्यार्थस्य अनवच्छेदे कतमोऽर्थोऽत्र विवक्षित इति सन्देहे सति विशेषस्मृतिहेतवः विशेषस्य विवक्षितार्थस्य या स्मृतिर्ज्ञानं तद्धेतवस्तज्जनका भवन्तीत्यर्थः। क्रमेणोदाहरति—सशङ्खेति।

यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु।
शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु॥

इतिकोशादनेकार्थकस्य हरिशब्दस्य वाचकता शङ्खादिसंयोगेन विष्णौ नियम्यते। अशङ्खचक्रेति। संयोगपूर्वकत्वाद्विभागस्येति विष्णोरन्यत्र शङ्खादिविभागाभावाद् हरिशब्दस्य वाचकता विप्रयोगेन अच्युते नियम्यते। रामलक्ष्मणाविति।

रामः पशुविशेषे स्याज्जामदग्न्ये हलायुधे।
राघवे चासिते श्वेते मनोज्ञेऽपि च वाच्यवत्॥

इति विश्वकोशाद्रामशब्दोऽनेकार्थक इति तस्य वाचकता साहचर्येण दाशरथौ नियम्यते। रामार्जुनेति। अर्जुनविरोधित्वाद्रामो जामदग्न्य एव अर्जुनः कार्त्तवीर्य एव तद्वध्यत्वात् तयोर्योद्ध्रोः रामार्जुनगतिरिति विरोधित्वेन वध्यघातकत्वेनोपमायामिदमुदाहरणम्। सहानवस्थानरूपविरोधित्वस्य तु छायातपावित्युदाहरणम्।

छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः।

इतिकोशादनेकार्थकस्य छायाशब्दस्य वाचकता आतपविरोधेन अनातपे नियम्यते। स्थाणुरिति। भवच्छिदे संसारच्छेदाय।

स्थाणुर्वा ना ध्रुवः शङ्कुः स्थाणूरुद्र उमापतिः।

इतिकोशात्स्थाणुशब्दोऽनेकार्थक इति तस्य वाचकता भवच्छेदरूपेण फलेन शिवे नियम्यते। सर्वमिति।

अमरा निर्जरा देवाः।
राजा भट्टारको देवः।
देवो मेघे सुरे राज्ञि।

इत्यमर-विश्वकोशाभ्यां नानार्थकदेवशब्दस्य वाचकता प्रकरणे-

आदिग्रहणात्—

एद्दहमेत्तत्थणिआ एद्दहमेत्तेहि अच्छिवत्तेहिं ।
एद्दहमेत्तावत्था एद्दहमेत्तेहि दिअएहिं ॥ ११ ॥

इत्यादावभिनयादयः । इत्थं संयोगादिभिरर्थान्तराभिधायकत्वे नि-

---

न युष्मदर्थे राजनि नियम्यते । कुपित इति । मकरो नक्रो जन्तुविशेषस्त-दाकारः स एव वा ध्वजो यस्येति विग्रहे नानार्थकस्य मकरध्वजशब्द-स्य वाचकता मकराकारध्वजसमुद्राभ्यां व्यावृत्तेन समवायसम्बन्ध-वता कोपरूपलिङ्गेन मन्मथे नियम्यते । देवस्येति । अन्यस्य राजादेः पुरारातित्वासम्भवेन तत्समभिव्याहारेण अनेकार्थकस्य देवशब्द-स्य वाचकता शम्भौ नियम्यते । मधुनेति ।

मधु पुष्परसे क्षौद्रे मद्ये ना तु मधु द्रुवे ।
वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति ॥

इति मेदिनीकोशान्नानार्थकस्य मधुशब्दस्य वाचकता कोकिल-मादनसामर्थ्येन वसन्ते नियम्यते । पात्विति ।

मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि ।
सन्ध्यन्तरे नाटकादेः शब्देऽपि च नपुंसकम् ॥

इतिमेदिनीकोशान्मुखशब्दस्य नानार्थकस्य वाचकता उत्क-ण्ठितमनोरथसाधनौचित्येन साम्मुख्ये आनुकूल्ये नियम्यते दयिता-मुखं वो युष्माकं सम्मुखीभवत्वित्यर्थे तात्पर्यम् । भात्यत्रेति । परमे-श्वरशब्दस्य विष्णुशिवादौ शक्ततया नानार्थकत्वेन तस्य वाचकता राजधानीरूपदेशेन राजनि नियम्यते । चित्रेति । चित्रा भानवः किरणा यस्येतिविग्रहे नानार्थकस्य चित्रभानुशब्दस्य वाचकता दिने प्रयोगे सूर्ये रात्रौ प्रयोगे वह्नौ नियम्यते । मित्रमिति । मित्रं सुहृदि मित्रोऽर्के इति कोशान्नानार्थकस्य मित्रशब्दस्य वाचकता नपुंसकरूपव्यक्त्या सुहृदि नियम्यते पुल्लिँङ्गरूपव्यक्त्या सूर्ये नियम्यते । इन्द्रशत्रुरिति । इन्द्रशत्रुर्वर्धस्वेति वेदे इन्द्रः शत्रुः शातयिता यस्येति बहुव्रीहौ आ-द्युदात्तत्वेन इन्द्रस्य शासनकत्वावगमः । षष्ठीतत्पुरुषे अन्त्यपदो-दात्तत्वेन इन्द्रस्य शासनकर्मत्वावगम इतीन्द्रशत्रुशब्दस्य नानार्थ-कस्य वाचकता स्वरेण नियम्यते ॥

स्वरादय इत्यत्रादिपदग्राह्यमभिनयमुदाहरति—एद्दहेति ।

एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपत्राभ्याम् ।
एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः ।

वारितेऽप्यनेकार्थस्य शब्दस्य यत्क्व चिदर्थान्तरप्रतिपादनं तत्र नाभिधा नियमनात्तस्याः । न च लक्षणा मुख्यार्थबाधाद्यभावाद् अपि त्वञ्जनं व्यञ्जनमेव व्यापारः । यथा—

भद्रात्मनो दुरधिरोहतनोर्विशाल—
वंशोन्नतेः कृतशिलीमुखसङ्ग्रहस्य ।

---

इति संस्कृतम् । चिरप्रवासिनि नायके नायिकावस्थां बोधयन्त्याः कस्याश्चिदुक्तिरियम् । एतद् आमलकादिरूपं परिमाणं ययोस्तौ एतावन्तौ तावेव एतावन्मात्रौ वत्वन्तात्स्वार्थे मात्रच् अथवा चिदेव चिन्मात्रमिति वत् एवार्थकमात्रशब्देन मयूरव्यंसकादित्वात्समासः । एतावन्मात्रौ स्तनौ यस्याः सा तथाभूता एवमेतद् विवक्षितकमलदलादिरूपं परिमाणं ययोस्ते एतावन्मात्रे ताभ्यामक्षिपत्राभ्यां नयनदलाभ्यामुपलक्षिता एवमेतद् बुद्धिस्थपरिमाणं संख्या येषान्तथाविधैर्दिवसैर्लक्षणया वर्षैः एतावद् विवक्षितपरिमाणमुच्चतादि यस्याः सा एतावन्मात्रा तथाभूताऽवस्था स्वरूपं यस्याः सेत्यर्थः । अत्र बुद्धिस्थतत्तदर्थशक्तस्य नानार्थकस्यैतच्छब्दस्य वाचकता अभिनयेन स्तनप्रदर्शने आमलकमुकुलाद्याकाररूपेण अक्षिप्रदर्शने पद्मपलाशाद्याकाररूपेण अवस्थाप्रदर्शने उच्चतापुष्ट्यादिप्रदर्शकरूपेण , दिवसप्रदर्शनेऽङ्गुल्यग्रधारणादिरूपेण स्तनादिगतपरिमाणविशेषरूपेऽर्थे नियम्यते । अभिनयादय इत्यत्रादिपदादपदेशो गृह्यते अपदेशश्च हृदयनिहितहस्तादिनाऽभिमतनिर्देशः यथा कुमारसम्भवे—

इतः स दैत्यः प्राप्तश्रीर्नेति एवार्हति क्षयम् ।
विषवृक्षोऽपि संवर्ध्य स्वयं च्छेत्तुमसाम्प्रतम् ॥

इतिपद्ये बुद्धिस्थपरामर्शकत्वेन नानार्थकस्य इत इतिशब्दस्य वाचकता अपदेशेन वक्तरि नियम्यते ॥ ११ ॥

अनेकार्थस्य शब्दस्येति कारिकां सङ्गमयति—इत्थमिति । नि-वारितेऽपि अर्थान्तरं निवार्य प्रकृतार्थबोधनेऽपि क्व चित् वक्तृवैशिष्ट्यादिसाहाय्यवति अथ वा श्लिष्टशब्दविन्यासरूपकविकौशलवति प्रतिपादनं बोधनं तत्र अर्थेऽभिधाने तस्या अभिधाया नियमनात् संयोगादिभिर्नियन्त्रणात् । अन्यत्सुगमम् ॥

अभिधामूलां शाब्दव्यञ्जनामुदाहरति-भद्रेति । कस्यचिद्राज्ञो वर्णनमिदम् । यस्य राज्ञः करः पाणिः सततं निरन्तरं दानस्य वितरणस्य यदम्बु जलं तस्य सेकेन सेचनेन सुभगः शोभनोऽभूत् । की-

यस्यानुपप्लवगतेः परवारणस्य-

दानाम्बुसेकसुभगः सततं करोऽभूत् ॥ १२ ॥

(३३) तद्युक्तो व्यञ्जकः शब्दः ।

तद्युक्तो व्यञ्जनयुक्तः ।

(३४) यत्सोऽर्थान्तरयुक् तथा ।

---

दृशस्य भद्रः शोभन आत्मा स्वरूपं यस्य तथाभूतस्य तथा दुरधिरोहा परैरनभिभवनीया तनुः शरीरं यस्य तस्य तथा विशाले महति वंशे कुले उन्नतिः ख्यातिर्यस्य तस्य अथ वा विशालवंशस्योन्नतिर्यस्मादिति तथा कृतो विहितः शिलीमुखानां बाणानां सङ्ग्रहोऽभ्यासो येन तस्य तथा अनुपप्लुता अबाधिता गतिर्ज्ञानं यस्य तस्य तथा परान् शत्रून् वारयति निवारयतीति परवारणस्तस्येति प्राकरणिकराजपक्षेऽर्थः । अप्राकरणिकगजपक्षे तु यस्य परस्योत्कृष्टस्य वारणस्य गजस्य करः शुण्डादण्डः दानाम्बुसेकसुभगः मदजलसेकसुन्दरोऽभूत् । कीदृशस्य भद्रात्मनो भद्रजातीयस्य भद्रो-मन्दो मृगश्चेत्यादिनाऽष्टगजजातिप्रतिपादनात् । तथा दुरधिरोहतनोः अत्युच्चतया दुःखाधिरोहशरीरस्य तथा विशाला वंशस्य पृष्ठदण्डस्योन्नतिरुच्चता यस्य तस्य तथा कृतशिलीमुखसङ्ग्रहस्य स्वमदसुगन्धिना कृतभ्रमरसङ्ग्रहस्य तथा अनुपप्लुतगतेः अनुद्धतगमनस्येत्यर्थः । उक्ता वसन्ततिलका तभजा जगौ ग इति लक्षणाद्वसन्ततिलकाच्छन्दः । अत्र या द्वितीयार्थप्रतीतिस्तत्राभिधायाः प्रकृतार्थबोधनविरामाल् लक्षणायाश्च मुख्यार्थबाधादित्रयहेतोरभावाद् व्यञ्जनाख्या वृत्तिरुपास्येति विश्वनाथ इत्यलं विस्तरेण ॥ १२ ॥

व्यञ्जनां निरूप्य व्यञ्जकशब्दं लक्षयति–तद्युक्त इति । व्यञ्जनायुक्तः शब्दो व्यञ्जक इत्युच्यत इति कारिकार्थः । ननु भद्रात्मन इत्याद्युदाहरणे शब्दमात्रस्य व्यञ्जकत्वेऽपि शब्दार्थयुगलरूपकाव्यस्य व्यञ्जकत्वाभावात्कथं ध्वनित्वमित्याशङ्क्य सहकारितया अर्थस्य व्यञ्जकत्वमस्तीत्याह–यत्सोऽर्थेति । स शब्दः यत् यस्मात्कारणात् अर्थस्य स्वशक्यप्रकृतार्थस्य अन्तरेण व्यवधानेन युक् युक्तः तथा व्यञ्जको भवति अतस्तत्र काव्ये अर्थोऽपि स्वशक्यप्रकृतार्थोऽपि सहकारितया अप्रधानतया व्यञ्जको मतः संमतः प्रकृतार्थबोधनानन्तरमेव

अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः ॥ १९ ॥

तथेति व्यञ्जकः ।

इति श्रीकाव्यप्रकाशे शब्दार्थस्वरूपनिर्णयो नाम द्वितीय उल्लासः ।

---

(३५) अर्थाः प्रोक्ताः पुरा तेषाम् ।

अर्था वाच्य-लक्ष्य-व्यङ्ग्याः । तेषां वाचक-लाक्षणिक व्यञ्जकानाम् ।

(३६) अर्थव्यञ्जकतोच्यते ।

कीदृशीत्याह--

(३७) वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः ॥२१॥
प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम् ।
योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ॥ २२ ॥

---

व्यङ्ग्यार्थबोधादर्थस्य सहकारित्वमिति कारिकार्थः ॥ २० ॥

इतिश्री काव्यप्रकाशे नागेश्वरीटीकायां द्वितीयोल्लासः ॥

---

अर्थव्यञ्जनां प्रतिपादयितुं पूर्वोक्तं स्मारयति-अर्था इति । पुरा वाच्यादयस्तदर्थाः स्युरित्यत्र तेषां वाचकादिशब्दानामर्था वाच्यादयः प्रोक्ता इदानीमर्थव्यञ्जकतोच्यत इति कारिकार्थः । सा किंस्वरूपेत्यत आह-वक्त्रिति । परप्रतिपत्तये वाक्योच्चारयिता वक्ता कविनायकादिर्वा बोधनीयः पुरुषादिर्बोद्धव्यः शोकभीत्याद्यनुमापको ध्वनिः काकुः तासाम् एवं परस्परान्वितार्थकपदानां समूहो वाक्यं शक्योऽर्थो वाच्यः अन्यस्य वक्तृबोद्धव्यभिन्नस्य सन्निधिः सामीप्यम् वाक्यवाच्याभ्यां सहितोऽन्यसन्निधिरिति मध्यमपदलोपी समासः । तथा प्रस्तावः प्रकरणं देशो विजनादिः कालो वसन्तादिः आदिना चेष्टादिः एतेषां वैशिष्ट्यात् संबन्धाद् वैलक्षण्याद्वा प्रतिभाजुषाम् काव्यवासनापरिपक्वबुद्धीनां या अन्यार्थधीः व्यङ्ग्यप्रतीतिः तद्धेतुर्योऽर्थस्य वाच्य-लक्ष्य-व्यङ्ग्यरूपस्य व्यापारः सा व्यक्तिरेव व्यज्यतेऽनयेति करणव्युत्पत्त्या व्यक्तिर्व्यञ्जनैवेति कारिकार्थः । तथा च वक्त्रादिवैशिष्ट्यहेतुका या सहृदयानामन्यार्थधीस्तद्धेतुव्यापारत्वं व्यञ्जनायाः स्वरूपमिति दिक् ॥ २१ ॥ २२ ॥

बोद्धव्यः प्रतिपाद्यः। काकुर्ध्वनेर्विकारः। प्रस्तावः प्रकरणम्।
अर्थस्य वाच्य-लक्ष्य-व्यङ्ग्यात्मनः। क्रमेणोदाहरति--

अइपिहुलं जलकुंभं घेत्तूण समागदह्मि सहि तुरिअम्।
समसेअसलिलणीसासणीसहा वीसमामि खणम्॥ १३॥

अत्र चौर्यरतगोपनं गम्यते।

ओण्णिद्दं दोब्बल्लं चिन्ता अलसत्तणं सणीससिअम्।
मम मन्दभाइणीए केरं सहि तुहवि अहह परिहवइ॥ १४॥

---

वक्तृवैशिष्ट्याद्वाच्यस्य व्यञ्जकत्वमुदाहरति-अइपिहुलमिति।

अतिपृथुलं जलकुम्भं गृहीत्वा समागताऽस्मि सखि त्वरितम्।
श्रमस्वेदसलिलनिःश्वासनिःसहा विश्राम्यामि क्षणम्॥

इति संस्कृतम्। जलानयनमार्गे उपनायकोपभुक्ताया घर्मजलाद्युपभोगचिह्नेनोपभोगं सम्भावयन्तीं सखीम्प्रत्युक्तिरियम्। अस्मीत्यहमर्थकमव्ययं हे सखि! अहमतिशयेन पृथुलं महान्तं जलपूर्णं कुम्भं गृहीत्वा त्वरितमेव समागता श्रमाद् यौ स्वेदसलिलनिःश्वासौ ताभ्यां निःसहा चलितुमक्षमा अतः क्षणं विश्राम्यामि विश्रामं करोमीत्यर्थः। ईदृशकुम्भवहनजन्य एवायं श्रमो नान्यथा शङ्कनीय इति भावः। अत्र प्रमाणान्तरेणासतीत्वावगते सति व्यभिचारिणी वदतीति वक्तृवैशिष्ट्याद् वाच्यघटितवाक्यार्थस्य चौर्येण कृतं रतं गोपयतीति प्रतिभाशालिनः सामाजिकान्प्रति व्यङ्ग्यम्। अत्र शब्दपरिवृत्तिसहत्वादर्थस्यैवेयं वृत्तिरिति ध्येयम्॥ १३॥

बोद्धव्यवैशिष्ट्याद्वाच्यस्य व्यञ्जकत्वमाह-ओण्णिद्दमिति।

औन्निद्र्यं दौर्बल्यं चिन्ताऽलसत्वं सनिःश्वसितम्।
मम मन्दभागिन्याः कृते सखि! त्वामपि अहह परिभवति॥

इति संस्कृतम्। कृतनायकसम्भोगां दूतीम्प्रति उपभोगचिह्नैः सम्भोगं ज्ञातवत्या नायिकाया उक्तिरियम्। हे सखि! सनिःश्वसितं निःश्वाससहितम् औन्निद्र्यं विगतनिद्रत्वं दौर्बल्यं दुर्बलता चिन्तया आलस्यं च कर्तृ मन्दः स्वल्पो भागो भागधेयं विद्यते यस्यास्तस्या मम कृते मदर्थं त्वामपि परिभवति पीडयतीत्यर्थः। अत्र बोद्धव्याया दूत्या अन्यदाऽपि दृष्टदुष्टचेष्टाया वैशिष्ट्याद् वाच्यघटितवाक्यार्थस्य स्वकामुकोपभोक्तृत्वमेषा प्रकाशयतीति सामाजिकान्प्रति व्यङ्ग्यम्॥ १४॥

अत्र दूत्यास्तत्कामुकोपभोगो व्यज्यते ।

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां-
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं-
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥ १५ ॥

अत्र मयि न योग्यः खेदः कुरुषु तु योग्य इति काका प्रकाश्यते। न च वाच्यसिद्ध्यङ्गमत्र काकुरिति गुणीभूतव्यङ्ग्यत्वं शङ्क्यं प्रश्नमात्रेणापि काकोर्विश्रान्तेः ।

---

काकुवैशिष्ट्याद्वाच्यस्य व्यञ्जकत्वमाह-तथाभूतामिति । वेणीसंहारे भीमसेनस्य सहदेवं प्रत्युक्तिरियम् । गुरुर्युधिष्ठिरः खिन्ने म्लाने मयि खेदं मात्सर्यं भजति कुरुषु कुर्वपत्येषु दुर्योधनादिषु अद्यापि प्रत्यपकारक्षमकालेऽपि न भजतीति काका सोपहासो वाक्यार्थः । खेदकारणमाह-तथाभूतामित्यादि । नृपसदसि राजसभायां न तु यत्र कुत्रचित् तथाभूतां रजस्वलां दुःशासनाकृष्टवसनकचपाशां पाञ्चालस्य द्रुपदराजस्य तनयां न तु यस्य कस्यचिद् दृष्ट्वा वल्कलधरैरस्माभिर्वने द्वैतवने व्याधैर्वनचरैः सार्धं यत्सुचिरं बहुकालमुषितं निवासः कृतस्तद् एवं विराटस्य राज्ञ आवासे गृहे अनुचितस्य सूतादिकर्मण आरम्भेण उद्योगेन निभृतं गुप्तं यथा स्यात्तथा स्थितं च दृष्ट्वेत्यर्थः । शिखरिणीच्छन्दः । रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीतिलक्षणात् । अत्र मयि न योग्यं मात्सर्यं कुरुषु तु योग्यमिति नञ्काका व्यज्यते तदेवाह-अत्रेत्यादिना। ननु पात्रापात्रवैपरीत्येन खेदस्य करणाकरणरूपवाक्यार्थस्यायुक्ततयाऽपर्यवसन्नस्य पर्यवसानरूपसिद्धेर्व्यङ्ग्योपस्थापनद्वारा काकुरेव भवतीति काकोर्वाच्यसिद्ध्यङ्गत्वे तद्द्वारीभूतस्य व्यङ्ग्यस्यापि तथात्वेन गुणीभूततया गुणीभूतव्यङ्ग्यमिदमुदाहरणम् ध्वनिरित्याशङ्क्य निराकरोति-न चेति । वाच्यस्य भ्रातरि खेदभजनरूपस्य कुरुषु तदभजनरूपस्य च वाक्यार्थस्य सिद्धिः पर्यवसानं तदङ्गन्तत्कारकम् । काकोरिति व्यङ्ग्यव्यञ्जकभावे षष्ठी । तथा च काकुव्यङ्ग्येन प्रश्नमात्रेणापि विश्रान्तेः वाच्यार्थस्य पर्यवसानादित्यर्थः ॥ १५ ॥

तइआ मह गण्डत्थलणिमिअं दिट्ठिं ण णेसि अण्णत्तो ।
एण्हिं सच्चेअ अहन्तेअ कवोला णसा दिट्ठी ॥ १६ ॥

अत्र मत्सखीं कपोलप्रतिविम्बितां पश्यतस्ते दृष्टिरन्यैवाभूत् चलितायान्तु तस्यामन्यैव जातेत्यहो प्रच्छन्नकामुकत्वं ते इति व्यज्यते ।

उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी
कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः ।
किञ्चैतस्मिन्सुरतसुहृदस्तन्वि ते वान्ति वाता-
येषामग्रे सरति कलिताऽकाण्डकोपो मनोभूः ॥१७॥

अत्र रतार्थं प्रविशेति व्यङ्ग्यम् ।

---

वाक्यवैशिष्ट्याद्वाच्यस्य व्यञ्जकत्वमुदाहरति—तइआ इति ।

तदा मम गण्डस्थलनिमग्नां दृष्टिं नानैषीरन्यत्र ।
इदानीं सैवाहं तौ च कपोलौ न सा दृष्टिः ॥

इति संस्कृतम् । नायिकाकपोलगतमन्यप्रियतमाप्रतिविम्बं नायिकामुखावलोकनमिषेण सादरं पश्यन्तं तत्प्रतिविम्बापगमे तादृशनिरीक्षणनिवृत्तं नायकं प्रति नायिकाया उक्तिरियम् । तदा यदा सा कामिनी मत्सन्निधावासीत् तस्मिन्काले इदानीं तस्या गमनकाले न सा स्निग्धा अनिमेषा च अन्यत्स्पष्टम् । अत्र तदेदानीमिति पदद्वयात्मकवाक्यवैशिष्ट्याद्व्यङ्ग्यमाह—अत्रेति । तव प्रच्छन्नकामुकत्वमित्युपालम्भप्रकाशनं सामाजिकान्प्रतिव्यङ्ग्यम् ॥ १६ ॥

वाच्यवैशिष्ट्याद्वाच्यस्य व्यञ्जकत्वमुदाहरति—उद्देशोऽयमिति । रतार्थिनः कामुकस्य नायिकां प्रत्युक्तिरियम् । हे तन्वि कृशाङ्गि ! नर्मदाया विशेषनद्या अयमुद्देश ऊर्ध्वदेश उन्नतभूप्रदेशः तिष्ठतीति शेषः । कीदृशः स सरसानां स्निग्धानां कदलीनां श्रेण्याः पङ्क्त्याः शोभा तया अतिशायी अधिशयितः तथा कुञ्जानां लतागृहाणामुत्कर्षेण पुष्पसमृद्ध्या अङ्कुरितः असन्नेवोत्पादितः रमणीनां विलासिनीनां विविभ्रमो हावभेदो यत्र तादृशः किं च अपि च एतस्मिन्प्रदेशे ते मानिनीमानभञ्जने प्रसिद्धाः सुरतस्य रतेः सुहृदः पुनः पुनः प्रवर्तका वाता वान्ति येषां वातानामग्रे पुरो मनोभूः कामः कलितो धृतोऽकाण्डेऽनवसरे कोपो येन तादृशः सन् सरति चलति । मन्दाक्रान्ताछन्

णोल्लेइ अणोल्लमणा अत्ता मं घरभरम्मि सअलम्मि ।
खणमेत्तं जइ संझाइ होइ णव होइ वीसामो ॥ १८ ॥

अत्र सन्ध्यासङ्केतकाल इति तटस्थं प्रति कया चिद् द्योत्यते ।

सुव्वइ समागमिस्सदि तुज्झ पिओ अज्ज पहरमेत्तेण ।
एमेअ किंत्ति चिट्ठसि ता सहि सज्जेसु करणिज्जम् ॥ १९ ॥

---

न्दः । मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेदिति लक्षणात् । अत्र तन्वीत्यनेन कन्दर्पविदनावस्व श्रमापनायकसत्त्वादत्रैव रतौचित्यम् । नर्मदेत्यनेन नर्मक्रीडां ददातीति उद्देश इत्यनेन अधः सञ्चरतां पतनभियानवलोकनीयत्व सरसेत्यनेन शुष्कपर्णाभावेन कटुशब्दराहित्यम् । श्रेणीत्यनेन प्रान्तवेष्टनं छाया च श्रेणीशोभेत्यनेन स्थानान्तरादतिशयितशोभत्वम् कुञ्जेत्यादिना रतिवैमुख्ये व्यसनं वाता इत्यनेनैव गमनशालित्वे लब्धे पुनर्वान्तीत्यनेन मन्दत्वम् अग्रेसरतीत्यनेन वायुसम्बन्धसमकालीनकामपीडाद्यास्तस्याग्रेसरत्वमुत्प्रेक्षितम् कलितेत्यनेन सुरतवैमुख्यात्कुपितः कामः किं विधास्यतीति न ज्ञायते इति मनोभूरित्यनेन दुष्परिहरत्वञ्च व्यज्यते । अत्र नर्मदोद्देशरूपस्य तद्विशेषणीभूतस्य च वाच्यस्य वैशिष्ट्यात्सुरतार्थं प्रविशेति व्यङ्ग्यमित्याह—अत्रेति ॥ १७ ॥

अन्यसन्निधिवैशिष्ट्याद्वाच्यस्य व्यञ्जकत्वमुदाहरति-णोल्लेइ इति ।

नुदत्यनार्द्रमनाः श्वश्रूर्मां गृहभरे सकले ।
क्षणमात्रं यदि संध्यायां भवति न वा भवति विश्रामः ॥

इति संस्कृतम् । गुरुजनसान्निध्यादुपनायकं प्रति वक्तुमसमर्था का चित् सङ्केतकालसूचनाय प्रतिवेशिनीम्प्रति श्वश्रूपालम्भमाह यदि क्षणमात्रं विश्रामो भवति तर्हि सन्ध्यायामथ वा न भवत्येवेति योजना स्पष्टार्थमन्यत् । अनार्द्रेत्यादिना श्रमादिव्याजेनापि नावकाश इति श्वश्रूरित्यनेनानतिक्रमणीयता सकल इत्यनेन सार्वकालिकीव्यग्रता सन्ध्यायामित्यनेन तत्रैवावसर इति च व्यज्यते अत्र तटस्थान्यसन्निधेर्वैशिष्ट्यात्सङ्केतसमयबोधनं सामाजिकेषु व्यज्यते तदाह—अत्रेति ॥ १७ ॥

प्रकरणरूपप्रस्तावैशिष्ट्याद्वाच्यस्य व्यञ्जकत्वमुदाहरति-सुव्वइ इति ।

श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण ।
एवमेव किमिति तिष्ठसि तत्सखि सज्जय करणीयम् ॥

अत्रोपपतिं प्रत्यभिसर्तुं प्रस्तुता न युक्तमिति कया चिन्निवार्यते।

अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः।
नाहं हि दूरं भ्रमितुं समर्था प्रसीदतायं रचितोऽञ्जलिर्वः॥२०॥

अत्र विविक्तोऽयं देश इति प्रच्छन्नकामुकस्त्वयाऽभिसार्यतामिति आश्वस्तां प्रति कया चिन्निवेद्यते॥

---

इतिसंस्कृतम्। उपपतिम्प्रति गन्तुमुत्सुकान्नायिकाम्प्रति अभिसारनिवारणाय तत्पत्यागमनवार्तां श्रुतवत्याः सख्या जनान्तरसन्निधाने उक्तिरियम्। अद्यैव प्रहरमात्रेण तव प्रियः समागमिष्यतीति श्रूयते तत्तस्मात्कारणाद् हे सखि! एवमेव तदीयभोजनादिव्यापाररा-हित्येनैव किमिति किमर्थं तिष्ठसि करणीयं रन्धनादिकार्यं सज्जय साधयेत्यर्थः। अत्राद्यैवेत्यनेन न कालान्तरे प्रहरमात्रेणेत्यनेन न विलम्बेन समागमिष्यतीत्यनेन सम्यक्पूर्णकामत्वेन पुनर्गमनाभाव इति च अभिसरणोपयोगिवेषविन्यासादिप्रकरणे पत्यागमनकथने-नाभिसरणनिषेधं विदितरहस्या सखी करोतीति प्रकरणं जानतां सामाजिकानां व्यङ्ग्यमित्याशयेनाह—अत्रेति॥ १९॥

देशवैशिष्ट्याद्वाच्यस्य व्यञ्जकत्वमुदाहरति-अन्यत्रेति। सखीवेशधारिणा स्वामिना साकमागतां सहचरीं दृष्ट्वा सखीः प्रति नायिकाया उक्तिरियम्। हे सख्यः! यूयं कुसुमानामवचायं हस्तेनादानं अन्यत्र इतो दूरे कुरुध्वम्। अत्र अस्मिन्प्रदेशे अस्मि अहङ्करोमि कुसुमावचायमिति शेषः। स्वदूरगमननिषेधे हेतुमाह—नाहमिति हि यतः अहं दूरं भ्रमितुं चलितुं न समर्था अयमञ्जलिः प्रणामाञ्जलिः वो युष्मभ्यं रचितः कृतः प्रसीदत प्रसन्ना भवतेत्यर्थः। अत्र व्यङ्ग्यं दर्शयति-अत्रेत्यादिना। सख्योऽन्यत्र सन्ति तेन विविक्तो विजनोऽयन्देशः तस्मात्प्रच्छन्नः सखीवेषधारी कामुकस्त्वयाऽभिसार्यतां प्रेर्यतामिति आश्वस्तां विश्वासवर्तीं प्रियसखीं प्रति देशवैशिष्ट्याद् व्यज्यते। अत्र सामान्यसखीविषयो वाच्योऽर्थः प्रियसखीविषयो-व्यङ्ग्य इति दिक्। उपजातिश्छन्दः॥ २०॥

कालवैशिष्ट्याद्वाच्यस्य व्यञ्जकत्वमाह-गुरुजनेति।

**गुरुजनपरवश प्रिय! किं भणामि तव मन्दभागिनी अहकम्**
**अद्य प्रवासं व्रजसि व्रज स्वयमेव श्रोष्यसि करणीयम्**

गुरुअणपरवस पिअ किं भणामि तुह मंदभाइणी अहकम् ।
अज्ज पवासं वच्चासि वच्च सअ जेव्व सुणसि करणिज्जम् ॥२१॥

अत्राद्य मधुसमये यदि व्रजसि तदाऽहं तावद् न भवामि तवतु न जानामि गतिमिति व्यज्यते ।

आदिग्रहणाच्चेष्टादेः । तत्र चेष्टाया यथा—

द्वारोपान्तनिरन्तरे मयि तया सौन्दर्य्यसारश्रिया
प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम् ।
आनीतं पुरतः शिरोंशुकमधःक्षिप्ते चले लोचने
वाचस्तत्र निवारितं प्रसरणं सङ्कोचिते दोर्लते ॥ २२ ॥

---

इति संस्कृतम् । प्रवासं गन्तुकामम्प्रति प्रियाया उक्तिरियम् । गुरुजनो मान्यजनः पित्रादिः स एव परः शत्रुस्तद्वशस्तदायत्तस्तत्सम्बुद्धौ हे गुरुजनपरवश हे प्रिय ! तव किं भणामि वदामि परायत्ते वचनं निरर्थकम् अत एवाहम्मन्दभागिनी अल्पभाग्या यतः अद्य वसन्ते यस्मिन्प्रवासिनोऽपि गृहमायान्ति तस्मिन् त्वं प्रवससि परदेशं व्रजसि गच्छसि व्रज गच्छेति सदैन्यरोषोक्तिः स्वयमेव करणीयं श्रोष्यसि मया करणीयं कर्तुं योग्यं मरणं त्वमेव श्रोष्यसि अत्र वसन्तकालवैशिष्ट्यात् प्रियं प्रत्यनुरक्तया त्वदेकशरणाहं त्वद्गमने नैव जीवामीति सहृदयेषु व्यज्यते ॥ २१ ॥

कारिकास्थमादिपदं व्याचष्टे-आदिग्रहणादिति । चेष्टावैशिष्ट्याद्वाच्यस्य व्यञ्जकत्वमाह-द्वारोपान्तेति । स्वविषयकभावावबोधकनायिकावृत्तिचेष्टाविशेषमवधारितवतो नायकस्य सखायम्प्रत्युक्तिरियम् । मयि द्वारोपान्तस्य द्वारनिकटदेशस्य निरन्तरे सन्निहिते सति सौन्दर्येण सारश्रेष्ठा श्रीः शोभा यस्यास्तया ऊरुयुगं सक्थिद्वयम् प्रोल्लास्य प्रसार्य परस्परसमासक्तमन्योन्यसंलग्नं समासादितम् संबन्धं प्रापितमिति यावत् । तथा शिरोऽशुकं शिरःसम्बन्धि वस्त्रं पुरतः अग्रत आनीतं ततः चले चञ्चले लोचने अधःक्षिप्ते सञ्चारिते तत्र तस्मिन्काले वाचः वचनस्य प्रसरणं सखीषु प्रवर्तनं निवारितं मुखमुद्रणेनेति शेषः । ततः दोर्लते बाहुलते सङ्कोचिते संकुच्य मिथः संयोजिते इत्यर्थः । शार्दूलविक्रीडितं छन्दः । अत्र सक्थ्नोः परस्परसंबन्धकरणेन विपरीतसुरतप्रदानम् अग्रतो वस्त्रानयनेन गूढमागच्छेति नेत्रसञ्चारेण सूर्यास्तमयः सङ्केतकालः मुखमुद्रणेन कोलाहल-

अत्र चेष्टया प्रच्छन्नकान्तविषय आकूतविशेषो ध्वन्यते । निराकाङ्क्षत्वप्रतिपत्तये प्राप्तावसरतया च पुनः पुनरुदाह्रियते । वक्त्रादीनां मिथः संयोगे द्विकादिभेदेन अनेन क्रमेण लक्ष्य–व्यङ्ग्ययोश्च व्यञ्जकत्वमुदाहार्य्यम् ॥

( ३८ ) शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः ।
अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता ॥ २३ ॥

शब्देति । नहि प्रमाणान्तरवेद्योऽर्थो व्यञ्जकः ॥

इति श्रीकाव्यप्रकाशेऽर्थव्यञ्जकतानिर्णयो नाम तृतीयोल्लासः ॥ ३ ॥

---

रहिते काले कोलाहलरहितं यथा तथा आगन्तव्यम् । भुजसंयोजनेन आगमनपारितोषिकमालिङ्गनं करोमीति च चेष्टावैशिष्ट्याद् व्यज्यते । तदेवाह–अत्रेति । प्रच्छन्नकान्तविषयः भावपरीक्षार्थं द्वारि वेषान्तरेण स्थितकान्तविषयः आकूतविशेषः स्वाभिप्रायविशेषः ॥२२॥

ननु वक्तृबोद्धव्यकालादीनां सङ्करेण वैशिष्ट्ये द्वित्रोदाहरणेनैव निर्वाहे किमेतावद्भिरित्यत आह–निराकाङ्क्षेति । प्रत्येकं किमुदाहरणमिति शिष्याकाङ्क्षानिवृत्तये अनवसरे सङ्कोचोऽपि युज्यते इति सोऽपि नास्तीत्याह–प्राप्तावसरेति । एवं च वाच्यस्य वक्त्राद्येकैकस्य वैशिष्ट्येन व्यञ्जकत्वमुदाहृतम् । लक्ष्यव्यङ्ग्ययोरेकादिवैशिष्ट्येन व्यञ्जकत्वं चोदाहार्यमित्याह–वक्त्रादीनामिति । वक्तृबोद्धव्यादीनां मिथः संयोगे परस्परसम्बन्धे सति द्विकादिभेदेन द्वौ परिमाणमस्येति द्विकं द्विकत्रिकादिभेदेनेति यावद् व्यञ्जकत्वमिति शेषः । वक्त्रादीनां द्वयोः संयोगे द्विकवैशिष्ट्यम् । त्रयाणां संयोगे त्रिकवैशिष्ट्यमिति परमार्थः । अनेनेति । यथा वक्तृवैशिष्ट्यादिना वाच्यार्थस्य व्यञ्जकत्वमुदाहृतं तथा उदाहार्यम् उदाहरणान्तरमन्विष्य ज्ञेयम् ॥

अर्थव्यञ्जकतोच्यते इत्यनेनार्थमात्रस्य व्यञ्जकत्वे शब्दार्थोभयरूपकाव्यस्य व्यञ्जकत्वाभावात्कथं ध्वनित्वमिति शब्दस्यापि सहकारितया व्यञ्जकत्वमाह–शब्दप्रमाणेति । यतः कारणात् शब्दप्रमाणेन वेद्यः प्रतिपादितोऽर्थः वाच्य-लक्ष्य-व्यङ्ग्यरूपः अर्थान्तरं व्यङ्ग्यरूपं व्यनक्ति प्रकाशयति तत् तस्मात्कारणात् अर्थस्य व्यञ्जकत्वे शब्दस्य सहकारिता विशेषणीभाव इति कारिकार्थः ॥ २३ ॥

इति श्रीकाव्यप्रकाशे नागेश्वरीटीकायां तृतीयोल्लासः ॥

यद्यपि शब्दार्थयोर्निर्णये कृते दोषगुणालङ्काराणां स्वरूपमभिधानीयं तथाऽपि धर्मिणि प्रदर्शिते धर्माणां हेयोपादेयता ज्ञायत इति प्रथमं काव्यभेदानाह—

(३९) अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद्ध्वनौ ।
अर्थान्तरे सङ्क्रमितमत्यन्तं वा तिरस्कृतम् ॥ २४ ॥

लक्षणामूलगूढव्यङ्ग्यप्राधान्ये सत्येव अविवक्षितं वाच्यं यत्र स ध्वनौ इत्यनुवादाद् ध्वनिरिति ज्ञेयः । तत्र च वाच्यं क्वचिदनुपयुज्यमानत्वादर्थान्तरे परिणमितम् । यथा—

त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति ।
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत् ॥ २३ ॥

---

यद्यपि तददोषौ शब्दार्थावित्यादिना शब्दार्थयोर्निरूपणे कृते अदोषत्वादिधर्मातिरिक्ते आकाङ्क्षैव नोदेति तथाऽपि कार्त्स्न्येन काव्यरूपधर्मिप्रदर्शनं विना आकाङ्क्षैव न भवतीति शङ्कोत्तराभ्यामाह—यद्यपीति । अभिधानीयं कथनीयं धर्मिणि काव्ये प्रदर्शिते अवान्तरभेदसहितं प्रकर्षेण निर्दिष्टे धर्माणां दोषगुणालङ्काराणां हेयोपादेयता दोषाणां हेयत्वं त्याज्यत्वं गुणालङ्काराणामुपादेयता ग्राह्यत्वं काव्यभेदाद् ध्वन्यादिरूपकाव्यभेदाद् ध्वनिरूपं काव्यं द्विविधं लक्षणामूलकमभिधामूलकं चेति । तत्राद्यमविवक्षितवाच्यम् । द्वितीयं विवक्षितवाच्यम् । तयोः प्रथमं विभजते-अविवक्षितेति । अविवक्षितमनुपयुक्तं वाच्यं वाच्योऽर्थो यत्र तादृशो यो ध्वनिस्तत्र तस्मिन्ध्वनौ उत्तमे काव्ये वाच्यं वाच्योऽर्थः अर्थान्तरे वाच्यलक्ष्यसाधारणेऽर्थे संक्रमितं परिणमितम् अत्यन्ततिरस्कृतं वा भवेदिति कारिकार्थः ॥२४॥ कारिकाघटकाविवक्षितवाच्य इतिपदं विवृणोति—लक्षणामूलेति । लक्षणामूलं यद् गूढव्यङ्ग्यं तस्य प्राधान्ये ध्वनावित्यनुवादादिति, य इति यच्छब्दसाकाङ्क्षस्य तत्रेत्यस्य विशेषणतया कथनात् तत्र च अविवक्षितवाच्ये ध्वनौ च वाच्यं वाच्योऽर्थः क्वचिद् अनुपयुज्यमानत्वाद् यद्रूपेण वाच्यं तद्रूपेण प्रकृतान्वयेऽनभिप्रेतत्वाद् अर्थान्तरे अन्यप्रकारेण वाच्यलक्ष्यसाधारणेऽर्थे परिणमितं परिणमितमिवेत्यर्थः । यथा काकेभ्यो दधि रक्ष्यतामित्यत्र वाच्योऽपि काको दध्युपघातकरूपेण लक्ष्यः ।

अर्थान्तरसंक्रमितवाच्यं ध्वनिमुदाहरति—त्वामस्मीति । वि-

अत्र वचनादि उपदेशादिरूपतया परिणमति ॥

क्व चिदनुपपद्यमानतया अत्यन्तं तिरस्कृतम्। यथा—

उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम्।
विदधदीदृशमेव सदा सखे सुखितमास्स्व ततः शरदां शतम् ॥२४॥

एतदपकारिणं प्रति विपरीतलक्षणया कश्चिद्वदति।

**(४०) विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः।**
**अन्यपरं व्यङ्ग्यनिष्ठं स एष च**

---

इत्सभां गच्छन्तम्प्रति कस्यचिदाप्तस्योक्तिरियम् यतोऽत्र विदुषां विलक्षणज्ञानवतां समवायः समुदायस्तिष्ठति तत् तस्माद् आत्मीयां स्वकीयां मतिं बुद्धिमास्थाय अवलम्ब्य अत्र सभायां स्थितिं सावधानवर्त्तनं विधेहि कुरु इति त्वामुपदेशार्हम् अस्मि अहमित्यर्थकाव्ययम् अहमाप्तः वच्मि उपदिशामीत्यर्थः। अत्र सम्बोध्यमुद्दिश्य वक्तव्यकथनेनैव सिद्धं पुनस्त्वामस्मि वच्मीति कथनमनुपयुक्तमिति त्वामुपदेश्यम् अस्मि आप्तोऽहं वच्मि उपदिशामीति लक्ष्यं तेन हितसाधनत्वम् अन्यथाचरणे उपहसनीयत्वं च व्यङ्ग्यमिति बोध्यम् ॥ २३ ॥

अत्यन्तं तिरस्कृतमिति लक्षणं विवृणोति—क्व चिदिति। अत्यन्तं तिरस्कृतं प्रकृतान्वयानुपयोगितया इतरार्थमात्रलक्षकं वाच्यमिति शेषः। अत्यन्ततिरस्कृतवाच्यं ध्वनिमुदाहरति—उपकृतमिति। अपकारिणम्प्रति कस्यचिदुक्तिः। त्वया यदुपकृतं तत्र विषये किमुच्यते किं वक्तव्यं भवता परं केवलं सुजनता सौजन्यं प्रथिता प्रकटिता सौजन्येनैव एतावानुपकारो न तु प्रत्युपकारलोभाद् हे सखे! ततस्तस्माद् ईदृशमेव विदधत् कुर्वन् शरदां वर्षाणां शतं व्याप्य सुखितं सुखयुक्तं यथा स्यात्तथा आस्स्व तिष्ठेति मुख्योऽर्थः। अयं चापकारिणं प्रति बाधितः सन् उपकृतम् अपकृतं सुजनता दुर्जनता सखे शत्रो सुखितं दुःखितमिति विपरीतं लक्षयति अपकाराद्यतिशयो व्यङ्ग्यः। द्रुतविलम्बितं छन्दः। द्रुतविलम्बितमाह नभौ भराविति लक्षणात् ॥ २४ ॥

अभिधामूलकं ध्वनिं लक्षयति—विवक्षितं चेति। यत्र यस्मिन्ध्वनौ वाच्यं वाच्योऽर्थः विवक्षितं वाच्यताऽवच्छेदकरूपेणान्वयबोधविषयः अन्यपरं च व्यङ्ग्योपसर्जनीभूतं च सः अपरः विवक्षितान्यपरवाच्यध्वनि-

(४१) कोऽप्यलक्ष्यक्रमव्यङ्ग्यो लक्ष्यव्यङ्ग्यक्रमः परः ॥ २५ ॥

अलक्ष्येति न खलु विभावानुभावव्यभिचारिण एव रसः अपि तु रसस्तैरित्यस्ति क्रमः स तु लाघवान्न लक्ष्यते तत्र

(४२) रसभावतदाभासभावशान्त्यादिरक्रमः ।
भिन्नो रसाद्यलङ्कारादलङ्कार्यतया स्थितः ॥ २६ ॥

आदिग्रहणाद्भावोदय–भावसन्धि–भावशवलत्वानि । प्रधानतया यत्र स्थितो रसादिस्तत्रालङ्कार्यः । यथोदाहरिष्यते अन्यत्र तु प्रधाने

---

रित्युच्यत इति सूत्रार्थः । विवृतौ व्यङ्ग्यनिष्ठमित्यस्य व्यङ्ग्ये विश्रान्तमित्यर्थः एप च विवक्षितान्यपरवाच्यध्वनिश्च ।

कोऽपीति अनिर्वचनीयचमत्कारकारी—एकः अलक्ष्योऽज्ञेयः क्रमो वाच्य—व्यङ्ग्ययोः पौर्वापर्यं यस्य तादृशं व्यङ्ग्यं यत्र तादृश इति सूत्रार्थः ॥ २५ ॥ अत्र रसस्य निरतिशयानन्दत्वेन प्राधान्यमाविष्कर्तुमलक्ष्यक्रमस्य प्रागुपादानम् । केचित्तु सूचीकटाहन्यायेन अलक्ष्यक्रमस्यैकविधत्वात्प्रागुपादानं लक्ष्यक्रमस्यानेकविधत्वात्पश्चादुपादानमित्याहुः । ननु अक्रम इत्येवोच्यतां किमलक्ष्यक्रम इत्युपादानेनेति शङ्कां निराकुर्वन् अलक्ष्येति प्रतीकमादायाह—अलक्ष्येति । तै रसः अभिव्यज्यते । लाघवान्नेति । रसविभावाद्योः पौर्वापर्यक्रमोऽस्त्यव किन्तु रसोद्बोधेन झटिति चित्तापकर्षणात् शतपत्रपत्रशतभेदनवत्तस्याज्ञानादित्युक्तमलक्ष्यक्रम इति भावः । तत्रेति तयोर्मध्ये ।

अलक्ष्यक्रमं विभजते—रसेति रसाः शृङ्गारादयः भावा रत्यादयः तदाभासाः रसाभासा भावाभासाश्च भावशान्तिः भावस्य व्यभिचारिभावस्य शान्तिश्च आदिर्यस्य सः अक्रमः अलक्ष्यक्रमः स च रसाद्यलङ्काराद् रसवदाद्यलङ्काराद् भिन्नः यतोऽलङ्कार्यतया प्रधानतया स्थित ईदृशो रसादिर्यत्र ध्वनौ स्थितः सोऽलक्ष्यक्रमव्यङ्ग्य इति कारिकार्थः । अलङ्कार्यतया स्थित इति व्याचष्टे–प्रधानेति । यत्र, तत्रेति असंलक्ष्यक्रमव्यङ्ग्यविषये यथोदाहरिष्यते शून्यं वासगृहमित्यादिना । प्रधाने रसान्तरेऽङ्गिनि वाक्यार्थे वाक्यार्थे अङ्गभूतः उत्कर्षकः गुणीभूतव्यङ्ग्ये अयं स रसनोत्कर्षीत्यादौ रसस्याङ्गत्वे रसवदलङ्कारः भावस्याङ्गत्वे प्रेयोऽलङ्कारः रसाभासस्य भावाभासस्य चाङ्गत्वे ऊर्जस्विनामाऽलङ्कारः भावशान्तेरङ्गत्वे समा-

वाक्यार्थे यत्राङ्गभूतो रसादिस्तत्र गुणीभूतव्यङ्ग्ये रसवत्प्रेय—ऊर्ज-स्वि—समाहितादयोऽलङ्काराः। ते च गुणीभूतव्यङ्ग्याभिधाने उदाहरिष्यन्ते।

तत्र रसस्वरूपमाह—

(४३) कारणान्यथ कार्याणि सहकारीणि यानि च।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः॥ २७॥
विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः।
व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः॥२८॥

उक्तं हि भरतेन "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरि" ति। एतद्विवृण्वते विभावैर्ललनोद्यानादिभिरालम्बनोद्दीपनकारणै रत्या-

---

हितः आदिपदात् भावोदयादेरङ्गत्वेऽलङ्कारान्तराणि उदाहरिष्यन्ते पञ्चमोल्लासे।

तत्र रसं लक्षयति—कारणान्यथेति। स्थायिनोऽविच्छिन्नप्रवाहस्य रत्यादेः ललनादिविषयकप्रीत्यादेः लोके व्यवहारे यानि कारणानि यान्यालम्ब्य इत्यादिराविर्भवति तानि ललनारूपाणि आलम्बनपदाभिधेयानि जनककारणानि प्रादुर्भूते च रत्यादौ यानि तस्य पुष्टिरूपोद्दीपनकारीणि चन्द्रोदयादीनि उद्दीपनपदव्यपदेश्यानि परिपोषकारणानि अथ कार्याणि रत्यादिजन्यानि कायिक-वाचिक-मानसिकभेदेन मानाविधानि कटाक्ष—भुजाक्षेप—काकूक्तिप्रभृतीनि सहकारीणि रत्यादिकार्यस्य जनने झटिति प्रतीतौ वा सहायभूतानि निर्वेदादीनि तानि नाट्यकाव्ययोः अभिनयात्मकं काव्यं नाट्यं काव्यं श्रव्यकाव्यं तयोः चेद्यदि निबध्यन्ते इति शेषः। तत् तदा क्रमेण विभावा-अनुभावा व्यभिचारिण इति रसज्ञैः कथ्यन्ते तैर्विभावाद्यैर्व्यक्तः व्यञ्जनावृत्त्या प्रतिपादितः स स्थायी अविच्छिन्नप्रवाहः भावः चित्तवृत्तिविशेषो रसः स्मृतः ध्वनिकारादिभिराम्नात इति कारिकार्थः। वासनारूपतयाऽतिसूक्ष्मरूपेणावस्थितान्रत्यादीन्स्थायिनो विभावयन्ति आस्वादयोग्यतां नयन्तीति विभावाःताननुभवविषयीकुर्वन्तीति अनुभावाः तान्विशेषेण कार्ये अभिचारयन्ति संचारयन्ति मुहुर्मुहुरभिव्यञ्जयन्तीति वा व्यभिचारिण इति दिक्॥ २७॥ २८॥

उक्तेऽर्थे नाट्यशास्त्रप्रवर्त्तकभरतमुनिसम्मतिमाह—उक्तं हीति। ललनादिभिरालम्बनविभावैः स्थायी रत्यादिको जनित उद्यानादिभिरु-

दिको भावो जनितः अनुभावैः कटाक्षभुजाक्षेपप्रभृतिभिः कार्यैः प्रतीतियोग्यः कृतः व्यभिचारिभिर्निर्वेदादिभिः सहकारिभिरुपचितो मुख्यया वृत्त्या रामादावनुकार्ये तद्रूपतानुसंधानान्नर्तकेऽपि प्रतीयमानो रस इति भट्टलोल्लटप्रभृतयः ।

राम एवायम् अयमेव राम इति न रामोऽयमित्यौत्तरकालिके बाधे रामोऽयमिति रामः स्याद्वा न वाऽयमिति रामसदृशोऽयमिति च सम्यङ्मिथ्यासंशय-सादृश्यप्रतीतिभ्यो विलक्षणया चित्रतुरगादिन्यायेन रामोऽयमिति प्रतिपत्त्या ग्राह्ये नटे

---

द्दीपनविभावैरुद्दीपितः अनुभावैः कटाक्षादिभिः कार्यैः प्रतीतियोग्यः कृतः अभिव्यक्तः व्यभिचारिभिर्निर्वेदादिभिरुपचितः पुष्टीकृतः मुख्यया वृत्त्या साक्षात्सम्बन्धेन अनुकार्ये नाट्येनाभिनेये रामादौ नायके स्थितोऽपीति शेषः । तद्रूपतानुसन्धानात् रामस्येव वेषविशेषादिविधायिनि नर्तके काव्यपाठके वा तात्कालिकरामत्वारोपाद् रामत्वाभिमानाद्वा प्रतीयमानः सामाजिकैरारोप्यमाणः रसः रसपदवाच्यो भवतीति भरतसूत्रं भट्टलोल्लटादिभिस्तट्टीकाकृद्भिर्व्याख्यातमित्यनुवदति-एतद्विवण्वत इति । अयम्भावः असत्यपि सर्पे सर्पतयाऽवलोकनाद्यथा दाम्नोऽपि भीतिरुदेति तथा नर्तके सीताविषयिणी अनुरागरूपा रामरतिरविद्यमानापि नाट्यनैपुण्येन तस्मिंस्थितेव प्रतिभासमाना सहृदयहृदये चमत्कारमर्पयन्त्येव रसपदवीमधिरोहतीति दिक् ।

उक्तव्याख्याने अनुकार्ये रामादावेव रसनिष्पत्त्या सामाजिके रसनिष्पत्तेरभावात्सामाजिकानां चमत्कारानापत्तिरित्यरुचिम्मनसि निधाय स्थायिनो रत्यादेर्विभावादिभिः पूर्वोक्तैः संयोगाद् अनुमाप्यानुमापकभावरूपसम्बन्धाद् रसस्य निष्पत्तिरनुमितिरिति श्रीशङ्कुकसंमतं भरतसूत्रव्याख्यानमाह—राम एवेत्यादि । राम एवायं अयमेव राम इति इयं सम्यक् प्रतीतिः । न रामोऽयमित्यादि मिथ्याप्रतीतिः यथा नेदं रजतमित्यौत्तरकालिकबाधे सति शुक्तौ रजतप्रतीतिः । रामः स्याद्वेत्यादि इयं संशयप्रतीतिरुभयकोटिकत्वात् स्थाणुर्वा पुरुषो वेति वद् रामसदृशोऽयमिति सादृश्यप्रतीतिः चित्रतुरगेति यथा चित्रतुरगोऽयमित्यादिपूर्वोक्तप्रतीतिचतुष्टयवैलक्ष्येण प्रतीतिरुदेति तद्वद् रामोऽयमिति प्रतीत्या रामत्वप्रकारकपुरोवर्तिमात्रविशेष्यकप्रतीत्या ग्राह्ये विषयीकृते नटे अनुमितौ पक्षरूपे

सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशोः ।
मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता ॥ २५ ॥
दैवादहमद्य तया चपलायतनेत्रया वियुक्तश्च ।
अविरलविलोलजलदः कालः समुपागतश्चायम् ॥ २६ ॥

इत्यादिकाव्यानुसन्धानबलाच्छिक्षाभ्यासनिर्वर्त्तितस्वकार्यप्रकटनेन च नटेनैव प्रकाशितः कारणकार्यसहकारिभिः कृत्रिमैरपि तथाऽनभिमन्यमानैर्विभावादिशब्दव्यपदेश्यैः संयोगाद् गम्यगमकभावरूपाद् अनुमीयमानोऽपि वस्तुसौन्दर्यबलाद्रसनीयत्वेनान्यानुमीयमानविलक्षणः स्थायित्वेन संभाव्यमानो रत्यादिर्भावस्तत्रासन्नपि सामाजिकानां वासनया चर्व्यमाणो रस इति **श्रीशङ्कुकः** ।

न ताटस्थ्येन नात्मगतत्वेन रसः प्रतीयते नोत्पद्यते नाभिव्यज्य-

---

हेतुज्ञानोपायमाह—सेयमित्यादि । सेयं प्राणेश्वरी मम मनसः सकाशाल् लोचनगोचरङ्गता यद्विरहानलसन्तप्तेन यद्भावनया इयान्कालो नीतः सा पूर्वं मनस्येवासीदिदानीं बहिरपि दृष्टेति भावः । कीदृशी अङ्गेषु सर्वावयवेषु सुधारसस्य अमृतस्य छटा वृष्टिः स्पर्शमात्रेणापि निखिलसन्तापशान्तेः तथा दृशोः नेत्रयोः शोभनः पूरो द्रवो यस्य तथाभूतस्य कर्पूरस्य शलाकिका अञ्जननलिका अतिशयानन्दहेतुः तथा शरीरिणी मूर्तिमती मनोरथस्य श्रीः सम्पत्तिः । उपजातिश्छन्दः ॥ २५ ॥

उक्तेन सम्भोगशृङ्गारमुक्त्वा विप्रलम्भशृङ्गारमाह—दैवादिति । अद्याहं दैवाद् वियुक्तो विरहितश्च अभूवमिति शेषः । अविरला निविडा विलोलाः सर्वत्र संचारिणो जलदा मेघा यत्र तादृशः अयं दृश्यमानः कालः प्रावृट् समयः सम्यक् प्रतिदिनोपचीयमानः उपागतश्च प्राप्तश्च अत्र प्रियवियोगाप्रियसंयोगयोरेककालतारूपः समुच्चयालङ्कारः ॥ २६ ॥

इत्यादीति । इत्यादिकाव्यानुसन्धानस्य कविविवक्षितार्थस्य साक्षादिवकरणस्य बलात् सहकारात् शिक्षया उपदेशेन अभ्यासेन पुनः पुनरनुशीलनेन च निर्वर्तितं सम्पादितं यत्स्वकार्यस्य अभिनयस्य प्रकटनं प्रकाशनं येन तेन कृत्रिमैरपि वस्तुतोऽसद्भिरपि तथाऽनभिमन्यमानैः कृत्रिमत्वेनागृहीतैः भरतसूत्रोक्तविभावादिशब्दव्यप-

ते, अपि तु काव्ये नाट्ये चाभिधातो द्वितीयेन विभावादिसाधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिःसतत्त्वेन भोगेन भुज्यते इति भट्टनायकः।

---

देश्यैस्तद्व्यवहार्यैः गम्यं साध्यं गमको हेतुः। तयोर्भावः विभावादिसत्त्वे रतेरवश्यंभाव इत्येवं व्याप्तिस्तद्रूपात्सम्बन्धाद् अनुमीयमानोऽपि सामाजिकैरिति शेषः। रामोऽयं सीताविषयकरतिमान् सीतात्मकविभावादिसम्बन्धित्वाद् यन्नैवं तन्नैवं यथाऽहमित्यनुमानप्रयोगः। वस्तुतोऽनुमीयमानाया रतेः सौन्दर्यस्य चमत्कारिताया बलाद् रसनीयत्वेन आस्वाद्यमानत्वेन अन्योऽनुमीयमानो वन्ह्यादिर्लौकिकस्तद्विलक्षणो विभिन्नः तत्र नटे असन्नपि वास्तवमविद्यमानोऽपि रामनिष्ठरत्यादेर्नटेऽसत्त्वान् स्थायित्वेन नटगतत्वेन सम्भाव्यमानः ज्ञायमानः रत्यादिर्भावः अयं चानुमितौ साध्यरूपः वासनया धारावाहीच्छया चर्व्यमाणः पुनः पुनरनुसन्धीयमानः सामाजिकानां रसरतिः प्रत्यक्षमेव ज्ञानं चमत्कारजनकं नानुमित्यादिरिति लोकप्रसिद्ध्या रसं साक्षात्करोमीत्यनुव्यवसायाच्च उक्तव्याख्यानेऽरुचिं मनसि निधाय विभावादिभिः संयोगाद् भोज्यभोजकभावसम्बन्धाद् रसस्य निष्पत्तिर्भुक्तिरिति भट्टनायकसम्मतं भरतसूत्रार्थमादायाह—न ताटस्थ्येनेति। तटस्थ उदासीनः नटो रामादिकसम्बन्धित्वेन नात्मगतत्वेन सामाजिकसम्बन्धित्वेन रसो न प्रतीयते नानुमीयते रामगतया नटगतत्वेनाऽनुमितयाऽपि रत्या सामाजिकेऽसत्त्या चमत्कारजननासम्भवाद् नोत्पद्यते न जन्यते विभावादीनां वास्तविकत्वाभावाद् नाभिव्यज्यते व्यञ्जनया नोपस्थाप्यते सिद्धस्यैव व्यञ्जनयोपस्थानसम्भवाद् अभिधातः लक्षणात इत्यपि उपलक्षितम्। द्वितीयेन अन्येन विभावादेर्व्यक्तिविशेषांशपरिहारेणोपस्थानं साधारणीकरणं तदात्मना तद्रूपेण भाव्यमानः साधारणीक्रियमाणः स्थायी सत्त्वस्य सत्त्वगुणस्य उद्रेकेण रजस्तमसी अभिभूयाविर्भावेण यः प्रकाशः स्फुरणं स एवानन्दात्मिका संविद् ज्ञानं तस्य विश्रान्तिः ज्ञेयान्तरासंपर्केणावस्थानं तत्सतत्त्वेन तत्स्वरूपेण भोगेन भोजकत्वनामकव्यापारेण साक्षात्कारेण वा भुज्यते विषयीक्रियते॥

अयं भावः, शब्दस्य काव्यनाट्ययोरभिधाविलक्षणो भावकत्वभोजकत्वोभयरूपो व्यापारोऽस्ति तत्र काव्यार्थबोधसमनन्तरमेवाद्येन व्यापारेण विभावादिरूपसीतादयो रामसम्बन्धिनी रतिश्च सीतात्व—रामत्वसम्बन्धांशमपहाय सामान्यतः कामिनीत्व—रति-

लोके प्रमदादिभिः स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये नाट्ये च तैरेव कारणत्वादिपरिहारेण विभावनादिव्यापारवत्त्वादलौकिकविभावादिशब्दव्यवहार्यैर्ममैवैते शत्रोरेवैते तटस्थस्यैवैते, न ममैवैते न शत्रोरेवैते न तटस्थस्यैवैते इति सम्बन्धविशेषस्वीकारपरिहारनियमानध्यवसायात् साधारण्येन प्रतीतैरभिव्यक्तः सामाजिकानां वासनात्मत-

---

त्वादिनैवोपस्थाप्यते द्वितीयेन तु साधारणीकृतविभावादिसहकृतेन सा रतिः सामाजिकैरास्वाद्यत इति।

एताहशव्यापारद्वयकल्पने प्रमाणाभावाद् अधिकव्यापारकल्पने दोषाच्चेति मनसि निधाय स्थायिनां विभावादिभिः सम संयोगाद् व्यङ्ग्यव्यञ्जकभावरूपाद् सम्बन्धात् विभावादीनामेव परस्परं मिलनाद्वा रसस्य निष्पत्तिरभिव्यक्तिरिति अभिनवगुप्तपादाचार्यसम्मतभरतसूत्रार्थं सिद्धान्तयति—लोके इत्यादि। लोके काव्यनाट्याभिन्नस्थले प्रमदादिभिः प्रमदोद्यानकटाक्षनिर्वेदादिभिः स्थायिनो रत्यादे रनुमानविषये अभ्यासः पुनः पुनरनुशीलन तेन पाटवम् पटुता तद्वताम् अयमेतद्विषयकरत्यादिमान् रत्यादिकार्यरूपकटाक्षादिसहकारिरूपनिर्वेदादिमत्त्वाद् यो नैवं स नैवं यथा विरक्तरत्यादि इत्यनुमानप्रयोगः। काव्ये उक्तध्वन्यादिरूपे नाट्ये नटकर्मणि तैरेव प्रमदादिभिरेव अभिव्यक्त इति शेष. कारणत्वादि, कारणत्व–कार्यत्व–सहकारित्व-व्यपदेशपरित्यागेन विभावनादि, विभावनानुभावनव्यभिचारणरूपव्यापारवत्त्वाद् अलौकिकेति लोके हर्षशोककारणेभ्यः तावेव जायेते काव्ये पुनः सर्वेभ्यः सुखमेवेत्यलौकिकत्वम्। एते विभावादयो ममैवेत्यादित्रयेण सम्बन्धविशेषस्य स्वाकारनियमः अमुकस्यैवैते इत्येवंरूपः, न ममैवैते इत्यादित्रयेण सम्बन्धविशेषस्य परिहारनियमः तयोरनध्यवसायाद् अनिर्णयात् साधारण्येन सीतात्वादिविशेषरहितेन कामिनीत्वादिना प्रतीतैः ज्ञायमानैः अभिव्यक्तः आविर्भूतः वासनात्मतया वासनारूपेण सूक्ष्मतया स्थितः पूर्वमेवावस्थितः नियतेति रसास्वादकत्वेन निश्चितः प्रमाता सामाजिकः तद्गतत्वेन तद्गतसम्बन्धित्वेन साधारणेति व्यक्तिविशेषसम्बन्धित्वेनाप्रतीयमानो य उपायो विभावादिस्तद्बलात् तत्काले रसास्वादकाले विगलितोऽप्रतीतोयः परिमितप्रमातृभावः ममैवैते अहमेव रसास्वादयिता इत्येवं रीत्या अननुभूयमानो यो व्यक्तिविशेषसम्बन्धस्तद्वशेन उन्मिषितः प्रा-

था स्थितः स्थायी रत्यादिका नियतप्रमातृगतत्वेन स्थिताऽपि साधारणोपायबलात् तत्कालविगलितपरिमितप्रमातृभाववशोन्मिषितवेद्यान्तरसंपर्कशून्यापरिमितभावेन प्रमात्रा सकलसहृदयसंवादभाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणो विभावादिजीवितावधिः पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवालिङ्गन् अन्यत्सर्वमिव तिरोदधद् ब्रह्मास्वादमिवानुभावयन् अलौकिकचमत्कारकारी शृङ्गारादिको रसः।

स च न कार्यः विभावादिविनाशेऽपि तस्य सम्भवप्रसङ्गात् नापि ज्ञाप्यः सिद्धस्य तस्यासम्भवाद् अपि तु विभावादिभिर्व्यञ्जितश्चर्व-

---

णीयतः एवं वेद्यान्तरस्य लौकिकविषयस्य सम्पर्केण ज्ञानरूपसम्बन्धेन शून्यो रहितः अपरिमितोऽगणितो भावश्चित्तवृत्तिविशेषो यस्य तेन प्रमात्रा रसास्वादकर्त्रा सकलेति सकलानां सहृदयानां संवादभाजा सम्मतिशालिना साधारण्येन प्रमातृविशेषानालिङ्गितेन कामिनीविषयकरतित्वसाम्येन अस्य गोचरीकृत इत्यनेनान्वयः। ननु रत्याद्यास्वादस्यैव रसरूपत्वेन कथं रसस्य आस्वादः आस्वादास्वाद्ययोर्लोके वैलक्षण्यदर्शनादत आह—स्वाकार इति। योगाचारमते ज्ञानस्वरूपस्य विषयस्य यथा ज्ञेयत्वं तथाऽऽनन्दात्मकास्वादस्वरूपस्यापि रसस्य आस्वाद्यत्वमविरुद्धम् अभिन्नोऽपि ज्ञानस्वरूपोऽपि विषयः स्वाकार इव स्वादः एकोऽद्वितीयः प्राण इव प्राणः स्वरूपनिष्पत्तिर्यस्य सः। विभावादिरेव जीवितस्य जीवनस्यावधिः पूर्वापरसीमा यस्य सः। पानकेति। यथा पानकरसः एलामरिचशर्कराकर्पूरादिविलक्षणवस्तुसम्पादितो एलादिरसवैलक्षण्येन समुदायसम्मेलनसम्पादितेन विलक्षणेनास्वादेनाऽऽस्वाद्यते तथा विभावादिवैलक्षण्येन लोकातीतेनास्वादेन चर्व्यमाण आस्वाद्यमानः पुरोऽग्रे स्फुरन्निव हृदयं प्रविशन्निव सर्वाङ्गव्यापनं यथा आलिङ्गन्निव अन्यद् विभावाद्यतिरिक्तं सर्वं तिरोदधदिवाच्छादयन्निव ब्रह्मास्वादमिव निजास्वादमनुभावयन् पुर इवेत्यादिना अलौकिकः लौकिकसामग्रीजन्यविलक्षणश्चमत्कारकारी शृङ्गारादिको रस इत्युच्यते ॥ पूर्वमते असत्या अत्र तु वासनया स्थितताया एवेत्यनयोर्भेदो बोध्य इति दिक्॥

भरतसूत्रे विभावादिसंयोगादिति पञ्चम्या हेतुत्वकथनाद् रसस्य कार्यत्वं ज्ञाप्यत्वं वेत्यत आह—स चेति। स च रसो न कार्यः

णीयः । कारक-ज्ञापकाभ्यामन्यत् क्व दृष्टमिति चेद् न क्व चिद् दृष्टमि-
त्यलौकिकत्वसिद्धेर्भूषणमेतन्न दूषणम् । चर्वणानिष्पत्त्या तस्य निष्पत्ति-
रुपचरितेति कार्योऽप्युच्यताम् । लौकिकप्रत्यक्षादिप्रमाणताटस्थ्याव-
बोधशालिमितयोगिज्ञानवेद्यान्तरसंस्पर्शरहितस्वात्ममात्रपर्यवसितपरिमिते-
तरयोगिसंवेदनविलक्षणलोकोत्तरस्वसंवेदनगोचर इति प्रत्ययोऽप्यभिधी-
यताम् । तद्ग्राहकं च न निर्विकल्पकं विभावादिपरामर्शप्रधानत्वात् ।
नापि सविकल्पकं चर्व्यमाणस्यालौकिकानन्दमयस्य स्वसंवेदनसिद्ध-
त्वात् । उभयाभावस्वरूपस्य चोभयात्मकत्वमपि पूर्ववल्लोकोत्तरतामेव
गमयति न तु विरोधमिति श्रीमदाचार्याभिनवगुप्तपादाः ॥

---

हेतुमाह विभावेति । तस्य रसस्य दण्डनाशेऽपि घटस्थितिवत् स्थिति-
प्रसङ्गात् । नापीति । विभावादिभिर्ज्ञाप्योऽपि न सिद्धस्य तस्य विद्यमानस्य
रसस्य असम्भवाद् अभावाद् व्यञ्जितः व्यञ्जनया गृहीतः सन् चर्व-
णीयः पुनः पुनरास्वादनीयः । इमामलौकिकीं प्रक्रियां शङ्कोत्तराभ्या-
मिष्टापत्तिं करोति—कारकेति । अन्यद् व्यञ्जनाख्यम् । कथन्तर्ह्युत्पन्नो रस
इति व्यवहार इत्याह—चर्वणेति । चर्वणाविशिष्टस्य रसत्वेन चर्वणा-
या उत्पन्नत्वेन चर्वणोत्पत्तिमादायैव रसस्योत्पत्तिरिति व्यवहारः ।
नन्वेवमपि रसो ज्ञाप्य इति व्यवहारः कथमत आह—लौकिकेति । लौ-
किकं यत्प्रत्यक्षादिज्ञानं यच्च प्रमाणताटस्थ्येन चक्षुरादिलौकिकप्र-
माणमनपेक्ष्यैवावबोधो ज्ञानं तच्छालिनान्तद्वतां मितयोगिनामपक्वयो-
गिनां ज्ञानं यच्च वेद्यान्तरस्य ज्ञेयलौकिकविषयस्य संस्पर्शेन सम्ब-
न्धेन रहितं स्वात्ममात्रपर्यवसितं स्वात्ममात्रविषयकं परिमितेतर-
योगिनां पक्वयोगिनां संवेदनं ज्ञानमेतत्त्रितयाद्विलक्षणं विसदृशं लो-
कोत्तरं लोकातीतं यत् स्वं स्वात्मकं संवेदनं ज्ञानं तस्य गोचरो वि-
षय इति हेतोः प्रत्ययो ज्ञेयोऽभिधीयतामुच्यताम एवं च विभावा-
दिभिरभिव्यक्तानन्दांशस्वरूपतया स्वयं प्रकाशत्वेन ज्ञाप्यत्वव्यवहार
इति सन्दर्भाशयः । ननु निर्विकल्पक–सविकल्पकभेदेन ज्ञानस्य द्वैवि-
ध्यात्केन रसो गृह्यत इत्याह—तद्ग्राहकं चेति । रसग्राहकं च नामरूप-
जात्यादिविशेषशून्यं ज्ञानं निर्विकल्पकं विभावादीनां परामर्शः स-
म्बन्धः प्रधानं यस्य तस्य भावस्तत्त्वाद् विभावादिपरामर्शस्य सविक-
ल्पकतया निर्विकल्पकजननायोग्यत्वात् । चर्व्यमाणस्य रसस्य अलौ-

व्याघ्रादयो विभावा भयानकस्येव वीरा-द्भुत-रौद्राणाम्, अश्रुपातादयोऽनुभावाः शृङ्गारस्येव करुण-भयानकयोः, चिन्तादयो व्यभिचारिणः शृङ्गारस्येव वीर-करुण-भयानकानामिति पृथगनैकान्तिकत्वात् सूत्रे मिलिता निर्दिष्टाः।

वियदलिमलिनाम्बुगर्भमेघं मधुकरकोकिलकूजितैर्दिशां श्रीः।
धरणिरभिनवाङ्कुराङ्कटङ्का प्रणतिपरे दयिते प्रसीद मुग्धे ॥२७॥

---

किकानन्दप्रचुरस्य स्वसंवेदनसिद्धत्वात् स्वात्मकप्रतीतिमात्रसिद्धत्वात् रसास्वादनकाले ज्ञानान्तरासम्भवेन नामरूपजात्याद्युल्लेखासम्भवात्कुतः सविकल्पकत्वमिति भावः। उभयाभावस्वरूपस्योभयभिन्नस्योभयात्मकत्वं सविकल्पत्वनिषेधे निर्विकल्पकत्वं तन्निषेधे तत्त्वमिति उभयात्मकत्वं विरुद्धयोरेकतरनिषेधेऽपरस्मिन्पर्यवसानमिति नियमात् पूर्ववत् कारकत्वज्ञापकत्ववत्। ननु विभावादिभ्यः प्रत्येकं रसाभिव्यक्तिसम्भवे भरतसूत्रे स्वसूत्रे च कथं द्वन्द्वेन साहित्यमुक्तमत आह-व्याघ्रादय इति। पृथग् एकैकस्य अनैकान्तिकत्वाद् व्यभिचारित्वाद् एते हि विभावा भीरूणां भयमिव वीराणामुत्साहम् अपूर्वदर्शिनां विस्मयं मृगबन्धूनां क्रोधं च जनयन्ति अतो नैकैकस्मिन् व्यञ्जकत्वम् एवमनुभावे व्यभिचारिणि च बोध्यम्। सूत्रे भरतसूत्रे स्वसूत्रे च मिलिता सहिताः निर्दिष्टाः द्वन्द्वेन तैरितिपदेन चोक्ताः। एवं दण्डचक्रादिन्यायेन सम्भूयैव कारणत्वम्न तु तृणारणिमणिन्यायेन प्रत्येकमिति दिक्।

ननु प्रत्येकस्मादपि रसोऽनुभूयत इत्याशङ्कते-वियदित्यादि। मानिनीं प्रति सख्या उक्तिः। हे मुग्धे विवेकरहिते! प्रणतिपरे प्रणामशालिनि दयिते स्वामिनि सति तद्विषये प्रसादं कुरु मानभङ्गस्यावश्यम्भावान्नेदं युक्तम्। मानभङ्गसामग्रीं दर्शयति—वियदिति। वियद् आकाशमलयो भ्रमरास्तद्वन्मलिनाः कृष्णवर्णा एवमम्बु जलं गर्भे येषान्ते अम्बुगर्भाः पुनस्ते च ते च मेघा यत्रेति त्रिपदो बहुव्रीहिः। तादृशमस्तीति शेषः। पुनः मधुकरकोकिलयोः कूजितैः अथ वा मधुकरा इव कोकिलास्तेषां कूजितैः दिशां श्रीः शोभा वर्तत इति शेषः। तथा धरणिः भूमिरभिनवा नूतना अङ्कुरा एवोत्सङ्गे क्रोडे टङ्काः पाषाणभेदकास्त्रविशेषा यस्यां सेति वाच्योऽर्थः। तथा चाध्वमधरितदक चोद्दीपकप्रवृत्त्या तद्रहितदृष्टिसंचारस्थलाभावात्प्र-

इत्यादौ ।

परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः
कथमपि परिवारप्रार्थनाभिः क्रियासु ।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-
मभिनवकरिदन्तच्छेदकान्तः कपोलः ॥ २८ ॥

इत्यादौ ।

दूरादुत्सुकमागते विवलितं संभाषिणि स्फारितं-
संश्लिष्यत्यरुणं गृहीतवसने किं चाञ्चितभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं-
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि ॥ २९ ॥

---

णतिपरे दयिते दृष्टिपातं कुर्वीति व्यङ्ग्योऽर्थः । पुष्पिताग्रा छन्दः । अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा इति लक्षणात् ॥ २७ ॥

परिमृदितेति । माधवस्य मकरन्दम्प्रति मालत्यवस्थावर्णनोक्तिरियम् । हे सखे ! अस्या मालत्या अङ्गं परिमृदिता कराभ्यां शिथिलीकृता या मृणाली बालमृणालं तद्वन्म्लानं सङ्कुचितप्रायं तथा क्रियासु शरीरोपयोगिनीषु परिवारस्य सखीजनस्य प्रार्थनाभिः कथमपि बलात्कारेणापि प्रवृत्तिः उपक्रममात्रम् अस्याः कपोलोऽभिनवस्य नूतनस्य करिणो हस्तिनो दन्तस्य यश्छेदश्छिन्नो भागस्तद्वत्कान्तः सन्नपि निष्कलङ्कस्य कलामात्रविशिष्टस्य हिमांशोश्चन्द्रस्य लक्ष्मीं शोभां च कलयति धारयति । अत्र परिमृदितेत्यादिना कामानलसन्तप्तता क्रियास्वित्यादिना आलस्यातिशयरूपा विषयवैतृष्ण्यरूपा च कामदशा कपोल इत्येकवचनेन एकपार्श्वशयनात्किञ्चिदवच्छेदेन रक्तता किञ्चिदवच्छेदेन पाण्डुता कान्तलक्ष्मीपदाभ्यां च तथाऽपि न शोभाच्युतिरिति च व्यज्यते ॥ २८ ॥

दूरादिति । मानिनीप्रसादनान्निवृत्तस्य नायकस्य पुनरागमेन उत्पन्नभावायाश्चक्षुःक्रियावर्णनम् अमरुशतके । जातागसि कृतापराधे प्रेयसि प्रेमपात्रे मानिन्याः चक्षुः प्रपञ्चे विचित्रव्यापारे चतुरं कुशलं जातमहो विस्मये प्रपञ्चमेवाह दूराद् दृष्टे इति शेषः दूरतो दृष्टे सति उत्सुकमितोऽन्यत्र वा गच्छतीत्युत्कण्ठासूचकचेष्टाविशेषशालि अ-

इत्यादौ च ।

यद्यपि विभावानामनुभावानामौत्सुक्य-व्रीडा-हर्ष-कोपा-सूया-प्रसादानां च व्यभिचारिणां केवलानामत्र स्थितिः, तथाऽप्येतेषामसाधारणत्वमित्यन्यतमद्वयाक्षेपकत्वे सति नानैकान्तिकत्वमिति ॥

तद्विशेषानाह—

(४४) शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥ २९ ॥

---

गते समीपे प्राप्ते सति विवलितं पूर्वनिराकरणलज्जया सङ्कुचितं-सम्भाषिणि सम्यग्भाषिणि सति स्फारितं निराकरणेऽपि अ-वैमुख्येनागत इति हर्षोदयाद्विकासितं संश्लिष्यति आलिङ्गनेच्छया सान्निध्यं प्राप्नुवति सति अरुणमप्रसाद्यैव स्पर्शमिच्छतीति क्रोधोदयादारक्तं गृहीतवसने स्थानान्तरं गच्छन्त्याः गृहीतचैलाञ्चले सति किञ्च किञ्चिदञ्चिता कुटिलीकृता भ्रूलता येन तथाभूतम् उत्तरोत्तरं चेष्टाधिक्येनासूयोदयाच् चरणयोरानतिः प्रणामस्तस्य व्यतिकरः समूहो यस्य तथाभूते सति वाष्पाम्बुना अश्रुजलेन पूर्णमीक्षणं गोलकाधिष्ठिततेजो यस्य तथाभूतम् । क्रमेण प्रसादोदयादेवं-जातमिति । शार्दूलविक्रीडितं छन्दः ॥ २९ ॥

अत्र प्रथमपद्ये मुग्धा दयित-मेघादिरूपाणामालम्बनो-द्दीपनकारणानां विभावानां द्वितीये अङ्गम्लानिविषयवैतृष्ण्यादिरूपकार्याणामनुभावानां तृतीये औत्सुक्य-व्रीडादिरूपाणां व्यभिचारिणां च केवलानां प्रत्येकमत्र उदाहरणत्रये स्थितिः साक्षादुल्लेखः । समाधत्ते—तथाऽपीति । एतेषां विभावादीनाम् असाधारणत्वं मुख्यत्वम् इति हेतोः अन्यतमेषु विभावादिषु द्वयस्य उल्लिखिताभिन्नस्य आक्षेपकत्वे प्रत्यायकत्वे सति नानैकान्तिकत्वं न मिलितानान्तेषां रसनिष्पत्तिहेतुत्वव्यभिचारः । तथा च मिलितानामेव तेषां रसनिष्पत्तिहेतुत्वं यत्र चैक एव निर्दिष्टस्तत्रापि तेनैवान्ययोर्द्वयोराक्षेपेण रस-निष्पत्तिरिति ग्रन्थसिद्धान्तः ॥

अथ रसभेदानाह—शृङ्गारेति । रतिस्थायिभावकः कान्ताद्यालम्बनकः स्रक्चन्दनाद्युद्दीपितः कटाक्षाद्यनुभावितो व्रीडादिसञ्चारितः शृङ्गारः(१) । हासस्थायिभावको विकृतकुदालम्बनको वैकृताद्यु-द्दीपितो गल्लफुल्लनाद्यनुभावितो श्रमादिसञ्चारितो हासः(२) । शो-

तत्र शृङ्गारस्य द्वौ भेदौ सम्भोगो विप्रलम्भश्च। तत्राद्यः परस्परावलोकना-लिङ्गना-धरपान-परिचुम्बनाद्यनन्तत्वादपरिच्छेद्य एक एव गम्यते। यथा—

शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं-
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता॥ ३०॥

---

कस्थायिभावको मृताद्यालम्बनकस्तद्गुणाद्युद्दीपितो रोदनाद्यनुभावितो दैन्यादिसञ्चारितः करुणः(३)। क्रोधस्थायिभावको द्विषदालम्बनकस्तदपकाराद्युद्दीपितो विकत्थनाद्यनुभावितो गर्वादिसञ्चारितो रौद्रः(४)। उत्साहस्थायिभावको द्विषद्विद्वज्जनदीनालम्बनकोऽपकारगुणापदुद्दीरितः प्रतीकारकरणदानाद्यनुभावितो हर्षावेगाचिन्तादिसञ्चारितो वीरः(५)। भयस्थायिभावको विकटाद्यालम्बनकस्तद्विकटकर्माद्युद्दीपितः पलायनाद्यनुभावितो जडतादिसञ्चारितो भयानकः(६)। जुगुप्सास्थायिभावको विण्मूत्राद्यालम्बनको दुर्गन्धाद्युद्दीपितो निष्ठीवनाद्यनुभावितः ग्लान्यादिसञ्चारितो बीभत्सः(७)। विस्मयस्थायिभावको विस्मयजनककर्मकर्त्रालम्बनको विस्मयकर्माद्युद्दीपितश्चकिताद्यनुभावितो हर्षादिसञ्चारितोऽद्भुतः(८)। एते अष्टावेव रसाः नाट्येऽभिनयात्मके काव्ये स्मृताः कथिताः। श्रव्ये काव्ये तु शान्तोऽपि नवमो रसः। प्रेयआदिकास्तु भावान्तर्गता इति बोध्यम्।

तत्र शृङ्गारेति

शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः।
पुरुषप्रमदाभूमिः शृङ्गार इति गीयते

इत्युक्तदिशा स्मरकरम्बितान्तःकरणयोः स्त्रीपुंसयोः परस्परं रिरंसा रतिः तत्प्रकृतिकत्वं शृङ्गारस्येति बोध्यम्। सम्भोगः लज्जाद्यैर्निषिद्धान्यपीष्टदर्शनादीनि यत्र कामिनौ सम्भुञ्जाते स सम्भोगः, विप्रलम्भः सम्भोगसुखास्वादलोभेन विशेषेण प्रलभ्यते आत्मा यत्र स विप्रलम्भः अपरिच्छेद्यः परिच्छेत्तुमेतावदेवेति इयत्तां कर्तुमशक्यः। एक एवेति विप्रलम्भाभिन्नत्वे सति संयोगत्व-सामान्यरूपत्वे सति रतिप्रकृतिकत्वं सम्भोगत्वमित्येक एव।

नायिकाऽऽरब्धत्वेन नायकारब्धत्वेन च सम्भोगस्य द्वैविध्यन्तत्राद्यमाह-शून्यमित्यादि। प्रथमावतीर्णमदनविकारमुग्धावर्णनमस्त्यस्मिन्के

तथा—

त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं-
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि ।
शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो-
निर्यातः शनकैरलीकवचनोपन्यासमालीजनः ॥ ३१ ॥

---

पद्यमिदम् । वासगृहं शयनागारं शून्यं निर्जनं विलोक्य विशेषेण दृष्ट्वा शयनात् शय्यातः किञ्चिदपरकामेन शनैर्मन्दमुत्थाय निद्राया व्याजं कपटम् उपागतस्य प्राप्तस्य पत्युः मुखं सुचिरं यावद्बुद्धिवैभवं निर्वर्ण्य निःशेषं दृष्ट्वा विस्रब्धं विश्वासयुक्तं यथा तथा परिचुम्ब्य परितः कपालयोर्नेत्रप्रान्तयोश्च चुम्बनं कृत्वा गण्डस्थलीं कपोलपालीं जातपुलकां समुत्पन्नरोमाञ्चां दृष्ट्वा लज्जा लज्जत इति लज्जा पश्चाच्च लज्जावती अत एव नम्रमुखी अधोगतानना बाला मुग्धा हसता हासं विदधता प्रियेण पत्या चिरं सम्भोगस्वीकारपर्य्यन्तं लज्जापगमपर्य्यन्तं वा चुम्बिता अत्र विलोक्येत्यनेन निभृतसखीसत्त्वशङ्कानिरासः। किञ्चिदित्यनेन पतिनिद्राभङ्गोऽपि पार्श्वपरिवर्तनेन समाधानसम्भावनम्। शनैरित्यनेन कङ्कणादिशब्देन पतिनिद्राभङ्गपरिहारः। मन्दमुत्थायेत्यनेन अनुरागजिज्ञासा। निर्वर्ण्येत्यनेन अनुरागातिशयः निद्रानिर्णयश्च। विस्रब्धमित्यनेन निद्रायां वास्तविकत्वज्ञानम् । बालेत्यनेन लज्जाराहित्यहेतुप्रौढत्वनिरासः। हसतेत्यनेन पूर्वं मत्प्रार्थनयाऽपि न प्रवृत्ता इदानीं कथमिति नर्महासश्च द्योत्यते। अत्र च नायक आलम्बनं शून्यगृह-नायकनिद्रादि उद्दीपनम्। मुखनिर्वर्णन-चुम्बनादि अनुभावः। लज्जा-हासव्यङ्ग्यहर्षादि व्यभिचारिभावो रतिः स्थायिभावः तज्ज्ञे सामाजिके नायिकानिष्ठस्यैव रसस्य निष्पत्तिः ॥ ३० ॥

द्वितीयं सम्भोगमुदाहरति—त्वं मुग्धेति। कुचोपपीडं परिरब्धुकामस्य आलिङ्गनव्यवधायिकां कञ्चुकीं मोचयितुं प्रवृत्तस्य नायकस्य अमरुशतके वर्णनमिदम्। हे मुग्धाक्षि सुन्दरनयने ! त्वं कञ्चुलिकया विनैव कञ्चुकीं विनैव मनोहारिणीं चित्ताकर्षणशीलां लक्ष्मीं शोभां धत्से धारयसि इत्येवमभिधायिनि आभाषमाणे प्रियतमे दयिते तस्याः कञ्चुलिकाया वीटिकां ग्रन्थिं स्पृशति सति मोचनाय प्रवृत्ते सति शय्याया उपान्ते समीपदेशे निविष्टा गूढोपविष्टा सा

अपरस्तु अभिलाष-विरहे-र्ष्या-प्रवास-शापहेतुक इति पञ्चविधः । क्रमेणोदाहरणम्—

प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।
यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-
दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥३२॥

---

चासौ सस्मिता ईषत्सञ्जातहासा सखी वयस्या तस्या नेत्रयोरुत्सवः उत्फुल्लता तेन आनन्दितः सञ्जातानन्दः आलीजनः सखीजनः अलीकानां मिथ्याभूतानां शुको मया पाठनीयः सारिका मया भोजनीया इत्यादिवचनानामुपन्यासः कथनं यस्मिन्कर्मणि तद्यथा तथा शनकैर्मन्दं निर्यातो मन्दिरान्निर्गतः । शार्दूलविक्रीडितं छन्दः । अत्र मुग्धाक्षी आलम्बनम् । नयनसौन्दर्य्याङ्गशोभादि उद्दीपनम् । आभाषणवीटिकास्पर्शावनुभावौ उत्कण्ठादयो व्यभिचारिणः । रतिः स्थायिभावः तज्ज्ञे सामाजिके नायकनिष्ठरतिविषयकरसनिष्पत्तिरिति दिक् ॥३१॥

अपरस्त्विति । अपरो विप्रलम्भः । अभिलाषोऽप्राप्तसमागमयोः परस्परप्राप्तीच्छा, विरहोऽननुरागाद् दैवप्रतिबन्धाल् लज्जादिवशाच्चासंयोगः । ईर्ष्या मानकारणम् । प्रवासो विभिन्नदेशस्थितिः । शाप एतावन्तं कालं तव संयोगो माऽस्त्विति सिद्धपुरुषवाग्विशेषः । एतान्हेतूनाश्रित्य जायमानः । तत्राभिलाषहेतुकमाह—प्रेमार्द्रा इति । मालतीप्राप्त्यभिलाषस्य श्मशानसाधने प्रवृत्तस्य माधवस्योक्तिरियम् । मुग्धदृशो मालत्याः तास्ता अनुभूतप्रायाः चेष्टा दर्शनहर्षादिका मयि पुनर्भवेयुः कीदृश्यः अयम्मम अहमस्येति प्रेम्णा आर्द्राः तथा प्रणयमपकारसहस्रेणापि अविचालितं स्पृशन्तीति ताः प्रणययुक्ताः तथा परिचयादतिसङ्गाद् उद्गाढो गुर्वादिपारतन्त्र्यराहित्येन स्थिरीकृतो रागस्य स्नेहस्योदय उपचयो यासु ताः तथा निसर्गेण स्वभावेन मधुरा मनोहरा यासु चेष्टासु आसंशया मनोरथेन परिकल्पितास्वपि रचितास्वपि क्षणात् क्षणपर्यन्तं बाह्यकरणस्य चक्षुरादीन्द्रियस्य व्यापारं विषयग्राहित्वं रुणद्धि अवरोधयतीति तादृशः अन्तःकरणस्य मनस आनन्देन सान्द्रो निबिडो लयस्तन्मयत्वं भवतीत्यर्थः । शार्दूलविक्रीडितं छन्दः । अत्र मालती आलम्बनम् । तद्विलासानुस्मरणमुद्दीपनम् । आसंशाऽनुभावः । तद्युक्तोत्कण्ठा व्यभिचारिभावः । रतिः स्थायिभावः ॥३२॥

अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक् सुहृद्
यो मां नेच्छति नागतश्च हहहा कोऽयं विधेः प्रक्रमः ।
इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे
बाला वृत्तविवर्त्तनव्यतिकरा नाप्नोति निद्रां निशि ॥ ३३ ॥

एषा विरहोत्कण्ठिता ।

सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम् ।
स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः ॥ ३४ ॥

---

विरहहेतुकमाह-अन्यत्रेति । कृतसङ्केतनायकस्य रात्रावनागमने विरहोत्कण्ठनाया वितर्कवर्णनमिदम् । इति एवमल्पेतराभिर्बह्वीभिः कल्पनाभिर्वितर्कणैः कवलितं व्याप्तं स्वान्तं मनो यस्यास्तथाभूता बाला निशान्तस्य शयनगृहस्यान्तरे मध्ये वृत्तः सञ्जातो विवर्त्तनानां पार्श्वपरिवर्त्तनानां व्यतिकरः सम्बन्धो यस्यास्तथा भूता सती निशि रात्रौ निद्रां नाप्नोति कल्पनाप्रकारमाह-अन्यत्र नायिकाऽन्तरगृहे व्रजति गच्छतीति कथाऽपि प्रवादोऽपि का कुत्सिता अलीका खलु निश्चितम् । अस्य नायकस्य तादृग् अन्यत्र गमनशीलः सुहृद् मित्रमपि न काका यो मां नेच्छति इति न अपि तु इच्छत्येव तर्हि हेत्वभावाद्नागमनमप्यसम्भाव्यन्तत्राह-नागतश्चेति । आगतस्तु न हहहा कारणाभावेऽपि कार्यमिति विस्मये हहहेति । विधेर्दैवस्य कोऽयमननुभूतपूर्वः प्रक्रम आरम्भः अहेतुककार्योत्पादः । शार्दूलविक्रीडितम् । अत्रानागतपतिरालम्बनम् । अनागमनादिरुद्दीपनम् । विवर्तनादिरनुभावः । हहहेति सूचितो विस्मयो व्यभिचारिभावः । रतिः स्थायिभावः ॥ ३३ ॥

ईर्ष्याहेतुकमाह-सा पत्युरिति । स्वप्रेयस्या नवोढाया दुःखमसहमाना का चित् कां चित्प्रत्याह । सा बाला पत्युः प्रथमापराधस्य अन्याङ्गनासङ्गमरूपस्य समये काले सख्येन सौहार्देन य उपदेशः सखीकर्तृकशिक्षा तं विना सविभ्रमं विलाससहितं यथा तथा अङ्गस्य भ्रुकुट्यादेर्वलना चालना वक्रीकरणं याश्च वक्रोक्तयस्ताभिः संसूचनं मानप्रकाशनं नो जानाति किन्तु तदा स्वच्छैर्निर्मलैरच्छ-

प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं-
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता-
गन्तव्ये सति जीवित! प्रियसुहृत्सार्थः किमु त्यज्यते ॥ ३५ ॥
त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानन्ते चरणपतितं यावदिच्छामि कर्तुम्।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥ ३६ ॥

---

कपोलयोर्निर्मलगण्डयोर्मूलेन गलितैरुत्तानशयनान्मूलेन निर्गमनैरश्रुभिर्नयनजलैरुपलक्षिता पर्यस्ते परितः क्षिप्ते नेत्रोत्पले नयनकमले यथा तथाभूता सती लुठन्तो विप्रकीर्णा लोलाश्चञ्चला ये अलकाः केशपाशास्तैरुपलक्षिता सती केवलं रोदिति रोदनमेव करोति अत्र पतिरालम्बनम्। अपराध उद्दीपनम्। रोदनाद्यनुभावः। तद्यङ्ख्याऽसुया व्यभिचारिभावः। रतिः स्थायिभावः। शार्दूलविक्रीडितं छन्दः ॥ ३४ ॥

प्रवासहेतुकमाह–प्रस्थानमिति। प्रवत्स्यत्पतिका स्वजीवितं संबोध्य उपालम्भयति हे जीवित प्राण! प्रियतमे नायके यातुं गन्तुं निश्चितंजातनिश्चयं चेतो यस्य तथाभूते सति सर्वे तव सुहृदः समंप्रियतमेन सह प्रस्थिताः प्रचलिताः तथा च तवापि गन्तव्ये गमनावश्यंभावे सति प्रियस्य नायकस्य सुहृदां च सार्थः समूहः किमु त्यज्यते एषां वियोगे त्वयाऽपि गन्तव्यमेवेति सार्थत्यागो वृथा के ते इत्याह वलयैः कङ्कणैः प्रस्थानं कृतं प्रियगमनवार्त्तयैव कार्श्येन वलयभ्रंशाः प्रियसखैः प्रीतिपात्रैः अस्रैरश्रुभिरजस्रं निरन्तरं गतं नयनाभ्यांनिर्गतं धृत्या धैर्येण क्षणं क्षणमात्रमपि नासितं न स्थितं चित्तेन गन्तुं पुरः पूर्वमेव व्यवसितमुद्युक्तम्। अस्रादीनां हृदयस्थत्वेन प्रियसखत्वम् अत्र प्रियतम आलम्बनम्। तत्प्रयाणमुद्दीपनम्। कार्श्यादयोऽनुभावाः। चिन्ता व्यभिचारिभावः। रतिः स्थायिभावः। शार्दूलविक्रीडितं छन्दः ॥ ३५ ॥

शापहेतुकमाह–त्वामिति। मेघदूते प्रियामुद्दिश्य मेघम्प्रति यक्षस्योक्तिः। हे प्रिये! प्रणयेन प्रेमातिशयेन कुपितां कोपयुक्तां त्वां त्वत्प्रतिकृतिं धातुरागैर्गैरिकादिरञ्जनैः शिलायां सानुपट्टे आलिख्य निर्माय

हास्यादीनां क्रमेणोदाहरणम् ।

आकुञ्च्य पाणिमशुचिं मम मूर्ध्नि वेश्या-
मन्त्राम्भसां प्रतिपदं पृषतैः पवित्रे ।
तारस्वनं प्रथितथूत्कमदात्प्रहारं
हा हा हतोऽहमिति रोदिति विष्णुशर्मा ॥ ३७ ॥

हा मातस्त्वरिताऽसि कुत्र किमिदं हा देवताः क्वाऽऽशिषः
धिक् प्राणान् पतितोऽशनिर्हुतवहस्तेऽङ्गेषु दग्धे दृशौ ।
इत्थं घर्घरमध्यरुद्धकरुणाः पौराङ्गनानां गिर-
श्चित्रस्थानपि रोदयन्ति शतधा कुर्वन्ति भित्तीरपि ॥ ३८ ॥

---

आत्मानं ते तव चित्रगतायाः चरणपतितं कर्तुं लिखितुं यावदिच्छामि तावदिच्छासमकालमेव मुहुरुपचितैः प्रवृद्धैरस्रैरश्रुभिर्मम दृष्टिर्दर्शनमालुप्यते आव्रियते अर्थान्तरं न्यस्यति क्रूरः परश्रेयोविघटने जागरूकः कृतान्तो दैवं तस्मिन्नपि आलेख्येऽपि नौ आवयोः सङ्गमं सहवासं न सहते । अत्र नायिका आलम्बनम् । तत्प्रणयकोप उद्दीपनम् । चरणपातेच्छादिरनुभावः । कृतान्तेऽसूया व्यभिचारिणी । रतिः स्थायिभावः । मन्दाक्रान्ता छन्दः ॥ ३६ ॥

हास्यं रसमुदाहरति—आकुञ्च्येति । विष्णुशर्माणमुपहसत उक्तिरियम् । मन्त्राम्भसां मन्त्रपूतजलानां पृषतैर्बिन्दुभिः प्रतिपदं प्रतिमन्त्रपदं पवित्रिते कृतसंस्कारे मम मूर्ध्नि वेश्या वाराङ्गना अशुचिमुच्छिष्टाद्युपहितं पाणिं हस्तमाकुञ्च्य सङ्कुचितं कृत्वा तारो दीर्घः स्वनः शब्दो यत्र तं तथा प्रथितो विस्तारितः थूदिति शब्दो यत्र तादृशं प्रहारमदाद्दत्तवती हा हा हतोऽहमिति शब्दमुच्चार्य विष्णुशर्मा नाम विप्रः रोदिति । अत्र विष्णुशर्माऽऽलम्बनम् । रोदनमुद्दीपनम् स्मितातिहसितरुदितादय अनुभावाः । द्रष्टुरावेगचापल्यादयो व्यभिचारिणः । हासः स्थायिभावः । वसन्ततिलका छन्दः ॥ ३७ ॥

करुणरसमुदाहरति—हा मातरिति । राजपत्नीमरणे तत्परिजनविलापोक्तिरियम् । पौराङ्गनानामित्थमेतत्प्रकारा गिरः घर्घराः उच्चैरोदनाद् घर्घरस्वनाः मध्येऽन्तराले रुद्धा विच्छिन्नास्ताश्च करुणाः सस्नेहाः सत्यः चित्रस्थानपि आलेख्यगतानपि किं पुनः सचेतनान् रोदयन्ति भित्तीरपि शतधाः शतखण्डाः कुर्वन्ति किंप्रकारा इत्यपेक्षायां पूर्वार्धमाह हा इति विषादे भो मातः ! कुत्र गन्तव्ये त्वरि-

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं-
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ ३९ ॥

---

ताऽसि सञ्जातत्वराऽसि येनास्मानपि नापेक्षितवती किमिदम् आकस्मिकोत्पातरूपं देवताः हा धिक् तेषामाराधनेनाप्यरक्षणाद् आशिषः संतुष्टद्विजानां क कुत्र ता विफलाः सत्यः कुत्र गताः प्राणा-न्स्माकं धिक् त्वन्मरणेऽपि स्थिरत्वात् ते तवाङ्गेषु सुकुमारावयवेषु अशनिर्वज्ररूपो हुतवहोऽग्निः पतितः दृशौ नेत्रे अस्माकं दग्धे अशुभदर्शित्वाद्दग्धप्राये इति लोकप्रसिद्धानुकरणम् । अत्र नायिका आलम्बनम् । तद्दाहाद्युद्दीपनम् । रोदनमनुभावः । मूर्च्छादयो व्यभिचारिणः । शोकः स्थायिभावः । शोकप्रकृतिकः करुणो रसः सामाजिके व्यज्यते । शार्दूलविक्रीडितं छन्दः ॥ ३८ ॥

रौद्ररसमुदाहरति-कृतमिति । द्रोणवधक्रुद्धस्याश्वत्थाम्नोऽर्जुनादीन्प्रत्युक्तिर्वेणीसंहारे । मनुजरूपैः पशुभिः अत एव निर्मर्यादैः मर्यादाशून्यैः उदायुधैरुद्यतास्त्रैर्यैर्भवद्भिरिदं गुरोर्द्रोणस्य वधरूपं पातकं कृतं जनितमनुमतमनुज्ञातं दृष्टमनिराकृतं वा, नरकरिपुणा नरकासुरशत्रुणा कृष्णेन सार्धं तेषां वधादिकर्तृधृष्टद्युम्नादीनां सभीमकिरीटिनां भीमार्जुनसहितानां भवतामसृङ्मेदोमांसैरुधिरवसापिशितैरयमेतत्क्षणवर्ती अहमनन्यसहायोऽश्वत्थामा दिशां दिग्देवतानां बलिं पूजोपहारं करोमि । अत्रापकारिणोऽर्जुनादय आलम्बनम् । अस्त्राद्युद्यमनमुद्दीपनम् । प्रतिज्ञाऽनुभावः । अन्यैरपेक्ष्यगम्यगर्वो व्यभिचारी । क्रोधः स्थायिभावः । क्रोधप्रकृतिको रौद्ररसः सामाजिके व्यज्यते । हरिणीछन्दः । रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदेति लक्षणात् ॥ ३९ ॥

वीररसमुदाहरति-क्षुद्रा इति । हनुमन्नाटके मेघनादस्योक्तिरियम् । भो क्षुद्राः नीचा ! हरयो वानराः ! एते यूयं सन्त्रासं भयं विजहत त्यजत यतः क्षुण्णौ चूर्णितौ शक्रेभस्येन्द्रगजस्य कुम्भौ यैस्तादृशा अमी सायका बाणा युष्मद्देहेषु निष्पतन्तः पतमानाः सन्तः परं लज्जां केवलं महतीं वा व्रीडां दधति धारयन्ति क्षुद्रकार्यकरणाल्लज्जिता;

क्षुद्राः संत्रासमेते विजहत हरयः क्षुण्णशक्रेभकुम्भा-
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः ।
सौमित्रे ! तिष्ठ पात्रं त्वमसि न हि रुषां नन्वहं मेघनादः
किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥ ४० ॥

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम् ।
दर्भैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥ ४१ ॥

---

इव मां मानन्दयन्ति अतो न युष्मद्देहेषु बाणान्पुनः क्षेप्स्यामि हे सौमित्रे लक्ष्मण! त्वं तिष्ठ युद्धोद्यमाद्विरम हि यतः त्वं रुषां मम क्रोधानां पात्रं विषयो नास्ति न भवसि किन्तु अहं मेघनादो राममन्वेषयामि कीदृक् पराक्रमशील इति मार्गयामि कथंभूतं किंचिदीषद् भ्रूभङ्गलीलया नियमितो बद्धो जलधिर्येन तथाभूतम् । अत्र राम आलम्बनम् । तत्समुद्रबन्धनमुद्दीपनम् । क्षुद्रेषूपेक्षा पराक्रमशालिनि रामे स्पर्द्धा चानुभावौ । ऐरावतकुम्भचूर्णनस्मृतिः लज्जां दधतीति गम्यगर्वश्च व्यभिचारिणौ । उत्साहः स्थायिभावः । उत्साहप्रकृतिको वीररसः सामाजिके व्यज्यते । स्रग्धरा छन्दः ॥ ४० ॥

भयानकरसमुदाहरति-ग्रीवेति । शाकुन्तले सूतम्प्रति दुष्यन्तस्योक्तिरियम् । इदानीमपि अयं मृगः पुनरुदग्रप्लुतत्वात् उत्कटोत्फालत्वाद् वियति आकाशे बहुतरमधिकतरमुर्व्यां भूमौ स्तोकमल्पं प्रयाति गच्छति किं भूतः ग्रीवाया भङ्गेन वक्रीभावेन अभिरामं सुन्दरं यथा स्यात्तथा मुहुर्वारं वारं स्यन्दने रथे बद्धदृष्टिः सन् अनुपतति पश्चाद्गच्छति तथा शरपतनभयाद् बाणपातभीत्या भूयसा स्थूलेन पश्चार्धेन अपरार्धभागेन पूर्वकायमुपरिभागं प्रविष्टः प्रवेष्टुमारब्धः तथा श्रमेणायासेन विवृतं विकासितं यन्मुखं तस्माद्भ्रंशिभिः पतितैः अर्धावलीढैर्नेपजग्धैर्दर्भैः कुशैः कीर्णं व्याप्तं वर्त्म मार्गो यस्य तथाभूतः इति पश्येति वाक्यार्थः कर्म । स्रग्धराछन्दः । अत्र पश्चाद्गच्छन् स्यन्दनो राजा वा आलम्बनम् । शरपतनं चोद्दीपनम् । ग्रीवाभङ्गादयोऽनुभावाः । श्रमादयो व्यभिचारिणः । भयं च स्थायिभावः । तज्ज सामाजिके भयप्रकृतिको भयानको रसो व्यज्यते ॥ ४१ ॥

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्ड्याद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आर्त्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥ ४२ ॥
चित्रं महानेष बतावतारः क्व कान्तिरेषाऽभिनवैव भङ्गिः ।
लोकोत्तरं धैर्यमहो प्रभावः काऽप्याकृतिर्नूतन एष सर्गः ॥ ४३ ॥

---

बीभत्समुदाहरति—उत्कृत्येति । मालतीमाधवे श्मशाने शवभोजिनं-प्रेतरङ्कमुद्दिश्य माधवोक्तिरियम् । आर्त्तः क्षुत्पीडितः पर्यस्ते समन्ततः क्षिप्ते नेत्रे येन सः प्रकटिताः प्रकाशिता दशना दन्ता येन सः प्रेतेषु रङ्को दरिद्रः प्रथमं पूर्वं कृत्तिं चर्म उत्कृत्योत्कृत्य उत्पाट्योत्पाट्य अथानन्तरं पृथुना स्थूलेन उत्सेधेनोच्छ्रिततया भूयांसि बहुलानि अंसयोः स्कन्धयोः स्फिचि ऊरुमूले पृष्ठपिण्ड्यां जङ्घोर्द्ध्वभागे एवमाद्यवयवेषु सुलभानि उग्रपूतीनि उत्कटदुर्गन्धानि मांसानि जग्ध्वा भक्षयित्वा अङ्कस्थात् समीपे वर्तमानात् करङ्कात् प्रेतशरीरात्प्रेतमस्तकाद्वा अस्थिसंस्थमस्थिसम्बद्धं स्थपुटगतमपि निम्नोन्नतभागस्थितमपि क्रव्यमपक्वमांसमव्यग्रं शनैर्यथा तथा अत्ति भक्षयति । स्रग्धरा छन्दः । अत्र शव आलम्बनम् । मांसाशनमुद्दीपनम् । नासाकुञ्चनादयोऽनुभावाः । उद्वेगादयो व्यभिचारिभावाः । जुगुप्सा स्थायिभावः । जुगुप्साजनितो बीभत्सो रसस्तज्ज्ञे सामाजिके व्यज्यते ॥ ४२ ॥

अद्भुतमुदाहरति—चित्रमिति । वामनं प्रति बलेरुक्तिरियम् । महान् माहात्म्यशील एष पुरुषविशेषः चित्रं लोकोत्तरचमत्कारिवस्तु तथा एषोऽवतारो धर्मस्थापकसदाचारप्रवर्त्तकः बर्तति हर्षे एषा पुरो दृश्यमाना कान्तिः विलक्षणशोभा क्व न कुत्रापि तथा एषा भङ्गिः गमनोपवेशनादिः अभिनवैव विलक्षणैव अपूर्वैव वा तथा धैर्यमचलचित्तत्वम् अस्येति शेषः लोकोत्तरं लोकविलक्षणं प्रभावः सामर्थ्यम् अहो अलौकिकः आकृतिरवयवसंस्थानं काऽपि अनिर्वचनीया एष सर्गः निर्माणं नूतनो ब्रह्मसर्गविलक्षणः । उपजातिश्छन्दः । अत्र वामन आलम्बनम् । कान्त्यतिशयादि उद्दीपनम् । स्तवादयोऽनुभावाः । धृतिहर्षादयो व्यभिचारिणः । विस्मयः स्थायिभावः । विस्मयजनितोऽद्भुतो रसोऽभिज्ञे सामाजिके व्यज्यते ॥ ४३ ॥

एषां स्थायिभावानाह—

(४५) रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयन्तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्त्तिताः ॥३०॥

स्पष्टम् ।

व्यभिचारिणो ब्रूते—

(४६) निर्वेदग्लानिशङ्काख्यास्तथाऽसूया मदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥३१॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्राऽपस्मार एव च ॥ ३२ ॥
सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ ३३ ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥ ३४ ॥

---

ननु के ते स्थायिनो भावा इत्यपेक्षायामाह—एषामिति । एषां शृ-ङ्गारादिरसानाम् । स्थायिलक्षणन्तु—

विरुद्धा अविरुद्धा वा यं तिरोधातुमक्षमाः ।
आनन्दाङ्कुरकन्दोऽसौ भावः स्थायीति संज्ञितः ।
रतिर्हासश्चेति ।

शृङ्गारादिरसानां यथासंख्यमेते स्थायिभावाः कथिता इति का-रिकार्थः । एषां लक्षणान्यन्यत्रोक्तानि यथा—

रतिर्मनोऽनुकूलेऽर्थे मनसः प्रवणायितम् ।
वागादिवैकृताच्चेतो विकासो हास उच्यते ॥
इष्टनाशादिभिश्चेतो वैक्लव्यं शोक उच्यते ।
प्रतिकूलेषु तैक्ष्णस्य प्रबोधः क्रोधसंज्ञितः ।
कार्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते ।
रौद्रशक्त्या तु जनितं वैक्लव्यं मनसो भयम् ॥
दोषेक्षणादिभिर्गर्हा जुगुप्सेति निगद्यते ।
विस्मयश्चित्तविस्तारो वस्तुमाहात्म्यदर्शनादिति ॥

भावव्युत्पत्तेर्व्यभिचारिघटितत्वेन तानाह—व्यभिचारिणो ब्रूते इति । कारिकास्थनिर्वेदादयो हि चित्तवृत्तिविशेषा एव स्रक्सूत्रन्यायेन

निर्वेदस्यामङ्गलप्रायस्य प्रथममनुपादेयत्वेऽप्युपादानं व्यभिचारित्वेऽपि स्थायिताऽभिधानार्थं तेन—

( ४७ ) निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः ।

अहौ वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्ठे वा बलवति रिपौ वा सुहृदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः
क्वचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः ॥ ४४ ॥

( ४८ ) रतिर्देवादिविषया व्यभिचारी तथाऽञ्जितः ॥ ३५ ॥
भावः प्रोक्तः ।

---

नियतावस्थानं स्थायिनः, फेनबुद्बुदन्यायेन अनियतावस्थानं व्यभिचारिण इत्यनयोर्भेदः । एषां विशेषलक्षणानि यथासम्भवोदाहरणानि च साहित्यदर्पणादौ स्पष्टम् । नामत इति उद्देशरूपेण न तु लक्षणोदाहरणप्रदर्शनादिनेत्यर्थः । ननु अष्टौ नाट्ये रसाः स्मृता इत्यत्र नाट्यस्य विशिष्योपादानेन श्रव्यकाव्ये रसान्तरमायाति तत्कीदृगित्यपेक्षायां वृत्तिकृदाह—निर्वेदस्येत्यादि सर्वत्र हेयबुद्धितयाऽमङ्गलत्वम् ईर्ष्याजन्यस्यामङ्गलत्वाभावात्प्रायेत्युक्तम् । स्थायितेति स्थायिव्यभिचारिणोर्मध्ये पाठादुभयरूपत्वम् तथा च तत्त्वज्ञानजन्यस्य निर्वेदस्य स्थायित्वम् आपदीर्ष्यादिजन्यस्य तस्य व्यभिचारित्वमिति विवेकः निर्वेदस्यापीति । निर्वेदः स्थायिभावो यस्य सः ।

शान्तरसमुदाहरति—अहाविति कश्मीर देशस्थस्य श्रीमदुत्पलराजस्य पद्यमिदम् । अत्र वाशब्दो द्वयोर्द्वयोः प्रत्येकं वा आकारतुल्यताद्योतनार्थः अहौ सर्पे हारे मुक्ताहारे वा कुसुमशयने पुष्पाकीर्णपर्यङ्के दृषदि शिलायां वा मणौ रत्ने लोष्ठे मृत्पिण्डे वा रिपौ सपत्ने सुहृदि मित्रे वा तृणे घासे स्त्रैणे स्त्रीसमूहे वा समा वैषम्यरहिता उदासीना दृक् दृष्टिर्यस्य तस्य तथा क्वचिद् अमेध्ये देशे वा पुण्यारण्ये नैमिषारण्यादौ वा शिव शिवेति श्रेयस्करं वदतो वा प्रलपतोऽनर्थकं वदतो वा मम दिवसा दिनानि यान्ति व्यतीतानि भवन्ति । शिखरिणी छन्दः । अत्र मिथ्यात्वेन परिभूयमानं जगदालम्बनम् । तपोवनाद्युद्दीपनम् । अहिहाराद्योः समदर्शनमनुभावः । मतिधृतिहर्षाः व्यभिचारिभावाः । निर्वेदः स्थायिभावः । तज्ज्ञे सामाजिके शान्तरस निष्पत्तिर्व्यज्यते ॥ ४४ ॥

रसभावतदाभासेतिसूत्रे भावः पठितः स किंस्वरूप इति क्रम

आदिशब्दान्मुनि-गुरु-नृप-पुत्रादिविषया, कान्ताविषया तु व्यक्ता शृङ्गारः।

उदाहरणम्-

कण्ठकोणविनिविष्टमीश ते कालकूटमपि मे महामृतम्।
अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि मे न रोचते ॥ ४५ ॥

हरत्यघं संप्रति हेतुरेष्यतः
शुभस्य पूर्वाचरितैः कृतं शुभैः।
शरीरभाजां भवदीयदर्शनं
व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥ ४६ ॥

---

प्राप्तं भावं लक्षयति—रतिरिति। रतिरिति सकलस्थायिभावोपलक्षणं, देवादिविषयस्यापि अप्राप्तरसावस्थोपलक्षणं तथाशब्दश्चार्थे तेन देवादिविषया सर्वप्रकारा कान्तविषयाऽप्यपुष्टा रतिर्हासादयश्च अप्राप्तरसावस्थाः विभादिभिः प्राधान्येन अञ्जितो व्यञ्जितः व्यभिचारी च भावः प्रोक्तः भावपदाभिधेयः कथित इति सूत्रार्थः। देवादिपदव्यावर्त्यमाह—कान्ताविषया त्विति। व्यक्तेति प्राधान्येन विभावादिभिः पुष्टेत्यर्थः तेनाङ्गभूताया अनुभावादिभिरपुष्टयाश्च न रसत्वं किन्तु भावत्वमेवेति भावः।

देवविषयां रतिमुदाहरति—कण्ठेति। श्रीमदुत्पलाचार्यप्रणीतपरमेश्वरस्तोत्रावलौ पद्यमिदम् हे ईश! ते तव कण्ठस्य कोणे एकदेशे विनिविष्टं नितरां संलग्नं कालकूटमपि उत्कटविषमपि मे मम महामृतम् अतिप्रियत्वाद् उत्तमममृतम् उपात्तमपि शिरसा धृतमपि अमृतं चन्द्रकलारूपं यदि भवद्वपुषो भेदेन वृत्तिरवस्थितिर्यस्य तथाभूतं भेदेनावभासमानं तदा मे मह्यं न रोचते अन्यस्य यथा तथा भवत्विति भावः। रथोद्धता वृत्तम्। रान्नराविह रथोद्धता लगाविति लक्षणात्। अत्र महादेव आलम्बनम्। ईशपदप्रतिपाद्या व्याहतैश्वर्यमुद्दीपनम्। स्तवोऽनुभावः। धृतिमाहात्म्यस्मरणादयो व्यभिचारिणः॥ एतैरनुमिता तावकरतिः सामाजिकानां तैरेव विभादिभिर्व्यञ्जिता भाव एवेति बोध्यम्। न चास्या रसत्वं मुनेः स्वतन्त्रेच्छत्वात्॥४५॥

मुनिविषयां रतिमुदाहरति-हरतीति। हेमुने! भवदीयदर्शनं शरीरभाजां प्राणिनां कालत्रितयेऽपि वर्तमानादिकालत्रयेऽपि दुरदृष्टराहित्यरूपां योग्यतां व्यनक्ति प्रकटीकरोति तथाहि सम्प्रति वर्तमानकाले

एवमन्यदप्युदाहार्यम् । अञ्जितव्यभिचारी यथा—

जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मा मां संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुरः ।
नो यावत्परिरभ्य चाटुशतकैराश्वासयामि प्रियां
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥ ४७ ॥

---

अघं पापं हरति नाशयति एष्यत आगमिष्यतः शुभस्य श्रेयःसाधनस्य हेतुः सम्पादकं, तथा पूर्वाचारतैः पूर्वजन्मार्जितैः शुभैः सुकृतैः कृतं जनितम् । वंशस्थवृत्तम् । अत्र श्रीकृष्णस्य मुनिविषयाया रतेर्मुनिरालम्बनम् । दर्शनयोग्यताव्यञ्जनमुद्दीपनम् । श्रीकृष्णस्येयमुक्तिरेवानुभावः । तद्व्यङ्ग्यहर्षश्च व्यभिचारी मुनिविषयकश्रीकृष्णरतिश्च सामाजिके भावनिष्पत्तिः ॥ ४६ ॥

एवमन्यदपीति । गुरुविषया रतिर्यथा—

भवसागरबान्धवादुपेन्द्रप्रपदक्षालनवारितो विशिष्टम् ।
भवसागरवैरिवन्दनीयं गुरुपादोदकमेव केवलन्नः ॥

नृपविषया यथा—

सङ्कल्पेऽङ्कुरितं द्विपत्रितमथ प्रस्थानवेलागमे
मार्गे पल्लवितं पुरं प्रविशतः शाखान्तरैरावृतम् ।
प्रादुर्भावविनिदर्शने मुकुलितं श्रीकर्ण दृष्टे त्वयि
प्रोत्फुल्लं फलितं च सम्प्रति मनोराज्यद्रुमेणाद्य मे ॥

पुत्रादिविषया यथा—

एह्येहि वत्स ! रघुनन्दन ! पूर्णचन्द्र !
चुम्बामि मूर्धनि चिराय परिष्वजे त्वाम् ।
आरोप्य वा हृदि दिवानिशमुद्वहामि
वन्देऽथ वा चरणपुष्करकद्वयन्ते ॥

इति महावीरचरिते रामं प्रति कुशध्वजस्य वात्सल्यरूपा रतिः । कान्ताविषयाऽपुष्टारतिर्यथा कुमारसम्भवे—

हरस्तु किञ्चित्परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥

प्रधानतया वर्णितं व्यभिचारिणमुदाहरति—जाने इति वियुक्तस्य कस्य चित्सखायं प्रत्युक्तिरियम् । हे भ्रातः ! प्रियतमा प्राणेश्वरी कोपेन पराङ्मुखी तिर्यग्वदना सती मां मा संस्पृश इति पाणिना हस्तेन ज्ञापयित्वेति शेषः रुदती रोदनं कुर्वती पुरोऽग्रे गन्तुं चलितुं प्रवृत्ता

अत्र विधिं प्रत्यसूया ।

( ४९ ) तदाभासा अनौचित्यप्रवर्त्तिताः ।

तदाभासा रसाभासा भावाभासाश्च ।

तत्र रसाभासो यथा—

स्तुमः कं वामाक्षि ! क्षणमपि विना यं न रमसे
विलेभे कः प्राणान् रणमखमुखे यं मृगयसे ।
सुलग्ने को जातः शशिमुखि ! यमालिङ्गसि बलात्
तपःश्रीः कस्यैषा मदननगरि ! ध्यायसि तु यम् ॥ ४८ ॥

---

उद्युक्ता ततः तादृग्दर्शनोत्तरम् अहं तदवस्थां तां प्रियां परिरभ्य आलिङ्ग्य चाटुशतकैः प्रियवचनशतैः यावद् नाश्वासयामि नानुनयं करोमि तावत् शठेन पराहितकारिणा विधिना दैवेन निद्रादरिद्रः निद्रया वियुक्तः कृत इति जाने निश्चिनोमि। शार्दूलविक्रीडितं छन्दः अत्र विधिम्प्रति असूया प्राधान्येन प्रतीयते विधिरत्रालम्बनम् । विधेर्दौर्जन्यमुद्दीपनम् । शठत्वोक्तिरनुभावः। प्राधान्येन व्यञ्जितोऽसूयारूपो व्यभिचारी भावपदाभिधेयः ॥ ४७ ॥ अत्र विधिं प्रत्यसूयेति शठपदगम्या सा प्राधान्येन प्रतीयते इति शेषः ।

तदाभासा इति । अनौचित्यं शास्त्रलोकातिक्रमात् प्रतिषिद्धविषयकत्वादिरूपं सामाजिकसंवेद्यं, तेन प्रवर्तिता तदाभासा रसाभासाभावाभासाश्चेति कारिकार्थः ।

रसाभासमुदाहरति स्तुम इति । परकीयां प्रति कामुकोक्तिरियम् । हे वामाक्षि ! वामं सुन्दरं विरुद्धं वाऽक्षि यस्यास्तत्सम्बुद्धौ तं कं पुरुषं स्तुमः यं विना क्षणमपि किंचित्कालमपि न रमसे न हृष्यसि तथा यं मृगयसे अन्विष्यसि कोऽसौ रणः संग्राम एव मखो यागः त्वत्कर्तृकान्वेषणरूपस्वर्गफलकत्वात् तस्य मुखे पुरतः यः प्राणान् जन्मान्तरे विलेभे दत्तवान् हे शशिमुखि विधुवदने ! यं बलादालिङ्गसि स कः सुलग्ने शोभनग्रहाधिष्ठिते काले जात उत्पन्नः हे मदननगरि कामराजधानि ! यन्तु ध्यायसि तस्य कस्य एषा त्वत्कर्तृकध्यानरूपा तपःश्रीः सुकृतजन्या सम्पत्तिः । शिखरिणी च्छन्दः ॥ ४८ ॥ अत्र रसस्याभासत्वं दर्शयति अत्रानेकेति । तस्या वामाक्ष्याः स्तुम इत्यादिष्वनुगतं संबद्धं बहुषु बहुकामुकविषया ये व्यापारा अन्वेषणालिङ्ग-

अत्रानेककामुकविषयमभिलाषं तथा स्तुम इत्याद्यनुगतं बहुव्यापारोपादानं व्यनक्ति।

भावाभासो यथा—

राकासुधाकरमुखी तरलायताक्षी
सा स्मेरयौवनतरङ्गितविभ्रमाङ्गी।
तत्किं करोमि विदधे कथमत्र मैत्रीं
तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः॥ ४९॥

---

नव्यानरूपास्तेषामुपादानं ग्रहणं कर्तृ तस्या अनेके ये कामुका-जारास्तद्विषयकमभिलाषं कर्म व्यनक्ति व्यञ्जयति॥

राकेति। सीतामुद्दिश्य रावणोक्तिरियम्। राकायां पूर्णिमायां यः सुधाकरश्चन्द्रस्तद्वन्मुखं यस्याः सा तरले चञ्चले आयते दीर्घे आक्षिणी नेत्रे यस्याः सा स्मेरमीषत्प्रकाशं यौवनं नूतनतारुण्यं तेन तरङ्गिताः तरङ्गवदुत्तरोत्तरारम्भशीला विभ्रमा विलासा येषु तथाभूतान्यङ्गानि अवयवा यस्याः सा एताहशी सीताऽस्तीति शेषः। तद् अनुपेक्षणीयगुणवत्त्वात् किं करोमि तल्लाभाय किमाचरामि अत्र अस्यां सीतायां मैत्रीं मित्रतां वा कथं केनोपायेन विदधे करोमि तथा सति तया मम स्वीकृतिः स्वीकारः ममायमिति बुद्धिविषयीकरणंतस्य व्यतिकरे सम्बन्धे अभ्युपायो हेतुः क इव कः संभाव्यते न कोऽपि। वसन्ततिलका छन्दः॥ ४९॥ अत्र भावस्याऽऽभासत्वं दर्शयति—अत्र चिन्तेति।

आदौ वाच्यः स्त्रियो रागः पश्चात्पुंसस्तदिङ्गितैः।

इत्यौचित्यं, तद्विपरीत्येन रतेः प्रवर्तितत्वात्तद्व्यभिचारिभावस्य चिन्ताया अप्यनौचित्यप्रवर्त्तितत्वं व्यभिचारिभावस्य चिन्तायाः प्राधान्येनाभिव्यक्तत्वाद्भावत्वं, एवमन्येऽपीति रसान्तराभासा भावान्तराभासाश्चेत्यर्थः। तत्र रौद्राभासो यथा—

रक्तोत्फुल्लविशाललोलनयनः कम्पोत्तराङ्गो मुहु-
र्मुक्त्वा कर्णमपेतभीर्धृतधनुर्बाणो हरेः पश्यतः।
आध्मातः कटुकोक्तिभिः स्वमसकृद्दोर्विक्रमं कीर्त्तयं-
स्तास्फोटपटुर्युधिष्ठिरमसौ हन्तुं प्रविष्टोऽर्जुनः॥

अत्र चिन्ता अनौचित्यप्रवर्तिता एवमन्येऽप्युदाहार्याः ।

( ५० ) भावस्य शान्तिरुदयः सन्धिः शबलता तथा ॥३६॥

क्रमेणोदाहरणम् ।

तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं-
किं वक्षश्चरणाऽऽनतिव्यतिकरव्याजेन गोपाय्यते ।
इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया
साऽऽश्लिष्टा रभसेन तत्सुखवशात्तन्व्या च तद्विस्मृतम् ॥५०॥

---

भावान्तराभासो यथा—

सर्वेऽपि विस्मृतिपथं विषयाः प्रयाता
विद्याऽपि खेदकलुषा विमुखी बभूव ।
सा केवलं हरिणशावकलोचना मे
नैवापयाति हृदयादधिदेवतेव ॥

गुरुकुले विद्याभ्यासमये तदीयकन्यालावण्यगृहीतमानसस्य अन्यस्य वा कस्य चिदतिप्रतिषिद्धगमनां स्मरतो देशान्तरगतस्येयमुक्तिः ।

भावशान्त्यादिरक्रम इति सूत्रतः क्रमप्राप्तं भावशान्त्यादिपदप्रतिपाद्यमाह—भावस्येति । शान्तिः प्रशम उदय उत्पत्तिः सन्धिः एककालमेव तुल्यकक्षयोरास्वादः समकालमेव तुल्यरूपयोर्विरुद्धयोरप्यास्वादो वा शबलता च पूर्वपूर्वोपमर्देन परपरोदयः ।

भावशान्तिमुदाहरति—तस्या इति । खण्डितायाः स्वनायिकायाः कोपतच्छान्तिवृत्तान्तं वयस्यं प्रति कथयतो धृष्टनायकस्य अमरुशतके उक्तिरियम् । तस्याः सपत्न्याः सान्द्रं निबिडं विलेपनं श्रीखण्डाद्यनुलेपनं यत्र तथाभूतस्य स्तनतटस्य तत्पर्यन्तसमदेशस्य यः प्रकृष्टः श्लेष आलिङ्गनं तेन या मुद्रा स्तनाकारं विलेपनमयं चिह्नं तेनाङ्कितं युक्तं वक्ष उरस्थलं चरणयोरानतेः प्रणामस्य यो व्यतिकरो नैरन्तर्येण सम्बन्धस्तद्व्याजेन तन्मिषेण किं किमिति गोपाय्यते गुप्तं क्रियते इति तया उक्ते सति मया तद् मुद्राचिह्नं संप्रमार्ष्टुं विलोपयितं सहसा अप्रसाद्यैव क्व तदित्युदीर्य कुत्र मुद्राचिह्नमित्युक्त्वा रभसेन वेगेन सा नायिका आश्लिष्टा आलिङ्गिता तत्सुखवशादालिङ्गनानन्दपारवश्यात् तन्व्या च तद् मुद्राङ्कितत्वं विस्मृतम् ॥ ५० ॥

एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यो मानपरिग्रहग्लपितया चाटूनि कुर्वन्नपि ।
आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणं-
मा भूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥ ५१ ॥

अत्रौत्सुक्यस्य ।

उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः
सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः ।
वैदेहीपरिरम्भ एव च मुहुश्चैतन्यमामीलय-
न्नानन्दी हरिचन्दनेन्दुशिशिरः स्निग्धो रुणद्ध्यन्यतः ॥ ५२ ॥

---

अत्र कोपरूपभावस्य शान्तावेव चमत्कारविश्रामः अत्र कोप-स्येति शान्तिरिति शेषः ॥

भावोदयमुदाहरति—एकस्मिन्निति । अमरुकतके पद्यमिदम् । एकस्मिन् शयने शय्यायां विपक्षभूताया रमण्याः सपत्न्याः नामग्रहे नायकेन नाममात्रग्रहणे कृते सति सद्यस्तत्कालमेव मानस्य परिग्रहेण स्वीकारेण ग्लपितया मुग्धया स्वधैर्यमजानन्त्या नायिकया चाटूनि प्रमादात्तन्नामग्रहणन्न तु मे तस्यामासक्तिरित्यादीनि प्रियभाषणानि कुर्वन्नपि प्रियतमो नायकः आवेगात्कोपावेशादवधीरितस्तिरस्कृतः सन् तूष्णीमालापरहितः स्थितः तत्क्षणं तूष्णींस्थितकाले एव सुप्त इव मा भूदित्यौत्सुक्येन अमन्दमतिशयितं यथा तथा वलिता वक्रीकृता ग्रीवा यत्र तद्यथा स्यात्तथा पुनर्वीक्षितः वारं वारं वीक्षित इति यावत् । शार्दूलविक्रीडितं छन्दः । अत्र सुरतविषयस्यौत्सुक्यस्योदयश्चमत्करोति न तु कोपशान्तिः । अत्रौत्सुक्यस्येति उदय इति शेषः ॥ ५१ ॥

भावसन्धिमुदाहरति—उत्सिक्तस्येति । महावीरचरिते परशुरामगमने सीतामालिङ्गतो रामस्योक्तिरियम् उत्सिक्तस्याहङ्कृतस्य तपःपराक्रमयोर्निधेः स्थानभूतस्य परशुरामस्य अभ्यागमादागमनेन एकत एकस्यां दिशि सतः सज्जनस्य अस्य सङ्गे संसर्गे या प्रियता प्रेम तथा वीरस्य यो रभस उत्साहस्तस्योत्फाल उद्रेकश्च एतौ द्वावपि मां कर्षत आकर्षतः अन्यतोऽन्यस्यां दिशि एषोऽनुभूयमानो वैदेह्याः सीतायाः परिरम्भ आश्लेषः मुहुर्वारं वारं चैतन्यं मम ज्ञानं आमीलयन् विषयान्तराद्व्यावर्त्तयन् आनन्दी आनन्दजनको, हरिच-

अत्रावेगहर्षयोः ॥

काकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषा कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ॥ ५३ ॥

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता ।
भावस्थितिस्तूक्ता उदाहृता च ।

---

न्दनेन चन्दनभेदेन इन्दुना च तुल्यं शिशिरः शीतलः स चासौ स्निग्धः प्रेमसंवलितश्च सद् मां रुणद्धि पूर्वतो बलवत्त्वान्मुनिपार्श्वगमनं प्रतिबध्नाति । शार्दूलविक्रीडितं छन्दः । अत्र मुनावल्पादरणीयत्वज्ञानजन्यत्वराविशेषः पूर्वार्धगम्यो हर्षस्तूत्तरार्धगम्यः अनयोस्तुल्यकालमेवास्वाद इति तयोर्मिलनरूपः सन्धिस्तदेवाह—अत्रावेगहर्षयोरिति । सन्धिरिति शेषः ॥ ५२ ॥

भावशबलतामुदाहरति—काकार्यमिति विक्रमोर्वशीये उर्वशीं दृष्ट्वा पुरुरवस उक्तिरियमिति बहुटीकासम्मतः । शुक्रकन्यां देवयानीं दृष्टवतो ययातेरुक्तिरिति श्रीवत्सलाञ्छनादयः । अकार्यं मुनिकन्यायामासक्तिरूपं क्व शशो मृगो लक्ष्म चिह्नं यस्य तस्य चन्द्रस्य कुलं च क्व क्वद्वयेनात्यन्तानौचित्यं व्यज्यते भूयोऽपि पुनरपि साऽत्यन्तसौन्दर्या उर्वशी दृश्येत कथं दृग्गोचरा भवेद् नोऽस्माकं श्रुतं शास्त्रश्रवणं दोषाणां प्रमादावेशादीनां प्रशमाय आत्यन्तिकनाशाय समर्थमिति शेषः अहो आश्चर्यम् कोपेऽपि अस्याः मुखं कान्तम्मनोहरम् अपगतं दूरीभूतं कल्मषं पापकर्म येभ्यस्ते कृते पुण्यकर्मणि धीर्येषान्ते पण्डिताः किं वक्ष्यन्ति कथयिष्यन्ति स्वप्नेऽपि अदृष्टाश्रुतापूर्वघटकेऽपि सा दुर्लभा अत्यन्तालभ्या हे चेतः ! स्वास्थ्यमुपैहि स्थिरतामुपगच्छ कः खलु धन्यः नाहमिव मन्दभाग्यः तरुणः अधरम् अस्या धास्यति पास्यति । शार्दूलविक्रीडितम् । अत्र पूर्वस्य पूर्वस्य वितर्कादेरुपमर्दन बाधनेन उत्तरोत्तरं प्रतीयमानं चमत्कारमादधतीति तत्स्वरूपा शबलता तदेवाह—अत्र वितर्केत्यादि ॥ ५१ ॥

ननु भावशान्त्यादिवत् स्थितिरप्येकाऽवस्था सम्भवति सा पृथक् कुतो नोक्तेत्यत आह—भावस्थितिरिति । व्यभिचारी तथाऽञ्जित इति

(५१) मुख्ये रसेऽपि तेऽङ्गित्वं प्राप्नुवन्ति कदा चन॥

ते भावशान्त्यादयः। अङ्गित्वं राजानुगतविवाहप्रवृत्तभृत्यवत्।

(५२) अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः॥ ३९॥
शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः।

शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यः अर्थशक्तिमूलानुरणनरूपव्यङ्ग्य-उभयशक्तिमूलानुरणनरूपव्यङ्ग्यश्चेति त्रिविधः।

---

(४८) सूत्रेणोक्तेत्यर्थः। तथा जाने कोपपराङ्मुखीत्येनेनोदाहृता च। अयमाशयः प्रथमाद्यवस्थारहित एव भावो भावस्थितिः सा पूर्वदर्शितभावेनैव गतार्थेति।

ननु विभावादिसमूहालम्बने रसेऽङ्गतां प्राप्तस्य व्यभिचारिणः कथञ्चन प्राधान्यं भवतु तच्छान्त्यादीनामुदासीनानां कथं प्राधान्यमित्यत आह—मुख्ये रसेऽपीति। मुख्ये रसे सत्यपि ते भावाः शान्त्यादयश्च अङ्गित्वं प्राधान्यं प्राप्नुवन्ति कदा चन अर्थात् यदा ते एवाङ्गित्वेन विवक्ष्यन्ते अथ वा रसापेक्षया सातिशयचमत्कारकारिणः स्युरिति कारिकार्थः ते भावशान्त्यादय इतिव्याख्याने भावश्च शान्त्यादयश्चेति द्वन्द्वः भावस्थितिशान्त्यादय इति पाठः सुगमः। अङ्गित्वे दृष्टान्तमाह—राजानुगतेति यथा हस्त्यश्वादिभिरलङ्कृतो भृत्य आपाततः प्रेक्षकाणामुत्पादितविस्मयोऽपि दृष्टे राजनि एवमनुग्राहकोऽयं राजा यदुपकरणीभूय भृत्यं विवाहयतीति राजोत्कर्ष एव पर्यवसानन्तथा एतेषामपि आपातत अङ्गित्वेऽपि पर्यवसाने रसस्यैवाङ्गित्वमिति तात्पर्यम्॥ इत्थमसंलक्ष्यक्रमव्यङ्ग्यं सावान्तरभेदं निरूप्य अथ संलक्ष्यक्रमव्यङ्ग्यध्वनिं विभजते—अनुस्वानेति। वाद्यमानघण्टाशब्दप्रतीत्यनन्तरं योऽनुस्वानः प्रतिध्वनिः तदाभस्तत्सदृशः संलक्ष्यो ज्ञेयः क्रमः पौर्वापर्यन्तस्यैवंभूतस्य व्यङ्ग्यस्य स्थितिर्यस्मिन्ध्वनौ एवं भूतो यो ध्वनिः स शब्दश्चार्थश्चोभयं च तेषां याः शक्तयो व्यञ्जनाः तत उत्तिष्ठतीति तदुत्थस्तदुद्भव इति त्रिधा त्रिप्रकारः कथित इति कारिकार्थः॥ तदेवाह—शब्दशक्तीत्यादि। शब्दपरिवृत्त्यसहत्वं शब्दशक्तिमूलत्वं शब्दपरिवृत्तिसहत्वमर्थशक्तिमूलत्वम् अवच्छेदकभेदेन तत्सहत्वासहत्वमुभयशक्तिमूलत्वमिति॥

तत्र—

(५३) अलङ्कारोऽथ वस्त्वेव शब्दाद्यत्रावभासते ॥ ३८ ॥
प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ॥

वस्त्वेवेति अनलङ्कारं वस्तुमात्रम् ।

उल्लास्य कालकरवालमुखाम्बुवाहं-
देवेन येन जठरोर्जितगर्जितेन ।
निर्वापितः सकल एव रणे रिपूणां-
धाराजलैस्त्रिजगति ज्वलितः प्रतापः ॥ ५४ ॥

---

आद्यस्य द्वैविध्यमाह—तत्रेति । यत्र यस्मिन्ध्वनौ अलङ्कार उपमादिः अथ अथ वा वस्त्वेव वस्तुमात्रं शब्दात्परिवृत्त्यसहरूपात्पदात्प्रधानत्वेन अवभासते प्रकाशते स ध्वनिः शब्दशक्त्युद्भवः शब्दशक्त्युत्थो द्विधा अलङ्कारध्वनिर्वस्तुध्वनिश्चेति द्विविध इति कारिकार्थः । ननु वस्तुत्वस्य केवलान्वयित्वेन अलङ्कारोऽपि वस्त्वेवेति कथं भेद इत्यत आह—अनलङ्कारमिति । गोबलीवर्दन्यायेन वस्त्वलङ्कारयोर्भेद इति भावः ।

आद्यमूलमलङ्कारध्वनिमुदाहरति—उल्लास्येति । जठरं कठोरमूर्जितं बलवद् गर्जितं सिंहनादो यस्य तेन येन प्रकृतेन देवेन राज्ञा कालो वैरिसंहर्ता यः करवालः खड्गस्तत्र यन्महदतिशयितमम्बु धाराजलं तस्य वाहः प्रवाहः प्रसरणं तमुल्लास्य तीक्ष्णीकरणेनाधिकं कृत्वा धाराजलैः खड्गधाराकान्तिभिः रिपूणां त्रिजगति त्रिभुवने ज्वलितोऽतिप्रसिद्धिं गतः सकल एव प्रतापः शौर्यख्यातिरूपः रणे संग्रामे निर्वापितो विलोपित इति प्राकरणिकोऽर्थः । अप्राकरणिकेन्द्रपक्षे तु येन देवेन मेघाधिपेन्द्रेण जठरं गम्भीरमूर्जितं बलवद्यद्गर्जितं तेनोपलक्षितं कालकरं कृष्णरश्मि बालं नवीनं महान्तमम्बुवाहं मेघमुल्लास्य प्रकाश्य रणे जलपातानन्तरजायमानशब्दे सति धाराकृतिभिर्जलैः त्रिभुवने रिपूणां जलशत्रूणां तेजसां सकलः प्रकृष्टस्तापऔष्ण्यं निर्वापितः शमित इत्यर्थः । अत्र प्रथमेऽर्थेऽभिधानियन्त्रणात् तया वस्तुरूपो द्वितीयोऽर्थो बोधयितुमशक्य इति व्यङ्ग्य एव ततश्च तयोरर्थयोरुपमालङ्कारोऽपि व्यङ्ग्य एवेत्यलङ्कारध्वनित्वम् ॥ ५४ ॥

अत्र वाक्यस्यासम्बद्धार्थाभिधायकत्वं मा प्रसाङ्क्षीदिति प्राकरणिकाप्राकरणिकयोरुपमानोपमेयभावः कल्पनीय इत्यत्रोपमालङ्कारो व्यङ्ग्यः।

तिग्मरुचिरप्रतापो विधुरनिशाकृद्विभो ! मधुरलीलः ।
मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान् ॥ ५५ ॥

अत्रैकैकस्य पदस्य द्विपदत्वे विरोधाभासः ।

अमितः समितः प्राप्तैरुत्कर्षैर्हर्षद ! प्रभो !
अहितः सहितः साधुयशोभिरसतामसि ॥ ५६ ॥

---

तदेव दर्शयति—अत्र वाक्यस्येति । नन्वर्थयोरसम्बन्धे वाक्यभेदः स्यादत आह—वाक्यस्येति । करवालमुल्लास्येत्येतावतैव सिद्धे काले त्यादिविशेषणप्रयोगो निरर्थक इत्यसम्बद्धार्थकत्वप्रसक्तिर्वाक्यस्य मा भूदिति प्राकरणिकाप्राकरणिकयोः राजेन्द्रयोः उपमानोपमेयभावः सादृश्याख्यसम्बन्धः कल्पनीयो निर्णेतव्य इति हेतोः अत्र काव्ये उपमालङ्कारः प्राधान्येनेति शेषो व्यङ्ग्य इति व्यवहर्तव्यः ॥

एवमलङ्कारान्तराण्यपि व्यङ्ग्यानीति ध्वनयन् विरोधाभासालङ्कारध्वनिमुदाहरति—तिग्मेति । हे विभो राजन् ! भवान् तिग्मस्तीक्ष्णः शत्रुषु रुचिरो मनोहरः सुजनेषु प्रतापो दण्डादिजनितं तेजो यस्य सः तथा विधुराणां शत्रूणां निशेव निशा मरणं तत्कर्त्ता तथा मधुरा मनोज्ञा लीला चेष्टा यस्य सः तथा मतिः शास्त्रतात्पर्यनिर्णायिका बुद्धिः मानश्चित्तसमुन्नतिः तयोस्तत्त्वेन सारेण वृत्तिर्वर्त्तनं यस्य सः तथा प्रतिपदं प्रतिस्थानं पक्षाणामात्मीयानामग्रणीरग्रेसरः सन् विभाति शोभते इति प्रस्तुतार्थः विरोधपक्षे तिग्मरुचिः सूर्यः अथ च अप्रतापोऽनुष्णो विधुश्चन्द्रः अथ अनिशाकृत् रात्रिकृन्न विभः दीप्तरहितः अथ च विभाति दीप्यते मधुर्वसन्तः अथ च अलीलः क्रीडाशून्यो मतिमान् प्रशस्तबुद्धिः अथ च अतत्त्ववृत्तिः अवस्तुभूतविषयव्यवसायः प्रतिपद् प्रथमा तिथिः अथ च अपक्षाग्रणीः पक्षस्याादिभूता नेति विरोधाभासो व्यङ्ग्यः । गीतिश्छन्दः । अत्र प्रकृतार्थबाधेन एकपदत्वं द्विपदत्वानुसन्धानं विरोधाभासो व्यङ्ग्य इत्यलङ्कारध्वनित्वमिति दर्शयति—अत्रैकेति ।

अथाभङ्गेऽपि पदे विरोधालङ्कारध्वनित्वमाह—अमित इति । हर्षं द्यति खण्डयति ददाति चेति हे हर्षद ! प्रभो स्वामिन् ! त्वं समितः संग्रामात् प्राप्तैरुत्कर्षैरमितः अपरिच्छिन्नः असतां खलानामहितः

अत्रापि विरोधाभासः ।

निरुपादानसंभारमभित्तावेव तन्वते ।

जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥ ५७ ॥

अत्र व्यतिरेकः । अलङ्कार्यस्यापि ब्राह्मणश्रमणन्यायेनालङ्कारता ।

वस्तुमात्रं यथा—

पंथिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ।

उण्णअ पओहरं पेक्खिऊण जइ वससि ता वससु ॥ ५८ ॥

---

शत्रुः साधुभिरुत्कृष्टैर्यशोभिः सहितो युक्तोऽसीति प्रस्तुतार्थः विरोधे अमितः परिमाणशून्यः अथ च समितः परिमाणसहितः अहितो हितरहितः सहितो हितसहित इत्यर्थः । श्लोकच्छन्दः । अत्रापि विरोधाभासः प्राधान्येन व्यङ्ग्यः ।

व्यतिरेकालङ्कारध्वनिमाह-निरुपादानेति । निरुपादानस्तूलिकाद्युपकरणरहितः सम्भारः सम्पत्तिर्यत्र तद्यथा स्यात्तथा अभित्तावेव-शून्ये एव चित्रं नानाकारं जगद् ब्रह्माण्डं तन्वते कुर्वते तथा कलया चन्द्रषोडशभागेन श्लाघ्याय स्तुत्याय तस्मै अनिर्वचनीयस्वरूपाय शूलिने शिवाय नम इति प्रकृतार्थः व्यञ्जनया तु चित्रमालेख्यं कला-आलेख्यक्रियाकौशलम् एवं च व्यञ्जनया चित्रकलाशब्दाभ्यामालेख्यतत्प्राविण्योपस्थित्या तूलिकाद्युपादानैर्भित्तावालेख्यकारिभ्यः कलावद्भ्यः शूलिन उत्कर्षः प्रतीयते इति व्यतिरेकालङ्कारो व्यङ्ग्यः । तस्य च चित्र-कलाशब्दयोः परिवृत्यसहत्वेन शब्दशक्तिमूलता ॥ ५७ ॥

ननूक्तेषु व्यङ्ग्यानामुपमादीनां प्राधान्येनालङ्कार्याणां कथमलङ्कारत्वमत आह—ब्राह्मणेति । यथा त्यक्तशिखासूत्रनित्यादिकर्मणां बौद्धसंन्यासिनां ब्राह्मणत्वाभावेऽपि पूर्वकालिकब्राह्मणत्वमादाय श्रमणोऽयं ब्राह्मण इति व्यवहारस्तथैषामपि व्यङ्ग्यतादशायामलङ्कारत्वाभावेऽपि वाच्यतादशायां विद्यमानमलङ्कारत्वमादाय तथा व्यपदेश इति भावः ।

शब्दशक्तिमूलकं वस्तुध्वनिमुदाहरति—पंथिअ इति । द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्त्विति कामशास्त्रमनुस्मृत्य दूती पथिकं प्रति व्यर्थैः पदैराच्छाद्य रहस्यं कथयति—

पथिक नात्र संस्तरमस्ति मनाक्प्रस्तरस्थले ग्रामे

उन्नतपयोधरं प्रेक्ष्य यदि वससि तदा वस ॥

अत्र यद्युपभोगक्षमोऽसि तदा आस्स्वेति व्यज्यते ।

शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र ! यस्मै त्वम् ।
यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ॥ ५९ ॥

अत्र विरुद्धावपि त्वदनुवर्त्तनार्थमेकं कार्यं कुरुत इति ध्वन्यते ।

**( ५४ ) अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः संभवी स्वतः ॥३९॥**

---

इति संस्कृतम् । हे पथिक ! प्रस्तराणां पाषाणानां स्थले तन्मये अत्रास्मिन्ग्रामे मनाक् अल्पमपि प्रस्तरं कटादिकं नास्ति ततश्च उन्नतपयोधरं वार्षुकमेघं प्रेक्ष्य यदि वससि तदा वसेति दूत्यभिप्रायः व्यङ्ग्यार्थस्तु पाषाणानां तत्त्वेनाध्यवसितानां मूर्खाणां स्थले तन्मयेऽस्मिन्ग्रामे सत्थरं कामशास्त्रमीषदपि नास्ति अतो निःशङ्कतया उन्नतमनुपभुक्तं पयोधरं स्तनं वीक्ष्य यदि वससि उपभोगक्षमोऽसि तदा वस आस्स्वेति ॥ ५८ ॥

अत्र शास्त्राभावादाकारेङ्गितज्ञस्य सर्वथाऽनधिकरणेऽस्मिन्ग्रामे एव कामोद्दीपके मेघे उन्नतस्तनदर्शने च को नाम उपभोगक्षमोऽन्यत्र गन्तुमर्हतीति वक्त्रभिप्रायो व्यञ्जनया प्रकाशत इति दर्शयति— अत्र यदीति । विपुलान्या इति पिङ्गलसूत्राद् जघनविपुलाच्छन्दः । अत्र पओहर सत्थरशब्दयोः परिवृत्त्यसहत्वाच्छब्दशक्तिमूलो वस्तुध्वनिरिति बोध्यम् ॥

शब्दशक्तिमूलं वस्तुध्वनिमेव संस्कृतेनोदाहरति—शनिरिति । हे नरेन्द्र ! त्वं यस्मै कुप्यसि यमुद्दिश्य कोपं करोषि तं शनिः शनैश्चरग्रहः अशनिर्वज्रं च उच्चैरतिशयेन निहन्ति नाशयति यत्र यस्मिन् पुनस्तु प्रसीदसि प्रसन्नो भवसि स पुरुष उदार उत्कटदाता महात्मा अनुदारः अनुगता दारा वनिता यस्य स तथाभूतश्च भातीति वाच्यार्थः । पक्षे अशनि शनिविरोधी नञोऽसुन्दरादाविव विरोध्यर्थकत्वाद् अनुदारम् उदारादन्यः अन्यत्सर्वं प्राग्वद् आर्या छन्दः । अत्राशनिपदात् शनिविरोधिरूपार्थस्यावगतौ विरुद्धावपि त्वदनुवर्त्तनार्थमेकं कार्यं कुरुत इति वस्तु ध्वन्यत इति वस्तुध्वनिः पूर्वार्धे उत्तरार्धे तु एककार्यकरणाप्रतीतेर्न वस्तुध्वनिः किन्तु विरोधालङ्कारध्वनिरेवेति दर्शयति—अत्रेति ।

अथार्थशक्तिमूलमनुरणनरूपव्यङ्ग्यं द्वादशत्वेन दर्शयति—अर्थशक्तीति । अत्र ध्वनाविति शेषः यद् येन हेतुना व्यञ्जकोऽर्थोऽपि स्वतः

प्रौढोक्तिमात्रात्सिद्धो वा कवेः तेनोम्भितस्य वा ।
वस्तुवाऽलङ्कृतिर्वेति षड्भेदोऽसौ व्यनक्ति यत् ॥ ४० ॥
वस्त्वलङ्कारमथ वा तेनायं द्वादशात्मकः ।

स्वतः संभवी न केवलं भणितिमात्रनिष्पन्नो यावद्बहिरप्यौचित्येन संभाव्यमानः । कविना प्रतिभामात्रेण बहिरसन्नपि निर्मितः । कविनिबद्धेन वक्त्रेति वा द्विविधोऽपर इति त्रिविधः वस्तु वाऽलङ्कारो वाऽसाविति षोढा व्यञ्जकः तस्य वस्तु वाऽलङ्कारो वा व्यङ्ग्य इति द्वादशभेदोऽर्थशक्त्युद्भवो ध्वनिः ।

---

संभवी लोकेऽपि दृष्टः कवेः काव्यकर्त्तुः प्रौढोक्तिमात्रात्सिद्धः लोकेऽदृष्टोऽपि कविप्रतिभामात्रेण कल्पितः यथा कीर्त्यादेर्धावल्यादिः तेन कविना उम्भितस्य पूरितस्य कविनिबद्धस्य नायकादेः प्रौढोक्तिमात्रात्सिद्ध इत्यनुषज्यते इति त्रिविधः सोऽपि वस्तुरूपो वा अलङ्कृतिरूपो वेति षड्विधः असौ षड्विधोऽपि वस्तुमात्रमथ वाऽलङ्कारं व्यनक्ति व्यञ्जयति तेन हेतुनाऽयमर्थशक्त्युद्भवोऽर्थशक्तिमूलो ध्वनिर्द्वादशविध इति कारिकार्थं व्याकरोति—स्वतः सम्भवीत्यादि । भणितिमात्रनिष्पन्नः प्रौढोक्तिमात्रकल्पितः ।

अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि

इति न्यायात् शब्दस्यात्यन्तासत्यप्यर्थे ज्ञानजनकत्वादिति भावः बहिरपि लोकेऽपि औचित्येन योग्यतया प्रतिभामात्रेण नवनवोन्मेषशालिप्रज्ञामात्रेण असन्नपि अविद्यमनोऽपि निर्मितः कल्पितः तेनोत्तम्भितस्येति व्याचष्टे—कविनिबद्धेनेति वक्त्रेति नायकादिरूपेण अन्यत्स्पष्टम् ॥

अथ स्वतःसम्भविन्यर्थे चतुर्षु भेदेषु मध्ये स्वतः सम्भविना वस्तुना वस्तुनो व्यक्तिमुदाहरति-अलसेति । स्वैयं पतिंवराम्प्रति धात्र्याः पूर्वोक्तिः उत्तरार्धन्तु कवेः ।

अलसशिरोमणिर्धूर्तानामग्रिमः पुत्रि ! धनसमृद्धिमयः ।

इति भणितेन नताङ्गी प्रफुल्लविलोचना जाता ॥

इतिसंस्कृतम् । हे पुत्रि ! अयं वरः अलसानां निरुद्योगानां शिरोमणिः श्रेष्ठः धूर्त्तानां चाग्रिमोऽग्रगण्यः धनसमृद्धिमयः प्रचुरधनसमृद्धिः इति भणितेन भाषितेन लज्जया नताङ्गी सा कुमारी प्रफुल्ले हर्षविकसिते विलोचने यस्यास्तादृशी जाता । मुखविपुला छन्दः ।

क्रमेणोदाहरणम् ।

अलसशिरोमणि धुत्ताणं अग्गिमो पुत्तिधणसामिद्धिमओ ।
इअ भणिएण णअङ्गी पप्फुल्लविलोअणा जाआ ॥ ६० ॥

अत्र ममैवोपभोग्य इति वस्तुना वस्तु व्यज्यते ।

धन्याऽसि या कथयसि प्रियसङ्गमेऽपि
विस्रब्धचाटुकशतानि रतान्तरेषु ।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः! शपामि यदि किंचिदपि स्मरामि ॥६१॥

अत्र त्वमधन्या अहन्तु धन्येति व्यतिरेकालङ्कारः।

दर्पान्धगन्धगजकुम्भकपाटकूट-
संक्रान्तिनिघ्नघनशोणितशोणशोचिः ।
वीरैर्व्यलोकि युधि कोपकषायकान्तिः
कालीकटाक्ष इव यस्य करे कृपाणः ॥ ६२ ॥

---

अत्रालसत्वेन प्रवासे नायिकान्तरगृहे वा गन्तुमनिच्छुः धूर्तत्वेन रतिकाले नायिकया दर्शितगुणेषु अनादरवान् संभोगेष्वतृप्तश्च धनसमृद्धिमत्तया कृपणः सुखी चेत्यवधारितवत्याः कुमार्या हर्षकार्येण प्रफुल्लविलोचनत्वरूपेण वस्तुना ममैवोपभोग्ययोग्योऽयन्नाविदग्धाया इति वस्तु सामाजिकेषु व्यज्यते इत्याह-अत्रेति ॥ ६० ॥

स्वतः सम्भविना वस्तुनाऽलङ्कारस्य व्यक्तिमुदाहरति-धन्याऽसीति। रतिकालीनं स्वप्रियालापं कथितवतीं काञ्चिदुपहसन्त्याः त्वमिदानीं स्वरतिवार्त्तां कथयेति सखीप्रेरिताया उक्तिरियम् हे सखि! या त्वं प्रियसङ्गमेऽपि रतिमध्येष्वपि विस्रब्धानां विश्वासयुक्तानां चाटुकानां प्रियवाक्यानां शतानि कथयसि सा त्वं धन्यासि प्रसंशार्हाऽसि भो सख्यः! प्रियेण नीवीं नाभिलग्नवसनग्रन्थिं प्रति करे हस्ते प्रणिहिते नीव्यां करोऽर्पितव्य इति संकल्पविषयीकृते सति यदि किंचिदपि स्मरामि तदा शपामि शपथं करोमि। वसन्ततिलका छन्दः। शपथकरणकप्रकाशनविवक्षाऽभावान्न शप उपालम्भने इत्यात्मनेपदम् अत्र वाच्येन सखीं प्रति धन्यत्वोक्तिरूपेण वस्तुना स्वस्य महानन्दाप्तिसूचनद्वारा त्वमधन्या अहन्तु धन्येति व्यतिरेकालङ्कारो व्यज्यते इत्याह-अत्रेति ॥ ६१ ॥

अत्रोपमालङ्कारेण सकलरिपुबलक्षयः क्षणात्करिष्यते इति वस्तु ।

गाढकान्तदशनक्षतव्यथासंकटादरिवधूजनस्य यः ।
ओष्ठविद्रुमदलान्यमोचयन्निर्दशन् युधि रुषा निजाधरम् ॥६३॥

---

स्वतः संभाविनाऽलङ्कारेण वस्तुनो व्यक्तिमुदाहरति-दर्पेति । दर्पेण मदेनान्धो मदाद्रिक्तो यो गन्धगजः ।

स्वेदं मूत्रं पुरीषं च मज्जां चैव मतङ्गजाः ।
यस्याघ्राय विमाद्यन्ति तं विद्याद्गन्धहस्तिनम् ॥

इत्युक्तलक्षणः तस्य कुम्भयोर्गण्डस्थलयोः कपाटं विशालतया कपाटमिव मध्यभागस्तस्य कूटमग्रभागस्तदेव कठिनत्वात्कूटं लोहमुद्गर इव तस्मिन्संक्रान्त्यां सम्बन्धेन सम्यक्प्रविशनेन वा निघ्नं दृढसंबद्धं घनं निबिडं यच्छोणितं रुधिरं तेन शोणं रक्तं शोचिः कान्तिर्यस्य तादृशः कृपाणः खड्गः यस्य राज्ञः करे स्थितः सन् युधि संग्रामे वीरैः प्रतिभटैः कोपेन कषायाऽतिशयरक्ता कान्तिर्यस्य तादृशः काल्या दुर्गायाः कटाक्ष इव व्यलोकि विशेषेण दृष्टः । वसन्ततिलका छन्दः । अत्र कालीकटाक्ष इव कृपाणो व्यलोकीत्युपमा शोणशोचिःकषायकान्त्योर्बिम्बप्रतिबिम्बभावेन समानधर्मत्वात् सा च स्वतः सम्भविनी सादृश्यस्य लोकेऽपि सत्त्वात् तया चोपमया सकलरिपुबलक्षयः क्षणात्करिष्यते इति वस्तु व्यज्यते तदाह-अत्रोपमेति ॥ ६२ ॥

स्वतः सम्भविनाऽलङ्कारेणालङ्कारस्य व्यक्तिमुदाहरति-गाढेति । यो राजा युधि रुषा कोपेन निजाधरं स्वाधरोष्ठं निर्दशन् दन्तैः खण्डयन् सन् अरिवधूजनस्य सपत्नस्त्रीसमूहस्य ओष्ठरूपाणि यानि विद्रुमस्य प्रवालस्य दलानि छदानि गाढा तीव्रा या कान्तदशनक्षतव्यथा प्रियदन्तव्रणार्त्तिः सैव संकटोऽसह्योपद्रवस्तस्मादमोचयद् मोचितवान् क्रोधाद्वैरिवधे तद्वधूनां रतिक्रीडाविरहाद्दन्तक्षताभाव इति भावः । रथोद्धता छन्दः । अत्र यो हि निजमप्यधरं दशति स कथं परेषामधरान्मोचयतीति स्वतःसंभविना विरोधाभासालङ्कारेण प्रकृतयोः स्वाधरदशनशत्रुव्यापादनयोरेककालरूपैकधर्मसम्बन्धेन तुल्ययोगिताऽलङ्कारो व्यज्यते एवं मम राज्ञोदन्तक्षत्या अन्यस्यापि नृपवधूजनस्यापि क्षतिर्निवर्ततामिति नृपबुद्धिरुत्प्रेक्ष्यते इत्युत्प्रेक्षाऽलङ्कारोऽपि व्यज्यत इत्याह-अत्रेत्यादि । एष्विति चतुर्षूदाहरणेषु व्यञ्जकोऽर्थः स्वतःसम्भवी ॥ ६३ ॥

अत्र विरोधालङ्कारेणाऽधरनिर्दशनसमकालमेव शत्रवो व्यापादिता- इति तुल्ययोगिता । मम क्षत्याऽप्यन्यस्य क्षतिर्निवर्ततामिति तद्बु- द्धिरुत्प्रेक्ष्यत इत्युत्प्रेक्षा च एषूदाहरणेषु स्वतः संभवी व्यञ्जकः ।

कैलासस्य प्रथमशिखरे वेणुसंमूर्च्छनाभिः
श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम् ।
त्रस्तापाङ्गाः सरसविसिनीक्रोडसञ्जातशङ्का-
दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्त्तयन्ति ॥ ६४ ॥

अत्र वस्तुना येषामप्यर्थाधिगमो नास्ति तेषामप्येवमादिबुद्धिज- ननेन चमत्कारं करोति त्वत्कीर्तिरिति वस्तु ध्वन्यते ॥

केसेसु वलामोडिअ तेण अ समरम्मि जअसिरी गहिआ ।
जह कन्दराहिं विहुरा तस्स दढं कंठअम्मि संठविआ ॥६५॥

---

अथ कविप्रौढोक्तिसिद्धे व्यञ्जकेऽर्थे चतुर्षु भेदेषु मध्ये वस्तुनो- व्यक्तिमुदाहरति–कैलासस्येति । कैलासस्य पर्वतविशेषस्य प्रथमशिखरे मूलशृङ्गे वेणूनां वंशवाद्यानां संमूर्च्छनाभिः रागविशेषैः करणभूतैः विबुधानां देवानां रमणीभिरप्सरोभिः कर्त्रीभिः गीयमानां यदीयां- प्रकृतराजसम्बन्धिनीं कीर्त्तिं श्रुत्वा सरसस्य स्निग्धस्य विसिनी- काण्डस्य कमलिनीमृडालस्य सञ्जाता शङ्का भ्रान्तिर्येषामेवं भूताः अत एव त्रस्तापाङ्गाः तिर्यग्भूतनेत्रप्रान्ताः दिङ्मातङ्गाः ऐराव- तादयोऽष्टौ दिग्गजाः श्रवणपुलिने कर्णसमीपे हस्तं शुण्डादण्ड- मावर्त्तयन्ति मुहुर्मुहुर्व्यापारयन्ति चालयन्ति । मन्दाक्रान्ता छन्दः । अत्र कविप्रतिभामात्रनिष्पन्नाद्ग्रासः श्रवणप्रवेशात् विसिनीसंभा- वनया कर्णे हस्तावर्त्तनरूपेण कविप्रतिभामात्रनिष्पन्नेन वस्तुना येषां- जडानामपि दिग्गजानामर्थाधिगमः गीतार्थज्ञानं नास्ति तेषामपी- त्यादि वस्तु व्यज्यते तदाह–अत्रेति । कीर्तिश्रवणानन्तरं कर्णे हस्ता- वर्त्तनं हस्तिनो न स्वतःसंभवि किन्तु कविसंप्रदायात् कविना व- र्णितमिति कविप्रौढोक्तिसिद्धत्वम् ॥ ६४ ॥

अथ कविप्रौढोक्तिमात्रसिद्धेन वस्तुनाऽलङ्कारस्य व्यक्तिमुदाहर- ति–केसेस्विति ।

केशेषु वलात्कारेण तेन च समरे जयश्रीर्गृहीता ।
यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः ॥

अत्र केशग्रहणावलोकनोद्दीपितमदना इव कन्दरास्तद्विधुरान् कण्ठे-गृह्णन्ति इत्युत्प्रेक्षा। एकत्र संग्रामे विजयदर्शनात्तस्यारयः पलाय्य गुहासु तिष्ठन्तीति काव्यहेतुरलङ्कारः। न पलाय्य गतास्तद्वैरिणोऽपि तु ततः पराभवं संभाव्य तान् कन्दरा न त्यजन्तीत्यपन्हुतिश्च ॥

गाढालिंगणारहसुज्जुअम्मि दइ लहुं समोसरइए।
माणंसिणीण माणो पीलणभीअव्व हिअआहिँ ॥ ६६ ॥

---

इति संस्कृतम्। तेन राज्ञा नायकेन च समरे युद्धे सुरतसंगरे च जयश्रीर्विजयलक्ष्मीः बलात्कारेण केशेषु बलादामोट्येतिपाठे आमोट्य भोगाभिमुखीकृत्य तथा गृहीता यथा कन्दराभिर्दरीभिः नायिकाभिश्च तस्य राज्ञो नायकस्य च विधुरा शत्रवः संभोगासहिष्णवश्च कण्ठे तटे कण्ठदेशे च दृढं गाढं यथा तथा संस्थापिताः तेन पराजिताः शत्रवो गुहास्वेव तिष्ठन्तीति भावः। गीतिश्छन्दः। व्यङ्ग्यं दर्शयति-अत्रेति। कन्दराभिः कण्ठे स्थापिता इति कविप्रतिभामात्रसिद्धेन वस्तुनेति शेषः केशग्रहणेति नायककर्तृकनायिकाकेशग्रहणदर्शनादपरस्याः कामोद्रेकस्य लोके दर्शनात् तद्विधुरान् प्रकृतराजशत्रून् उत्प्रेक्षेति। व्यज्यत इति शेषः। व्यङ्ग्यान्तरं दर्शयति-एकत्रेति। एकत्रैवेत्यर्थः। तस्य राज्ञः काव्यहेतुः विजयदर्शनस्य पलायनहेतुत्वात्काव्यलिङ्गमलङ्कारो व्यज्यत इत्यर्थः। व्यङ्ग्यान्तरं दर्शयति-न पलाय्येति। ततो नृपात् तान् तच्छत्रून्-अपन्हुतिः पलायनस्यापन्हवादपन्हुत्यलङ्कारो व्यज्यते इति भावः ॥ ६५ ॥

कविप्रौढोक्तिमात्रसिद्धेनालङ्कारेण वस्तुनो व्यक्तिमुदाहरति-गाढेति।

गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति।
मनस्विन्या मानः पीडनभीत इव हृदयात् ॥

इति संस्कृतम्। मानवतीम्प्रति मानभङ्गाय अपरमानवतीवृत्तान्तंबोधयन्त्याः कस्याश्चिदुक्तिरियम्। दयिते स्वामिनि गाढालिङ्गनाय रभसेन हर्षेण वेगेन वा उद्यते उद्युक्ते एव न त्वाचरितवति सति मनस्विन्याः वशीकृतमानसाया अपि मानः स्त्रीणामीर्ष्याकृतः कोपो-मानोऽन्यासङ्गिनि प्रिये इत्युक्तलक्षणः पीडनाद्भीत इव हृदयाल्लघु शीघ्रं सं सम्यक् निःशेषतोऽपसरति गच्छति। यदि स्वाधीनचित्तायाअपि मानस्तावन्मात्रेणैव गतस्तर्हि अतादृश्यास्तवायं गमिष्यतीति

अत्रोत्प्रेक्षा प्रत्यालिङ्गनादि तत्र विजृम्भते इति वस्तु ।

जा ठेरंव हसन्ती कइवअणंवुरुहबद्धविणिवेसा

दावेइ भुअणमण्डलमण्डां विअ जअइ सा वाणी ॥ ६७ ॥

अत्रोत्प्रेक्षया चमत्कारैककारणं नवं नवं जगद् अजडासनस्था निर्मिमीते इति व्यतिरेकः । एषु कविप्रौढोक्तिमात्रनिष्पन्नो व्यञ्जकः ।

जे लङ्कागिरिमेहलासु खलिआ संभोगखिण्णोरई-

फारुप्फुल्लफणावलीकवलणे पत्तादरिद्दत्तणम् ।

ते एह्णिं मलआनिला विरहिणीणीसाससंपक्किणो-

जादा झति सिसुत्तणेवि वहला तारुण्णपुण्णा विअ ॥ ६८ ॥

---

किं वक्तव्यमित्यवश्यंभाविनि मानभङ्गे किमित्यात्मानं वञ्चयसीति भावः । गाथा छन्दः । अत्र पीडनभीत इवेति भयोत्प्रेक्षालङ्कारेण आत्यन्तिकमाननिवृत्त्या तत्र प्रसङ्गे प्रत्यालिङ्गनप्रहासादिकं विजृम्भते इति वस्तु व्यज्यते तदाह—अत्रेति॥ ६६ ॥

कविप्रौढोक्तिसिद्धेनालङ्कारेणालङ्कारस्य व्यक्तिमुदाहरति—जाठेरमिति ।

या स्थविरमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा ।

दर्शयति भुवनमण्डलमन्यदिव जयति सा वाणी ॥

इति संस्कृतम् । या वाणी काव्यरूपा कविवाक् स्थविरं वृद्धं ब्राह्मणं हसन्तीव कवेर्वदनमेवाम्बुरुहं कमलं तस्मिन् बद्धो रचितो विनिवेशः स्थितिर्यया तादृशी सती भुवनमण्डलमन्यदिव विलक्षणमिव दर्शयति सा जयति सर्वोत्कर्षेण वर्त्तत इत्यर्थः । अत्र हसन्तीवेत्युत्प्रेक्षया चमत्कारैककारणत्वांशलाभः अन्यदिवेत्युत्प्रेक्षया जगतो नवनवत्वलाभः कविवदनेत्यादिना अजडासनस्थेत्यंशलाभः । व्यतिरेकइति । उपमानापेक्षया उपमेयोत्कर्षरूपो व्यतिरेकाऽलङ्कारो व्यज्यतइति शेषः । अत्र हसनादिकं न लोकसिद्धं नापि कविवाणी जगदन्यथा दर्शयतीति उत्प्रेक्षाद्वयस्य कविप्रौढौक्तिमात्रसिद्धत्वम् ॥६८॥

एषु चतुर्षूदाहरणेषु व्यञ्जकोऽर्थः कविप्रौढोक्तिमात्रनिष्पन्नः ।

अथ कविनिवद्धवक्तृप्रौढोक्तिसिद्धव्यञ्जकार्थस्य ध्वनेश्चतुर्षु भेदेषु मध्ये वस्तुना वस्तुनो व्यक्तिमुदाहरति—जे लङ्केति ।

ये लङ्कागिरिमेखलासु स्खलिताः सम्भोगखिन्नोरगी-

स्फारोत्फुल्लफणावलीकवलने प्राप्ता दरिद्रत्वम् ।

अत्र निःश्वासैः प्राप्तैश्वर्या वायवः किं किं न कुर्वन्तीति वस्तुना वस्तु व्यज्यते ।

सहि विरइऊणमाणस्स मज्झ धीरत्तणेण आसासम् ।
पिअदंसणविहलखलंखणम्मि सहसत्ति तेण ओसरिअम् ॥

अत्र वस्तुनाऽकृतेऽपि प्रार्थने प्रसन्नेति विभावना प्रियदर्शनस्य सौभाग्यबलं धैर्येण सोढुं न शक्यते इत्युत्प्रेक्षा वा ॥

---

त इदानीं मलयानिला विरहिणीनिःश्वाससम्पर्किणो-
जाता झटिति शिशुत्वेऽपि वहलास्तारुण्यपूर्णा इव ॥

इति संस्कृतम् । कर्पूरमञ्जरीनामकसट्टके विभ्रमलेखाया निदेशेन विचक्षणानाम्न्या सख्या कृतं वसन्तवर्णनमिदम् । ये वाताः लङ्कागिरे-र्हेमकूटस्य मेखलासु नितम्बेषु स्खलिताः सर्पत्रासात्पतिताः सन्तः सम्भोगेन खिन्नानां श्रान्तानामुरगीणां सर्पिणीनां स्फारा वितता उत्फुल्ला ऊर्ध्वप्रसृता या फणावलिः फणापङ्क्तिः तया कवलने भक्षणे सति दरिद्रत्वं क्षीणत्वं प्राप्ताः स्वल्पावशिष्टा इति यावत् । इदानीं-ते मलयानिलाः विरहिणीनिःश्वासैः सम्पर्किणः ईषत्सम्बद्धाः प्राप्तैश्वर्याः सन्तः झटिति शीघ्रमेव शिशुत्वेऽपि तारुण्येन पूर्णा इव वहलाः पुष्टावयवा विरहिजनहृदयपीडने समर्था जाता इत्यर्थः । अत्र वाच्यार्थरूपेण वस्तुना निःश्वासैः प्राप्तैश्वर्यवायवः किं किं न कुर्वन्तीति वस्तु व्यज्यते तदाह अत्रेति ॥ ६८ ॥

अथ तादृशेन वस्तुनाऽलङ्कारस्य व्यक्तिमुदाहरति—सहीति ।

सखि विरचय्यमानस्य ममधीरत्वेनाश्वासम् ॥
प्रियदर्शनविशृङ्खलक्षणे सहसेति तेनापसृतम् ।

इति संस्कृतम् । किमिति मानं त्यक्तवतीति वदन्तीं सखीं प्रति नायिकाया उक्तिरियम् । हे सखि ! धीरत्वेन त्वद्दत्तेन धैर्येण कर्त्रा मम मानस्याश्वासं तवोपद्रवेऽहं सहायो भविष्यामि त्वं स्थिरो भवेति समाश्वासनं विरचय्य विधाय प्रियदर्शनेन विशृङ्खलं कौतुकोत्तरलत्वमेव क्षण उत्सवस्तस्मिन् सति तेन धैर्येण सहसेति मयेदं कर्म सहसा कृतमिति वाक्यैकदेशानुकरणम् इति एवमुक्त्वा अपसृतं पलायितमित्यर्थः । गीतिश्छन्दः । अत्र वाच्येन वस्तुना ऽकृतेऽपि प्रियप्रार्थने सा प्रसन्नेति विभावनालङ्कारः कारणाभावेऽपि कार्योत्पत्तेः । नूनं प्रियदर्शनसौभाग्यबलं धैर्येण सोढुं न शक्यत इत्युत्प्रेक्षाऽलङ्कारश्च

ओल्लोल्लकरअरअणक्खएहिँ तुह लोअणेसुम् मह दिण्णं।
रत्तं सुअं पसाओ कोवेण पुणो इमेण अक्कमिआ॥ ७०॥

अत्र किमिति लोचने कुपिते वहसि इत्युत्तरालङ्कारेण न केवलमार्द्रनखक्षतानि गोपायसि यावत्तेषामहं प्रसादपात्रं जातेति वस्तु॥

महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअन्ती।
अणुदिणमणण्ण कम्मा अङ्गं तणुअं वि तणुएइ॥ ७१॥

---

व्यज्यते तदाह—अत्रेति। अचेतने धैर्येऽपसृतत्वरूपचेतनधर्मारोपाद् वस्तुनः कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धत्वमिति बोध्यम्॥ ६९॥

अथ कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धेनालङ्कारेण वस्तुनो व्यक्तिमुदाहरति ओल्लोल्लेति।

आर्द्रार्द्रकरजरदनक्षतैस्तव लोचनयोर्मम दत्तम्।
रक्तांशुकं प्रसादः कोपेन पुनरिमेनाक्रान्ते॥

इति संस्कृतम्। भर्तरि सपत्न्या कृतं नखक्षतादि दृष्ट्वा कोपरक्तनयना भर्तुः प्रश्नमुत्तरयति हे प्रिय! इमे मल्लोचने कोपेन नाक्रान्ते न व्याप्ते अपि तु तव अङ्गे विद्यमानैः आर्द्रादप्यार्द्रैः करजानां नखानां रदनानां दन्तानां च क्षतैः अन्यनायिकाकृतव्रणैः मम लोचनयोर्दत्तं रक्ता अंशवः किरणा एव रक्तांशुकं रक्तवस्त्रं प्रसादः अस्तीति शेषः। गीतिश्छन्दः। अत्र प्रकृतवाक्यार्थरूपोत्तरेण किमिति कुपिते लोचने वहसीति प्रश्नस्योन्नयनादुत्तरालङ्कारेण न केवलमार्द्रक्षतानि गोपायसि किन्तु तेषां क्षतानामहं प्रसादपात्रमपि जातेति वस्तु व्यज्यते-तदाह-अत्रेति॥ ७०॥

कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धेना लङ्कारेणालङ्कारस्य व्यक्तिमुदाहरति—महिलेति।

महिलासहस्रभरिते तव हृदये सुभग! सा अमान्ती।
अनुदिनमनन्यकर्मा अङ्गं तन्वपि तनयति॥

इति संस्कृतम्। विरहकृशां नायिकां नायका या वेदयन्त्याः सख्या उक्तिः। हे सुभग सौभाग्ययुक्त! सा अकृत्रिमस्नेहा साध्वी नायिका महिलासहस्रभरिते धूर्तस्त्रीसहस्रव्याप्ते तव हृदये अमान्ती अवकाशमलभमाना सती अनुदिनं प्रतिदिनमनन्यकर्मा त्यक्तान्यकार्या सती स्वतः कृशमपि अङ्गं शरीरं तनयति कथमपि कथमपि प्रवेशाय कृशतरं करोतीत्यर्थः। अत्रामान्तीत्यत्र महिलासहस्रभरितत्वं-

अत्र हेत्वलङ्कारेण तनोस्तनूकरणेऽपि तव हृदये न वर्तते इति विशेषोक्तिः एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरव्यञ्जकः । एवं द्वादश भेदाः ॥

( ५५ ) शब्दार्थोभयभूरेकः ।

यथा—

अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा ।

तारकातरला श्यामा सानन्दं न करोति कम् ॥ ७२ ॥

---

हेतुः तनूकरणे च अमान्तीत्वं हेतुरिति द्वाभ्यां हेत्वलङ्काराभ्यां तनोस्तनूकरणेऽपि तव हृदये न वर्त्तते इति विशेषोक्त्यलङ्कारः । कारणसत्त्वेऽपि कार्यानुत्पत्तिरूपो व्यज्यते तदाह—अत्रेति ॥ ७१ ॥

एष्विति चतुर्षूदाहरणेषु । एवं द्वादशेति । अर्थशक्त्युद्भवस्य ध्वनेरिति शेषः ॥

अथैकविधमुभयशक्तिमूलं ध्वनिं निरूपयति-शब्दार्थोभयेति । शब्दश्चार्थश्च शब्दार्थौ तद्रूपं यदुभयं तद्भूः तच्छक्त्युद्भवः एको वस्तुनाऽलङ्काररूप इति कारिकार्थः । ननु शब्दशक्तिमूलेऽप्यर्थस्य अर्थशक्तिमूलेऽपि शब्दस्य व्यञ्जकत्वमस्तीति उभयशक्तिमूलकत्वं सर्वथैवास्तीति चेन्न । तत्र तत्र तयोर्गुणप्रधानभावेन व्यञ्जकत्वाद् अत्र तु द्वयोरेव प्राधान्येन व्यञ्जकत्वमिति विशेषः । तथा च प्राधान्येन व्यङ्ग्यार्थोपस्थापकपदानामंशविशेषे परिवृत्तिसहत्वासहत्वाभ्यां शब्दार्थोभयशक्तिमूलत्वमिति ध्येयम् । तदुदाहरति—यथेति । अतन्द्रः स्फुरद्रूपश्चन्द्र एवाभरणं भूषणं यस्याः सा अत एव सम्यगुद्दीपितः प्रबलीकृतो मन्मथः कामो यया सा तारका नक्षत्राणि तरलाः स्वल्पा यस्यां सा श्यामा "श्यामा रात्रिर्निशीथिनीति कोशात्"। रात्रिः कं जनं सानन्दं न करोति अपि तु सर्वमेवानन्दयतीति रात्रिपक्षेऽर्थः । अतन्द्राः सुरतालस्यरहिताः चन्द्रः कर्पूरं सुवर्णनिर्मितशिरोभूषणविशेषो वा आभरणं यस्याः सा पुनरेतयोः कर्मधारयः मुदा हर्षेण सहिता समुद् दीपितो दीप्तिं प्रापितो मन्मथो यया सा तारका अक्षिगतकृष्णकनीनिका तरला चञ्चला यस्याः सा श्यामा षोडशवार्षिकी नायिका कं पुरुषं सानन्दं न करोतीति नायिकापक्षेऽर्थः । अत्रैवंरीत्याऽर्थद्वयप्रतीतौ स्त्रीविशेष इव रात्रिरिति ज्यौत्स्नी रात्रिरिव नायिकेति वोभयालङ्कारः प्रतीयते व्यज्यते तदाह—अत्रोपमेति । अत्र

अत्रोपमा व्यङ्ग्या।

(५६) भेदा अष्टादशास्य तत् ॥ ४१ ॥

अस्येति ध्वनेः।

ननु रसादीनां बहुभेदत्वेन कथमष्टादशेत्यत आह—

(५७) रसादीनामनन्तत्वाद्भेद एको हि गण्यते।

अनन्तत्वादिति तथा हि नव रसाः तत्र शृङ्गारस्य द्वौ भेदौ संभोगो विप्रलम्भश्च संभोगस्यापि परस्परविलोकनाऽऽलिङ्गन-चुम्बनादि-कुसुमोच्चय-जलकेलि-सूर्यास्तमय-चन्द्रोदय-षड्ऋतुवर्णनादयो बहवो भेदाः विप्रलम्भस्याऽभिलाषादय उक्ताः तयोरपि विभावा-नुभाव-व्यभिचारि वैचित्र्यं, तत्रापि नायकयोरुत्तम-मध्यमाऽ-धमप्रकृतित्वं, तत्रापि देश-कालाऽ-वस्थादिभेद इत्येकस्यैव रसस्यानन्त्यं, का गणना त्वन्येषाम्। असंलक्ष्यक्रमत्वन्तु सामान्यमाश्रित्य रसादिध्वनिभेद एक एव गण्यते।

---

चन्द्र-तारका-तरल-श्यामाशब्दाः परिवृत्त्यसहिष्णवः पर्यायान्तरोपादानेऽपरार्थबोधासम्भवाद् अतन्द्रा-भरण-समुद्दीपित-मन्मथशब्दाश्च परिवृत्तिसहिष्णवः अनिद्रा-भूषण-समुत्तेजित-कामादिपर्यायान्तरैरपि तदर्थप्रतीतेरित्युभयशक्तिमूलत्वमिति ॥ ७२ ॥

शिष्याणां सुखावबोधार्थमुक्तभेदान् परिगणयति—भेदा इति। तत् तस्मात् अस्य ध्वनेः अष्टादश भेदा भवन्तीति कारिकार्थः। तत्राविवक्षितवाच्यस्य द्वौ भेदौ। अर्थान्तरसङ्क्रमितवाच्यः अत्यन्ततिरस्कृतवाच्यश्चेति विवक्षितान्यपरवाच्येषु मध्ये रसादिरलक्ष्यक्रमव्यङ्ग्य एक एवेति त्रयो भेदाः लक्ष्यक्रमव्यङ्ग्येषु शब्दशक्तिमूलो द्विधा अलङ्कारोऽथ वस्त्वेवेति अर्थशक्त्युद्भवस्य द्वादश भेदाः शब्दार्थोभयभूरेक इति पञ्चदश सङ्कलनयाऽष्टादशेति।

ननु रसभावादीनां बहुत्वादष्टादशत्वमनुपपन्नमत आह—रसादीनामिति। आदिना भावादीनां सङ्ग्रहः। कारिकाव्याख्याने तयोरपीति संभोग-विप्रलम्भयोर्द्वयोरपीति विभावा उद्दीपनरूपाः अनुभावा उक्ताऽऽलिङ्गनादिव्यतिरिक्ताः व्यभिचारिणो नानारूपास्तैर्वैचित्र्य,—तत्रापि तस्मिन्वैचित्र्ये सत्यपि नायकयोः नायिका च नायकश्चेति तयोः तत्रापि उक्तप्रकृतित्वे सत्यपि देशः निकुञ्जविजनादिः कालो वसन्तादिः अवस्थाः नवोढात्वादयः। भेदाः वैचित्र्यहेतवः। अन्येषां

( ४८ ) वाक्ये द्व्युत्थः ।

द्व्युत्थ इति शब्दार्थोभयशक्तिमूलः ।

( ५९ ) पदेऽप्यन्ये ।

अपिशब्दाद्वाक्येऽपि एकावयवस्थितेन भूषणेन कामिनीव पदद्योत्येन व्यङ्ग्येन वाक्यव्यङ्ग्याऽपि भारती भासते तत्र पदप्रकाश्यत्वे क्रमेणोदाहरणम् ॥

यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा ।
अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति ॥ ७३ ॥

---

रस-भाव-तदाभासानाम् । कथन्तर्हि एकत्वेन गणनमत आह-असंलक्ष्येति । सामान्यं रसभावादिसाधारणधर्मः स चाखण्डोपाधिः ॥

अथ ध्वनेरष्टादशप्रवर्त्तितभेदमध्ये उभयशक्तिमूलातिरिक्तानां सप्तदशभेदानां पदवाक्यगतत्वेन द्वैविध्यं वक्तुमुभयशक्तिमूलस्य वाक्यमात्रगतत्वेनैकविधत्वमेवेत्याह-वाक्य इति। द्वाभ्यामुत्तिष्ठतीति द्व्युत्थः शब्दार्थोभयशक्तिमूलो ध्वनिर्वाक्ये एव भवतीत्यर्थः वाक्यमत्र पदसमुदायः तेन नानार्थानां नानार्थकपदघटितसमासगतत्वेऽपि न क्षतिः। एतस्योदाहरणन्तु अतन्द्रचन्द्राभरणेत्याद्युक्तम्। पदेऽप्यन्ये इति । अन्येऽर्थान्तरसंक्रमितवाच्यादयः सप्तदश भेदा वाक्ये पदेऽपि भवन्तीत्यर्थः । अयम्भावः यत्रैकस्यैव पदस्य प्राधान्येन व्यङ्ग्यार्थोपस्थितावानुगुण्यम् अन्येषान्तु सहकारितामात्रं तत्रैव पदनिष्ठत्वं, नानापदानान्तथारूपत्वे तु वाक्यगतत्वमेवेति । ननु पदस्य व्यङ्ग्यार्थद्योतकत्वे काव्यरूपयोर्वाक्यतदर्थयोश्चारुत्वाभाव इत्यत आह—एकावयवेति नासिकास्थितेन मौक्तिकेन वाक्यव्यङ्ग्या श्रोत्रग्राह्यवाक्यव्यङ्ग्या स्फोटरूपा भारती भासते चमत्कुरुते यदन्तर्गतेन पदेन द्योत्योऽर्थश्चारुतया व्यज्यते तस्यैव ध्वनित्वमुक्तकामिनीवदिति भावः । वाक्यव्यङ्ग्यत्वे त्वामस्मि वच्मि इत्याद्युदाहृतम् पदप्रकाश्यत्वं पदव्यङ्ग्यत्वे उदाहरति ।

यस्येति । यस्य पुरुषविशेषस्य मित्राणि सखायः मित्राणि आश्वस्तान्येव विश्वासपात्राण्येव तथा शत्रवो विद्वेषिणः शत्रवः नियन्त्रणीया एव निःशेषतो दमनीया एव तथाऽनुकम्प्यः दयाविषयोऽनुकम्प्यः स्नेहपात्रमेव स पुरुषः जातः शोभनजन्मा स च स एव जीवति श्लाघ्यजीवनवानित्यर्थः। अस्य ध्वनेर्लक्षणामूलकत्वेन लक्ष्यार्थं दर्शयति-अत्रेति । अत्र द्वितीयमित्रादिशब्दा अनुपयुक्तत्वाद्विव-

अत्र द्वितीयमित्रादिशब्दा आश्वस्तत्व-नियन्त्रणीयत्व-स्नेहपात्रत्वादिसंक्रमितवाच्याः ॥

खलववहारा दीसन्ति दारुणा जहवि तहवि धीराणम् ।
हिअववअस्स वहुमआ णहु ववसाआ विमुज्झन्ति ॥ ७४ ॥

अत्र विमुह्यन्तीति ।

लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः ।
तदा सुधास्पदमभूदधुना तु ज्वरो महान् ॥ ७५ ॥

---

क्षितवाच्याः सन्त आश्वस्तत्वादि लक्षयन्ति तेन नायकस्योचितव्यवहारित्वादिकं व्यङ्ग्यमुपादानलक्षणायाः फलमिति भावः ॥ ७३ ॥

क्रमप्राप्तं पदप्रकाश्यमत्यन्ततिरस्कृतवाच्यमुदाहरति-खलेति ।

खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथाऽपि धीराणाम् ।
हृदयवयवस्यवहुमता न खलु व्यवसाया विमुह्यन्ति ॥

इति संस्कृतम् । यद्यपि खलानां धूर्तानां व्यवहाराश्चरितानि दारुणा दुखदा दृश्यन्ते प्रसिद्धा इति यावत् तथापि सदर्थग्राहितया हृदयमेव वयस्यो मित्रं तेन वहुमता अनुमोदिताः धीराणां महतां व्यवसाया उद्योगाः खलु न विमुह्यन्ति न प्रतिवद्धा भवन्ति न विरामं प्राप्नुवन्तीत्यर्थः । मुखविपुलाछन्दः । अत्राचेतने व्यवसाये मुख्यो विमोहो बाधितः सन् कार्यकारणभावसम्बन्धात् प्रतिबन्धरूपं विरामरूपं वाऽर्थं लक्षयति तेन च सर्वथा इष्टकार्यकारित्वं व्यङ्ग्यलक्षणलक्षणाफलन्तदाह-अत्रेति । विमुह्यन्तीति पदमत्यन्ततिरस्कृतवाच्यं सद् व्यञ्जकमिति शेषः ॥ ७४ ॥

पदप्रकाश्यमलक्ष्यक्रमव्यङ्ग्यमुदाहरति-लावण्यमिति । कस्य चिद्वियोगिनः परामर्शोऽयं, तदनुभवैकगोचरं लावण्यं विलक्षणसौन्दर्यम् असौ अनुभवैकगोचरा कान्तिरुज्वलता तदनुभवैकगोचरं रूपं संस्थानसौष्ठवं वर्णो वा स अनुभवैकगोचरः वचःक्रमः वचनपरिपाटी सकलमिदं तदा तत्सन्निधानेनाऽनुभवदशायां सुधास्पदममृतस्थानमभूद् अधुना तु तद्वियोगात् स्मृतिदशायान्तु महान् ज्वर इव ज्वरः सर्वाङ्गीणतापहेतुत्वाद् अतिशयपीडाजनको ज्वरोपम इत्यर्थः । अत्र तदादिपदैर्विशिष्य वचनानर्हतया लावण्यादिगतलोकोत्तरत्वप्रतिपादनद्वारा विप्रलम्भाभिव्यक्तिरिति दर्शयति-अत्रेति । अनुभवैकगोचराअनुभवमात्रविषया अर्था लावण्याद्यतिशयरूपाः प्रकाश्यन्ते व्यज्य-

अत्र तदादिपदैरनुभवैकगोचरा अर्थाः प्रकाश्यन्ते । यथा वा-

मुग्धे ! मुग्धतयैव नेतुमखिलः कालः किमारभ्यते
मानं धत्स्व धृतिं बधान ऋजुतां दूरे कुरु प्रेयसि ।
सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना
नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥७६॥

अत्र भीताननेति एतेन हि नीचैः शंसनविधानस्य युक्तता गम्यते भावादीनां पदप्रकाश्यत्वेऽधिकन्न वैचित्र्यमिति न तदुदाह्रियते ।

रुधिरविसरप्रसाधितकरवालकरालरुचिरभुजपरिघः ।
झटिति भ्रुकुटिविटङ्कितललाटपट्टो विभासि नृप! भीमः ॥७७॥

---

न्ते । अत्र विप्रलम्भप्रतीतेर्विभावादिसामग्रीसत्त्वेऽपि तदादिपदानां प्राधान्यमिति पदव्यञ्जकता ॥ ७५ ॥

न केवलं सर्वनामपदानामेव रसादिव्यञ्जकता किन्त्वन्येषामपीति ध्वनयन् संभोगेऽपि तमेव ध्वनिमुदाहरति-मुग्धे इति । अमरुशतके मानोपदेशं कुर्वाणां सखीं प्रति नायिकायाः प्रत्युक्तिरियम् । हे मुग्धे! त्वयाऽखिलः समग्रः कालो मुग्धतयैव यथोचिताना चरणेनैव नेतुं यापयितुं किं किमिति आरभ्यते किन्तु मानं धत्स्व बलाद्धारय धृतिं धैर्यं बधान प्रेयसि प्रियतमे ऋजुतां सरलतां दूरे कुरु त्यज इत्येवं सख्या वयस्यया प्रतिबोधिता मुहुरुपदिष्टा अकृत्रिमानुरागा नायिका भीतानना भयजनितवैक्लव्यवद्वदना सती तां प्रतिबोधयन्तीं प्रतिवच उत्तरमाह—कि हे सखि ! त्वं नीचैर्मन्दं शंस कथय हि यस्मात्प्राणेश्वरो जीवितसर्वस्वायमानः अत एव मे मम हृदि हृदये स्थितो विद्यमानः श्रोष्यति ननु शङ्कायाम् । अत्र नीचैः सशनविधानस्यानाहार्यत्वेन युक्तत्वं, तच्चाननगतविच्छायत्वानुमितभयगम्यम्, भयप्रतिपाद्याकृत्रिमानुरागेण च सम्भोगः प्रकृष्यते इति तस्य प्राधान्येन भीताननपदप्रकाश्यतेति दर्शयति-अत्रेति भावादीनाम् आदिना तदाभासादेः सङ्ग्रहः । अधिकं वाच्यापेक्षयाऽतिरिक्तं वैचित्र्यं चारुता आस्वादजनकत्वं न अतस्तत्प्रभेदा नोदाह्रियन्ते ।

अथ संलक्ष्यक्रमव्यङ्ग्यध्वनिप्रभेदेषु पदप्रकाश्यत्वे शब्दशक्तिमूले वस्तुनाऽलङ्कारव्यक्तिमुदाहरति—रुधिरेति । हे भीम भयङ्कर ! नृप राजन् ! त्वं रुधिरस्य रक्तस्य विसरो धारा समूहो वा तेन प्रसाधितोऽलङ्कृतो यः करवालः खड्गः तेन करालो भयजनकः स चासौ रु-

अत्र भीषणीयस्य भीमसेन उपमानम्।

भुक्ति–मुक्तिकृदेकान्तसमादेशनतत्परः।
कस्य नानन्दनिस्यन्दं विदधाति सदागमः॥ ७८॥ ५॥

का चित्सङ्केतदायिनमेवं मुख्यया वृत्त्या शंसति।

सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं-
यातोऽस्ताचलमौलिमम्बरमणिर्विस्रब्धमत्रागतिः।
आश्चर्यन्तव सौकुमार्यमभितः क्लान्ताऽसि येनाधुना
नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति ते नासितुम्॥७९॥६॥

---

चिरः शत्रुमित्रभेदेन करालत्वरुचिरत्वे यो भुज एव परिघोऽर्गला यस्य तादृशः तथा झटिति शीघ्रं भ्रुकुट्या भ्रूभङ्गेन विटङ्कितं तरङ्कितं ललाटं भालं तदेव पट्टः फलको यस्य तथाभूतः सन् विभासि शोभसे। गीतिश्छन्दः। अत्र भीमेति भीषणीयार्थेन नृपसम्बोधनविशेषणेन भीमसेनोपमा व्यज्यते तदाह–अत्रेति। भीषयतीति भीषणीयस्तस्य प्रकृतनृपस्य बाहुलकात्कर्त्तरि अनीयर् उपमानं व्यङ्ग्यमिति शेषः। अत्र भीमपदशक्तिमहिम्ना भीमसेनोपमा व्यङ्ग्येति पदप्रकाश्यता।७७।

अथोक्तवस्तुना वस्तुव्यक्तिमुदाहरति–भुक्तीति। जनान्तरसन्निधावुपनायके आगतेऽप्रस्तुतप्रसंशाव्याजेन तदागमनाधीनं हर्षं व्यञ्जयन्त्या उक्तिरियम्। सदागमः सन् आगमो वेदः कस्य विज्ञस्य आनन्दनिष्यन्दमानन्दप्रवाहं न विदधाति न करोति अपि तु सर्वस्य करोत्येव कीदृशः भुक्तिं स्वर्गादिभोगं मुक्तिं कैवल्यं च करोतीति सः तथा एकान्तेन नियमेन सम्यगादेशने 'यजेत स्वर्गकाम इत्यादि" हितोपदेशने तत्पर इति वाच्योऽर्थः। सतः सुन्दरस्य वल्लभस्य आगमः कस्य रमणीजनस्य आनन्दनिष्यन्दं न विदधाति कीदृशः भुक्तिं सुरतादिभोगं मुक्तिं विरहादिदुःखत्यागं च करोतीति सः। तथा एकान्तस्य सङ्केतस्थानस्य समादेशने तत्पर इति व्यङ्ग्योऽर्थः। अत्र मुख्यतया विवक्षितोऽपि द्वितीयार्थो गोपनयाप्राकरणिकीकृतो भवति अत्र च सदागमपदेन प्राधान्येनोपपतिस्तुतिरूपं वस्तु व्यज्यते तदाह–का चिदिति। सङ्केतदायिनमुपनायकम् अत्र सदागमपदस्य परिवृत्त्यसहत्वाच्छब्दशक्तिमूलत्वं तेन स्तुतिरूपं वस्तु व्यज्यत इति॥७८॥

तत्रैव पदप्रकाश्यत्वेऽर्थशक्तिमूलध्वनेर्द्वादशभेदेषु स्वतःसम्भविन्यर्थे व्यञ्जके वस्तुना वस्तुनो व्यक्तिमुदाहरति–सायमिति। उपपति-

अत्र वस्तुना कृतपरपुरुषपरिचया क्लान्ताऽसीति वस्तु अधुनापद-
द्योत्यं व्यज्यते ।

तदप्राप्तिमहादुःखविलीनाशेषपातका ।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा ॥ ८० ॥
चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम् ।
निरुच्छ्वासतया मुक्तिं गताऽन्या गोपकन्यका ॥ ८१ ॥ ७ ॥

---

सम्भुज्य तज्जनितश्रमापनयनाय स्नानादि कृतवतीं प्रति ज्ञातरहस्याया उक्तिरियम् । हे सखि ! तव सौकुमार्यं सुकुमारत्वमाश्चर्यं जगद्विलक्षणं येन सौकुमार्येण अधुना क्रमसामग्र्यभावे तन्निवर्त्तकसामग्रीसमवधाने वा अभितो वहिरन्तश्च त्वं क्लान्ता श्रान्ताऽसि यतस्ते नेत्रद्वन्द्वं न विद्यते मीलनस्य मुद्रणस्य व्यतिकरः पौन पुन्येन प्रवृत्तिः सम्बन्धो वा यत्र तादृशमासितुं स्थातुं न शक्नोति समर्थञ्च भवति आश्चर्यं दर्शयति सायं भानावस्तोन्मुखे स्नानमङ्गप्रक्षालनमुपासितं यत्नाच्चिरकालं कृतं तथा मलयजेनोत्तमचन्दनेनाङ्गं समालेपितं सम्यग् आसमन्तात् लेपितं न तु स्वयं लिप्तं तथाऽम्बरस्याकाशस्य मणिरिव मणिः सूर्योऽस्ताचलस्य मौलिं मस्तकमुल्लंघ्य यातो गतः एतेन रात्रिर्जाता तथाऽत्र कुञ्जादिना घनच्छायमार्गे देशे विस्रब्धं मन्थरमभीतं च यथा तथा आगतिरागमनम् एतेन त्वराचलनकृतोऽपि श्रमो न तथा च सामग्र्यभावात्केवलसौकुमार्यकृत एव ते श्रम इत्यहो जगद्विलक्षणमाश्चर्यभूतं ते सौकुमार्यमिति ॥ शार्दूलविक्रीडितं छन्दः । अत्र तव सौकुमार्यमाश्चर्यं येनाधुना क्लान्तासि इति वाच्यार्थरूपेण वस्तुना कृतपरपुरुषपरिचया गाढोन्मर्दना क्लान्ताऽसीति वस्तु अधुनापदेन प्राधान्येन व्यज्यते तदाह-अत्रेति ॥ ७९ ॥

तत्रैव स्वतःसम्भविना वस्तुनाऽलङ्कारस्य व्यक्तिमुदाहरति-तदप्राप्तीति । विष्णुपुराणस्थं युग्मकं पद्यम् । अन्या उक्ताभ्यो भिन्ना काचित् गोपकन्यका निरुच्छ्वासतया निरुद्धप्राणवायुतया परब्रह्मस्वरूपिणं सच्चिदानन्दरूपं जगतः संसारस्य सूतिरुत्पत्तिर्यस्मात्तादृशं श्रीकृष्णं चिन्तयन्ती भावयन्ती सती मुक्तिं मोक्षं गता कीदृशी तस्य कृष्णस्याप्राप्त्या वियोगेन यन्महादुःखं तेन विलीनानि नष्टानि अशेषाणि पातकानि यस्याः सा पुनः तस्य श्रीकृष्णस्य चिन्तया भावनया ध्यानेन यो विपुलो महान् आह्लाद आनन्दस्तेन क्षीणो नष्टः पुण्यस्य चयः समूहो यस्याः सेति वाच्यार्थः । अत्र श्रीकृष्णवि-

अत्र जन्मसहस्रैरुपभोक्तव्यानि दुष्कृतसुकृतफलानि वियोगदुःख-चिन्तनाह्लादाभ्यामनुभूतानीत्युक्तम्। एवं चाशेष-चयपदद्योत्ये अति-शयोक्ती।

क्षणदाऽसावक्षणदा वनमवनं व्यसनमव्यसनम्।
वत वीर! तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम् ॥८२॥

अत्र शब्दशक्तिमूलविरोधाङ्गेनार्थान्तरन्यासेन विधिरपि त्वामनु-वर्त्तते इति सर्वपदद्योत्यं वस्तु।

तुह वल्लहस्स गोसम्मि आसि अहरो मिलाणकमलदलो।
इअ णववहुआ सोऊण कुणइ वअण महिसँ मुहम् ॥८३॥९॥

---

योगदुःखचिन्ताह्लादयोरशेषपापपुण्यफलत्वेनाध्यवसितयोरवगति-रित्यतिशयोक्तिद्वयमशेषचयपदप्राधान्येन व्यज्यते तदाह-अत्रेति।८०।८१

तत्रैव स्वतः सम्भविनाऽलङ्कारेण वस्तुनो व्यक्तिमुदाहरति-क्षणदेति। वतेति खेदे भो वीर! तव द्विषतां शत्रूणां त्वयि पराङ्मुखे विपरीते सति सर्वं पराङ्मुखं विपरीतं जातं तथा हि असौ क्षणदा रात्रिः अक्षणदा तद्भिन्ना क्षणमुत्सवं न ददातीति व्युत्पत्त्या अनुत्सव-वदा च वनमरण्यमवनं तद्भिन्नम् अवति रक्षतीति व्युत्पत्त्या रक्षकं च व्यसनं द्यूतादि अव्यसनं तद्भिन्नम् अवीनां मेषाणामसनं प्रेरण-मिति व्युत्पत्त्या कालक्षेपकं चेति वाच्यार्थः। अत्र शब्दशक्तिमूलस्य क्षणदाऽक्षणदेत्यादिविरोधस्य अङ्गेनोपपादकेन पराङ्मुखे त्वयीत्या-द्यर्थान्तरन्यासालङ्कारेण विधिरपि त्वामनुवर्त्तत इति वस्तु सर्व-पदप्राधान्येन व्यज्यते तथा च व्यञ्जकस्य सर्वपदस्य नानार्थत्वाभा-वेन वस्तुनोऽर्थशक्तिमूलालङ्कारव्यङ्ग्यता। उद्गीतिश्छन्दः। आर्या शकलद्वितयं व्यत्ययरचितं भवेद्यस्याः। सोद्गीतिः किल कथिता त-द्वद्यत्यंशसंयुक्तेति लक्षणात् ॥ ८२ ॥

तत्रैव स्वतः सम्भविनाऽलङ्कारेणालङ्कारस्य व्यक्तिमुदाहरति-तुहेति।
तव वल्लभस्य प्रभाते आसीदधरो म्लानकमलदलम्।
इति नववधूः श्रुत्वा करोति वदनं महीसंमुखम् ॥

इति संस्कृतम्। रात्रावतिशयचुम्बितदयिताधरां वधूं प्रति कस्या-श्चिदुक्तिः। हे सुभगे! तव वल्लभस्य अधरोऽधरोष्ठः प्रभाते म्लानं यत्कमलदलं तद्रूप आसीदिति सखीवचनं श्रुत्वा नववधूर्नवोढा नायिका वदनं स्वमुखं लज्जया महीसंमुखमधोमुखं करोतीत्यर्थः।

अत्र रूपकेण त्वयाऽस्य मुहुर्मुहुः परिचुम्बनं तथा कृतं येन म्लानत्वमिति मिलाणादिपदद्योत्यं काव्यलिङ्गम् । एषु स्वतः सम्भवी व्यञ्जकः ।

राईसु चंदधवलासु ललिअमप्फालिऊण जो चावम्
एकच्छत्तं विअ कुणइभुअणरज्जं विजंभंतो ॥८४॥१०॥

अत्र वस्तुना येषां कामिनीनामसौ राजा स्मरस्तेभ्यो न कश्चिदपि तदादेशपराङ्मुख इति जाग्रद्भिरुपभोगपरैरेव तैर्निशाऽतिवाह्यते इति भुअणरज्जपदद्योत्यं वस्तु प्रकाश्यते ॥

निशितशरधियाऽर्पयत्यनङ्गो दृशि सुदृशः स्वबलं वयस्यराले ।
दिशि निपतति यत्र सा च तत्र व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः॥८५॥११

---

सर्वविपुलार्याछन्दः ! अत्राधरो म्लानकमलदलमिति रूपकालङ्कारेण त्वयाऽस्याधरस्य मुहुर्मुहुस्तथा चुम्बनं कृतं येन तस्य म्लानत्वमासीदिति काव्यलिङ्गालङ्कारो मिलाणकमलदलपदप्राधान्येन द्योत्यते तदाह–अत्रेति । एषु चतर्षूदाहरणेषु ॥ ८३ ॥

तत्रैव कविप्रौढोक्तिमात्रनिष्पन्नशरीरे व्यञ्जकेऽर्थे चतुर्षु भेदेषु मध्ये वस्तुना वस्तुनो व्यक्तिमुदाहरति—राईसु इति ।

रात्रीषु चन्द्रधवलासु ललितमास्फाल्य यश्चापम् ॥
एकच्छत्रमिव करोति भुवनराज्यं विजृम्भमाणः ।

इति संस्कृतम् । मानिनीम्प्रति माननिर्वाहः कठिन इत्येतद्बोधिका सख्युक्तिः । यः प्रकृतः स्मरः चन्द्रेण धवलासु उज्ज्वलासु रात्रीषु ललितं सुकुमारं कुसुममयं चापं धनुरास्फाल्यैव आकृष्यैव न तु बाणादि सन्धाय भुवनानां त्रिलोकानां राज्यमेकमेव छत्रं यत्र तथाभूतमिव अद्वितीयमिव करोति अत एव विजृम्भमाणः अतिसाहङ्कारतया वर्तमान इत्यर्थः । सर्वविपुला छन्दः । अत्र चापास्फालनेन एकच्छत्रमिव भुवनराज्यं करोतीति कविप्रौढोक्तिसिद्धेन वस्तुना स्वशासकानङ्गपारवश्येन कुशलैः कामिभिरुपभोगपरैरेव निशाऽतिवाह्यत इति वस्तु भुवनराज्यपदेन प्राधान्येन व्यज्यते तदाह–अत्रेति । कामिनामित्यत्र पुमान् स्त्रियेत्येकशेषः । तदादेशपराङ्मुखः कामाज्ञाभञ्जकः आसीदिति शेषः इति हेतोः उपभोगपरैरुपभोगासक्तैरेव तैः कामिभिः अतिवाह्यते नीयते ॥ ८४ ॥

तत्रैव कविप्रौढोक्तिमात्रसिद्धेन वस्तुनाऽलङ्कारस्य व्यक्तिमुदा-

अत्र वस्तुना युगपदवस्थाः परस्परविरुद्धा अपि प्रभवन्तीति प्रति-करपदद्योत्यो विरोधः ।

वारिज्जन्तो विपुणो सन्दावकदात्थिएण हिअएण ।
थणहरवअस्सएण विसुद्धजाईणचलइ सेहारो ॥ ८६ ॥१२॥

---

हरति—निशितेति । अनङ्गः कामः निशितशरधिया तीक्ष्णवाणबुद्ध्या ममायं शरो निशित इति बुद्ध्या सुदृशः कामिन्याः दृशि नेत्रे स्वस्य बलं सामर्थ्यमर्पयति ददाति कदा अराले कुटिले वयसि अभिनवतारुण्ये उद्भूते सति अत एव साऽर्पितबला दृक् यत्र दिशि यस्मिन् युवजने निपतति तत्र अवस्था दशविधकामदशा व्यतिकरं मिश्रीभावमेत्य प्राप्य समुन्मिषन्ति पुनः पुनरुत्पद्यन्ते युगपदुद्भवन्तीत्यर्थः । तत्कृता ममैता अवस्था वयस्यं प्रत्युक्तिः । पुष्पिताग्राछन्दः । अत्र व्यतिकरमेत्यावस्थाः समुन्मिषन्तीति वस्तुना परस्परविरुद्धा अपि हसित-रुदितनिर्वेदोन्मादादयो दशविधा अवस्था युगपत्प्रभवन्तीति विरोधालङ्कारो व्यतिकरपदेन प्राधान्येन व्यज्यते तदाह—अत्रेति । योद्धा शरे स्वबलार्पणं तत्पातदिशि चावस्थासमुन्मेष इति सर्वं कविप्रौढोक्तिसिद्धम् ॥ ८५ ॥

तत्रैव कविप्रौढोक्तिसिद्धेनालङ्कारेण वस्तुनो व्यक्तिमुदाहरति—वारिज्जमिति ।

वार्यमाणोऽपि पुनः सन्तापकदर्थितेन हृदयेन ।
स्तनभरवयस्येन विशुद्धजातिर्न चलत्यस्या हारः ॥

इति संस्कृतम् । नायिकाविपरीतरताचरणसूचिका कवेः प्रौढोक्तिः । हारस्य गाढालिङ्गनान्तरायतया यः सन्तापस्तेन कदर्थितेन पीडितेन हृदयेन पुनर्वार्यमाणोऽपि मुहुरपसार्यमाणोऽपि अस्या नायिकाया हारो मौक्तिकमाला स्तनभरवयस्येन न चलति स्तनरूपमित्रस्य पीडा मा भूदिति स्तनरूपमित्रान्नापसरति यतो विशुद्धजातिः निर्दुष्टमुक्ताजातिमान् कुलीना हि उत्कटक्लेशेऽपि मित्रं न त्यजन्तीत्यर्थः । अत्र विशुद्धजातित्वाद्धारो न चलतीति हेत्वलङ्कारेण हारोऽनवरतं कम्पमान एवास्ते इति वस्तु न चलतीतिपदेन प्राधान्येन व्यज्यते तदाह—अत्रेति । गीतिश्छन्दः ॥ ८६ ॥

अत्र विशुद्धजातित्वलक्षणहेत्वलङ्कारेण हारोऽनवरतं कम्पमान एवास्ते इति णचलइपदद्योत्यं वस्तु ॥

सो मुद्धसामलङ्गो धम्मिल्लो कलिअललिअणिअदेहो ।

तीए खंधाहि बलं गहिअ सरो सुरअसङ्गरे जअइ ॥८७॥१३॥

अत्र रूपकेण मुहुर्मुहुराकर्षणेन तथा केशपाशः स्कन्धयोः प्राप्तः यथा रतिविरतावप्यनिवृत्ताभिलाषः कामुकोऽभूदिति खंधपदद्योत्या विभावना एषु कविप्रौढोक्तिमात्रनिष्पन्नशरीर. ।

णवपुण्णिमामिअङ्कस्स सुहअ कोत्तंसि भणसु मह सच्चम् ।

का सोहग्गसमग्गा पओसरअणिध तुह अज्ज ॥ ८८ ॥१४॥

---

अत्रैव कविप्रौढोक्तिसिद्धेनालङ्कारेणालङ्कारस्य व्यक्तिमुदाहरति- सोमुद्धेति ।

स मुग्धश्यामलाङ्गो धम्मिल्ल. कलितललितनिजदेहः ।

तस्याः स्कन्धाद्बलं गृहीत्वा स्मरः सुरतसङ्गरे जयति ॥

इति संस्कृतम् । स धम्मिल्ल. केशपाश एव स्मरः कामस्तस्या नायिकायाः स्कन्धोंऽस एव स्कन्धः सेनानिवेशस्तस्माद्बलं सामर्थ्यमेव वलं सैन्यं गृहीत्वा सुरतसङ्गरे सुरतरूपे सङ्ग्रामे जयति सर्वोत्कर्षेण वर्तते कीदृशः मुग्धं सुन्दरं श्यामलमङ्गं यस्य सः तथा कलितः पुनरापादितो ललितो मनोहरो निजदेहः स्वशरीरं धम्मिल्लरूपं येन सः । अत्र धम्मिल्लः स्मर इति रूपकं स्कन्धादिति बलमिति च श्लिष्टरूपके सुरतसङ्गरे इतिरूपकम् -यथा युद्धान्निवर्तमानमपि कश्चित्कश्चिन्मित्रभूतोऽन्यतः स्कन्धावाराद् बलं लब्ध्वा तं प्रोत्साहयति तथाऽस्याः पूर्वसुरतवेलायां मुहुर्मुहुः कर्षणेन स्कन्धपतितकेशपाशः साक्षात्स्मर एव स्कन्धाद्बलं गृहीत्वा सुरतभोगनिवृत्तमपि मनः प्रोत्साहनेन सुरते प्रवर्तयतीति तदाह-अत्रेति । प्राप्तः पतितः स्कन्धपदद्योत्येति अभिलाषनिवृत्त्या रतिनिवृत्तौ केशानां बन्धने स्कन्धसम्बन्धो न स्यादिति भावः । विभावनेति रत्यनिष्पत्तिरूपाभिलाषहेत्वभावेऽपि अभिलाषोदयाद्विभावनाऽलङ्कारो व्यज्यते ॥ ८७ ॥

तत्रैव कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धेन वस्तुना वस्तुनो व्यक्तिमुदाहरति-णवेति--

नवपूर्णिमामृगाङ्कस्य सुभग ! कस्त्वमसि भण मम सत्यम् ।

का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य ॥

अत्र वस्तुना मयीवान्यस्यामपि प्रथममनुरक्तस्त्वं न तत इति णवेत्यादि-पओसेत्यादिपदद्योत्यं वस्तु व्यज्यते ।

सहि णवणिहुवणसमरम्मि अङ्कवाली सहीए णिविडाए ।
हारो णिवारिओ विअ उच्छेरन्तो तदो कहं रमिअम् ॥

---

इति संस्कृतम् । खण्डितायाः वृद्धपरवध्वनुरक्तं स्वामिनं प्रत्युक्तिः । हे सुभग ! नवः प्रथमोदितः पूर्णिमासम्बन्धी मृगाङ्कश्चन्द्रस्तस्य त्वं कः सखा भ्राता वाऽसि तन्मम सत्यं भण वद अन्यथा त्वयि क्षणिकानुरागित्वानुपपत्तिः तथा चन्द्रस्य प्रदोषरजनीव तव का नायिका सौभाग्यं नायकानुरागादि समग्रं पूर्णं यस्यां तथाभूतेत्यर्थः । मुखविपुलाछन्दः । अत्र नवत्वेन चाञ्चल्यं क्षणिकानुरागित्वं पूर्णिमामृगाङ्कत्वेन नायिकान्तरानुरागित्वम् कलङ्कित्वं प्रदोषपदेन प्रकृष्टदोषवत्त्वं रजनीपदेन मालिन्यं च व्यज्यते । तथा यथोक्तवाक्यार्थरूपेण वस्तुना मयीवान्यस्यामपि प्रथममनुरक्तस्त्वमिति णवेत्यादिपदेन न तत इति पओसेत्यादिपदेन प्राधान्येन व्यज्यत इति अत्र इवशब्दानुपादानेऽपि प्रदोषरजनी तव केत्येतावतापि व्यङ्ग्यव्यञ्जनं सम्भवतीति वस्तुमात्रस्यैव व्यञ्जकत्वं न तूपमालङ्कारस्येति बहुटीकासम्मतः ॥ ८८ ॥

तत्रैव कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन वस्तुनाऽलङ्कारस्य व्यक्तिमुदाहरति—सहीति ।

सखि ! तव निधुवनसमरेऽङ्कपालीसख्या निविडया ।
हारो निवारित एवोच्छ्रियमाणस्ततः कथं रमितः ॥

इति संस्कृतम् नवोढां प्रति रसज्ञायाः सख्या उक्तिः । हे सखि ! नवं नूतनं निधुवनं सुरतमेव समरस्तस्मिन्निविडया दृढया प्रगल्भया वा अङ्कपाली आलिङ्गनं सैव सखी तया उच्छ्रियमाणः चलनव्यापारेण हृदयाभिघातं कुर्वन् हारो मौक्तिकमाला निवारित एव भग्न एव ततो हारच्छेदानन्तरं त्वया नवोढया इतरप्रौढाङ्गनारतादपि विलक्षणं कथं रमितं क्रीडितमित्यर्थः । अत्र यथोक्तवाच्यार्थरूपेण वस्तुना प्रौढाङ्गनारतादपि विलक्षणं नवोढायास्ते रतमवश्यमभूदिति तत्कथय कीदृगिति व्यतिरेकलिङ्कारः कथंपदेन प्राधान्येन व्यज्यते तदाह–अत्रेति ॥ ८९ ॥

अत्र वस्तुना हारच्छेदानन्तरमन्यदेव रतमवश्यमभूत् तत्कथय कीदृगिति व्यतिरेकः कहंपदगम्यः।

पविसन्ती घरवारं विवलिअवअणा विलोइऊण पहम्।
खंधे घेत्तूण घणं हाहा णट्ठोत्ति रुअसि सहि किंति॥ ९०॥

अत्र हेत्वलङ्कारेण सङ्केतनिकेतनं गच्छन्तं दृष्ट्वा यदि तत्र गन्तुमिच्छसि तदाऽपरं घटं गृहीत्वा गच्छेति वस्तु किंतिपदद्योत्यम्। यथा वा—

विहलं खलं तुमं सहि दट्ठूण कुठेण तरलतरदिट्ठिम्।
वारप्फंसमिसेण अ अप्पा गुरु ओत्ति पाडिअ विहिण्णो॥९१॥१६

---

तत्रैव कविनिबद्धवक्तृप्रौढोक्तिसिद्धेनालङ्कारेण वस्तुनो व्यक्तिमुदाहरति—पविसंतीति।

प्रविशन्ती गृहद्वारं विवलितवदना विलोक्य पन्थानम्।
स्कन्धे गृहीत्वा घटं हाहा नष्ट इति रोदिषि सखि! किम्॥

इति संस्कृतम्। जलानयनव्याजेन सङ्केतस्थानं गत्वा शून्यं तद्विलोक्य जलघटं स्कन्धे गृहीत्वा गृहद्वारपर्य्यन्तं समागतां पश्चात्सङ्केतस्थानयायिनं स्वकामुकमवलोक्य पुनर्जलानयनव्याजात्सङ्केतस्थानं गन्तुं विवलितं वदनं कृत्वा द्वारस्खलनव्याजेन घटं क्षिप्त्वा लोकवञ्चनायै रुदतीं सखीम्प्रति चतुराया उक्तिः। हे सखि! गृहद्वारं प्रविशन्ती त्वं स्कन्धे घटं गृहीत्वा विवलितवदना परावर्तितवदना सती पन्थानं निष्क्रान्तमपि मार्गं विलोक्य हाहा नष्टः इति किमिति रोदिषीत्यर्थः। नष्ट इति हेतोः रोदिषीति हेत्वलङ्कारेण, काव्यलिङ्गालङ्कारेण सङ्केतस्थानं गच्छन्तं कामुकं दृष्ट्वा यदि तत्र गन्तुमिच्छसि तर्हि अपरं घटं गृहीत्वा गच्छेति वस्तु किंतिपदेन प्राधान्येन व्यज्यते तदाह—अत्रेति गीतिश्छन्दः॥ ९०॥

ननूक्तोदाहरणे हेत्वलङ्कारस्य न प्रौढोक्तिमात्रसिद्धत्वं किन्तु स्वतः सम्भवित्वमेव इत्युदाहरणान्तरमाह—यथा वेति।

विशृङ्खलां त्वां सखि! दृष्ट्वा कुटेन तरलतरदृष्टिम्।
द्वारस्पर्शमिषेण चात्मा गुरुक इति पातयित्वा विभिन्नः॥

इति संस्कृतम्। कृतसङ्केतस्थाने अदृष्ट्वा ततो निवृत्य गृहप्रवेशसमये पश्चादागच्छन्तं कामुकं दृष्ट्वा पुनर्नदीगमनाय बुद्धिपूर्वकं द्वार-

अत्र नदीकूले लतागहने कृतसङ्केतमप्राप्तं गृहप्रवेशावसरे पश्चादागतं दृष्ट्वा पुनर्नदीगमनाय द्वारोपघातव्याजेन बुद्धिपूर्वं व्याकुलया त्वया घट्टः स्फोटित इति मया चिन्तितम्, तत्किमिति नाश्वसिषि, तत्समीहितसिद्धये व्रज, अहं ते श्वश्रूनिकटे सर्वं समर्थयिष्ये इति द्वारस्पर्शनव्याजेनेत्यपह्नुत्या वस्तु ।

जोह्णाइ महुरसेण अ विइण्ण तारुण्ण उस्सुअमणा सा ।

वुड्ढा वि णवोढव्विअ परवहुआ अहह हरइ तुह हिअअम् ॥९२॥

अत्र काव्यलिङ्गेन वृद्धां परवधूं त्वमस्मानुज्झित्वाऽभिलषसीति त्वदीयमाचरितं वक्तुं न शक्यमित्याक्षेपः परवहूपदप्रकाश्यः ।

---

स्पर्शव्याजेन घटं स्फोटितवतीं प्रति सख्या उक्तिः । हे सखि ! विशृङ्खलामतिभारव्याकुलाम् अत एव तरलतरदृष्टिम् अतिशयितचञ्चलकटाक्षां त्वां दृष्ट्वा कुटेन घटेन कर्त्रा आत्मा स्वरूपं मृण्मयो देहः गुरुकः गरीयान् त्वादृश्या अपि कष्टदायक इति दुःखेन द्वारस्पर्शस्य मिषेण व्याजेन पातयित्वा विभिन्नः स्फोटित इत्यर्थः ।

कुटः कोटे पुमान्स्त्री घटे स्त्रीपुंसयोर्गृहे ।

इति मेदिनी । गीतिश्छन्दः । नायं द्वारस्पर्शाद्घटनाशस्त्वया कृतः किन्तु गुरुतया परपीडकत्वाद् घटेनैव स्वात्मा विभेदित इत्यपन्हुत्यलङ्कारेण सखीरूपवक्तृप्रौढोक्तिसिद्धेन मूलोक्तमितीत्यन्तं वस्तु व्यज्यते तदाह–अत्रेति ॥ ९१ ॥

तत्रैव कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धेनालङ्कारेणालङ्कारस्य व्यक्तिमुदाहरति–जोह्णेति ।

ज्योत्स्नया मधुरसेन च वितीर्णतारुण्योत्सुकमनाः सा ।

वृद्धाऽपि नवोढेव परवधूरहह हरति तव हृदयम् ॥

इतिसंस्कृतम् । वृद्धपरवधूसक्तं नायकमुपहसन्त्या उक्तिः । अहहेति खेदे वृद्धाऽपि सा नायिका ज्योत्स्नया चन्द्रिकया मधुरसेन मद्यास्वादेन च वितीर्णं दत्तं यत्तारुण्यं तेनोत्सुकं रताभिलाषं मनो यस्यास्तथाभूताऽपि यतः परवधूः अतो नवोढेव तव हृदयं हरति न तु सौन्दर्य्यादिनिमित्तान्तरादिति भावः । अत्र परवधूत्वं चित्तहरणे हेतुरिति हेत्वलङ्कारेण काव्यलिङ्गालङ्कारेण अस्मानुज्झित्वा वृद्धां परवधूमभिलषसीति त्वदीयमाचरितं वक्तुं न शक्यमित्येवंरूप आक्षेपालङ्कारः परवधूपदेन प्राधान्येन व्यज्यते तदाह–अत्रेति । गीतिश्छन्दः ॥९२॥

एषु कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरः। वाक्यप्रकाश्ये तु पूर्वमुदाहृतम्। शब्दार्थोभयशक्त्युद्भवस्तु पदप्रकाश्यो न भवतीति पञ्चत्रिंशद्भेदाः।

( ६० ) प्रबन्धेऽप्यर्थशक्तिभूः ॥ ४२ ॥

यथा गृध्रगोमायुसंवादादौ—

अलं स्थित्वा श्मशानेऽस्मिन्गृध्रगोमायुसङ्कुले।
कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे ॥ ९३ ॥
न चेह जीवितः कश्चित्कालधर्ममुपागतः।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥ ९४ ॥

इति दिवा प्रभवतो गृध्रस्य पुरुषविसर्जनपरमिदं वचनम्।

---

एष्विति। चतुर्षूदाहरणेषु निष्पन्नशरीरो व्यञ्जक इति शेषः। उदाहृतमिति त्वामस्मि वच्मि इत्यादिभिः। पदप्रकाश्यत्वे उभयशक्त्युद्भवः कुतो नोक्त इत्यत आह-शब्दार्थोभयेति। एकस्य पदस्य परिवृत्त्यसहत्व-तत्सहत्वे वक्तुमशक्ये इति भावः। पञ्चत्रिंशदिति उक्तेन वाक्यप्रकाश्ये-नाष्टादशविधेन सह एतस्य पदप्रकाश्यस्य सप्तदशभेदस्य मिलनात्पञ्चत्रिंशत् तथा हि अर्थान्तरसङ्क्रमितवाच्या-त्यन्ततिरस्कृतवाच्या-लक्ष्यक्रमास्त्रयः लक्ष्यक्रमेषु वस्त्वलङ्कारभेदेन शब्दशक्तिमूलो द्विविधः। अर्थशक्तिमूलो द्वादशविधः एषां सप्तदशानां वाक्यपदमूलकत्वेन द्वैविध्ये चतुस्त्रिंशत् उभयशक्तिमूल एक इति पञ्चत्रिंशदिति। प्रबन्धेऽपीति। अर्थशक्तिमूलो द्वादशविधो ध्वनिर्न केवलं पदवाक्ययोरेव किन्तु प्रबन्धेऽपि प्रबन्धश्च संघटितनानावाक्यसमुदायो ग्रन्थरूपस्तदवान्तरप्रकरणरूपश्चेति कारिकार्थः।

तत्र गृध्रसंवादे पद्यद्वयात्मके प्रबन्धे स्वतः संभविना वस्तुना वस्तुनो व्यक्तिमुदाहरति-अलमिति। सन्ध्यासमये श्मशाने समासीनं-मृतबालं दृष्ट्वा रात्रावन्धत्वात्तद्ग्रहणेऽसमर्थस्य गृध्रस्य बालबन्धुजन-विसर्जनपरं महाभारते शान्तिपर्वणि श्लोकद्वयमिदम्। हे जनाः! गृध्रैर्मांसादैः गोमायुभिः शृगालैश्च सङ्कुले व्याप्ते तथा कङ्काला अस्थीनि बहुला यत्र तादृशे अस्थिप्राये अत एव घोरे दारुणे तथा सर्वेषां प्राणिनां भयङ्करे त्रासजनकेऽस्मिन्श्मशाने स्थित्वाऽलं भवतां-स्थितिरनुचिता। ननु बालो जीवेत्तत्राह-न चेति। इह संसारे कालधर्मं मृत्युमुपागतः प्राप्तः प्रियो मित्रं द्वेष्यः शत्रुः यदि वा

आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत सांप्रतम् ।
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥ ९५ ॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात्कथं मूढास्त्यजध्वमविशङ्किताः ॥ ९६ ॥

इति निशि विजृम्भमाणस्य गोमायोर्जनव्यावर्त्तननिष्ठं च वचनमिति प्रबन्ध एव प्रथते । अन्ये त्वेकादश भेदा ग्रन्थविस्तरभयान्नोदाहृताः स्वयन्तु लक्षणतोऽनुसर्त्तव्याः । अपिशब्दात्पदवाक्ययोः ।

( ६१ ) पदैकदेशरचनावर्णेष्वपि रसादयः ।

---

कश्चिदुदासीनोऽपि न जीवितः अद्यपर्यन्तमिति शेषः । यतः प्राणिनां संसारिणामीदृशी अपरावृत्तिरूपा गतिः स्वभाव इत्यर्थः । अत्र स्वतःसंभविना वाच्यार्थरूपेण वस्तुना पुरुषविसर्जनरूपं वस्तु पदद्वयात्मकेन प्रबन्धेन व्यज्यते तदाह इतीति ॥ ९३ ॥।९४ ॥

गोमायुसंवादे उदाहरति–आदित्योऽयमिति । मृतबालावेक्षकजनानां निवर्तनमिच्छोर्गोमायोस्तत्रैव महाभारते श्लोकद्वयरूपः प्रबन्धः । हे मूढा मूर्खाः ! अयमादित्यः सूर्यः स्थितः अस्तीति शेषः अतोऽधुना रात्रिचरेभ्यो भयन्नास्ति अतो यूयं सांप्रतमधुना स्नेहं कुरुत परम् अयं संध्यात्मको मुहूर्तो बहुविघ्नः भूतावेशादिरूपविघ्नबहुलः । एतन्मुहूर्त्तापगमे बालः कदाचिज्जीवेदपि संभावनार्थकोऽपिशब्दः॥ ९५ ॥

एवं जीवनसंभावनामुत्पाद्य मोहयितुमाह–अमुमिति । यूयमविशङ्किताः लोकापवादशङ्कारहिताः सन्तः कनकवर्णवद् आभा कान्तिर्यस्य तं तथा न प्राप्तं यौवनं येन तथाभूतममुं बालं गृध्रस्य मांसलुब्धस्य वाक्यात् कथं त्यजध्वम् अत्र स्वतः संभाविना वाच्यार्थरूपेण वस्तुना श्मशानपरित्यागान्निवर्त्तनं वस्तु पद्यद्वयात्मकेन प्रबन्धेन व्यज्यते तदाह–इतीति । विजृम्भमाणस्य मांसभक्षणसमर्थनस्य व्यावर्तननिष्ठं निवर्तनतात्पर्यकं प्रथते व्यञ्जकत्वेन समर्थो भवति ॥ ९६ ॥

अथ शक्त्युद्भवध्वनेर्द्वादशभेदानां मध्ये एक एवोदाहृतः अन्ये कुतो नोदाहृता इत्यत आह–अन्ये त्वेकादशेति । प्रबन्धेऽपीत्यपिशब्दस्योक्तसमुच्चयपरतामाह–अपिशब्दादिति । ते चोदाहृता एवेति बोध्यम् ।

पदैकदेशेति । पदानां सुप्तिङन्तरूपाणामेकदेशेषु प्रकृतिप्रत्ययोपसर्गरूपांशत्रयेषु रचनायामष्टमे वक्ष्यमाणाक्षरविशेषेषु अपिशब्दात्प्रबन्धे च रसादयः रसभाव–तदाभास–भावशान्ति भावोदय–भावसं-

तत्र प्रकृत्या यथा—

रइकेलिहिअणिअसणकरकिसलअरुद्धणअणजुअलस्स ।
रुद्दस्स तइअणअणं पव्वई परिचुंविअं जअइ ॥ ९७ ॥

अत्र जयतीति न तु शोभते इत्यादि समानेऽपि हि स्थगनव्यापारे लोकोत्तरेणैव व्यापारेणास्य विधानमिति तदेवोत्कृष्टम् । यथा वा—

प्रेयान्सोऽयमपाकृतः सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः ।
तावत्प्रत्युतपाणिसंपुटगलन्नीवीनिबन्धं धृतो-
धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥ ९८ ॥

अत्र पदानीति न तु द्वाराणि ।

---

धि-भावशवलतारूपा अलक्ष्यक्रमाः संभवन्तीति सूत्रार्थः ।

तत्र धातुरूपे पदैकदेशे संभोगशृङ्गाररसस्य व्यक्तिमुदाहरति-रइकेलीति । गाथासप्तशत्यां पद्यमिदम् ।

रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य ।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥

इति संस्कृतम् काऽपि सख्याः शिक्षार्थं पार्वत्या लज्जायामपि स्नेहाभिव्यक्तिवैदग्ध्यं वर्णयति । रुद्रस्य तृतीयनयनं पार्वत्या परिचुम्बितं सद् जयति सर्वोत्कर्षेण वर्तते कीदृशस्य रतिकेलौ सुरतक्रीडायां हृतं निवसनं गौर्या वस्त्रं येन स चासौ कराकिसलयाभ्यां हस्तपल्लवाभ्यां रुद्धं पिहितं पार्वत्या नयनयुगलं येन स तस्येत्यर्थः । गाथाछन्दः । अत्र शृङ्गाराभिव्यक्तौ जिधातुरूपपदैकदेशस्य प्राधान्यम् एवं च करद्वयस्य नेत्रद्वयापिधानव्यापृततयाऽलौकिकचुम्बनविधानवत्तया तृतीयनयनस्योत्कृष्टत्वमुच्यमानं रागातिशयहर्षलज्जादिसंपत्तिमुखेन रसातिशयं पुष्णाति तदाह अत्रेति । इत्यादीति । उक्तमिति शेषः । तृतीयनयनस्योत्कर्षे हेतुमाह—समानेऽपीति । करकृतनयनापिधानतुल्येऽपि स्थगनव्यापारे नयनपिधानक्रियायां लोकोत्तरेणैव अलौकिकेन चुम्बनात्मकेन अस्य तृतीयनेत्रस्य तदेव तादृशपिधानविशिष्टतृतीयनयनमेव उत्कृष्टं धन्यजीवितमित्यर्थः ॥ ९७ ॥

नामरूपपदैकदेशे सम्भोगशृङ्गारस्य व्यक्तिमुदाहरति-प्रेयानिति । सोऽयं प्रसिद्धः प्रेयान् प्रियतमः सशपथं शपथेन सहितं यथा तथा पादयोरानतः प्रणतः कान्तया च सशपथम् अपाकृतो निराकृतः सन्

तिङ्सुपोर्यथा—

पथि पथि शुकचञ्चूचारुराभाङ्कुराणां-
दिशि दिशि पवमानो वीरुधां लासकश्च।
नरि नरि किरति द्राक् सायकान् पुष्पधन्वा
पुरि पुरि विनिवृत्ता मानिनी मानचर्चा॥ ९९॥

अत्र किरतीति किरणस्य साध्यमानत्वम्। निवृत्तेति निवर्त्तनस्य सिद्धत्वं तिङा सुपा च तत्रापि क्तप्रत्ययेनाऽतीतत्वं द्योत्यते।

---

उन्मनाः उत्सुकमनाः वासभवनात् क्रीडागृहाद् द्वे त्रीणि वा द्वित्राण्येव पदानि द्वाराणि यावन्न याति न प्राप्नोति तावत् कृतः प्रणामो यस्मिन्कर्मणि तद्यथा तथा धावित्वेव ढौकित्वेव प्रत्युत विपरीतं धृतः स्थापितः पाणिसंपुटे प्रणामार्थं कृताञ्जलौ गलत् स्खलन् नीवीबन्धो नाभितलवसनग्रन्थिर्यस्मिन्कर्मणि तद्यथा तथेति धारणक्रियाविशेषणम् अत्र सम्भोगशृङ्गाराभिव्यक्तौ द्वाराद्विपदमपहाय पदग्रहणाद् द्वारपर्यन्तगमनासहिष्णुतया व्यङ्ग्ययोत्कण्ठातिशयो व्यज्यते तेन च संभोगो व्यज्यते इत्याह–अत्रेति। शार्दूलविक्रीडितं छन्दः॥ ९८॥

प्रत्ययरूपपदैकदेशयोस्तिङ्सुपोः सम्भोगरूपशृङ्गारस्य व्यक्तिमुदाहरति पथि पथीति। वसन्तवर्णनमिदम्। पथि पथि प्रतिमार्गम् अङ्कुराणां नूतनप्ररोहाणामाभा कान्तिः शुकचञ्चूनामिव चारुर्मनोहरा अस्ति तथा दिशि दिशि प्रतिदिशं वीरुधानां लतानां लासको नर्त्तकः पवनो वायुश्चास्ति पुष्पधन्वा कामो नरि नरि प्रतिपुरुषं द्राक् झटिति सायकान् पञ्चापि वाणान् किरति क्षिपति इत्थं कामोद्दीपने सति पुरि पुरि प्रतिनगरं मानिनीनां मानस्य चर्चा प्रसङ्गो वा विनिवृत्ता विशेषेण निवृत्ता गतेत्यर्थः। अत्र नरि नरि पुरि पुरीति वीप्सया एकस्यां पुरि एकस्मिन्नरि सायकपातेन सम्पूर्णनगरे त्रासात्सर्वासां मानभङ्ग इत्यतीवाखण्डाज्ञाशालित्वं मन्मथस्येति द्योत्यते। मालिनीछन्दः। अत्र किरतिनिवृत्तेतिपदैकदेशयोस्तिङ्सुपोः क्रमेण प्रत्ययार्थगतसाध्यत्वसिद्धत्वाभिव्यक्तिद्वारा रत्युद्दीपनातिशयपर्यवसानात्प्राधान्यम् तदाह–अत्रेति। किरतीति तिङा साध्यमानत्वं साध्यत्वं किरणस्य निवृत्तेति सुपा निवर्तनस्य सिद्धत्वं व्यज्यते॥९९॥

अथ प्रत्ययरूपपदैकदेशेषु सुप्तिङ्विशेषेषु विप्रलम्भशृङ्गारस्य व्यक्तिमुदाहरति–लिखन्निति। अमरुकशतके बहुदिनव्यापिमानवर्ती प्रति

यथा वा—

लिखन्नास्ते भूमिं वहिरवनतः प्राणदयितो-

निराहाराः सख्यः सततरुदितोच्छूननयनाः ।

परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-

स्तवावस्था चेयं विसृज कठिने मानमधुना ॥ १००॥

अत्र लिखन्निति न तु लिखतीति तथा आस्ते इति न त्वासित-इति अपि तु प्रसादपर्यन्तमास्ते इति भूमिमिति न तु भूमाविति न हि बुद्धिपूर्वकमपरं किञ्चिल्लिखतीति तिङ्सुब्विभक्तीनां व्यङ्ग्यम् सम्बन्धस्य यथा—

गामारुहम्मि गामे वसामि णअरट्ठिइं ण जाणामि ।

णाअरिआणं पइणो हरेमि जा होमि सा होमि ॥ १०१ ॥

अत्र नागरिकाणामिति षष्ठ्याः ।

---

सख्या उक्तिः। हे कठिने निर्दये ! तव प्राणानां दयितः प्रियः तव प्राण इव मे दयितो वा अवनतो नम्रः सन् भूमिं लिखन् शून्यहृदयतया विलिखन् वहिर्बाह्यदेशे आस्ते उपविष्टोऽस्ति तथा सख्यः सर्ववयस्या निराहारा भोजनरहिताः सत्यः सततं रुदितेन रोदनेन उच्छूने जातशोके नयने यासां तथाभूताः सन्ति । तथा पञ्जरस्थैः शुकै हसितं हसनं पठितं पठनमन्यच्च सर्वं भोजनादिकमपि परित्यक्तमुज्झितम् तवेयमसह्यपीडाजनिका अवस्था जाता अतोऽधुना वसन्तचन्द्रिकादिभिरुद्दामे मन्मथविलसिते सति मानं विसृज विशेषेण त्यजेत्यर्थः । शिखरिणी छन्दः । अत्र लिखन्निति शतृप्रत्ययेन लिखनस्य यावदुपवेशनकालिकत्वम् आस्ते इति वर्तमानत्वार्थकतङा उपवेशनस्य प्रसादरूपफलपर्यन्तत्वं भूमिमिति द्वितीयया भूमेरेव लिखनकर्मत्वावगमाद्बुद्धिपूर्वकलिखनाभावत्वं च व्यज्यते तदाह—अत्रेति । लिखन्निति उक्तमिति शेषः एवं सर्वत्र व्यङ्ग्यमिति तेन च व्यङ्ग्येन नायकस्य मोहातिशयो व्यज्यते तेन च विप्रलम्भोत्कर्षो व्यङ्ग्य इति ॥१००॥

षष्ठीरूपपदैकदेशस्य शृङ्गाररसव्यञ्जकत्वमुदाहरति—गामेति ।

ग्रामरुहाऽस्मि ग्रामे वसामि नगरस्थितिं न जानामि ।

नागरिकाणां पतीन् हरामि या भवामि सा भवामि ॥

इति संस्कृतम् । कलहे का त्वमस्मद्ग्रहे इत्यधिक्षिपन्तीं नागरिका-

रमणीयः क्षत्रियकुमार आसीदिति कालस्य। एषा हि भग्नमहेश्वरकार्मुकं दाशरथिं प्रति कुपितस्य भार्गवस्योक्तिः।

वचनस्य यथा—

ताणँ गुणग्गहणाणं ताणुक्कंठाणं तस्स पेम्मस्स।

ताणँ भणिआणं सुन्दर! एरिसिअँ जा अमवसाणम् ॥१०२॥

अत्र गुणग्रहणादीनां बहुत्वं प्रेम्णश्चैकत्वं द्योत्यते।

---

णां प्रति ग्रामीणाया उक्तिः। ग्रामरुहा ग्रामे उत्पन्नाऽस्मि ग्रामे वसामि अतो नगरस्थितिं नगरमर्यादां वैदग्धीं न जानामि नागरिकाणां नगरे भवानां पतीन् हरामि वशीकरोमि अत्र नागरिकानित्यपहाय नागरिकाणां पतीनित्युक्तं तथा च सम्बन्धषष्ठ्या नागरिकासम्बन्धेन पतिषु चातुर्यातिशयो द्योत्यते तेन च स्वस्यातिचातुर्यं व्यञ्जन्तदाह अत्रेति ॥ १०१ ॥

प्रत्ययात्मकलङ्रूपपदैकदेशस्य रौद्ररसव्यञ्जकत्वमुदाहरति–रमणीय इति। वीरचरिते नाटके परशुरामस्योक्तिः। कालस्येति कालार्थकलकारस्य रौद्ररसव्यञ्जकत्वमिति शेषः अत्रासीदित्यतीतकालबोधकलङा मत्क्रोधकवलितस्यास्य क्षत्रियकुमारस्य रमणीयत्वप्रतीतन्न तु वर्तमानं भविष्यद्वेति व्यज्यते तेन क्षणादेनं संहरामीति प्रतीत्या क्रोधातिशयो व्यज्यते ॥

प्रत्ययविशेषात्मकपदैकदेशस्य विप्रलम्भशृङ्गारव्यञ्जकत्वमुदाहरति—ताणमिति।

तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः।

तासाम्भणतीनां सुन्दर! ईदृशं जातमवसानम् ॥

इतिसंस्कृतम्। पूर्वं बहुतरगुणश्रवणादिभिरनुरागातिशयं प्रकटयति अनन्तरमन्यत्राऽऽसक्ते नायके कस्याश्चिदुक्तिः। हे सुन्दर! तेषां गुणग्रहणानां गुणवर्णनानां तासामुत्कण्ठानां मम सान्निध्ये जातानां तासां भणतीनां त्वमेव जीवितसर्वस्वमित्यादिवचनानां तस्य प्रेम्णः मद्वृत्तेस्त्वद्विषयानुरागस्य ईदृशमेवंविधापराधकलुषमवसानं परिपाको जातमित्यर्थः। सर्वत्र तच्छब्दा अनिर्वचनीयार्थकाः। जघनविपुलाछन्दः। अत्र बहुवचनैकवचनाभ्यां प्रेम न कदा चिदन्यथा भावं प्राप्तमिति व्यज्यते तेन च विप्रलम्भोत्कर्षो व्यङ्ग्य इत्याह–अत्रेति। बहुत्वं बहुविधत्वम्। एकत्वमेकविधत्वम्। तथा च प्रेमहेतूनां गुणग्रहणादीनां नानाप्रकारत्वेऽपि तत्कार्यस्य प्रेम्ण एकजातीयत्वमेवेति भावः ॥ १०२ ॥

पुरुषव्यत्ययस्य यथा—

> रे रे चञ्चललोचनाञ्चितरुचे ! चेतः ! प्रमुच्य स्थिर-
> प्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि ।
> किं मन्ये विहरिष्यसे बत हतां मुञ्चान्तराशामिमा-
> मेषा कण्ठतटे कृता खलु शिला संसारवारान्निधौ ॥ १०३ ॥

अत्र प्रहासः । पूर्वनिपातस्य यथा—

> येषां दोर्बलमेव दुर्बलतया ते सम्मतास्तैरपि
> प्रायः केवलनीतिरीतिशरणैः कार्यं किमुर्वीश्वरैः ।
> ये क्ष्माशक्र ! पुनः पराक्रमनयस्वीकारकान्तक्रमा-
> स्ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम् ॥ १०४॥

अत्र पराक्रमस्य प्राधान्यमवगम्यते ।

---

पुरुषव्यत्ययस्य शान्तरसव्यञ्जकत्वमुदाहरति–रे रे इति । शान्तस्य सुन्दरीदर्शनेन क्षुभितं स्वचित्तं प्रति परिहासोक्तिः । चञ्चलाभ्यां लोचनाभ्यामञ्चिता प्रकटीकृता रुचिरभिलाषो यत्र एवंविध रे रे चेतः चित्त ! त्वं स्थिरं प्रेम यत्र तं महिमानं विषयानासक्त्यादिजनितमुत्कर्षं प्रमुच्य प्रकर्षेण त्यक्त्वा एणनयनां हरिणाक्षीमालोक्य किं कस्मान्नृत्यसि । नर्तनहेतुमाशङ्क्य निराकरोति अहं विहरिष्यसे इति किं त्वं मन्ये मन्यसे बतेति खेदे हतां निन्दितामिमां पूर्वोक्तां विहरणविषयिणीमन्तराशां मुञ्च यतः खलु निश्चयेन एषा स्त्री आशा वा संसारः प्रपञ्च एव वारां निधिः समुद्रस्तस्मिन् मज्जनायेति शेषः कण्ठतटे रिरंसया स्थितस्य सरागपुरुषस्य गलप्रदेशे शिला दृषत्कृता विधात्रा विहितेत्यर्थः । परिणामविरसत्वाद्धर्षो न युक्त इति भावः । मन्ये विहरिष्यसे इत्यत्र प्रहासे च मन्योपपदे इत्यादिना वचनव्यत्यासः । शार्दूलविक्रीडितं छन्दः । अत्र मध्यमोत्तमपुरुषविपर्ययेन प्रहासमभिव्यनक्ति प्रहासेन च शान्तरसप्रकर्षो व्यज्यते तदाह–अत्रेति ॥ १०३ ॥

पूर्वनिपातस्य भावव्यञ्जकत्वमुदाहरति–येषामिति । कश्चित् कवी राजानमाह येषां राज्ञां दोर्बलं बाहुबलमेवास्ति ते राजानो दुर्बलतया निर्बलत्वेन संमता वृद्धैः कथिता तैरपि उर्वीश्वरै राजभिः किं कार्यं न किमपि तैः कैः प्रायो बहुधा केवलं नीतिः राजधर्मशास्त्रं रीतिः

विभक्तिविशेषस्य यथा—

प्रधनाध्वनि धीरधनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम् ।
दिवसेन तु नरप ! भवानयुद्ध विधिसिद्धसाधुवादपरम् ॥१०५॥

अत्र दिवसेनेत्यपवर्गेतृतीया फलप्राप्तिं द्योतयति ।

भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं-
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।
साक्षात्कामं नवमिव रतिर्मालती माधवं यद्
गाढोत्कण्ठालुलितलुलितैरङ्गकैस्ताम्यतीति ॥ १०६ ॥

---

नीतिप्रतिपादितो वर्तनप्रकारस्तन्मात्रशरणैः के तर्हि श्रेष्ठास्तत्राह हे क्ष्माशक्र पृथिवीन्द्र ! ये पुनः ये तु पराक्रमनययोः शौर्यनीत्योः स्वीकारेण कान्तः सुन्दरः क्रमः पूर्वं पराक्रमस्ततो नीतिरित्याचारपरिपाटी येषान्ते तर्हि तानेवाश्रयस्वेत्यत्राह ते तथाविधाः त्रिजगति त्रिभुवनेऽपि न स्युरेव यदि वा स्युस्तर्हि द्वित्राः द्वौ वा त्रयो वा तथापि परं केवलं भवादृशाः त्वत्तुल्याः पवित्राः प्रशस्ताः नैवेत्यर्थः । द्वितीयो भूलोकेऽसंभावित एवेति भावः । शार्दूलविक्रीडितं छन्दः । अत्र पराक्रमनयेत्यत्र नयपदस्याल्पाच्तरत्वेऽपि पराक्रमपदस्याभ्यर्हितत्वेन पूर्वनिपातकरणेन प्राधान्यमवगम्यते द्योत्यते तेन नयस्वीकारो राजोत्कर्षद्वारा राजविषयकरतिं पुष्णातीति भावव्यञ्जकत्वन्तदाह-अत्रेति ॥ १०४ ॥

उपपदविभक्तिविशेषस्य भावव्यञ्जकत्वमुदाहरति-प्रधनेति । हे नरप ! धीराणां वीराणां यानि धनूंषि तेषां ध्वनिं टङ्कारं बिभर्तीति तथाभूते प्रधनाध्वनि संग्राममार्गे तव विधुरैः शत्रुभिः । दिवसमभिव्याप्य अयोधि युद्धमकारि तव शत्रूणां युद्धेन नेष्टप्राप्तिरिति भावः । भवाँस्तु दिवसेन विधेर्ब्रह्मणः सिद्धानां देवयोनिविशेषाणां च साधु साध्वितिवादस्य पदं स्थानं यथा स्यात्तथा अयुद्ध युद्धं कृतवानित्यर्थः । गीतिश्छन्दः । अत्र युद्धरूपक्रियायाः विजयप्राप्तिरूपं फलं दिवसेनेत्यपवर्गतृतीयया व्यज्यते तेन च राजविषयकभावप्रकर्षो व्यज्यते इत्याह-अत्रेति ॥ १०५ ॥

कप्रत्ययरूपप्रकृत्येकदेशस्य विप्रलम्भशृङ्गारव्यञ्जकत्वमुदाहरति-भूय इति । मालतीमाधवप्रकरणे कामन्दकीवचनम् । भवनस्य वासगृहस्य या वलभी उपरितनमण्डपो गृहाच्छादनवक्रदारु वा तत्र तुङ्ग-

अत्रानुकम्पावृत्तेः करूपतद्धितस्य ।

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो-
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥ १०७ ॥

अत्र प्रशब्दस्योपसर्गस्य ।

---

महद् उन्नतं वा यद्वातायनं गवाक्षस्तत्र स्थिता मालती भूयो भूयो-वारं वारं सविधया मालतीतातगृहसन्निहितया नगररथ्यया राजमार्गेण पर्यटन्तमितस्ततो गच्छन्तं माधवं रतिः कामभार्या नवं द्वाहानन्तरमुत्पन्नं काममिव साक्षात्प्रत्यक्षं न तु चित्रादौ दृष्ट्वा दृष्ट्वा पुनः पुनरवलोक्य गाढा दृढा या उत्कण्ठा आकाङ्क्षा औत्सुक्यं वा तया ललितललितैरातिखिन्नैरातिम्लानैर्वा अङ्कैः अनुकम्प्यैरङ्गैः ताम्यति ग्लायति इति यत्तल्लवङ्गिकया कथितमित्यन्वयः । मन्दाक्रान्ता छन्दः । अत्राऽनुकम्पार्थककरूपतद्धितव्यञ्ज्येन सौकुमार्येण दुःखासहिष्णुत्वाभिव्यक्तिद्वारा विप्रलम्भोत्कर्षस्तदाह-अत्रेति । अनुकम्पावृत्तेरनुकम्पाद्योतकस्य विप्रलम्भशृङ्गारव्यञ्जकत्वमिति शेषः ॥१०६ ॥

उपसर्गरूपप्रकृत्येकदेशस्य विप्रलम्भशृङ्गारव्यञ्जकत्वमुदाहरति-परिच्छेदेति । मालतीमाधवे मकरन्दं प्रति माधवस्य स्वावस्थाकथनम् । कोऽप्यनिर्वचनीयो विकारः कामजो भावः मम अन्तःकरणं जडयति मोहयति इन्द्रियवृत्तिं स्तब्धयति तापं विरहसंतापं च कुरुते कथंभूतः परिच्छेदमियत्तां विरामं वा अतीतोऽतिक्रान्तः सकलानां वाचकलाक्षणिकव्यञ्जकानां वचनानां शब्दानामविषयोऽगोचरः तैर्निर्वक्तुमशक्यः पुनरन्यदा कालान्तरे अस्मिञ्जन्मनि अनुभवपथमनुभवविषयत्वं यो न गतवान् न प्राप्तः तथा विवेकस्य दोषगुणविभागस्य प्रध्वंसाद् अत्यन्तनाशाद् उपचितो वृद्धिं प्राप्तो यो महामोहः सकलविषयाणां विपरीतज्ञानं यत्र तादृशश्चासौ गहनश्च दुर्लङ्घ्यस्तादृश इत्यर्थः । शिखरिणी छन्दः । अत्र प्रध्वंसेति प्रशब्देन विवेकसमूलोन्मूलनरूपो ध्वंसप्रकर्षो द्योत्यते तेन ध्वंसप्रकर्षः तेन रागातिशयः तेनापि माधवस्य विप्रलम्भशृङ्गारप्रकर्षो व्यङ्ग्य इत्याह-अत्रेति । विप्रलम्भशृङ्गारव्यञ्जकत्वमिति शेषः ॥ १०७ ॥

कृतं च गर्वाभिमुखं मनस्त्वया किमन्यदेवं निहताश्च नो द्विषः ।
तमांसि तिष्ठन्ति हि तावदंशुमान्न यावदायात्युदयाद्रिमौलिताम् ॥१०८॥

अत्र तुल्ययोगिताद्योतकस्य च इति निपातस्य ।

रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-
मस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम् ।
वन्दीवैष यशांसि गायति मरुद्यस्यैकवाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः ॥ १०९ ॥

---

निपातरूपपदैकदेशस्य वीररसव्यञ्जकत्वमुदाहरति–कृतमिति । राजानम्प्रति मन्त्रिण उक्तिः हे राजन् ! त्वया मनो गर्वाभिमुखमहंकारसंमुखं कृतं च नोऽस्माकं द्विषः शत्रवो निहताश्च एवं सति अन्यच्छत्रादिग्रहणं किम् अफलमित्यर्थः । अत्र वैधर्म्येण दृष्टान्तमाह–तमांसीति तमांसि तावत्तिष्ठन्ति यावदंशुमान्सूर्यः उदयाद्रेर्मौलितां शिरोऽलङ्कारतां नायाति न प्राप्नोति तस्मिन्सति न तिष्ठन्तीत्यर्थः । वंशस्थवृत्तम् । अत्र चकाररूपनिपातेन मनोगर्वाभिमुखीकरणारिहननक्रिययोस्तुल्यकालतारूपः समुच्चयालङ्कारः तद्द्वारा वीररसप्रकर्षो व्यज्यते तदाह–अत्रेति । निपातस्य समुच्चयालङ्कारव्यञ्जनद्वारा वीररसव्यञ्जकत्वमिति शेषः ॥ १०८ ॥

अथ बहूनां वीररसव्यञ्जकत्वमुदाहरति–रामोऽसाविति । राघवानन्दनाटके रावणमुद्दिश्य विभीषणोक्तिः । असौ खरादिनिहन्ता रामो विक्रमगुणैः विक्रमोत्थैः प्रशस्तैर्वा गुणैरलौकिकगाम्भीर्यादिभिर्भुवनेषु त्रिलोकेषु परामुत्कृष्टां सिद्धिं जयरूपां प्राप्तोऽस्ति तं रामं देवो दिव्यज्ञानवानपि भवान् यदि यद् न जानाति तद् अस्माकं भाग्यस्य दैवस्य विपर्ययाद् अन्यथापरिणामादेव तदेव विक्रमगुणोदाहरणमाह–वन्दीति एष मरुद् वायुर्वन्दीव वैतालिक इव सप्तभिः स्वरैर्निषादादिभिः यस्य रामस्य यशांसि गायतीवेत्युत्प्रेक्षागर्भे, कथंभूतैः स्वरैः एकवाणाहत्या एकशराघातेन जातानि यानि श्रेणीभूतविशालतालानां विवराणि रन्ध्राणि तैरुद्गीर्णा प्रकाशितास्तैरित्यर्थः । शार्दूलविक्रीडितं छन्दः । अत्रासाविति सर्वनाम्नः, भुवनेष्विति न तु देशेष्विति भुवनेष्विति भुवनरूपप्रातिपदिकस्य बहुवचनस्य च विक्रमगुणैरिति न तु गुणेन दोषैर्वेति प्रातिपदिकवचनयोर्वीररसव्यञ्जकत्वं किं च अस्मद्भाग्येत्यत्र न त्वद्भाग्येति न मद्भाग्येति कृतं-

अत्रासाविति भुवनेष्विति गुणैरिति सर्वनामप्रातिपदिकवचनानां-न त्वदिति न मदिति अपि तु अस्मदित्यस्य सर्वाक्षेपिणः, भाग्य-विपर्ययादित्यन्यथासंपत्तिमुखेन न त्वभावमुखेनाभिधानस्य ।

तरुणिमनि कलयति कलामनुमदनधनुर्भ्रुवोः पठत्यग्रे ।
अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना॥११०॥

अत्र इमनिजव्ययीभावकर्मभूताधाराणां स्वरूपस्य तरुणत्वे इति धनुषः समीप इति मौलौ वसतीति त्वादिभिस्तुल्ये एषां वाचकत्वे अस्ति कश्चित्स्वरूपस्य विशेषो यश्चमत्कारकारी स एव व्यञ्जकत्वं प्राप्नोति ।

एवमन्येषामपि बोद्धव्यम्। वर्णरचनानां व्यञ्जकत्वं गुणस्वरूपनि-रूपणे उदाहरिष्यते अपिशब्दात्प्रबन्धेषु नाटकादिषु । एवं रसादीनां-पूर्वगणितभेदाभ्यां सह षड्भेदाः ।

---

तेनास्मदित्यस्य बहुवचनसिद्धतया सर्वराक्षसापेक्षकत्वं, तथा भाग्यविपर्ययादित्यन्यथासम्पत्तिमुखेन दुर्भाग्यरूपेण उक्तं नत्व-भाग्यादित्यभावमुखेन अतस्तथाविधानेन अभाग्यविरहेऽपि भाग्या-न्येव तादृशत्वेन परिणतानीति व्यज्यते तदाह—अत्रासाविति ॥ १०९ ॥

बहूनां शृङ्गाररसव्यञ्जकत्वमुदाहरति—तरुणीति । इयमेषा चकि-तस्य हरिणस्येव चले चञ्चले नयने यस्याः सा सकलललनानां-मौलिमधिवसति सकलसुन्दरीचूडामणित्वं प्राप्नोति कस्मिन्सति तरुणिमनि तारुण्ये कलां कटाक्षविक्षेपाद्युपचयरूपां कलयति शिक्ष-यति सति अर्थान्नायिकायै पुनः कस्मिन् सति भ्रुवोरग्रे भ्रूलताग्रे शिष्यभूते अनुमदनधनुः मदनधनुषः कामचापस्य गुरुभूतस्य अनु समीपे पठति सति अर्थात् कलाः । गीतिश्छन्दः । अत्र सुकुमाराक्ष-रेण इमनिचा नवं वयः प्रतीयते तरुणत्वे इत्युक्तौ तु प्रत्ययस्य प्रौ-ढाक्षरतया वयसोऽपि प्रौढत्वं प्रतीयेत अनुमदनधनुरिति पूर्वपदार्थ-प्रधानाव्ययीभावसमासेन उत्तरपदार्थीभूतधनुषोऽप्राधान्यं प्रकट-यता तन्निरपेक्षवशीकरणसामर्थ्यं भ्रूलताग्रस्य प्रत्याय्यते तथा मौ-लिमिति कर्मप्रत्ययेन कर्मीभूतसकलललनामौलिव्याप्तिसूचनद्वारा सौन्दर्यातिशयो व्यज्यते मौलौ इत्युक्तौ तु आधारस्यैकदेशवृत्तिता-या अपि सम्भवाद्व्याप्तिर्न प्रतीयेत एवं चेमनिजादीनामेवोक्तव्यङ्ग्य-व्यञ्जनद्वारा शृङ्गाररसव्यञ्जकत्वमित्याह—अत्रेति ॥ ११० ॥

(६२) भेदास्तदेकपञ्चाशत्।

व्याख्याताः।

(६३) तेषां चान्योन्ययोजने ॥ ४३ ॥

संकरेण त्रिरूपेण संसृष्ट्या चैकरूपया।

(६४) वेदखाब्धिवियच्चन्द्राः (१-०-४-०४)

शुद्धभेदैः सह।

(६५) शरेषुयुगखेन्दवः (१-०-४-५-५) ॥ ४४ ॥

---

उपसंहरति-एवमिति। अन्येषां पदैकदेशादीनां बोद्धव्यं व्यञ्जकत्वमिति शेषः। उदाहरिष्यते अष्टमोल्लासे अपिशब्दाद् वर्णेष्वपीत्यपिशब्दाद् नाटकादिषु प्रबन्धेषु रसादयो व्यङ्ग्या इति शेषः। एवम् उक्तरीत्या भेदाभ्यां पदवाक्यप्रकाश्याभ्यां षडिति वाक्य-पद-पदैकदेश-रचना-वर्ण-प्रबन्ध-प्रकाश्यतया रसादीनामलक्ष्यक्रमाणां षड्भेदा भवन्तीत्यर्थः।

उक्तभेदान्परिगणयति—भेदा इति। व्याख्याताः पूर्वगणनेन व्याख्यातप्रायाः। तथा हि अविवक्षितवाच्यस्य अर्थान्तरसङ्क्रमितात्यन्ततिरस्कृतवाच्यतया द्वौ भेदौ तौ च प्रत्येकं पद-वाक्ययोरिति चत्वारः। विवक्षितान्यपरवाच्येषु मध्ये असंलक्ष्यक्रमव्यङ्ग्यस्य उपदर्शितरीत्या षट् संलक्ष्यक्रमव्यङ्ग्यस्य तु एकचत्वारिंशद्भेदाः शब्दशक्तिमूलस्य द्वौ भेदौ तौ च प्रत्येकं पद्-वाक्ययोरिति चत्वारः अर्थशक्त्युद्भवस्य द्वादश भेदाः ते च प्रत्येकं पदवाक्यप्रबन्धगता इति षट्त्रिंशद् उभयशक्त्युद्भवस्त्वेक इत्येकचत्वारिंशद् इति मिलित्वा शुद्धस्य ध्वनेरेकपञ्चाशद्भेदाः।

न केवलं शुद्धा एवैकपञ्चाशद्भेदा भवन्ति यावत्तेषां स्वप्रभेदैरेकपञ्चाशता संशयाऽऽस्पदत्वेनानुग्राह्यानुग्राहकतयैकव्यञ्जकानुप्रवेशेन चेति त्रिविधेन सङ्करेण परस्परनिरपेक्षरूपयैकप्रकारया संसृष्ट्या चेति चतुर्भिर्गुणने।

इत्थं शुद्धभेदानुक्त्वा सङ्कीर्णभेदानाह-तेषामिति। एकपञ्चाशतो भेदानां त्रिरूपेण सङ्करेण एकरूपया संसृष्ट्या च अन्योन्ययोजने परस्परगुणने सति वेदाश्चत्वारः खं विन्दुः अब्धयश्चत्वारः वियद्बिन्दुः चन्द्र एक एषां वामतो गणने चतुरुत्तरचतुःशताधिकायुतपरिमिताः (१०४०४) भेदाः संपद्यन्ते तदेव दर्शयति—न केवलमित्यादि।

तत्र दिङ्मात्रमुदाह्रियते ।

खणपाहुणिआ देअर जाआए सुहअ किंपि दे भणिआ ।
रुअइ पडोएर वलहीघरम्मि अणुणिज्जउ वराई ॥ १११ ॥

अत्रानुनयः किमुपभोगलक्षणेऽर्थान्तरे संक्रमितः किमनुरणनन्यायेनोपभोग एव व्यङ्ग्ये व्यञ्जक इति सन्देहः ।

---

यावत्किन्तु तेषामुक्तसंख्याकानां शुद्धभेदानामेकपञ्चाशता एकपञ्चाशत्संख्याकैः स्वप्रभेदैः चतुर्भिर्गुणने त्रिविधेन सङ्करेण साक्षात्परंपरया वा यथाकथंचित् परस्परसापेक्षः संयोगः सङ्करः तद्भिन्नः संयोगः संसृष्टिः । तथा हि एकपञ्चाशतो भेदानां एकपञ्चाशता गुणने एकोत्तरषट्शताधिकसहस्रद्वयं भवति योजनं च संसृष्ट्यादिचतुःप्रकारैरिति तावतां चतुर्भिर्गुणने यथोक्तसंख्या संपद्यते अनुग्राह्यानुग्राहकतया अङ्गाङ्गिभावेन सर्वमिदं दशमोल्लासे स्फुटीभविष्यति शुद्धभेदैः सहेति प्रागुक्तैकपञ्चाशद्भेदैः । शराः पञ्च इषवः पञ्च युगानि चत्वारि खं विन्दुः इन्दुरेकः तथा च ( १०४५५ ) इति भेदाः संपद्यन्ते ।

संशयास्पदं ध्वनिद्वयसङ्करमुदाहरति–खणेति ।

क्षणप्राघुणिका देवरजायया सुभग ! किमपि ते भणिता ।
रोदिति गृहपश्चाद्भागवलभीगृहेऽनुनीयतां वराकी ।

इति संस्कृतम् । देवरानुरक्तां तत्पत्न्या कटूक्तामनुनेतुं देवरं प्रति कस्याश्चिदुक्तिः । हे सुभग सुन्दर ! हे देवर ! ते तव यः क्षणउत्सवस्तत्र प्राघुणिकाऽतिथिः सा ते तव जायया पत्न्या किमप्यवाच्यं भणिता उक्ता सती गृहस्य पश्चाद्भागे यद्वलभीगृहमुपरितनगृहं तत्र रोदिति अतो वराकी दीनाऽनुनीयतां, समाधीयतामित्यर्थः । अत्रानुनयो रोदननिवर्त्तको व्यापारः तेन संभोगो व्यङ्ग्यः गृहपश्चाद्भागेत्यनेन विजनता क्षणप्राघुणिकेत्यनेन दुःखातिशयौचित्यम् अत्र तात्पर्यानुपपत्त्या किमत्रोपभोगगतातिशयप्रतिपत्तये लक्षणयाऽनुनयतेरुपभोग एवार्थः । उत रोदननिवर्तकानुनय एवार्थउपभोगो व्यङ्ग्य इत्यत्र साधकबाधकमानाभावात्सन्देहस्तदाह–अत्रेति एवं चाति व्यङ्ग्यसन्देहेन एतन्मूलक एवाविवक्षितवाच्यध्वनिविवक्षितान्यपरवाच्यध्वन्योरपि सन्देहरूपः सङ्करालङ्कारः ॥ १११ ॥

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना–
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥ ११२ ॥

अत्र लिप्तेति पयोदसुहृदामिति च अत्यन्ततिरस्कृतवाच्ययोः संसृष्टिः । ताभ्यां सह रामोऽस्मीत्यर्थान्तरसङ्क्रमितवाच्यस्यानुग्राह्यानुग्राहकभावेन रामपदलक्षणैकव्यञ्जकानुप्रवेशेन चार्थान्तरसंक्रमितवाच्यरसध्वन्योः सङ्करः । एवमन्यदप्युदाहार्यम् ॥

इति काव्यप्रकाशे ध्वनिनिर्णयो नाम चतुर्थोल्लासः ।

---

अनुग्राह्यानुग्राहकैकव्यञ्जकानुप्रवेशरूपयोः सङ्करयोः संसृष्टेश्चैकमुदाहरणमाह—स्निग्धेति । विरहिणो रामस्योक्तिः । स्निग्धया श्लक्ष्णया श्यामलयाऽतिकृष्णया कान्त्या लिप्तं निविडसम्बद्धं वियदाकाशं यैस्ते तथा वेल्लन्त्यो बद्धपङ्क्तितया बहुतरं शोभन्त्यः सविलासं खेलन्त्यो वा वलाका वकपङ्क्त्यो येषु तथाभूताः घना मेघा एव घनाः निविडाः कामं यथेष्टं सन्तु तथा शीकरिणोऽम्बुकणशालिनो वाता अपि कामं सन्तु तथा पयोदो मेघः सुहृन्मित्रं येषान्तेषां मयूराणां कला अव्यक्तमधुरा आनन्दकेका आनन्दजन्या वाण्यः कामं सन्तु तावता न मे क्षतिरिति भावः । तदेवाह दृढमतिशयेन कठोरहृदयोऽहं रामः सकलदुःखपात्रत्वेन प्रसिद्धः अस्मि अत एव सर्वं पूर्वोक्तोद्दीपकातिशयजनितं क्लेशं सहे वैदेही सीता तु राजापत्यत्वात्स्त्रीत्वाच्च सुकुमारतया दुःखाक्षमा कथं भविष्यति कथं जीविष्यति ह हा हेतिनिपातसमुदायः खेदातिशये हे देवि धीरा भव धैर्यं कुरु । शार्दूलविक्रीडितं छन्दः ॥ द्रवद्रव्यसंयोगविशेषस्य लेपनस्याऽमूर्त्ते वियति कान्त्याऽसम्भवात् अचेतने मेघे चित्तवृत्तिविशेषस्य सौहृदस्यासम्भवाच्च व्यापने लेपनं केकाद्यनुबन्धित्वे सौहृदं चात्यन्ततिरस्कृतं तयोश्च परस्परनिरपेक्षतयाऽवस्थानात्संसृष्टिः तन्मूलिकैव ध्वन्योरपि संसृष्टिः एवमत्यन्ततिरस्कृतवाच्यध्वनिभ्यां सह अर्थान्तरसङ्क्रमितवाच्यस्य ध्वनेरनुग्राह्यानुग्राहकभावेन सङ्करः । रामपदेन च रामपदरूपैकव्यञ्जकानुप्रवेशेन अर्थान्तरसंक्रमितवाच्यरसध्वन्योः सङ्करस्तदाह–अत्रेति ॥ ११२ ॥

इति काव्यप्रकाशे नागेश्वरीटीकायां चतुर्थोल्लासः ॥

## अथ पञ्चमोल्लासः ।

एवं ध्वनौ निर्णीते गुणीभूतव्यङ्ग्यप्रभेदानाह—

( ६६ ) अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।
सन्दिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ॥ ४५ ॥
व्यङ्ग्यमेवंगुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः ।

कामिनीकुचकलशवद् गूढं चमत्करोति, अगूढं तु स्फुटतया वाच्यायमानमिति गुणीभूतमेव ।

अगूढं यथा—

यस्या सुहृत्कृततिरस्कृतिरेत्यतप्त-
सूचीव्यधव्यतिकरेण युनक्ति कर्णौ ।
काञ्चीगुणग्रथनभाजनमेष सोऽस्मि
जीवन्न सम्प्रति भवामि किमावहामि ॥११३॥

---

एवं भेदप्रभेदाभ्यां ध्वनौ उत्तमकाव्ये निर्णीते प्रदर्शिते गुणीभूतव्यङ्ग्यस्य मध्यमकाव्यस्य प्रभेदान् अवान्तरभेदान् आह अवसरसङ्गत्या दर्शयतीत्यर्थः-अगूढमिति । अगूढम् असहृदयैरपि झटिति संवेद्यम् अपरस्परवाक्यतात्पर्यविषयतया प्रधानस्य अङ्गमुपकारकं वाच्यस्य दुखसंवेद्यं संदिग्धेति संदिग्धप्राधान्यं तुल्यप्राधान्यञ्चेति द्वयं वाच्यव्यङ्ग्ययोश्चमत्कारजनने संदिग्धं सन्देहविषयीभूतं प्राधान्यं यत्र तत् । वाच्येन तुल्यं समानं प्राधान्यं यत्र तद् वाच्य-व्यङ्ग्ययोर्द्वयोरपि चमत्कारजनने क्षमत्वन्तुल्यता काका ध्वनेर्विकारेण आक्षिप्तं झटिति प्रकाशितम् असुन्दरं वाच्यापेक्षयाऽचारु एवंभूतं व्यङ्ग्यं गुणीभूतव्यङ्ग्ये मध्यमकाव्ये भवतीत्यर्थः । एवमेतेन कारणेन गुणीभूतव्यङ्ग्यस्य अष्टौ भिदा भेदाः स्मृताः कथिता इति सूत्रार्थः ॥

गूढस्य मुख्यत्वं सदृष्टान्तमाह-कामिनीति । यथा कामिनीकुचकलशस्य किञ्चिद्गूढतानिवन्धनमेव चारुत्वं तथा सहृदयैकवेद्यमेव व्यङ्ग्यं ध्वनित्वमुपयाति असहृदयैरपि वेद्यं तु गुणीभूतव्यङ्ग्यमेवेति भावः ॥

तत्रागूढव्यङ्ग्यमर्थान्तरसंक्रमितवाच्यमुदाहरति-यस्येति । कीचकपराभवं निवेदयन्तीं द्रौपदीम्प्रति बृहन्नलारूपस्यार्जुनस्योक्तिः ।

अत्र जीवन्नित्यर्थान्तरसंक्रामितवाच्यस्य।

उन्निद्रकोकनदरेणुपिशङ्गिताङ्गा-
गायन्ति मञ्जुमधुपा गृहदीर्घिकासु।
एतच्चकास्ति च रवेर्नवबन्धुजीव-
पुष्पच्छदाभमुदयाचलचुम्बिबिम्बम्॥ ११४॥

---

यस्य मम असुहृत् शत्रुः कृता तिरस्कृतिस्तिरस्कारो येन तथाभूतः सन् एत्य स्वयमेव मच्छरणमागत्य कर्णौ स्वस्यैव श्रवणे तप्तया सूच्या लोहशलाकया यो व्यधः वेधस्तस्य व्यतिकरेण पौनःपुन्येन युनक्ति सम्बध्नाति शरणागतस्य शत्रोस्तप्तशलाकया कर्णवेधनमिति पाश्चात्याचारः पुरा मन्नामश्रवणेनैव शत्रवो निजात्मानं धिक्कुर्वन्तः स्वहस्तेनैव कर्णवधं कृत्वा शरणमायान्तिस्म स एषः अहं सम्प्रति इदानीं काञ्चीगुणस्य ग्रथनं गुम्फनं तस्य भाजनं पात्रमस्मि तत्र नियुक्तोऽस्मि अतो जीवन्न भवामि न जीवामि अतः किमावहामि किं करामीत्यर्थः। वसन्ततिलका छन्दः। अत्र जीवन्निति पदं प्रकृष्टजीवनं लक्षयति नञा तदभावबोधे अनुतापादेव जीवनं निन्दतीत्यनुतापातिशयो व्यङ्ग्यः स च सर्वजनवेद्यत्वादगूढः। श्लाघ्यजीविततत्वस्यैव लक्ष्यत्वे तु अर्थान्तरसङ्क्रमः॥ ११३॥

अगूढमेव व्यङ्ग्यमत्यन्ततिरस्कृतवाच्यमुदाहरति-उन्निद्रेति। अतिश्रमालसतयाऽनाकलितप्रबोधसमयां नायकेन सह संसुप्तां सखीम्प्रति सख्या उक्तिः। उन्निद्रं विकलितं यत्कोकनदं रक्तपद्मं तस्य रेणुना परागेण पिशङ्गितानि पिशङ्गवर्णानि अङ्गानि येषान्ते मधुपा-भ्रमरा गृहदीर्घिकासु गृहवापीषु मञ्जु मनोहरं यथा स्यात्तथा गायन्ति गुञ्जारवं कुर्वन्ति। ननु सूर्योदयो मया प्रतीक्ष्यतेऽत आह— एतदिति। एतद्रवेः सूर्यस्य बिम्बं मण्डलं चकास्ति प्रकाशते कीदृग् उदयाचलचुम्बि तत्संस्पर्शि अत एव नवस्य नूतनस्य बन्धुजीवपुष्पच्छदस्य आभा कान्तिर्यस्मिंस्तत्। वसन्ततिलका छन्दः। अत्र मधुपा इत्यनेन मत्ता अपि जागरिता इति ध्वनिः। अत्र चुम्बतेर्वक्त्रसंयोगो मुख्योऽर्थः सचाचेतने रविबिम्बे बाधित इति संयोगमात्रं लक्ष्यतोऽस्यात्यन्ततिरस्कृतवाच्यत्वम्। व्यङ्ग्यश्चास्योषःकालारम्भः। स च वाक्यायमानतयाऽगूढ इति गुणीभूतव्यङ्ग्यरूपं मध्यमकाव्यमिदं तदाह-अत्रेति। व्यङ्ग्यमगूढमिति शेषः॥ ११५॥

अत्र चुम्बनस्यात्यन्ततिरस्कृतवाच्यस्य ।

अत्रासीत् फणिपाशबन्धनविधिः शक्त्या भवद्देवरे
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः ।
दिव्यैरिन्द्राजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः
केनाप्यत्र मृगाक्षि ! राक्षसपतेः कृत्ता च कण्ठाटवी ॥११५॥(१)

अत्र केनाप्यत्रेत्यर्थशक्तिमूलानुरणनरूपस्य । "तस्याप्यत्र" इति युक्तः पाठः । अपरस्य रसादेर्वाच्यस्य वा वाक्यार्थीभूतस्य अङ्गं रसादि अनुरणनरूपं वा ।

---

अगूढमेव व्यङ्ग्यमर्थशक्तिमूलव्यङ्ग्य उदाहरति-अत्रासीदिति । बालरामायणनाटके सीताम्प्रति अयोध्यामागच्छतो विमानस्थस्य-रामस्योक्तिः । एकस्या एव समरभुवस्तत्तत्कर्माधारतया नवनवायमानाद्भुतरसालम्बनत्वेन पुनः पुनरत्रेत्यस्योपादानं । हे मृगाक्षि ! अत्र समरभुवि फणिपाशेन नागपाशेन यद्बन्धनम् लक्ष्मणस्य मम च तस्य विधिरासीद् विधेर्दुर्लङ्घ्यत्वात् स्वपराभवगूहनम् शक्त्या आयुधविशेषेण भवत्याः देवरे लक्ष्मणे वक्षसि उरसि गाढं दृढं ताडिते सति हनुमता द्रोणाद्रिः न त्वौषधमात्रम् आहृतः आनीतः अनेन हनुमतो विक्रमप्रकाशनम् भवद्देवरे इत्यनेन वात्सल्यप्रकाशनम् इन्द्रजिद्रावणपुत्रः दिव्यैः दिवि भवैः लक्ष्मणशरैः लोकान्तरं-स्वर्गं प्रापितः गमितः इन्द्रजिदित्यनेन इन्द्रतोऽपि लक्ष्मणप्रकर्षः । राक्षसपते रावणस्य कण्ठरूपाऽटवी अरण्यं केनाऽपीति हेलायाम् । कृत्ता छिन्नेत्यर्थः । धीरोदात्तेन रामेण स्वाहङ्कारप्रकटनभिया मयेति नोक्तम् । शार्दूलविक्रीडितं छन्दः । अत्र केनापीत्यर्थशक्तिमूलं संलक्ष्यक्रमं रामरूपं व्यङ्ग्यमगूढन्तदाह-अत्रेति । अनुरणनरूपस्य व्यङ्ग्यस्यागूढत्वमिति शेषः । केनाप्यत्रेत्यस्य स्थाने तस्याप्यत्रेति पाठे गूढतया ध्वनित्वमिति स पाठो युक्तः । तस्येत्यस्य तत्तत्प्रभावातिशयत्वेन ख्यातस्येत्यर्थः ॥ ११५ ॥

अपरस्याङ्गमिति द्वितीयं भेदं विवृणोति-अपरस्येति । अपरशब्दार्थमाह-रसादेरित्यादि । आदिना भाव-रसाभास-भावाभास-भावशान्ति-भावोदय-भावसन्धि-भावशबलतारूपस्यासंलक्ष्यक्रमस्य संलक्ष्यक्रमस्य च ग्रहणं, वाच्यस्य वाक्यार्थस्य वाच्यार्थं विशिनष्टि वाक्यार्थीभूतस्येति वाक्यतात्पर्यविषयतया प्रधानस्येत्यर्थः । अङ्गम्

यथा—

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥ ११६ ॥

अत्र शृङ्गारः करुणस्य ।

कैलासालयभाललोचनरुचा निर्वर्त्तितालक्तक-
व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम् ।
स्पर्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः
कान्तिः कोकनदानुकारिसरसा सद्यः समुत्सार्यते ॥ ११७ ॥

---

उपकारकम् उत्कर्षकं वा रसादि असंलक्ष्यक्रमरूपम् अनुरणनरूपम् संलक्ष्यक्रमम् एवं चासंलक्ष्यक्रमम् अनुस्वानाभसंलक्ष्यक्रमं चेति द्विविधमपराङ्गं व्यङ्गमिति भावः ।

रसस्य रसाङ्गतायाम् अपराङ्गव्यङ्ग्यं मध्यमकाव्यमुदाहरति—अयं स इति । महाभारते स्त्रीपर्वणि भूरिश्रवसो रणभूमिपतितं हस्तमादाय तद्वधूप्रलापोक्तिः । स पूर्वानुभूतरशनोत्कर्षणादितत्तच्छृङ्गारावस्थः करो हस्तः अयं दृश्यमानदुरवस्थः कथंभूतः रशनायाः काञ्च्या उत्कर्षी आकर्षकः तथा पीनयोः पुष्टयोः स्तनयोर्विमर्दनो विमर्दकारी तथा नाभिश्च ऊरू च जघनं चैतानि स्पृशति तच्छीलः तथा नीव्याः नाभितलवसनग्रन्थेः विस्रंसनः विमोचकः । "जघनं कटिपुरोभाग" इति मेदिनी । अत्र शृङ्गारस्य करुणरसपोषकत्वेन शृङ्गारः करुणस्याङ्गमित्याह—अत्रेति । अङ्गमिति शेषः । अत्र करुणरस एव प्रधानं शोकस्योल्वणतया करुणस्यैवास्वादगोचरत्वात् शोकावेशाच्छृङ्गारस्यापुष्टत्वेनाङ्गत्वमिति ॥ ११६ ॥

रसस्य भावाङ्गतायामपराङ्गव्यङ्ग्य मध्यमकाव्यमुदाहरति—कैलासेति । भगवति भवे प्रणति परे सति भवान्या मानभङ्गेन नेत्रारुण्यनाशवर्णनम् गिरिभुवो भवान्याः सा पादनखानां द्युतिः वो युष्मान् सदा त्रायतां रक्षतु कीदृशी कैलास आलयः स्थानं यस्य तस्य शंभोः भालसम्बन्धिनो लोचनस्य रुचाऽरुणकान्त्या निर्वर्तिताः संपादिता अलक्तकस्य लाक्षारसस्य व्यक्तिः प्रकटता यस्यां सा एतेन शिवस्य भवानीपादपतनं ध्वन्यते सा का यया नखद्युत्या सुदृढं यथा तथा रूढा प्रवृद्धा कोकनदस्य रक्तोत्पलस्य अनुकारः सादृश्यं यस्यां सा अत एव सरसाऽतिशयिता नेत्रयोः कान्तिः कोपजनितशोणद्युतिः सद्यस्तत्क्षणं समुत्सार्यते निःशेषं दूरीक्रियते अत्रोत्प्रेक्षते

अत्र भावस्य रसः ।

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधयः
तानेतानपि बिभ्रती किमपि न क्लान्ताऽसि तुभ्यन्नमः ।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद् भुवः
तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥ ११८ ॥

अत्र भूविषयो रत्याख्यो भावो राजविषयस्य रतिभावस्य ।

बन्दीकृत्य नृपद्विषां मृगदृशस्ताः पश्यतां प्रेयसां-
श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः ।
अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारां निधे
विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यार्थिभिः स्तूयसे ॥११९॥

---

स्पर्द्धेति स्पर्धाया विजिगीषाया बन्धेन सातत्येन समृद्ध्या अनिदीप्तयेव । अत्र आयतामित्यनेन प्रतीतस्य कविनिष्ठपार्वतीविषयकरत्याख्यभावस्य भवनिष्ठपार्वतीविषयकसम्भोगरूपः शृङ्गारोऽङ्गमित्याह—अत्रेति । कविनिष्ठपार्वतीविषयकप्रीतिरूपभावे भवानीपरमेश्वरयोः शृङ्गारोऽङ्गमिति भावः ॥ ११७ ॥

भावस्य भावाङ्गतायामपराङ्गव्यङ्ग्यं मध्यमकाव्यमुदाहरति—अत्युच्चा इति । पञ्चाक्षरीनामा कविर्भोजं स्तौति अत्र पूर्वार्धे हे पृथ्वीति उत्तरार्द्धे राजन्नित्यध्याहारः । अत्युच्चा अत्युन्नता गिरयः पर्वताः परितः सर्वतः स्फुरन्ति समन्ताद्व्याप्य तिष्ठन्ति तथा स्फारा अतिविस्तृता अम्भोधयः समुद्रा अपि स्फुरन्ति हे पृथ्वि ! तानेतान् गिरिसमुद्रान् बिभ्रत्यपि धारयन्त्यपि त्वं किमपि किंचिदपि न क्लान्ता न श्रान्ताऽसि अतस्तुभ्यन्नम इति भुवः पृथिव्याः स्तुतिमाश्चर्येण गिर्यादिधारणेऽप्यक्लमादाश्चर्यं यावन्मुहुर्मुहुः प्रस्तौमि करोमि तावद् हे राजन् ! इमामतद्विशिष्टां भुवं बिभ्रत् पालयन्नेव तव भुजो न तु भुजौ स्मृतः ततो भुजस्मरणाद् वाचः पृथिवीस्तुतिरूपा मुद्रिताः संकुचिता इत्यर्थः । शार्दूलविक्रीडितं छन्दः । अत्र भूविषयककविनिष्ठरतिभावो राजविषयककविनिष्ठरतिभावस्याङ्गन्तदाह—अत्रेति ११८

रसाभास-भावाभासयोर्भावाङ्गतायामपराङ्गव्यङ्ग्यं मध्यमकाव्यमुदाहरति—बन्दीकृत्येति । कश्चित्कवी राजानं स्तौति हे नृप ! ते तव सैनिका भटाः येषां द्विषां रिपूणां मृगदृशो हरिणाक्षीर्बन्दीकृत्य हठादा-

अत्र भावस्य रसाभास-भावाभासौ प्रथमार्धद्वितीयार्धद्योत्यौ।

अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥१२०॥

अत्र भावस्य भावप्रशमः।

साकं कुरङ्गकदृशा मधुपानलीलां कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते।
अन्याभिधायि तव नाम विभो! गृहीतं केनापि तत्र विषमामकरोदवस्थाम्१२१

---

कृष्य पश्यतां प्रेयसाम् अनादरं षष्ठी पश्यतः प्रियतमाननादृत्य ता-मृगदृशः श्लिष्यन्ति आलिङ्गन्ति प्रणमन्ति रिरंसया कोपशान्तये च पादपतनेन प्रसादयन्ति लान्ति आदानं कुर्वन्ति आत्मसात्कुर्वन्ति परितः कामशास्त्रानुक्तस्थलेऽपि उन्मत्तवच्चुम्बन्ति इत्थमनुचितप्रवर्तायिताऽपि त्वं तैः प्रत्यर्थिभिर्वैरिभिः इति अमुना प्रकारेण स्तूयसे कथं हे औचित्यवारां निधे औचित्यसमुद्र! त्वमस्माकं सर्वेषां सुकृतैः पुण्यैः दृशोर्निपतितोऽसि चक्षुषोर्गोचरतां प्राप्तोऽसि तत् त्वद्दर्शनादखिला विपदो विपत्तयः अस्माकं ध्वस्ता नष्टा इत्यर्थः। शार्दूलविक्रीडितं छन्दः। अत्र सैनिकनिष्ठः शृङ्गारोऽननुरक्तस्त्रीविषयतया परस्त्रीविषयकतया च प्रथमार्धे प्रवृत्तः। द्वितीयार्धे तु प्रत्यर्थिनिष्ठरतिरूपो भावो राजरूपशत्रुविषयकतयाऽऽहार्यत्वेन प्रवृत्तः उभावप्यनौचित्यप्रवृत्तत्वादाभासरूपौ तौ च रसाभास-भावाभासौ राजविषयककविनिष्ठरत्याख्यभावस्याङ्गभूतावित्याह-अत्रेति। अत्र च रसाभासस्य भावाभासस्य वाऽङ्गत्वेन ऊर्जस्विनामालङ्कारः ॥ ११९ ॥

भावशान्तेर्भावाङ्गतायामपराङ्गव्यङ्ग्यं मध्यमकाव्यमुदाहरति-अविरलेति। हे राजन्! अविरलं निरन्तरं करवालस्य खड्गस्य कम्पनैर्भ्रुकुटीकरणैस्तर्जनैः छिन्धि भिन्धीत्येवरूपैर्गर्जनैः सिंहनादरूपैः धान्येन धनवानिति वत्प्रकृत्यादित्वात्तृतीयाया अभेदोऽर्थः एतद्रूपो यस्तव वैरिणां मदो मदकार्यम् अस्माभिः मुहुः ददृशे दृष्टः स मदः तवेक्षणे त्वत्कर्तृके दर्शने सति क्षणात्क्वापि गतः पलायित इत्यर्थः। वैतालीयं छन्दः। अत्र वैरिणो मदाख्यो गर्वरूपो भावस्तस्य प्रशमः शान्तिः कविनिष्ठराजविषयकरतिभावेऽङ्गमित्याह-अत्रेति। भावस्य कविनिष्ठराजविषयकरत्याख्यभावस्य भावप्रशमः मदरूपभावस्य शान्तिः अङ्गमिति शेषः ॥ १२० ॥

भावोदयस्य भावाङ्गतायामपराङ्गव्यङ्ग्यं मध्यमकाव्यमुदाहरति—साकमिति। हे विभो! राजन् ते तव वैरिणि शत्रौ कुरङ्गकदृशा बाल-

अत्र त्रासोदयः ॥

असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विश्रम्भेष्वथ च रसिकः शैलदुहितुः ।
प्रमोदं वो दिश्यात्कपटबटुवेषापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥ १२२ ॥

अत्रावेगधैर्ययोः सन्धिः ।

पश्येत्कश्चिच्चल चपल रे का त्वराऽहं कुमारी
हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि ।
इत्थं पृथ्वीपरिवृढ ! भवद्विद्विषोऽरण्यवृत्तेः
कन्या कञ्चित्फलकिसलयान्याददानाऽभिधत्ते ॥ १२३ ॥

---

मृगनेत्रया सुहृद्भिः स्निग्धैरपि साकं मधुपानलीलां मद्यपानक्रीडां कर्तुं प्रवृत्ते सति अन्याभिधायि अनेकार्थकतया त्वद्भिन्नस्यापि बोधके तव नाम त्वद्वाचकं पदं कर्तृ केनापि जनेन गृहीतमुच्चारितं सत् तत्र वैरिणि विषमां कम्पादिकर्त्रीमवस्थां दशामकरोदित्यर्थः । वसन्ततिलका छन्दः । अत्र विषमावस्थाव्यङ्ग्यस्य त्रासरूपभावस्योदयः कविनिष्ठराजविषयकरत्याख्यभावस्याङ्गमित्याह-अत्रेति । त्रासोदयः त्रासरूपव्यभिचारिभावस्योदयः अङ्गमिति शेषः ॥ १२१ ॥

भावसन्धेर्भावाङ्गतायामपराङ्गव्यङ्ग्यं मध्यमकाव्यमुदाहरति-असोढेति । तपः कुर्वतीं भवानीं वटुवेषेण छलयतो महादेवस्य वर्णनमिदम् । कपटेन यो वटोर्ब्रह्मचारिणो वेषः कृत्रिमाकारविशेषस्तस्यापनयने त्यागे युगपत् समकालमेव त्वराशैथिल्याभ्यामभियुक्त आक्रान्तः स्मरहरः शिवो वो युष्मभ्यं प्रमोदमानन्दं दिश्याद्दद्यात् त्वराशैथिल्ययोर्हेतुगर्भभूते विशेषणे आह तत्काले पार्वत्याः बालत्वकाले उल्लसन् प्रादुर्भवन् असहभावो दुःसहत्वं यस्य तस्य तपसोऽसोढा सोढुमसमर्थः फलदाने विलम्बयितुमक्षमः अथ च शैलदुहितुः पार्वत्याः कथानां विश्रम्भेषु विश्वस्ततया क्रियमाणकथासु रसिकः प्रीतिमानित्यर्थः । शिखरिणी छन्दः । अत्र स्मरहरगतयोः त्वरापद-शैथिल्यपदगम्ययोरावेगधैर्याख्ययोर्भावयोः सन्धिः कविनिष्ठशिवविषयकरतिभावस्याङ्गमित्याह-अत्रेति । सन्धिः कविनिष्ठशिवविषयकरतिभावस्याङ्गमिति शेषः । भावसन्धिरलङ्कारः ॥ १२२ ॥

भावशबलतया भावाङ्गतायामपराङ्गव्यङ्ग्यं मध्यमकाव्यमुदाह-

अत्र शङ्काऽसूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता ।

एते च रसवदाद्यलङ्काराः । यद्यपि भावोदयभावसन्धिभावशबलत्वानि नालङ्कारतया उक्तानि, तथाऽपि कश्चिद् ब्रूयादित्येवमुक्तम् ।

यद्यपि स नास्ति कश्चिद्विषयः, यत्र ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदादिभिः सह सङ्करः संसृष्टिर्वा नास्ति तथाऽपि 'प्राधान्येन व्यपदेशा भवन्ती'ति क चित्केन चिद्व्यवहारः ।

जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृतालङ्काभर्तुर्वदनपरिपाटीषुघटना
मयाऽऽप्तं रामत्वं कुशलवसुता न त्वाधिगता ॥ १२४ ॥

---

रति-पश्येदिति । फलाद्याहरणसमये कस्मिंश्चित्कामुके जातानुरागाया वननृपकन्याया उक्तिवर्णनं हे पृथ्वीपरिवृढ भूस्वामिन् ! अरण्ये वृत्तिर्वर्तनं यस्य तस्य वनवासिनः भवद्विद्विषस्त्वच्छत्रोः कन्या कुमारी फलानि किसलयानि कोमलपल्लवाश्चादद्दाना गृह्णती सती कञ्चित्कामुकमित्थमभिधत्ते वक्ति कथं काश्चिज्जनः पश्येदिति शङ्का अतः रे चपल स्वच्छन्दाचरणशील ! चल अपसर इति रागानुविद्धाऽसूया का त्वरा सत्वरं जिगमिषावारणायेयं ध्वनिः अहं कुमारी अस्मि अनेन कुमार्याः स्वातन्त्र्यं नोचितमिति स्मृतिः हस्तालम्बं हस्तरूपमवलम्बनं वितर देहीति श्रमः हहहेति तादृशवाक्यप्रयोगजनकभावजं दैन्यं व्युत्क्रमः कन्यागमनरूपविपरीताचरणं जायते अयं विरोधः असीति त्वमित्यर्थे विभक्तिप्रतिरूपकमव्ययम् त्वं क्व कुत्र यासीत्यौत्सुक्यम् । मन्दाक्रान्ता छन्दः । अत्र शङ्कादीनां पूर्वपूर्वोपमर्दनोत्तरोत्तरोदयरूपा शबलता नृपविषयककविनिष्ठरत्याख्यभावस्याङ्गमित्याह-अत्रेति ॥ १२३ ॥

ते च गुणीभूतव्यङ्ग्याभिधाने उदाहरिष्यन्ते इति चतुर्थोल्लासोक्तस्ववचनं सङ्गमयति-एते चेति । एते एव गुणीभूता रसादयो रसवदाद्यलङ्कारव्यपदेशं लभन्ते रसवत्-प्रेय-ऊर्जस्वि-समाहित-भावोदय-भावसन्धि-भावशबलताश्चेति सप्त रसवदादयोऽलङ्काराः पूर्वमुक्तास्त एव अयं स रसनोत्कर्षीत्यादिभिरुदाहृता इति भावः । ननु गुणीभूता रसो रसवद् भावस्तु प्रेयः रसाभास-भावाभासौ ऊर्जस्वि

भावशान्तिः समाहितः इत्यस्त्येव पूर्वेषामलङ्कारव्यपदेशः अतो रसादिचतुष्टयस्य रसवदाद्यलङ्कारत्वं युक्तं, न तु भावोदयादीनां प्राचीनैरनुक्तत्वादिति शङ्कामनुवदति-यद्यपीति। समाधत्ते-तथाऽपीति। अयं भावः परोत्कर्षकत्वस्यालङ्कारत्वव्यवहारबीजस्य गुणीभूतरसादाविव भावोदयादावपि सत्वाद्विनिगमनाविरहेण भावोदयादीनामपि अलङ्कारत्वमिति कश्चिद्ब्रूयात्तदा किमुत्तरमिति तेऽप्यलङ्कारतया मयोदाहृता इति।

नन्वयं स रसनोत्कर्षीत्यत्र प्रकरणागम्यस्य करुणस्य प्राधान्येन ध्वनित्वे सम्भवति कथं गुणीभूतव्यङ्ग्यतेत्याशङ्कते—यद्यपीति। स्वप्रभेदादिभिः ध्वनिगुणीभूतव्यङ्ग्ययोर्यः प्रभेदोऽवान्तरभेदः आदिना विजातीयप्रभेदपरिग्रहः। समाधत्ते—प्राधान्येनेति। प्राधान्येन व्यपदेशा भवन्तीति न्यायेन यत्र यन्मुखेन चमत्कारस्तत्र तेनैव व्यवहार इति भावः॥

अथ शब्दशक्तिमूलानुरणनरूपोपमालङ्कारस्य लक्ष्यक्रमस्य वाच्याङ्गतायामपराङ्गव्यङ्ग्यं मध्यमकाव्यमुदाहरति—जनस्थान इति। हनुमन्नाटके भट्टवाचस्पतेरिदं पद्यम् मया रामत्वं रामधर्म आप्तं परन्तु कुशलं परिणामसुरसं वसु धनं यस्य तद्भावः अथ वा कुशलवौ सुतौ यस्याः सा सीता नाधिगता न प्राप्ता कथं च रामत्वं प्राप्तमित्याह—कनकस्य सुवर्णस्य मृगे अन्वेषणे या तृष्णा कनके या मृगतृष्णा निष्फलाशा सैव कनकमृगे मारीचे तृष्णा तयाऽन्विना विवेकरहिताधीर्यस्य तादृशेन मया जनानां स्थाने ग्रामनगरादौ भ्रान्तं भ्रमणमेव जनस्थाने दण्डकारण्ये भ्रान्तं भ्रमणं कृतम्। वै निश्चयेन देहि प्रयच्छेति वचो वचनमेव वैदेहि जानकि इति प्रतिपदं प्रतिस्थानं उद्गतमुत्थितं अश्रु यत्र तद्यथा तथा प्रलपितं वृथैवोक्तम् भर्त्तुर्भरणकर्तुर्धनिकस्य परिपाटीषु सेवारचनासु अलमत्यर्थं का घटना न कृता इति वद अथ वा काभर्तुः कुत्सितस्वामिनो वदनपरिपाटीषु मिथ्याभाषणप्रकारेषु घटना उपायः एव लङ्काभर्तूरावणस्य वदनपरिपाट्यां मुखपङ्क्तौ इषुघटना शरसंयोजना अलमत्यर्थं कृतेत्यर्थः। अत्रोक्तरीत्या श्लेषोपस्थितानां पदार्थानामभेदारोपाद्रामत्वोपपत्तिः। अत्र शब्दशक्तिमहिम्ना पादत्रयद्योत्या प्रकृताप्रकृतयोः कवयितृरामयोरुपमा मयाऽप्तं रामत्वमिति वाच्याया रामत्वप्राप्तेरुपकारकतयैव कवेरभिप्रेतेति उपमाया वाच्याङ्गत्वन्तदाह-अत्रेति। उपमानोपमेयभावः साम्यं वाच्याङ्गतां वाच्यस्य मयाऽप्तं रामत्वमित्यस्य अङ्गताम् उत्क-

अत्र शब्दशक्तिमूलानुरणनरूपो रामेण सहोपमानोपमेयभावो वाच्याङ्गतां नीतः ॥

आगत्य संप्रति वियोगविसंष्ठुलाङ्गी-
मम्भोजिनीं क्व चिदपि क्षपितत्रियामः ।
एनां प्रसादयति पश्य शनैः प्रभाते
तन्वङ्गि ! पादपतनेन सहस्ररश्मिः ॥ १२५ ॥

अत्र नायकवृत्तान्तोऽर्थशक्तिमूलो वस्तुरूपो निरपेक्षरविकमलिनीवृत्तान्ताध्यारोपेणैव स्थितः ॥

---

र्पतां नीतः प्रापितः जनस्थानादिशब्दानां परिवृत्त्यसहत्वाच्छब्दशक्तिमूलता ॥ १२४ ॥

अर्थशक्तिमूलानुरणनरूपस्य लक्ष्यक्रमस्य वस्तुनो वाच्याङ्गतायामपराङ्गव्यङ्ग्यं मध्यमकाव्यमुदाहरति-आगत्येति । मौग्ध्याद्विनैवानुनयं त्यक्तमानां प्रति सख्या उक्तिः । हे तन्वङ्गि ! क्व चिदपि क्व चिदेव द्वीपान्तरे एव नायिकान्तरगृहे क्षपिताऽतिवाहिता त्रियामा रात्रियेन तथाभूतः सहस्ररश्मिः सूर्यः संप्रति प्रभाते जाते सति शनैरतिभीत इवातिलज्जित इव मन्दम्मन्दमागत्य एतामम्भोजिनीं कमलिनीमिव नायिकां पादपतनेन किरणसंयोगेनैव चरणपतनेन प्रणामेन प्रसादयति विकासयत्येव अनुनयति एतत्पश्य । कीदृशीम् द्वीपान्तरे सूर्यसञ्चारेण यो वियोगः सम्बन्धाभावः स एव वियोगो विरहस्तेन विसंष्ठुलाङ्गीं सङ्कुचिताङ्गीमेव । सन्तापकार्श्यादिना विषमाङ्गीमित्यर्थः । वसन्ततिलका छन्दः । अत्र सहस्ररश्मिरित्यनेन बहुनायिकावत्त्वं ध्वन्यते, तथा च बहुनायिकावानपि स्वयमेवागत्य पादपतनेनानुनयतीति कामिनोर्व्यवहारः त्वं पुनर्बहुतरकालं परनायिकासक्ते धूर्त्ते अनुनयं विनैव मानं त्यक्त्वा प्रसन्नासीत्युपालम्भः, एवं च नायकनायिकावृत्तान्तकथनमेवाभिप्रेतम् । स च वृत्तान्तो व्यज्यमानः वाच्ये रविकमलिनीवृत्तान्तेऽभिन्नतया चारोप्यमाणः तस्य प्रकृतार्थतां संपादयन् तदुत्कर्षमाधत्ते इत्यङ्गतयैवास्ते अयमेव समासोक्त्यलङ्कार इत्याशयेनाह-अत्रेति । नायकेत्यत्रैकशेषेण नायकनायिकयोरित्यर्थः वृत्तान्तो व्यवहारः वस्तुरूपः । नोपमारूपकध्वनी तयोर्विषयाभावात् । निरपेक्षेति । अप्रकृतवृत्तान्तोपस्थितिं विनापि वाक्यार्थपर्यवसानान्न तत्साकांक्षत्वम् । अस्याः व्यङ्ग्योक्तेर्वाच्योत्कर्षकत्वे-

वाच्यसिद्ध्यङ्गं यथा—

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम्।
मरणञ्च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम्॥१२६॥

अत्र हालाहलं व्यङ्ग्यं भुजगरूपस्य वाच्यस्य सिद्धिकृत्।

यथा वा—

गच्छाम्यच्युत ! दर्शनेन भवतः किं तृप्तिरुत्पद्यते
किं त्वेवं विजनस्थयोर्हतजनः संभावयत्यन्यथा।
इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसा—
माश्लिष्यन्पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः॥ १२७॥

---

न वाच्येन सह सम्बन्धं च दर्शयति रविकमलिनीत्यादि प्रकृतव्यवहारेऽप्रकृतव्यवहारारोपरूपायां समासोक्तौ व्यङ्ग्यार्थोपस्कृतवाच्यस्यैव प्राधान्यात्समासोक्तित्वम् तथा प्रकृताप्रकृतवृत्तान्तयोरारोप्यमाणारोपविषयताख्य एव सम्बन्ध इति दिक्॥ १२५॥

वाच्यसिद्ध्यङ्गव्यङ्ग्यं मध्यमकाव्यमुदाहरति—वाच्येति। इदं द्विविधं एकवक्तृकपदवाच्याङ्गम् अन्यवक्तृकपदवाच्याङ्गं चेति तत्राद्यमाह—भ्रमिमिति। नायकाय नायिकावस्थां बोधयितुं सामान्यतो वर्षावर्णनपरा सख्या उक्तिः। जलदो मेघ एव त्रासकत्वाद् भुजगः सर्पस्तज्जं विषं जलमेव विषं हालाहलं कर्तृ प्रसह्य बलात्कारेण वियोगिनीनां विरहिणीनां भ्रम्यादि कुरुते भ्रमिर्भ्रमणं दिग्भ्रमणमिव दर्शयन् कश्चिदान्तरो विकारः। अरतिर्विषयानभिलाषः। अलसहृदयता उदासीनता प्रलयो बहिरिन्द्रियचेष्टाविरहः मूर्च्छा बाह्याभ्यन्तरेन्द्रियचेष्टाविरहः तमस्तमोगुणोद्रेकेणान्ध्यम् शरीरसादो देहकार्श्यम् मरणं

जीवस्योद्गमनारम्भो मरणं परिकीर्तितम्।

इति पारिभाषितम् न तु प्रसिद्धम् तस्यामङ्गलरूपत्वेनाश्लीलत्वात्। गाथा छन्दः। "विषन्तु गरले तोये इति विश्वः"। अत्र जलद एव भुजग इतिरूपकं वाच्यं तावन्न सिध्यति यावज्जलवाचकेन विषमित्यनेन हालाहलं न व्यज्यते इति वाच्यसिद्ध्यङ्गन्तदाह—अत्रेति। वाच्यस्य सिद्धिकृद् गरलात्मकजलोद्गारित्वसामर्थ्येन जलदे भुजगतादात्म्यारोपरूपरूपकोपपत्तिरिति भावः॥ १२६॥

द्वितीयमुदाहरति—गच्छामीति। गोपीमाश्लिष्यन्हरिः वो युष्मान्पातु। कीदृशः पुलकानां रोमाञ्चानामुत्करेण समूहेन अञ्चिता व्याप्ता

अत्राच्युतादिपदव्यङ्ग्यमामंत्रणेत्यादिवाच्यस्य । एतच्चैकत्रैकव-क्तृगतत्वेन अपरत्र भिन्नवक्तृगतत्वेनेत्यनयोर्भेदः।

अस्फुटं यथा--

अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥ १२८ ॥

अत्रादृष्टो यथा न भवसि वियोगभयं च यथा नोत्पद्यते तथा कुर्या इति श्लिष्टम् ।

---

तनुः शरीरं यस्य सः। कथंभूता-हे अच्युत! अहं गच्छामि भवतो द-र्शनेन किं तृप्तिरुत्पद्यते अपि तु न किन्तु प्रत्युत एवं विजनस्थयोरे-कान्तगतयोरावयोः हतजनो दुर्जनः अन्यथा सम्भावयति रत्यर्थं स-मागताविति सम्भावयतीति वाच्योऽर्थः । व्यङ्ग्यार्थस्तु हे अच्युत ! विजनेऽस्मद्विधनायिकादर्शनेपि अस्खलितधैर्य ! यतो न सम्भोगाय यतसे अतो भवतो दर्शनेन किं तृप्तिरुत्पद्यते अपि तु सम्भोगेनैव किं च सम्भोगे सति दुर्जनसम्भावनमपि न दुःखाय तस्माद्वृथैवा-त्मानं वञ्चयाव इति । इति पूर्वोक्तस्य आमन्त्रणस्य अच्युतेति सम्बो-धनपरस्य भङ्ग्या स्वरविशेषोक्त्या अस्खलितधैर्यव्यञ्जनद्वारा सूचितं यद्वृथावस्थानं निरर्थकावस्थितिस्तेन यः खेदः तेनालसामित्यर्थः । शार्दूलविक्रीडितं छन्दः ।

अत्र इत्यामन्त्रणेत्यादिगोपीविशेषणवाच्यं तावन्न सिध्यति यावदच्युतेत्यादिपूर्वार्धेन प्रागुक्तव्यङ्ग्यं न प्रतीयते इति वाच्य-सिद्ध्यङ्गमित्याह अत्रेति ॥ १२७ ॥

उदाहरणद्वयभेदकमाह—एतच्चेति । वाच्यसिद्ध्यङ्गं वाच्यं च एक-त्र प्रथमोदाहरणे एक एव कविर्वक्ता अपरत्र द्वितीयोदाहरणे पूर्वार्धे-गोपी वक्त्री उत्तरार्धे कविर्वक्तेति भेद इति भावः ।

अस्फुटव्यङ्ग्यं मध्यमकाव्यमुदाहरति—अदृष्ट इति । कस्याश्चित्प्रियं प्रत्युक्तिः । त्वयि अदृष्टे सति कदा दर्शनादि भविष्यतीति दर्शनस्यो-त्कण्ठा दृष्टे सति विच्छेदे वियोगे भीरुता भयशीलता इत्थं अदृष्टेन दृष्टेन भवता मया सुखं न लभ्यते इत्यर्थः । अत्रादृष्टो यथा न भव-सि वियोगदुःखं च यथा नोत्पद्यते तथा कुर्या इति व्यङ्ग्यस्य व्यु-त्पन्नानामपि विलम्बवेद्यत्वादस्फुटव्यङ्ग्यं मध्यमकाव्यमित्याह-अत्रेति ॥ १२८ ॥

सन्दिग्धप्राधान्यं यथा--

हरस्तु किञ्चित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥ १२९ ॥

अत्र परिचुम्बितुमैच्छदिति किं प्रतीयमानं किं वा विलोचनव्यापारणं वाच्यं प्रधानमिति सन्देहः ।

तुल्यप्राधान्यं यथा--

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये
जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते ॥ १३० ॥

अत्र जामदग्न्यः सर्वेषां क्षत्रियाणामिव रक्षसः क्षणात्क्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम् ।

---

सन्दिग्धप्राधान्यव्यङ्ग्यं मध्यमकाव्यमुदाहरति-हरस्त्विति । कुमारसम्भवे वसन्तागमने हरस्य वर्णनम् । चन्द्रोदयारम्भे अम्बुराशिः समुद्र इव किञ्चिदीषत् परिवृत्तं च्युतं धैर्यं यस्य तथाभूतो हरस्तु पुनः बिम्बफलमधरयतः तिरस्कुरुत इति बिम्बफलाधरौ ओष्ठौ यस्मिन् यद्वा बिम्बफलवदधरोष्ठो यत्र तथाभूते उमाया मुखे विलोचनानि व्यापारयामास सञ्चारयामासेत्यर्थः । उपजातिश्छन्दः । अत्राधरं चुम्बितुमैच्छदिति व्यङ्ग्यम् युगपल्लोचनत्रयव्यापारणं वाच्यम् । तयोश्च चमत्कारप्रयोजकत्वरूपे प्राधान्ये साधक-बाधकमानाभावेन सन्देहः वाच्यस्याप्यलौकिकत्वेन चमत्कारकारित्वाद् उत्कण्ठातिशयव्यञ्जकत्वाच्चेति सन्दिग्धप्राधान्यव्यङ्ग्यमित्याह-अत्रेति । प्रतीयमानं व्यङ्ग्यं प्रधानमित्यन्वयः ॥ १२९ ॥

तुल्यप्राधान्यव्यङ्ग्यं मध्यमकाव्यमुदाहरति-ब्राह्मणेति । महावीरचरिते माल्यवन्तं प्रति परशुरामप्रेषिते पत्रे पद्यमिदम् । ब्राह्मणानामतिक्रमोऽवमानस्तस्य त्यागो भवतामेव भूतये कल्याणाय भवति न तु ब्राह्मणानम्, अन्यथा ब्राह्मणातिक्रमंत्यागे तथा जन्मप्रभृतिसकलरहस्यवेदि मित्रं सुहृद्भूतो जामदग्न्यः अत्यन्तं साधुजनातिक्रमासहनशीलः दुर्मनायते क्षुब्धान्तःकरणो भवतीत्यर्थः । अत्र जामदग्न्यः क्षत्रियाणामिव रक्षसामपि क्षयं करिष्यतीति दण्डरूपं व्यङ्ग्यमिव भूत्युपदेशो मित्रत्वाभिधानरूपं च सामोपायात्मकं वाच्यमपि प्रधानमेव दुर्मनायते इति गम्भीरोक्त्या वाच्यस्यापि चमत्कारित्वादिति तुल्यप्रधानव्यङ्ग्यन्तदाह-अत्रेति ॥ १३० ॥

काक्वाक्षिप्तं यथा—

> मथ्नामि कौरवशतं समरे न कोपाद्
> दुःशासनस्य रुधिरं न पिबाम्युरस्तः।
> सञ्चूर्णयामि गदया न सुयोधनोरू
> सन्धिं करोतु भवतां नृपतिः पणेन ॥ १३१॥

अत्र मथ्नाम्येवेत्यादिव्यङ्ग्यं वाच्यनिषेधसहभावेन स्थितम्।
असुन्दरं यथा—

> वाणीरकुडङ्गुड्डीणसउणकोलाहलं सुणन्तीए।
> घरकम्मवावडाए वहुए सीअन्ति अङ्गाइं॥ १३२॥

अत्र दत्तसङ्केतः कश्चिल्लतागहनं प्रविष्ट इति व्यङ्ग्यात् सीदन्त्यङ्गानीति वाच्यं सचमत्कारम्॥

---

काक्वाक्षिप्तं झटिति प्रत्यायितं व्यङ्ग्यं यस्मिन्तन्मध्यमकाव्यमुदाहरति—मथ्नामीति। वेणीसंहारे सन्धिश्रवणकुपितस्य भीमसेनस्योक्तिः। अहं समरे कोपात् कौरवाणां दुर्योधनादीनां शतं न मथ्नामि दुःशासनस्य उरस्तो हृदयाद्रुधिरं न पिबामि सुयोधनस्य दुर्योधनस्य ऊरू सक्थियुगं गदया न संचूर्णयामि भवतां नृपतिर्युधिष्ठिरः पणेन ग्रामपञ्चकरूपेण सन्धिं मैत्रीं करोत्वित्यर्थः। सर्वत्र वर्तमानसामीप्ये भविष्यति लट्। वसन्ततिलका छन्दः। अत्र प्रतिज्ञातकुरुकुलक्षयस्य भीमस्य न मथ्नामीत्युक्तिर्विरुद्धेति नञस्तु काकुः प्रतीयते तया काक्वा नञर्थान्तरं प्रतीयमानं न मथ्नामीति न इत्येवं रूपमित्यवधारणं व्यङ्ग्यमित्याह—अत्रेति। ननु मथ्नाम्येवेत्यादिव्यङ्ग्यस्य चमत्कारित्वे ध्वनित्वमेव स्यात्तत्कथं गुणीभाव इत्यत आह—वाच्येति। वाच्यो यो निषेधस्तस्य सहभावेन समकालं प्रतीयमानत्वेन स्थितं व्यवस्थितं तेन व्यङ्ग्यकृतचारुत्वस्य वाच्यानिर्वाह्यत्वाग्रहान्न ध्वनित्वं किन्तु गुणीभूतव्यङ्ग्यत्वमेवेति भावः॥ १३१॥

असुन्दरव्यङ्ग्यं मध्यमकाव्यमुदाहरति—वाणीरेति।

> वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः।
> गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि॥

इतिसंस्कृतम्। गृहसमीपवर्तिवेतसनिकुञ्जे पक्षिकोलाहलताकतोपनायकप्रवेशायाः गुरुजनपारतंत्र्येण गृहकर्मव्यापृततया च तत्र गन्तुमशक्ताया अवस्थावर्णनमिदम्। वानीराणां वेतसानां कुञ्जेभ्यो गहनस्था-

( ६७ ) एषां भेदा यथायोगं वेदितव्याश्च पूर्ववत् ॥ ४६ ॥

यथायोगमिति । व्यज्यन्ते वस्तुमात्रेण यदाऽलङ्कृतयस्तदा । ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात् ॥ इति ध्वनिकारोक्तदिशा वस्तुमात्रेण यत्रालङ्कारो व्यज्यते न तत्र गुणीभूतव्यङ्ग्यत्वम् ॥

---

नेभ्य उड्डीना उत्प्लुताः ये शकुनयः पक्षिणस्तेषां कोलाहलं कलकलशब्दं शृण्वन्त्याः गृहकर्मणि रन्धनादौ व्यापृताया लग्नाया वध्वा अङ्गानि सीदन्ति आकुलतां प्राप्नुवन्तीत्यर्थः । मुखविपुला छन्दः । अत्र श्रवणावसादरूपयोः कार्यकारणयोर्वर्तमानप्रत्ययाभ्यां पौर्वापर्यविपर्ययरूपातिशयोक्तिरलङ्कारः तेन चोत्कण्ठातिशयो व्यङ्ग्यः । अत्र चाङ्गानि सीदन्तीति वाच्यापेक्षया दत्तसङ्केतो लतागहनं प्रविष्ट इति व्यङ्ग्यमसुन्दरमित्याह—अत्रेति । सचमत्कारं चमत्कारकारि ॥ १३२ ॥

उक्तानामेव गुणीभूतव्यङ्ग्यानामवान्तरभेदानाह—एषामिति । गुणीभूतव्यङ्ग्यानां भेदाः पूर्ववद् ध्वनिभेदवद् यथायोगं यथासम्भवं वेदितव्या इति कारिकार्थः । अयं भावः, न केवलं गुणीभूतव्यङ्ग्यस्यैते अष्टावेव भेदाः किन्तु अर्थान्तरसंक्रमितवाच्यत्वादिभिरुपाधिभिर्यथा ध्वनेर्भेदास्तथाऽसम्भविनो विहाय अस्यापि तैरुपाधिभिः शुद्धभेदाः सङ्करसंसृष्टिभ्यां योजने च तेषामिवैषां च सङ्कीर्णभेदा अपि बोद्धव्या इति । अत्र ध्वनिकारसम्मतिमाह—व्यज्यन्त इति । यदा वस्तुमात्रेण वाच्यालङ्काररहितेन अलङ्कृतयोऽलङ्कारा व्यज्यन्ते तदा तासामलङ्कृतीनां ध्रुवं निश्चयेन ध्वन्यङ्गता ध्वनिव्यवहारप्रयोजकता कुतः काव्यवृत्तेः काव्यव्यवहारस्य तदाश्रयाद् अलङ्कारसापेक्षत्वाद् यत्र वाच्यालङ्कारापेक्षया व्यङ्ग्यस्य तस्य चारुत्वं तत्र गुणीभूतव्यङ्ग्यत्वमेव यथा प्रतिवस्तूपमाव्यङ्ग्यायामगूढायामुपमायामिति भावः । न गुणीभूतव्यङ्ग्यत्वम् अपि तु ध्वनित्वमेव तथा च तैर्भेदैर्न्यूनोऽत्र प्रकारः । तथा हि स्वतः सम्भवि कविप्रौढोक्तिसिद्ध–कविनिबद्धवक्तृप्रौढोक्तिसिद्ध–वस्तु-व्यङ्ग्या-लङ्काराणां पद-वाक्य प्रबन्धगतत्वेन त्रिरूपतया वस्तुव्यङ्ग्यालङ्कारस्य नवविधत्वमिति ध्वनिभेदसंख्यैकपञ्चाशतो नवन्यूनेन अष्टानां भेदानां प्रत्येकं द्विचत्वारिंशद्विधत्वमिति मिलित्वा गुणीभूतव्यङ्ग्यस्य षट्त्रिंशदधिकत्रिशद्भेदाः (३३६) शुद्धाः । एवमस्य संसृष्टिसङ्कराभ्यां चतुरशीत्यधिकपञ्चाशताधिकैकपञ्चाशत्सहस्रोत्तरचतुर्लक्षभेदाः (४५१५८४) संकीर्णाः । शुद्धभेदैः सह विंशत्यधिकनवशतोत्तरैकपञ्चाशत्सहस्राधिकचतुर्लक्षभेदाः (४५१९२०) ॥

( ६८ ) सालङ्कारैर्ध्वनेस्तैश्च योगः संसृष्टिसङ्करैः ।

सालङ्कारैरिति । तैरेवालङ्कारैः अलङ्कारयुक्तैश्च तैः, तदुक्तं ध्वनिकृता—

स गुणीभूतव्यङ्ग्यैः सालङ्कारैः सहप्रभेदैः स्वैः ।
सङ्करसंसृष्टिभ्यां पुनरप्युद्योतते बहुधा ॥ इति ॥

( ६९ ) अन्योन्ययोगादेवं स्याद्भेदसंख्यातिभूयसी ॥ ४७ ॥

एवमनेन प्रकारेण अवान्तरभेदगणनेऽतिप्रभूततरा गणना, तथा हि—शृङ्गारस्यैव भेदप्रभेदगणनायामानन्त्यम् का गणना तु सर्वेषाम् ।

---

ध्वनिगुणीभूतव्यङ्ग्यमिश्रणमाह—सालङ्कारैरिति । तैर्गुणीभूतव्यङ्ग्यैः शुद्धैः सजातीयविजातीयमिश्रीभूतैश्च सह ध्वनेर्योगो मिश्रणं संसृष्ट्या एकया संकरैस्त्रिभिः तैरेवालङ्कारयुक्तैरिति । समासोक्तिरसवदादिरूपैर्गुणीभूतव्यङ्ग्यैरेवालङ्कारैरित्यर्थः । आगत्येत्याद्युदाहरणे गुणीभूतव्यङ्ग्यस्य नायिकानायकवृत्तान्तस्य वाच्यरविकमलिनीवृत्तान्तोत्कर्षकस्य समासोक्त्यलङ्कारत्वादिति भावः ॥ अलङ्कारयुक्तैरिति । वाच्यालङ्कारसहितैः उपमाद्यलङ्कारसहितैर्वस्तुरूपगुणीभूतव्यङ्ग्यैरिति यावत् । स्वोक्तेऽर्थे सम्मतिमाह—तदुक्तमिति । ध्वनिकृता आनन्दवर्धनेन स ध्वनिः सालङ्कारैः वाच्यालङ्कारसहितैः गुणीभूतव्यङ्ग्यैः स्वैः प्रभेदैः अर्थान्तरसंक्रमितवाच्यादिभिश्च सह सङ्करसंसृष्टिभ्यां पुनर्बहुधा बहुप्रकारः उद्योतते प्रकाशत इत्यर्थः ।

अन्योन्ययोगादेवमिति । एवं ध्वन्यादिभेदैस्तत्प्रभेदैश्च योजनेऽतिप्रभूतसंख्या भवतीति सूत्रार्थः अत उदाहर्तुमशक्येति भावः । एतैः प्रभेदैरुपनिबध्यमानः पुरातनोऽप्यर्थो नवनवी भवतीति तद्यर्थं ध्वनिभेदानन्त्यप्रदर्शनम् तदेव व्याकरोति एवमिति । अनेन उक्तेन । अतिप्रभूततरेति । शुद्धसजातीयविजातीयसंमिश्रणभेदेन निर्वक्तुमशक्येति भावः । तदुपपादयति तथा हीति । प्रभेदोऽवान्तरभेदः । आनन्त्यमिति । तत्तु रसादीनामनन्तत्वादित्यादिना चतुर्थोल्लासे स्पष्टीकृतम् । सर्वेषामिति । ध्वनिगुणीभूतव्यङ्ग्यानाम् । अयंभावः । एकस्यैव शृङ्गारस्य भेदप्रभेदगणनायामानन्त्ये किं वक्तव्यं सर्वेषां तद्गणनायामानन्त्यं स्यादिति । तथा हि—

शुद्धैः सहैकपञ्चाशद्भेदैर्भेदाद्यथा ध्वनेः ।
संकीर्णा हि समाख्याताः शरेषुयुगखेन्दवः (१०४५५) ॥
शुद्धैः शरयुगव्यक्तैः (४५) सहात्रापि तथा बुधैः ।
गुणीभूतव्यङ्ग्यभेदा बाणाब्धीन्दुगजाः स्मृताः (८१४५) ॥

सङ्कलनेन पुनरस्य ध्वनेस्त्रयो भेदाः व्यङ्ग्यस्य त्रिरूपत्वात्, तथा हि-किञ्चिद्वाच्यतां सहते किञ्चित्त्वन्यथा, तत्र वाच्यसासहमविचित्रं विचित्रं चेति। अविचित्रं वस्तुमात्रम् विचित्रं त्वलङ्काररूपम्। यद्यपि प्राधान्येन तदलङ्कार्यम् तथापि ब्राह्मणश्रमणन्यायेन तथोच्यते। रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः। स हि रसादिशब्देन शृङ्गारादिशब्देन वाऽभिधीयेत नचाभिधीयते तत्प्रयोगेऽपि विभावाद्यप्रयोगे तस्याऽप्रतिपत्तेस्तदप्रयोगेऽपि विभावादिप्रयोगे तस्य प्रतिपत्तेश्चेत्यन्वयव्यतिरेकाभ्यां विभावाद्यभिधानद्वारेणैव प्रतीयते इति निश्चीयते, तेनाऽसौ व्यङ्ग्य एव मुख्यार्थबाधाद्यभावान्न पुनर्लक्षणीयः॥

---

मध्यमोत्तमयोरेवं भेदयोर्गुणने पुनः।
भूताश्वाङ्केषु शरभूबाणस्तम्बेरमा मताः (८५१५५९७५)॥
चतुर्भिर्गुणने प्राग्वद्विज्ञेया गणकोत्तमैः।
खाकाशाङ्काग्निपक्षर्तुव्योमवारिधिवह्नयः (३४०६२३९००)॥

**एवंरीत्या परार्धाधिको ध्वनेर्भेदः सुधासागरे वर्णित इति नातीवोपयुज्यते इति दिक्।**

**एवं ध्वनिगुणीभूतव्यङ्ग्यभेदान्निरूप्य सम्प्रति व्यञ्जनायां वादिविप्रतिपत्तिनिरासाय प्रकरणान्तरमारभते**—सङ्कलनेनेति। **सङ्कलनेन संक्षेपेण अस्य गुणीभूतव्यङ्ग्यस्य ध्वनेः ध्वननव्यापाररूपव्यञ्जनोपहितस्य तेन गुणीभूतव्यङ्ग्यस्यापि संग्रहः त्रिरूपत्वाद् वस्त्वलङ्काररसादिरूपत्वात् किञ्चिदिति व्यङ्ग्यम् वस्तुमात्ररूपमलङ्काररूपं चेति यावत्। वाच्यतां सहते वाच्यत्वसहम् वाच्यमपि कर्तुं शक्यते इति यावद् तत्र तयोर्मध्ये।** वस्तुमात्रमिति। **अनलङ्कारं वस्तुमात्रमित्यर्थः। ननु अलङ्कारे व्यङ्ग्ये मुख्यध्वनित्वात्कथमलङ्कारत्वव्यपदेशोऽन्यानलङ्करणादत आह**—यद्यपीति। **तद् चित्रं व्यङ्ग्यम्।** अलङ्कार्यमिति। **न त्वलङ्काररूपं तथोच्यते अलङ्कार इत्युच्यते अलङ्कारस्य प्राधान्येऽपि यथाऽलङ्कारत्वं तथा** चतुर्थोल्लासे **ब्राह्मणश्रमणन्यायेनेत्यादिनोक्तमिति भावः।** रसादिलक्षण इति। **लक्ष्यते ज्ञायतेऽनेनेति लक्षणं नाम रसादिनामक इत्यर्थः आदिना भावादिरलक्ष्यक्रमः सर्वोऽपि गृह्यते।** स्वप्नेऽपीति। **कदाचिदपि न वाच्यः न वाच्यत्वं सहते। अत्र हेतुमाह**—सहीति। **हि यस्माद्।** रसादिशब्देनेति। **सामान्यतो रसभावादिपदैः।** शृङ्गारादिशब्देनेति। **विशेषतः शृङ्गारनिर्वेदादिपदैर्वेत्यर्थः।** अभिधीयेतेति। **लिङर्थश्चर्वणारूपे-**

अर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्ययोर्वस्तुमात्ररूपं व्यङ्ग्यं विना लक्षणैव न भवतीति प्राक् प्रतिपादितम् शब्दशक्तिमूले तु अभिधाया नियन्त्रणेनानभिधेयस्यार्थान्तरस्य तेन सहोपमादेरलङ्कारस्य च निर्विवादं व्यङ्ग्यत्वम् ॥

---

ष्टसाधनत्वम् न चेति नैवेत्यर्थः । तत्प्रयोगेऽपि तस्य रसादिपदस्य शृङ्गारादिपदस्य वा प्रयोगेऽपि विभावाद्यप्रयोगे आदिना अनुभावव्यभिचारिभावयोर्ग्रहणम् तस्य रसादिलक्षणस्य अप्रतिपत्तेरिति चमत्कारिप्रतिपत्तेरभावादित्यर्थः तदप्रयोगेपि रसादिपदाप्रयोगेऽपि । यथा शून्यं वासगृहमित्यादौ विभावादिप्रयोगे इति । तेन विभावादिघटिततत्तद्रसयोग्यरचनादिरूपसामग्र्या एव तद्व्यञ्जकत्वं न रसादिपदस्येति भावः अन्वयव्यतिरेकाभ्यां तत्सत्त्वे तत्सत्त्वमन्वयः तदभावे तदभावो व्यतिरेकस्ताभ्यां द्वारेणैव मुखेनैव नियतपूर्ववर्तित्वेन द्वारत्वम् प्रतीयते चमत्कारविषयीक्रियते निश्चीयते निर्णीयते असौ रसादिलक्षणोऽर्थः । ननु वृत्त्यभावात्कथं प्रतीयत इत्यत आह—व्यङ्ग्य एवेति । व्यञ्जनाविषय एवेत्यर्थः चमत्कारगोचर इति शेषः । ननु विभावादिवाचकेभ्यो रसप्रतीतिनियमेन तत्र तेषां सङ्केताभावेन शक्यभावाल्लक्षणाऽस्तु इत्याशङ्क्य निराकरोति—मुख्यार्थबाधेति । आदिपदेन योगरूढिप्रयोजनानां सङ्ग्रहः ॥

ननु रसादौ मा भवतु लक्षणा वस्तुनि व्यङ्ग्ये सा तु न हस्तपिहितेत्यत्र दूषणमाह—अर्थान्तरेति । त्वामस्मि वच्मि इत्यत्र वचनादि उपदेशादिरूपेऽर्थान्तरे संक्रमितम् । उपकृतं बहु तत्रेत्यत्र अपकारातिशये व्यङ्ग्ये वाच्यमत्यन्तं तिरस्कृतमिति लक्षणामूले तत्रोभयत्र वस्तुमात्रं व्यङ्ग्यं विना लक्षणैव न सम्भवतीति भावः । प्रतिपादितमिति । एवमप्यनवस्था स्यादित्यादिना द्वितीयोल्लासे प्रपञ्चितमित्यर्थः । तथा च व्यञ्जनासिद्धौ लक्षणासिद्धिरिति भावः । एवं लक्षणामूले वस्तुमात्रस्य व्यङ्ग्यत्वं समर्थ्य अभिधामूलेऽपि वस्त्वलङ्कारयोर्व्यङ्ग्यत्वं समर्थयति—शब्दशक्तिमूले इति । अभिधामूले इत्यर्थः । उल्लास्य कालकरवालेत्यत्रेति भावः । अभिधायाः शब्दशक्तेः। नियन्त्रणेन राजरूपे प्रथमेऽर्थे प्रकरणादिभिर्नियमनेन अनभिधेयस्य अभिधया बोधयितुमशक्यस्य अर्थान्तरस्य इन्द्रमेघादिरूपस्य तेन सह इन्द्रमेघादिरूपार्थान्तरेण सह उपमादेरलङ्कारस्य अभिधावृत्त्यविषयस्येति भावः निर्विवादं व्यङ्ग्यत्वं सर्वसम्मतमित्यर्थः ।

अर्थशक्तिमूलेऽपि विशेषे सङ्केतः कर्तुं न युज्यत इति सामान्यरूपाणां पदार्थानामाकांक्षासन्निधियोग्यतावशात्परस्परसंसर्गो यत्रापदार्थोऽपि विशेषरूपो वाक्यार्थस्तत्राभिहितान्वयवादे का वार्त्ता व्यङ्ग्यस्याभिधेयतायाम्। येऽप्याहुः—

शब्दवृद्धाभिधेयाँश्च प्रत्यक्षेणात्र पश्यति।
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया॥ १॥
अन्यथाऽनुपपत्त्या तु बोधेच्छक्तिं द्वयात्मिकाम्।
अर्थापत्त्याऽवबोधेत संबन्धं त्रिप्रमाणकम्॥ २॥

इतिप्रतिपादितदिशा—

---

अथार्थशक्तिमूलयोर्वस्त्वलङ्कारयोर्वाक्यार्थावगमोत्तरगम्यतया अभिहितान्वयवादिमते वृत्त्यन्तरेणैवावगम इत्यभिदधद् अभिहितान्वयवादिमते व्यङ्ग्यस्याभिधेयतां निराकरोति—अर्थशक्तिमूलेऽपीति। विशेषे सन्निहितगवादिव्यक्तौ सङ्केतः सङ्केतग्रहः न युज्यते आनन्त्याद्व्यभिचाराच्च न पार्यते सामान्यरूपाणां जातिरेव पदार्थ इति मीमांसकसिद्धान्ताद् जातिरूपाणाम्। कथन्तर्हि वाक्यार्थावगतिरित्यत आह—आकाङ्क्षेत्यादि। निरूपितमिदं द्वितीयोल्लासे तात्पर्यार्थोऽपि केषुचिदित्यत्र। यत्र मते अपदार्थः अभिधयाऽनुपस्थितः विशेषरूपः वृत्तित्वानुकूलत्वादिविशेषात्मकः वाक्यार्थः तात्पर्यवृत्त्या वाक्यप्रतिपाद्यः तत्राभिहितान्वयवादे भट्टैकदेशिनां मीमांसकानां मते का वार्त्तेत्यादिव्यङ्ग्यस्य वाक्यार्थादपि दूरभावित्वादभिधेयतायां कः प्रसङ्ग इत्यर्थः। वाक्यार्थबोधोत्तरकालिकार्थां व्यङ्ग्योपस्थितौ नैवाभिधाप्रभाव इति भावः। एवमभिहितान्वयवादे व्यङ्ग्यार्थस्याभिधेयत्वं निरस्य अन्विताभिधानवादेऽपि तन्निरसयितुं तन्मतमुपपादयति—येऽप्याहुरित्यादिना कारिकाद्वये बाल इत्यध्याहारः शब्दः श्रूयमाणो देवदत्त गामानयेत्यादिवाक्यरूपः वृद्धौ प्रयोजकवृद्धप्रयोज्यवृद्धौ अभिधेयः अर्थो गवानयनादिरूपः एतान् प्रत्यक्षेण प्रत्यक्षहेतुश्रोत्रादिना अत्र व्युत्पत्तिकाले पश्यति साक्षात्करोति श्रोत्रेण शब्दं चक्षुषा च वृद्धाभिधेयानिति भावः। ततः श्रोतुः प्रयोज्यवृद्धस्य प्रतिपन्नत्वं वाक्यार्थाभिज्ञत्वं च अनुमानेन अनुमितिकरणभूतया चेष्टया श्रोतुर्गवानयनादिचेष्टारूपेण पश्यति अयमेतच्छब्दजन्यैतदर्थगोचरज्ञानवान् एतच्छब्दश्रवणानन्तरमेतदर्थगोचरचेष्टावत्त्वादित्यनुमिनोति (१) अनन्तरं द्वयात्मिकां वाचकतां वाच्य-

देवदत्त गामानयेत्याद्युत्तमवृद्धवाक्यप्रयोगोद्देशान्तरं सास्नादिमन्तमर्थं मध्यमवृद्धं नयति सति अनेनास्माद्वाक्यादेवंविधोऽर्थः प्रतिपन्न इति तच्चेष्टयाऽनुमाय तयोरखण्डवाक्यवाक्यार्थयोरर्थापत्त्या वाच्यवाचकभावलक्षणं सम्बन्धमवधार्य बालस्तत्र व्युत्पद्यते परतः चैत्र गामानय देवदत्त अश्वमानय देवदत्त गां नय इत्यादिवाक्यप्रयोगे तस्य तस्य शब्दस्य तन्तमर्थमवधारयतीति अन्वयव्यतिरेकाभ्यां प्रवृत्तिनि-

---

त्वं चेति द्विविधां शक्तिं सङ्केतापरनामकं वाक्यवाक्यार्थयोः सम्बन्धं अन्यथानुपपत्त्या गामानयेत्यादिवाक्यश्रवणाद् गवानयनाद्यर्थज्ञानमेतद्वाक्येनैतदर्थस्य वाच्यवाचकतासम्बन्धम्विनाऽनुपपन्नमित्यनुपपत्तिरूपया अर्थापत्त्या प्रमाणविशेषेण बोधेत जानीयाद् अनन्तरं च त्रिप्रमाणकम् उक्तरीत्या प्रत्यक्षानुमानार्थापत्तिरूपप्रमाणत्रयाधिगतं सम्बन्धं संकेतम् अवबोधेन आवापोद्वापाभ्यां गोशब्दस्य गौरेवार्थः अम्विभक्तेः कर्मत्वमिति रीत्या विशेषतः पदपदार्थनिष्ठतया अवधारयेदिति (२) कारिकार्थः। इति प्रतिपादितदिशा इत्युक्तमार्गेण ॥

उक्तकारिकाद्वयं विवृणोति–देवदत्तेत्यादि । प्रतिपन्नः ज्ञातः तत्र व्युत्पद्यते तस्मिन् वाक्ये व्युत्पन्नो भवति परतः अनन्तरं चैत्र गामानयेत्यावापः देवदत्त गां नयेत्युद्वापः वाक्यप्रयोगे उत्तमवृद्धस्य वाक्यप्रयोगे तस्य तस्य गवादिपदस्य तन्तं गवादिरूपं । विशेषशक्त्यवधारणे हेतुमाह–इत्यन्वयव्यतिरेकाभ्यामिति । ननु तथापि पदार्थवैशिष्ट्यरूपो वाक्यार्थः आकांक्षादिमहिम्ना भासतां किन्तत्र शक्त्येत्यत आह–प्रवृत्तीत्यादि । गामानयेति वाक्यं गवानयने प्रवृत्तिकारि गां नानयेति निवृत्तिकारि प्रयोगयोग्यमिति शब्दप्रयोगस्य परार्थत्वाद् वाक्येनैव परस्येष्टानिष्टसाधनयोः प्रवृत्तिनिवृत्तिसंभवादन्विते‍ऽर्थे उपस्थितत्वात् पदानामभिधानसामर्थ्यमवधार्यत इति वर्तुलितोऽर्थः। इतीति । यस्मादेवं व्युत्पत्तिग्रहणप्रकारस्तस्मादित्यर्थः। वाक्यस्थितानां वाक्यत्वेन परस्परान्वितबोधकतया स्थितानामेव पदानामित्यादि । अन्वितानां परस्पराकांक्षाणां पदानां अन्वितैः पदार्थैः पदार्थान्तरेण संसृष्टैः पदार्थैः सह सङ्केतः शक्तिरूपो गृह्यते ज्ञायत इतीति । यतोऽन्विते व्यवहारस्ततः विशिष्टा एव परस्परान्विता एव पदार्थाः पदवृत्तिविषयाः वाक्यार्थः वाक्यप्रतिपाद्यः परस्परसंसृष्टानामेव पदार्थानां वाक्यप्रतिपाद्यत्वमिति भावः। एवकारव्यवच्छेद्यमाह–नत्विति । न तु पदार्थानां पदशक्यानां वैशिष्ट्यं सम्बन्धः वाक्यार्थ इत्यनुषज्यते वाक्यप्रतिपाद्य इत्यर्थः। अयं

वृत्तिकारिवाक्यमेव प्रयोगयोग्यमिति वाक्यस्थितानामेव पदानामन्वितैः पदार्थैरन्वितानामेव सङ्केतो गृह्यते इति विशिष्टा एव पदार्था वाक्यार्थो न तु पदार्थानां वैशिष्ट्यम् ॥

यद्यपि वाक्यान्तरप्रयुज्यमानान्यपि प्रत्यभिज्ञाप्रत्ययेन तान्येवैतानि पदानि निश्चीयन्ते इति पदार्थान्तरमात्रेणान्वितः सङ्केतगोचरः तथापि सामान्यावच्छादितो विशेषरूप एवासौ प्रतिपद्यते व्यतिषक्तानां पदार्थानां तथाभूतत्वादित्यन्विताभिधानवादिनः । तेषामपि मते सा-

भावः उक्तरीत्या सङ्केतग्रहः प्रथमतो व्यवहारादेव भवति व्याकरणादीनां सङ्केतग्राहकाणां शाब्दबोधसापेक्षतया प्राथम्याभावाद् व्यवहारश्च मध्यमवृद्धस्य गवानयनप्रवृत्त्यादिरूपः सर्वदैवोत्तमवृद्धोक्तगामानयेति वाक्यश्रवणादेव भवति न कदापि गोपदमात्रश्रवणाद् वाक्यस्थितानां पदानां स्वर्थाः नियतमेव परपदार्थान्विताः अतो व्यवहारमूलकः सङ्केतग्रहोऽन्वितगवादिष्वेव भवतीति तदुत्तरभाविनोऽपि व्याकरणादिभ्यः शक्तिग्रहास्तथैवान्वितपदार्थविषयका इति नान्वयबोधार्थं तात्पर्यवृत्तिः स्वीकार्येति ।

ननु गामानयेत्यादौ यदेवानयनपदं तदेव अश्वमानयेत्यादावपीति प्रत्यभिज्ञाबलेन उभयत्रैकमेवानयनपदमिति निर्णीयते एवं चानयनपदस्य गवान्वितत्वमश्वान्वितत्वं नार्थः किन्तूभयसाधारण्याय सामान्यतोऽपरपदार्थान्वितानयनत्वेनापरपदार्थान्वितानयनमेवार्थ इत्येव वाच्यम् तथा च गामानयेत्यादौ गवान्वयरूपविशेषान्वयबोधनाय तात्पर्यवृत्तिः स्वीकार्येत्याशंकते—यद्यपीत्यादि । वाक्यान्तरेति गामानयेति वाक्यभिन्ने अश्वमानयेति वाक्ये उक्तानि यथा नैयायिकसिद्धान्ते गोत्वेन सामान्यतः शक्तिग्रहेऽपि आकांक्षादिवशात् समभिव्याहृतगामिति पदार्थान्वयबलाच्च गवान्वितत्वरूपविशेषान्वयस्य बोधः गामिति पदार्थेनान्वितस्य आनयनपदार्थस्यैव गवान्वितानयनरूपत्वादिति समाधत्ते—तथापीति । सामान्यावच्छादितः गोत्वेन सकलगाव इव अपरपदार्थान्वितानयनत्वादिसामान्यधर्मप्रकारेण गृहीतसङ्केतः सर्व एवानयनाद्यर्थः विशेषरूपः आनयनाद्यन्वितगवादिरूपः असौ सङ्केतः प्रतिपद्यते ज्ञायते व्यतिषक्तानां परस्परान्वितानां तथाभूतत्वाद् विशेषरूपत्वात् अन्विताभिधानेति । अन्वितानां परस्परसंबद्धानामेवार्थानामभिधानं शब्देनाभिधया प्रतिपादनं तद्वादिन इत्यर्थः आहुरिति शेषः । एतन्मते व्यङ्ग्यस्याभिधेयत्वं निरस्यति—तेषामपीति । सामान्येति । सामान्येनापर-

मान्याविशेषरूपः पदार्थः सङ्केतविषय इत्यतिविशेषभूतो वाक्यार्थान्तरगतोऽसङ्केतितत्वादवाच्य एव यत्र पदार्थः प्रतिपद्यते तत्र दूरेऽर्थान्तरभूतस्य निःशेषच्युतेत्यादौ विध्यादेश्चर्चा ॥

अनान्वितोऽर्थोऽभिहितान्वये पदार्थान्तरमात्रेणान्वितस्त्वन्विताभिधाने अन्वितविशेषस्त्ववाच्य एव इत्युभयनयेऽप्यपदार्थ एव वाक्यार्थः ॥

---

पदार्थान्वितानयनत्वादिसाधारणधर्मेण विशेषरूपः वस्तुगत्या गवानयनादिरूपोऽर्थः । यत्र मते अतिविशेषभूतः गवानयनत्वादिना गवानयनादिरूपविशेषस्वरूपः पदार्थः असंकेतितत्वात् सामान्यलक्षणप्रत्यासत्त्यभावेन सङ्केतग्रहकालेऽप्रत्यासन्नतया सङ्केतग्रहाविषयत्वाद् अवाच्य एव अनभिधेय एव वाक्यार्थान्तर्गतगामानयेत्यादिवाक्यार्थमध्यनिविष्टः प्रतिपद्यते इत्यन्वयः । तत्र तस्मिन्मते दूरे वक्त्रादिवैशिष्ट्येन अतिविप्रकृष्टे प्रतीयमानस्य अर्थान्तरभूतस्य तदन्तिकगमननिषेधविरोधिनः तदन्तिकगमनरूपस्य विध्यादेः व्यङ्ग्याद्यर्थस्य चर्चा प्रसंगः । वाच्यत्वस्येति शेषः । व्यङ्ग्यबोधेऽभिधाविरामादिति भावः ।

अथ वादिद्वयमतं युगपदुपसंहरति—अनान्वितेति । अभिहितान्वये अभिहितान्वयवादे अनन्वितोऽसंसृष्टः अर्थो वृत्तिविषयः । अन्विताभिधाने अन्विताभिधानवादे । अन्वितविशेषस्तु गवान्वितानयनरूपस्तु अवाच्य एव अनभिधेय एव उभयनयेऽपि मतद्वयेऽपि वाक्यार्थः संसर्गः अपदार्थ एव पदवृत्त्यविषय एव । ननु व्यङ्ग्यप्रतीतिर्नैमित्तिकी निमित्तान्तरानुपलब्धेः शब्द एव निमित्तं तच्च बोध्यबोधकस्वरूपनिमित्तत्वं वृत्तिं विना न संभवतीति अभिधैव वृत्तिरिति मीमांसकैकदेशिमतमाशङ्कते—यदपीति । शब्दश्रवणानन्तरं यावानर्थः प्रतीयते तत्र सर्वत्रापि उपस्थितत्वाच्छब्द एव निमित्तं कल्प्यते नैमित्तिकानुसारेण निमित्तानि कल्प्यंते इति न्यायात् तथा च व्यङ्ग्यप्रतीतिर्नैमित्तिकी निमित्तान्तरानुपलब्धेः शब्द एव निमित्तमिति शब्दस्य पुनः पुनरनुसंधानं कल्प्यत इति वाच्यार्थ इव व्यङ्ग्यार्थेऽपि न वृत्त्यन्तरकल्पनं किन्त्वभिधैव वृत्तिरिति तन्मतं दूषयति—तत्रेत्यादिना । तत्र तदुक्तौ कारकत्वं जनकत्वं ज्ञापकत्वं बोधकत्वम्वा प्रकाशकत्वाद् अर्थबोधकत्वात् न कारकत्वन्नार्थजनकत्वं कथमिति अज्ञातस्य ज्ञापकत्वे तु सर्वथाऽर्थप्रतीतिरूपातिप्रसङ्गादिति भावः । अस्तु तर्हि ज्ञातस्य ज्ञापकत्वमत आह—ज्ञातत्वं चेति । सङ्केतेनैव शक्तिरूपसङ्केतवत्त्वेनैव न तु स्वरूपमात्रेण

यदप्युच्यते नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते इति, तत्र निमित्तत्वं कारकत्वं ज्ञापकत्वम्वा ? शब्दस्य प्रकाशकत्वान्न कारकत्वं ज्ञापकत्वन्तु अज्ञानस्य कथं ज्ञातत्वं च सङ्केतेनैव स चान्वितमात्रे एवं च निमित्तस्य नियतनिमित्तत्वं यावन्न निश्चितं तावन्नैमित्तिकस्य प्रतीतिरेव कथमिति नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते इत्यविचारिताभिधानम् ॥

ये त्वभिदधति सोऽयमिषोरिव दीर्घदीर्घतरो व्यापार इति यत्परः शब्दः स शब्दार्थ इति च विधिरेवात्र वाच्य इति, तेऽप्यतात्पर्यज्ञास्तात्पर्यवाचोयुक्तेर्देवानां प्रियाः तथा हि भूतभव्यसमुच्चारणे भूतं भव्यायो-

---

स च सङ्केतः अन्वितमात्रे नत्वन्वितविशेषे न वा विध्यादौ । नन्वस्तु विशेषे एव सङ्केत इत्यपेक्षामाह—एवं चेति । निमित्तस्य शब्दस्य, नियतनिमित्तत्वं विशेषसङ्केतवत्त्वं नैमित्तिकस्य व्यङ्ग्यस्य प्रतीतिर्ज्ञानम् कथं तन्मते विशेषे सङ्केतज्ञाने तदुपस्थितिस्तदुपस्थितौ च सङ्केतज्ञानमित्यन्योन्याश्रय इति भावः । अविचारिताभिधानम् । अविचारितकथनम् । अयं भावः शब्दस्यार्थज्ञापकत्वरूपनिमित्तत्वं व्यापारसापेक्षमेव नियतम् यथा वाच्यार्थलक्ष्यार्थयोरभिधालक्षणे व्यापारौ एवमिहापि कोपि व्यापारोऽवश्यमङ्गीकार्यः अन्यथा शब्दस्य निमित्तत्वानिश्चयेन नैमित्तिको व्यंग्यार्थ इति भवदभिमतोऽपि न सिद्ध्यति यदि तु व्यापारमन्तरापि शब्दस्य निमितत्वं स्यात्तदाऽभिधालक्षणे अपि दत्तजलाञ्जली स्यातामिति ॥

अथ भट्टमतोपजीविनां भट्टलोल्लटादीनां मतमाशङ्कते—ये त्विति । यथा प्रबलेन प्रेरित एक एव बाण एकेनैव वेगाख्येन व्यापारेण रिपोर्वर्मच्छेदं मर्मभेदं प्राणहरणं च विधत्ते एवं सुकविप्रयुक्त एक एव शब्दः एकेनैवाभिधाख्यव्यापारेण पदार्थोपस्थितिमन्वयबोधं व्यंग्यप्रतीतिं च जनयति अतो व्यंग्यत्वाभिमतस्यार्थस्य वाच्यत्वमेवेति । नचैकार्थप्रतीतौ शब्दस्य विराम इति वाच्यम् । विवक्षितार्थप्रतीत्युत्तरमेव विरामाङ्गीकारादिति तन्मतम् । अत्र युक्त्यन्तरमाह—यत्पर इति । यदर्थे यस्य शब्दस्य तात्पर्यं स शब्दार्थ इत्यर्थकेन यत्परः शब्दः स शब्दार्थ इति न्यायेन च अत्र निःशेषच्युतेत्यत्र विधिर्नायकान्तिकगमनरूपः तात्पर्यविषयतया वाच्य एव न तु व्यंग्य इति एवं प्रकारेण अभिदधति कथयन्तीति पूर्वेणान्वयः । एवमाशंक्य खण्डयति—तेऽपीति । तात्पर्यवा-

पदिश्यते इति कारकपदार्थाः क्रियापदार्थेनान्वीयमाना प्रधानक्रियानिर्वर्त्तकस्वक्रियाभिसंबन्धात् साध्यायमानतां प्राप्नुवन्ति ततश्चादग्धदहनन्यायेन यावदप्राप्तं तावद्विधीयते यथा ऋत्विक्प्रचरणे प्रमाणान्तरासिद्धे लोहितोष्णीषाः ऋत्विजः प्रचरन्तीत्यत्र लोहितोष्णीषत्वमात्रं विधेयं हवनस्यान्यतः सिद्धेः दध्ना जुहोतीत्यादौ दध्यादेः करणत्वमात्रं विधेयम् ।

---

चोयुक्तेः। यत्पर इत्यादिमीमांसकनियमोक्तेः अतात्पर्यज्ञाः तात्पर्यमजानन्तः—किमुद्दिश्य प्रयुज्यते इत्यस्यानभिज्ञाः अत एव देवानां प्रियाः बलिभूताः पशवो मूर्खा इति यावत्। यत्परः शब्द इतिनियमस्य मीमांसकैरित्थमर्थो निरणायि वाक्यान्तर्वर्त्तिपदार्थेषूपस्थितेषु सिद्धरूपाणां प्राप्ततया विधानमनर्थकमिति साध्यरूपस्यैव विधेयत्वं यस्य च विधेयत्वं तत्रैव तद्वाक्यस्य तात्पर्यम् यस्मिंश्च तात्पर्यं स एव वाक्यार्थस्तदर्थबोधनायैव तद्वाक्यं प्रयुक्तं तदंशस्य प्रमाणान्तराप्राप्ततया तदंशे एव तद्वाक्यस्यानवगतार्थबोधकत्वेन प्रामाण्यनिर्वाह इतीति। सिद्धान्तयति-तथाहीत्यादिना अर्थतात्पर्यमित्यन्तेन। ननु विधेयत्वं प्रवर्तनारूपविधिविषयत्वं तच्च क्रियाया एव न द्रव्यादेरिति दध्ना जुहोतीत्यादेर्दध्यंशे प्रामाण्यं न स्यादत आह-भूतेति। भूतं सिद्धं कारकादि भव्यं साध्यं क्रियारूपं तयोः समुच्चारणे सहोच्चारणे भूतं सिद्धं भव्याय साध्याय उपदिश्यते अज्ञातं ज्ञाप्यते इति न्यायार्थः। नन्वेवमपि कारकपदार्थानामक्रियारूपत्वात्कथं प्रवर्तनाविषयत्वमत आह—कारकपदार्था इति। कारकपदार्थाः गामानयेत्यादौ गामित्यादयः क्रियापदार्थेन आनयनपदार्थेनान्वीयमानाः सम्बद्धाः प्रधानक्रियायाः आनयनरूपायाः निर्वर्तिका सम्पादयित्री या स्वस्य गोः क्रिया चलनरूपा तस्या अभिसम्बन्धाद् आश्रयत्वात् साध्यायमानतां प्राप्नुवन्ति साध्या इव भवन्ति। नन्वेवमपि स्वतः क्रियारूपस्य होमस्यैव विधेयता स्यादत आह—ततश्चेति। उक्तन्यायाद् अदग्धदहनेति यथा तृणान्वितभस्मराशौ अग्निरदग्धमेव तृणं दहति न तु दग्धं भस्म तथा साध्यान्वितसिद्धेषु साध्यमेव विधीयते नतु सिद्धमिति भावः। तदेवाह-यावदिति। 'अप्राप्ते शास्त्रमर्थवदिति न्यायेन यावदप्राप्तं तावदेव शब्देन विधीयते अंशान्तरे त्वनुवादः। प्रचरणे तत्तदनुष्ठाने प्रमाणान्तरात् श्येनयागे ज्योतिष्टोमातिदेशाद् ज्योतिष्टोमविकृतिश्येनयागप्रकरणस्थं वाक्यमुदाहरति-लोहितेति। इत्यत्र इति विधिवाक्ये लोहितोष्णीषत्वमात्रं न तु ऋत्विक्-

क चिदुभयविधिः क चित्त्रिविधिरपि यथा रक्तं पटं वयेत्यादौ ए-कविधिर्द्विविधिस्त्रिविधिर्वा ततश्च यदेव विधेयं तत्रैव तात्पर्यमित्युपा-त्तस्यैव शब्दस्यार्थे तात्पर्यन्न तु प्रतीतमात्रे एवं हि पूर्वो धावतीत्यादा-वपराद्यर्थेऽपि क चित्तात्पर्यं स्यात्।

यत्तु विषं भक्षय मा चास्य गृहे भुङ्क्था इत्यत्र एतद्गृहे न भोक्तव्यमित्यत्र तात्पर्यमिति स एव वाक्यार्थ इति उच्यते-तत्र चकार

---

प्रचरणम् तत्रापि सोष्णीषा विनीतवसना ऋत्विजः प्रचरन्तीति वा-क्यादुष्णीषस्यापि प्राप्तत्वाल्लौहित्यमात्रं विधेयमिति भावः। उदा-हरणान्तरं दर्शयति–हवनस्येति। अन्यतः अग्निहोत्रं जुहोतीत्युत्पत्तिवा-क्यात् करणत्वमात्रं साधनद्रव्यत्वेनाक्षेपतो दध्नोऽपि प्राप्तत्वात्करण-त्वमात्रस्यैवाप्राप्तत्वेन विधेयत्वमिति भावः॥

क्व चित्कस्मिंश्चिद्वाक्ये उभयविधिः। यथा सोमेन यजेतेत्युत्पत्ति-वाक्ये सोमयागयोरुभयोरप्यप्राप्तत्वेन विधेयत्वम्। त्रिविधिः यथा यदा-ग्नेयोऽष्टाकपाल इत्यत्र हव्यदेवतायागानाम् वेद इव लोकेऽपि विधे-यप्राप्तांश एव तात्पर्यमिति दर्शयति–यथा रक्तमिति। अत्र रक्तगुणपट-भाववयनानां मध्ये एकस्य द्वयोस्त्रयाणां वाऽसिद्धौ विधेयत्वमिति भावः। प्रकृतमनुसरन्फलितमाह—ततश्चेति। यदेवेति यावदेव विधेयं तावदेवेत्यर्थः। उपात्तस्यैव उच्चारितस्यैव अर्थे-वृत्त्युपस्थिते तस्यै-व विधेयत्वादिति भावः। तात्पर्यम् अनधिगतार्थगन्तृत्वरूपप्रामाण्य-नियामकमिति शेषः। अतिप्रसङ्गवारणायाह–न त्विति। प्रतीतमात्रे तत्कालं येन केनापि सम्बन्धेन ज्ञायमाने एवं च व्यङ्ग्यस्य शब्दोपा-त्तत्वाभावात्सर्वत्र विधेयत्वाभावाच्च न तत्र प्रागुक्तप्रामाण्यनियामकं तात्पर्यं नापि शक्तिरिति भावः। नन्वस्तु प्रतीतमात्रे तात्पर्यं तावता को दोष इत्यत आह–एवंहीति। येन केन चित्सम्बन्धेनापि प्रतीतेऽर्थे तात्पर्याङ्गीकारे हि पूर्वो धावतीत्यत्र पूर्वत्वं हि नियतमेवापरसापेक्ष-मिति पूर्वत्वज्ञानकालज्ञायमानः पश्चिमपदार्थोऽपि कदाचित्तात्पर्य-विषयः सन् पूर्वशब्दवाच्यतां भजेत तथा च पूर्वो धावतीत्यतोऽपरो धावतीत्यादिबोधापत्तिरिति भावः। ननूपात्तस्यैव शब्दस्यार्थे तात्पर्यं न तु प्रतीतमात्रे इति यदुक्तं तदसंगतं विषं भक्षयेत्यत्र व्यभिचारा-दिति शङ्कते–यत्त्विति। विषं भक्षयेतिवाक्यस्य मा चास्य गृहे भुङ्क्था इति वाक्यार्थे तात्पर्यादुपात्तशब्दार्थादन्यत्र तात्पर्यं प्रसक्तमिति

एकवाक्यतासूचनार्थः न चाख्यातवाक्ययोर्द्वयोरङ्गाङ्गिभाव इति विषभक्षणवाक्यस्य सुहृद्वाक्यत्वेनाङ्गता कल्पनीयेति विषभक्षणादपि दुष्टमेतद्गृहे भोजनमिति सर्वथा मास्य गृहे भुंक्था इत्युपात्तशब्दार्थे एव तात्पर्यम् ॥

यदि च शब्दश्रुतेरनन्तरं यावानर्थो लभ्यते तावति शब्दस्याभिधैव व्यापारः, ततः कथं ब्राह्मण पुत्रस्ते जातः ब्राह्मण कन्या ते गर्भिणीत्यादौ हर्षशोकादीनामपि न वाच्यत्वं कस्माच्च लक्षणा लक्षणीयेऽ-

---

पूर्वपक्षिणोऽभिप्रायः तदेवाह-इत्यत्र तात्पर्यमिति। एवं चैतद्वाक्यवर्त्तिपदोपस्थितातिरिक्तेऽपि तात्पर्यदर्शनाद्व्यंग्यार्थेऽपि तात्पर्यं स्यादिति भावः। परिहरति-उच्यते इत्यादितात्पर्यमित्यन्तेन। सुहृदुक्तस्य विषं भक्षयेत्यस्य स्वार्थेऽविश्रान्तस्य साकांक्षतया समनन्तरोच्चारितेन मा चेत्यादिना एकवाक्यता सा च चकारेण सूच्यते अन्यथा तद्वैयर्थ्यप्रसङ्गः परस्परनिरपेक्षत्वेन प्रधानभूतयोः भक्षय भुङ्क्था इत्येवंरूपाख्यातान्तक्रियापदार्थयोर्द्वयोरङ्गाङ्गिभावः विशेषणविशेष्यभावः न संभवति "गुणानां च परार्थत्वादसम्बन्धः समत्वादिति न्यायेन" यथा समत्वेन गुणयोः परस्परमसम्बन्धस्तथा प्रधानयोरपि समत्वेनैव परस्परमनन्वयादिति भावः। कल्पनीयेति। विषभक्षणं न सुहृदुपदेशयोग्यमिति विषं भक्षयेति वाक्यं स्वार्थे सबाधं सत् विषभक्षणादपि दुष्टमेतद्गृहे भोजनमित्यर्थं लक्षयत् मा चास्येति वाक्यस्य हेतुत्वेनाङ्गतामापन्नं च सत् परस्परमेकवाक्यत्वं भजत इत्येकवाक्यान्तर्वर्तिपदार्थे एव तात्पर्यमिति नियमस्य न व्यभिचार इति भावः। तथा च यत्र स्वार्थबोधोत्तरमितरत्प्रतीयते तत्र व्यंजनैवेति ग्रन्थकार्थः।

यच्चोक्तं सोऽयमिषोरिवेति तद्दूषयति-यदि चेति। शब्दश्रुतेरनन्तरं शब्दश्रवणानन्तरम् अभिधैव न व्यञ्जना। कन्या कुमारी अनूढाया गर्भे पापाद्राजदण्डादिभयाद्वा शोकः न वाच्यत्वं कथञ्च वाच्यत्वमिति पूर्वेणान्वयः, तन्मते हि दीर्घदीर्घतराभिधारूपव्यापारेणैव हर्षशोकादिप्रतीतेर्वाच्यत्वमेव स्यादिति भावः। ननु अनन्यलभ्यः शब्दार्थ इति न्यायेन अनन्यलभ्येऽर्थेऽभिधाकल्पनं हर्षशोकादयस्तु मुखप्रसादमालिन्यादिलिङ्गनानुमानात्प्रत्याय्यन्त इति न हर्षादिषु अभिधेत्यरुचेर्दोषान्तरमाह-कस्माच्चेति। लक्षणीये मुख्यार्थबाधात्प्रतीयमाने प्रतीतिसिद्धेः तथा च तन्मते लक्षणाया उच्छेद एवेति

प्यर्थे दीर्घदीर्घतराभिधाव्यापारेणैव प्रतीतिसिद्धेः, किमिति च श्रुति-लि-ङ्ग-वाक्य-प्रकरण-स्थानसमाख्यानां पूर्वपूर्वबलीयस्त्वमित्यन्विताभिधानवादेऽपि विधेरपि सिद्धं व्यङ्ग्यत्वम् ।

किञ्च कुरु रुचिमिति पदयोर्वैपरीत्ये काव्यान्तर्वर्त्तिनि कथं दुष्टत्वम् नह्यत्रासभ्योऽर्थः पदार्थान्तरैरन्वित इत्यनभिधेय एवेति एवमादि अपरित्याज्यं स्यात् ।

यदि च वाच्यवाचकत्वव्यतिरेकेण व्यङ्ग्यव्यञ्जकभावो नाभ्युपेयते तदाऽसाधुत्वादीनां नित्यदोषत्वं कष्टत्वादीनामनित्यदोषत्वमिति

---

भावः । ननु गङ्गायां घोष इत्यादौ मुख्यार्थबाधेनाभिधाया विच्छेदान्न दीर्घतरव्यापार इत्यरुचेराह–किमिति चेति। पूर्वपूर्वबलीयस्त्वमित्यन्वयः। अयं भावः "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादि"ति सूत्रेण यथा क्रममुक्तानां श्रुत्यादीनामेकत्रोपनिपाते परपरस्य विलम्बेनार्थोपस्थापकतया दुर्बलत्वमभिदधता भगवता जैमिनिना पूर्वपूर्वस्य श्रुत्यादेः प्राबल्यं निरणायि यदि शब्दश्रुतेरनन्तरोपस्थितान् सर्वानेव प्रत्ययान्प्रति अभिधैव व्यापारः स्यात्तदा श्रुत्युपस्थापितार्थस्येव लिङ्गाद्यनुगृहीतार्थानामप्यभिधेयतया सर्वेषां समकालत्वमर्थोपस्थापकत्वप्रसक्त्या अर्थविप्रकर्षाभिधानं मुनेरनुचितं स्यादिति । उपसंहरति–इत्यन्वितेति। तद्वादैकदेशिमतेपीत्यर्थः । मतान्तरन्तु प्रागुपसंहृतम् विधेरपीति। निःशेषेत्यादौ तदन्तिकगमनरूपस्य विधेरपि व्यङ्ग्यत्वं सिद्धमित्यर्थः ।

ननु शब्दश्रुतेरनन्तरं यावानर्थः प्रतीयते स न केवलमभिधया प्रतिपाद्यते किन्तु आकांक्षादिसापेक्षयेति श्रुत्यादेः पूर्वपूर्वसहकारेण उत्तरोत्तरस्य बोधकत्वमिति न जैमिनिसूत्रविरोधोऽतो दूषणान्तरमाह–किञ्चेति । वैपरीत्ये रुचिं कुरु इत्येवंरूपे विपर्यासे दुष्टत्वमिति सन्धौ चिकुपदस्य निष्पादनाद् चिकुपदं कश्मीरादिभाषायामश्लीलार्थबोधकम् । ननु चिकुपदस्य वाचकत्वमेवेत्यत आह–नहीति । अत्र वैपरीत्ये असभ्योऽर्थः व्यङ्ग्यो योऽत्यन्तवर्ति अङ्कुररूपोऽन्वितः, अन्विते एवाभिधाङ्गीकारादिति भावः । एवमादीति। पदमिति शेषः। अपरित्याज्यं काव्ये इति शेषः रुचिं कुरु इत्यादिशब्दस्य दुष्टत्वं न स्यात् तदर्थस्यान्यानन्वितत्वेनाशक्यतया व्यञ्जनानङ्गीकारे तदनुपस्थित्या तस्य परित्याज्यत्वं काव्ये न स्यादिति भावः। ननु आनुभाविकी शक्तिरे-

विभागकरणमनुपपन्नं स्यात्, न चानुपपन्नं सर्वस्यैव विभक्ततया प्रतिभासाद् वाच्यवाचकभावव्यतिरेकेण व्यङ्ग्यव्यञ्जकताश्रयणे तु व्यङ्ग्यस्य बहुविधत्वात्क चिदेव कस्य चिदेवौचित्येनोपपद्यत एव विभागव्यवस्था ॥

---

वान्विते स्मारिका त्वनन्वितेऽपीति चिङ्क्कादिपदस्यासभ्यार्थस्मारकत्वाद्दुष्टत्वं स्यादित्यतो दूषणान्तरमाह-यदि चेति। व्यतिरेकेण वाच्यवाचकभावम्विना अभिधां विनेति यावद् व्यङ्ग्यव्यञ्जकभावो व्यञ्जना नाभ्युपेयते नाङ्गीक्रियते असाधुत्वादीनां च्युतसंस्कृतित्वादीनां कष्टत्वादीनां, श्रुतिकटुत्वादीनां अनित्यदोषत्वं कष्टत्वादीनां शृङ्गारादौ दुष्टत्वेऽपि रौद्रादावदुष्टत्वादनित्यत्वम्। ननु अस्त्वनुपपन्नमत आह-नचेति। चस्त्वर्थे सर्वस्य तत्तद्रसाविष्टस्य पुरुषस्य प्रतिभासादनुभवात्। ननु त्वन्मतेऽपि कथं विभाग इति शङ्कायां व्यञ्जनाभ्युपगम एव विभागबीजमित्याह—वाच्यवाचकेत्यादि। वाच्यवाचकभावोऽभिधारूपो व्यापारस्तदपेक्षया व्यतिरेकेण भिन्नतया व्यङ्ग्यव्यञ्जकताया व्यञ्जनारूपव्यापारस्याश्रयणे स्वीकारे व्यङ्ग्यस्य रसादेर्विभागव्यवस्थेति नित्यानित्यत्वेनेत्यर्थः। अयं भावः-असाधुत्वादयो हि सर्वदैव हेया इति नित्यदोषाः कष्टत्वादयस्तु शृङ्गाराद्यभिव्यक्तिप्रतिकूलतया तत्रैव हेया अपि रौद्रादौ व्यङ्ग्याऽनुगुणतयोपादेया एवेत्यनित्यदोषाः इत्थं च व्यङ्ग्यव्यञ्जकभावे प्रातिकूल्यानुकूल्याभ्यामेव नित्यानित्यदोषविभागः स च व्यञ्जनाया असत्त्वे नोपपन्नः वाच्यवाचकभावे हि कष्टत्वादीनामौदासीन्येन सर्वत्रैव दुष्टत्वमदुष्टत्वं वा अन्यतरन्नियतमेव स्यादिति ॥

एवं व्यञ्जनाऽनङ्गीकारे पर्यायेषु मध्ये कस्यचिदेव कुत्र चित्काव्यानुगुणत्वमित्यपि व्यवस्था न स्याद् वाच्यार्थस्याविशेषाद् दृश्यते च व्यवस्था यथेत्याह-द्वयमित्यादि कुमारसम्भवे तपस्यन्तीं पार्वतीं बटुवेषेण च्छलयतः शिवस्य स्वनिन्दापरेयमुक्तिः ॥

कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी।

इत्युत्तरार्धम्। हे पार्वति! कपालिनोऽस्थिविशेषधारिणो हरस्य समागमप्रार्थनया प्राप्तिकामनया संप्रति इदानीं तवैवं निश्चये सति द्वयं शोचनीयतां शोच्यत्वं गर्ह्यत्वं गतं प्राप्तम्। किन्तदाह सा प्रसिद्धा कान्तिमती कलावतश्चन्द्रस्य कला षोडशो भागश्च अस्य लोकस्य

द्वयं गतं संप्रति शोचनीयतां
समागमप्रार्थनया पिनाकिनः ॥

इत्यादौ पिनाक्यादिपदवैलक्षण्येन किमिति कपाल्यादिपदानां काव्यानुगुणत्वम् ।

अपि च वाच्योऽर्थः सर्वान् प्रतिपत्तॄन् प्रति एकरूप एवेति नियतोऽसौ । न हि "गतोऽस्तमर्कः" इत्यादौ वाच्योऽर्थः क चिदन्यथा भवति । प्रतीयमानस्तु तत्तत्प्रकरणवक्तृप्रतिपत्त्रादिविशेषसहायतया ना-

---

नेत्रकौमुदी आह्लादकतया नेत्रयोश्चन्द्रिकारूपा त्वं चेत्यर्थः । एतावत्कालं कपालिनोऽयोग्यस्य सङ्गादेका चन्द्रकलैव शोच्या आसीत् सम्प्रति तु त्वमप्यपरेति द्वयं शोच्यमिति पिण्डितोऽर्थः । अत्र कपालिपदेनाशुचिबीभत्सकपालधारणेन स्पर्शे दर्शनेऽप्ययोग्यतया सर्वथा हेयत्वं व्यज्यते कपालिपदस्थाने पिनाकिपदप्रयोगे तु कपालि-पिनाकिपदयोरभिधेयोपस्थापनाविशेषेऽपि पिनाकवत्तया वीरावगतेर्न्निन्दा न स्यात्, व्यञ्जनोपगमे तु कपालसम्बन्धकृतसकलामङ्गलनिधानत्वदुराचारत्वस्पर्शसम्भाषणाद्यनर्हत्वाद्यवगमन भगवतो बीभत्सालम्बनत्वेन निन्दातिशयबोधनात् तत्सङ्गार्थिनां शोच्यताऽतिरेकद्वारेण तत्र पार्वत्या भावनिवृत्तौ कपालिपदं प्रभवतीति तस्य काव्यानुगुणतेति भावस्तदाह-इत्यादाविति । कपाल्यादीति, पिनाकिकपाल्यादिपदानामभिधायकत्वे विशेषाभावाद्, व्यञ्जनाङ्गीकारे तु कपालिपदस्य बीभत्साद्यालम्बनत्वं व्यञ्जयतो देव्याः शोचनीयतोपपत्तौ भवति काव्यानुगुण्यमिति भावः । काव्यानुगुणत्वं काव्योत्कर्षकत्वम् ॥

किञ्च वाच्यव्यङ्ग्ययोर्वाच्योऽर्थः सर्वसाधारणः व्यङ्ग्यस्य भेद इत्याह-अपि चेत्यादि प्रतिभातीत्यन्तेन । सर्वान् विदग्धाविदग्धान् प्रतिपत्तॄन् बोद्धॄन् एकरूपः शक्यतावच्छेदकस्यैक्याद् असौ वाच्योऽर्थः । अन्यथा भवति नानात्वं भजते प्रतीयमानः व्यङ्ग्यस्तु नानात्वं भजते व्यङ्ग्यतावच्छेदकाऽनैयत्यादनियतः । अवस्कन्दनं युद्धान्निवर्तनम् रात्रियुद्धस्याऽधर्मत्वाद् । अनवधिरनन्तः तत्र तत्र बोद्धभिसारिका-वासकसज्जा-कर्मकर-ब्राह्मण-पथिक-गोरक्षक-संतापभीत-वणिग्विरहिण्यादिरूपे बोद्धरि बोद्धरि प्रतिभाति प्रकाशते ॥

वाच्यव्यङ्ग्ययोर्भेदे उपपादकान्तराण्याह-वाच्यव्यङ्ग्ययोरिति भेदो न स्यादित्यन्तेन । वाच्यो निषेधः व्यङ्ग्यो विधिस्तदात्मना तद्रूपेण

नात्वं भजते। तथा च "गतोऽस्तमर्कः" इत्यतः सपत्नं प्रत्यवस्कन्द-नावसर इति, अभिसरणमुपक्रम्यतामिति, प्राप्तप्रायस्ते प्रेयानिति, कर्मकरणान्निवर्तामहे इति साध्यो विधिरुपक्रम्यतामिति दूरं मा गा इति, सुरभयो गृहं प्रवेश्यन्तामिति, संतापोऽधुना न भवतीति विक्रेयवस्तूनि संह्रियन्तामिति, नागतोऽद्यापि प्रेयानित्यादिरनवधिर्व्यङ्ग्याऽर्थस्तत्र तत्र प्रतिभाति ॥

वाच्यव्यङ्ग्ययोः निःशेषेत्यादौ निषेधविध्यात्मना—

मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु ।
सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम्॥१३३॥

इत्यादौ संशय—शान्त—शृङ्गार्यन्यतरगतनिश्चयरूपेण,

कथमवनिप ! दर्पो यन्निशातासिधारा—
दलनगलितमूर्ध्नां विद्विषां स्वीकृता श्रीः ।

---

वाच्यव्यंग्ययोः स्वरूपस्य भेदेऽपि यद्येकत्वं तदा क्वचिदपि नीलपीतादौ भेदो न स्यादित्यन्वयः। अन्यं स्वरूपभेदमाह—मात्सर्यमिति। भर्तृहरिशृङ्गारशतके पद्यमिदम्। हे आर्या मान्याः भवन्तः भूधराणां पर्वतानां नितम्बा मध्यप्रदेशाः किमु सेव्याः सेवनीयाः उत स्मरेण कन्दर्पेण स्मेराः स्मितयुक्ता या विलासिन्यः प्रमदाः तासां नितम्बाः कटिप्रदेशाः सेव्या इति संशये मात्सर्यमेकतरपक्षपातेनेतरत्रासूयामुत्सार्य त्यक्त्वा विचार्य विचारं कृत्वा समर्यादं प्रमाणमर्यादासहितं यथा स्यात्तथा सप्रमाणं कार्यं कर्तव्यम् उदाहरन्तु सयुक्तिकं कथयन्तु इत्यर्थः। उपजातिश्छन्दः। अत्र वाच्यः संशयः व्यंग्यस्तु शान्तशृङ्गार्यन्यतरगतनिश्चय इति स्वरूपवैलक्षण्यम् स्वरूपस्य भेदः किमु उतेति च संशयार्थकम् आपाततः संशयरूपेणोत्तरेण शान्तैः पर्वतनितम्बा एव सेव्याः शृङ्गारिभिर्विलासिनीनितम्बा एव सेव्या इति निश्चयरूपमुत्तरं ध्वन्यते तदाह—इत्यादाविति। संशयश्च शान्तशृङ्गारिणोः एतद्रसप्रधानपुरुषयोरन्यतरगतोऽन्यतरविषयको यो निश्चयश्च तद्रूपेण तदात्मना वाच्यव्यङ्ग्ययोः स्वरूपस्य भेदेऽपीत्यर्थः ॥ १३३ ॥

अन्यमपि स्वरूपभेदमाह—कथमिति। हे अवनिप ! त्वया यद् निशाता तीक्ष्णा याऽसिधारा खड्गधारा तया दलनं छेदनं तेन गलिता

ननु तव निहतारेरप्यसौ किं न नीता-

त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः ॥१३४॥

इत्यादौ निन्दास्तुतिवपुषा स्वरूपस्य, पूर्वपश्चाद्भावेन प्रतीतेः कालस्य, शब्दाश्रयत्वेन शब्दतदेकदेशतदर्थवर्णसंघटनाश्रयत्वेन च आश्रयस्य, शब्दानुशासनज्ञानेन प्रकरणादिसहायप्रतिभानैर्मल्यसहितेन तेन चावगम इति निमित्तस्य, बोद्धृमात्रविदग्धव्यपदेशयोः प्रतीतिमात्रचमत्कृत्योश्च करणात् कार्यस्य गतोऽस्तमर्क इत्यादौ प्रदर्शितनयेन संख्यायाः,—

---

पतिता मूर्धानो मस्तका येषां तादृशानां विद्विषां वैरिणां श्रीः सम्पत्तिः स्वीकृता गृहीता तत् तस्माद्धेतोः दर्पो गर्वः कथं युक्त इति शेषः। कथमयुक्तो गर्वस्तत्राह-नन्विति। नन्विति यत इत्यर्थे यतो निहतारेरपि मारितशत्रोरपि तव असौ प्रसिद्धा कीर्तिरेव वल्लभा प्रिया एभिः शत्रुभिः अपगताङ्गैः हीनाङ्गैरपि किं त्रिदिवं स्वर्गं न न नीता अपि तु नीतैवेत्यर्थः। मालिनी छन्दः। व्याजस्तुतिश्चालङ्कारः। अत्र रक्षणसमर्थे च त्वयि जीवत्येव त्वत्प्रियायाः हीनाङ्गैः शत्रुभिरपहरणाद् मृतानां श्रीहरणे गर्वोऽनुचित इत्यापाततः प्रतीयमानया निन्दया सकलशत्रुविनाशनेन त्रैलोक्यविश्रुतकीर्तिस्त्वमिति स्तुतिर्व्यज्यते। तदाह-इत्यादाविति। अत्र वाच्या निन्दा व्यङ्ग्या स्तुतिः। तद्वपुषा तत्स्वरूपेण वाच्यव्यङ्ग्ययोः स्वरूपस्य भेदेऽपीत्यर्थः॥ १३४॥

वाच्यव्यङ्ग्ययोः कालभेदमाह-पूर्वेति। वाच्यस्य व्यञ्जकत्वेन कारणत्वात्तस्य च पूर्ववर्तित्वात्पूर्वं प्रतीतेः व्यङ्ग्यस्य तु पश्चात्प्रतीतेर्वाच्यव्यङ्ग्ययोः कालस्य भेदेऽपीत्यर्थः। अभिधाव्यञ्जनयोराश्रयभेदमाह-शब्देति केचिद्। वाच्यव्यङ्ग्ययोराश्रयभेदमाह-शब्देति बहवः। वाच्यस्य शब्दाश्रयत्वेन व्यङ्ग्यस्य तु शब्दः तदेकदेशः प्रकृतिप्रत्ययादिः तदर्थः शब्दार्थः वर्णाः संघटना रचना तदाश्रयत्वेन च वाच्यव्यङ्ग्ययोराश्रयभेदेऽपीत्यर्थः। निमित्तभेदमाह-शब्दानुशासनेति। वाच्यस्य व्याकरणकोशादिरूपशब्दानुशासनज्ञानेनावगमः। व्यङ्ग्यस्य तु प्रकरणवक्त्रादिसहायं यत्प्रतिभाया नैर्मल्यं दोषगुणविवेकस्तत्सहितेन तेन शब्दानुशासनज्ञानेनावगम इति वाच्यव्यङ्ग्ययोर्निमित्तस्य ज्ञापकरूपकारणस्य भेदेऽपीत्यर्थः। कार्यभेदेन वाच्यव्यङ्ग्ययोर्भेदमाह-बोद्धृमात्रेति।

कस्स वा ण होइ रोसो दट्ठूण पिआइ सव्वणं अहरं ।
सभमरपडमग्घाइणि वरिअवामे सहसु एण्हिं ॥१३५॥

---

वाच्येन बोद्धृमात्रव्यपदेशस्य केवलं बोद्धेति व्यवहारस्य व्यंग्येन तु विदग्धः सहृदय इति व्यपदेशस्य च करणात् तथा वाच्येन प्रतीतिमात्रस्य केवलप्रतीतेः व्यंग्येन तु चमत्कृतेः आस्वादस्यापि करणादुत्पादनात् कार्यस्य भेदेऽपीत्यर्थः । प्रदर्शितनयेन वाच्यस्तावदेक एव व्यंग्यस्तु प्रकरणादिसहायतयाऽनेकप्रकार इति प्रदर्शितरीत्या संख्याया भेदेऽपीत्यर्थः ॥

विषयभेदमाह–कस्स वेति ।

कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्माघ्रायिणि वारितवामे सहस्वेदानीम् ॥

इति संस्कृतम् ।

स्वकान्ताया उपपतिदष्टमधरं वीक्ष्य रुष्टे प्रोषितागते पत्यौ सख्या निरपराधत्वबोधनाय तत्प्रतारणोक्तिरियम् । प्रियायाः स्वकान्तायाः सव्रणमधरमधरोष्ठं दृष्ट्वा कस्य वा पुरुषस्य रोषो न भवति अधरदशनपर्य्यवसायि सभ्रमरपद्माघ्राणं तत्त्वेनाध्यवसितषिङ्गनिधुवनं च मा कृथा इति वारितेऽपि वामे विरुद्धाचरणात्प्रतिकूले त्वमिदानीमविचारदशायां प्रतिनायिकासंनिधौ च सहस्व अनुभव रुष्टपतियंत्रणमिति शेषः । इयं भ्रमरेण दष्टाधरा न तु षिङ्गेनेति व्यङ्ग्यस्य तु तत्कान्तो नायको विषयः । वाच्यस्य नायिकाविषयः ।आदिपदात् ममैवं वैदग्ध्यमित्यस्य प्रतिवेशिनीविषयः । इदं मया समाहितं पुनरेवं त्वया न विधेयमित्यस्योपपतिर्विषयः । भ्रमरेणास्या अधरो दष्टो न तु भर्त्रेति त्वयेर्ष्या न कार्या इत्यस्य सपत्नी विषय इत्यादिपरिग्रहस्तदेवाह–इत्यादाविति । सखी वक्त्र्याः सैव कान्ता यस्य स तत्कान्तो गृहपतिर्नायकश्च तदादिगतत्वेन तदादिविषयकत्वेन वाच्यव्यङ्ग्ययोर्विषयस्य च भेदेऽपि वैधर्म्ये सत्यपि यदि एकत्वं वाच्यव्यङ्ग्ययोरभेदः स्यात् तत् तदा नीलपीतादौ गुणे तद्वति घटादौ च भेदो न स्यात् इदं नैल्यमिदं पैत्यमिति, इदं नीलमिदं पीतमिति च भेदो न स्याद वैधर्म्याविशेषाद्, एवं स्वरूपादिभेदादवश्यमङ्गीकर्तव्यो वाच्यव्यंग्ययोर्भेद इति संदर्भाभिप्रायः ॥ उक्तेऽर्थे वृद्धसम्मतिमाह–उक्तमिति । अयमेव हि भेदः अन्योन्याभावः यद् विरुद्धस्य तदवृत्तेर्धर्मस्याध्यासो ज्ञानम्, अथ वा कारणभेदः भेदहेतुः अन्योन्याभावज्ञापकः अयमेव । यदिति च विधेयप्राधान्यात्पुंस्त्वनपुंसकत्वे । अयमेव घटपटयो-

इत्यादौ सखीतत्कान्तादिगतत्वेन विषयस्य च भेदेऽपि यद्येकत्वं तत्क चिदपि नीलपीतादौ भेदो न स्यात् । उक्तं हि-"अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्च"-इति ।

वाचकानामर्थापेक्षा व्यञ्जकानान्तु न तदपेक्षत्वमिति न वाचकत्वमेव व्यञ्जकत्वम्, किं च वाणीरकुडङ्गेत्यादौ प्रतीयमानमर्थमभिव्यज्य वाच्यं स्वरूपे एव यत्र विश्राम्यति तत्र गुणीभूतव्यंग्येऽतात्पर्यभूतोऽप्यर्थः स्वशब्दानभिधेयः प्रतीतिपथमवतरन् कस्य व्यापारस्य विषयतामवलम्बतामिति ॥

ननु—

रामोऽस्मि सर्वं सहे इति,

रामेण प्रियजीवितेन सुकृतं प्रेम्णः प्रिये नोचितमिति,

रामोऽसौ भुवनेषु निक्रमगुणैः प्राप्तः प्रसिद्धिं परामित्यादौ,

---

भेदः जलाहरणशीतत्राणादिविरुद्धधर्माध्यासः अयमेव भेदहेतुः यत्कारणभेदश्चेति वार्थः ॥ १३५ ॥

न केवलं वाच्यव्यंग्ययोरेव वैधर्म्यं किन्तु वाचकव्यञ्जकयोरपीत्याह-वाचकानामिति । गृहीतसङ्केतं सन्तमेवार्थं वाचका बोधयन्तीति तेषामर्थापेक्षा व्यञ्जकास्तु असदेव पावनत्वादिकं तटे बोधयन्तीति तेषां नार्थापेक्षा निरर्थकवर्णानामपि व्यञ्जकत्वाङ्गीकारादिति भावः । सोऽयमिषोरिवेत्यादिना यत्परः शब्दः स शब्दार्थ इत्यादिना चोक्तं मतद्वयम् सिंहावलोकनन्यायेन पुनराक्षिपति-किंचेति । प्रतीयमानं दत्तसङ्केतः कश्चिल्लतागहनं प्रविष्ट इतिव्यंग्यमभिव्यज्य बोधयित्वा वाच्यं अङ्गावसादरूपं स्वरूपे एव स्वस्मिन्नेव विश्राम्यति चारुत्वेन तात्पर्यविषयीभवत् आस्वाद्यं भवति व्यंग्यमनपेक्ष्यैव विप्रलम्भं पोषयतीति भावः । तत्र तस्मिन् गुणीभूतव्यङ्ग्ये असुन्दराख्ये अतात्पर्यभूतोऽपि तात्पर्याविषयोऽपि अर्थः व्यङ्ग्यरूपः । स्वशब्देति । स्वस्य व्यंग्यस्य शब्दस्तद्बोधकस्तस्यानभिधेयः विधेयस्यैवाभिधेयत्वात् । प्रमाणमुत्थापयति-प्रतीतिपथमिति । प्रतीतिरेव तत्र प्रमाणमिति भावः । कस्य व्यापारस्येति । व्यञ्जकव्यापारं विनेति शेषः । अयं भावः । यत्र गुणीभूतव्यंग्ये वाच्ये एव चारुत्वविश्रामस्तत्र व्यंग्यार्थेऽभिधातात्पर्यवृत्त्योरुभयोरप्यभावेन कथं व्यंग्योऽर्थः प्रतीयेत तदर्थमवश्यं व्यञ्जनापि

लक्षणीयोऽप्यर्थो नानात्वं भजते विशेषव्यपदेशहेतुश्च भवति तदवगमश्च शब्दार्थायत्तः प्रकरणादिसव्यपेक्षश्चेति कोऽयं नूतनः प्रतीयमानो नाम। उच्यते लक्षणीयस्यार्थस्य नानात्वेऽपि अनेकार्थशब्दाभिधेयवन्नियतत्वमेव न खलु मुख्येनार्थेनाऽनियतसम्बन्धो लक्षयितुं शक्यते प्रतीयमानस्तु प्रकरणादिविषयवशेन नियतसम्बन्धः अनियतसम्बन्धः सम्बद्धसम्बन्धश्च द्योत्यते।

---

स्वीकार्येति। इति शब्दो वाच्यव्यङ्ग्ययोर्वाचकव्यञ्जकयोश्चाविभागस्य समाप्तिं द्योतयति।

ननु अर्थान्तरसंक्रमितवाच्यध्वनित्वादिविशेषविषयत्व–शब्दार्थाधीनत्व–प्रकरणादिसापेक्षत्वेति नानाधर्मा व्यङ्ग्येषु दृश्यन्ते ते च लक्ष्येष्वपीति व्यंग्या लक्ष्या एव तथा च व्यंग्यस्यार्थस्य लक्षणागम्यत्वमेवेति शंकते–नन्विति। रामोऽस्मीति चतुर्थोल्लासे पद्यैकदेशः। रामेणेति।

> प्रत्याख्यानरुचेः कृतं समुचितं क्रूरेण ते रक्षसा
> सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैःशिरः।
> व्यर्थं संप्रति बिभ्रता धनुरिदं त्वद्व्यापदां साक्षिणा

इति पूर्वचरणत्रयम्। भावनोपनीतां सीतां प्रति रामस्योक्तिरियम्। रामोऽसाविति चतुर्थोल्लासे पद्यम्। नानात्वमिति रामोऽस्मीत्यत्र सकलदुःखपात्रत्वेन रामेणेत्यत्र निष्करुणत्वेन रामोऽसावित्यत्र खरदूषणादिनिहन्तृत्वेन प्रतीतेरनेकविधत्वम्। विशेषव्यपदेशाः अर्थान्तरसंक्रमितवाच्यादयो लक्षणास्तद्धेतुस्तद्विषयः। तदवगमः तस्य लक्ष्यस्यावगमो बोधः शब्दार्थायत्तः लक्षणया शब्देन प्रतिपाद्यत्वात्तदायत्तः शब्दाधीनः। मुख्यार्थबाधज्ञाने मुख्यार्थज्ञानस्यावश्यकतयाऽर्थायत्तः। प्रकरणादीति। आदिना वक्त्रादिवैशिष्ट्यस्य तात्पर्यानुपपत्तेश्च ग्रहणम्। एवं च प्रागुक्तवैधर्म्याभावात्किमतिरिक्तव्यंग्यस्वीकारेणेत्याह–कोऽयमिति। प्रतीयमानो व्यङ्ग्यः। अनेकार्थेति। नानार्थकसैन्धवादिपदाभिधेयस्येव नियतत्वं एकस्मिन्वाक्ये नियतसम्बन्धत्वं व्यङ्ग्यस्य तु एकस्मिन्नेव वाक्येऽनियतत्वम् यथा गतोऽस्तमर्क इत्यादौ। नन्वनियते लक्षणापि कुतो न स्यादत आह–न खल्विति। अनियतः सामीप्यादिप्रसिद्धसम्बन्धादन्यसम्बन्धो यस्य तादृशोऽर्थः। नहि कदाचिन्मूषिका गङ्गामनुसरन्ती अनुसरणसम्बन्धेन गङ्गापदलक्ष्या भवति। नन्वनियतसम्बन्धस्य व्यङ्ग्यत्वेऽतिप्रसङ्गः स्यादत आह–प्रकरणादीति। नियतस-

न च—

अत्ता एत्थ णिमज्जइ एत्थ अहं दिअहए पलोएहि ।
मा पहिअ ! रत्तिअन्धअ ! सेज्जाए मह णिमज्जिहिसि ॥१३६॥

इत्यादौ विवक्षितान्यपरवाच्ये ध्वनौ मुख्यार्थबाधः तत्कथमत्र लक्षणा लक्षणायामपि व्यञ्जनमवश्यमाश्रयितव्यमिति प्रतिपादितम् ।

---

म्बन्धादित्रिकस्योदाहरणमनुपदमेव मूले स्पष्टम् । सम्बद्धसम्बन्धः सम्बन्धपरंपराश्रयत्वेन प्रतीतिपरंपराविषयः ।

मुख्यार्थबाधाभावादपि न लक्षणेत्याह–न चेति । अस्य मुख्यार्थबाध इत्यनेनान्वयः । न च मुख्यार्थान्वयानुपपत्तिरित्यर्थः । अत्तेति ।

श्वश्रूरत्र निमज्जति अत्राऽहं दिवसके प्रलोकय ।
मा पथिक ! रात्र्यन्धक ! शय्यायामावयोर्निमंक्ष्यसि ॥

इति संस्कृतम् । निमज्जति जरत्तरत्वेन निष्पन्दा शेते तेन शंकाराहित्यं व्यज्यते अत्र ततो भिन्नस्थले अहमहमेव अत्र स्वापबोधकपदानुक्त्या मन्मथपीडया निद्राराहित्यं कुत्सितो दिवसो दिवसक उभयोः श्रेयःप्रतिकूलत्वेन कुत्सितत्वं हे पथिक ! हे रात्र्यन्धकेति च रहस्यगोपनाय पथिकत्वेन श्रमाद्विस्मरणयोग्यता रात्र्यन्धत्वेन शय्यायां पतनप्रसक्तिद्योतना अत्र गृहे जरत्तरत्वेन बधिरा निष्पन्दा च श्वश्रूरहं च जनान्तरसंचारस्तु नास्त्येव अतो यथेष्टं मम शय्यायामेव स्वपिहीति व्यङ्ग्यम् । कथमत्रेति । मुख्यार्थबाधाभावेन लक्षणाया असंभवेन व्यञ्जनैव तदर्थबोधनक्षमेति भावः । ननु लक्षणायां न मुख्यार्थबाधो बीजम् किन्तु तात्पर्यानुपपत्तिरेव सा च प्रकृतेऽस्त्येवेत्यरुचेर्दोषान्तरमाह–लक्षणायामपीति । प्रतिपादितमिति । यस्य प्रतीतिमाधातुमित्यादिना द्वितीयोल्लासे ॥ १३६ ॥

ननु कर्मणि कुशल इत्यादिनिरूढलक्षणायामिव अत्रापि न प्रयोजनापेक्षेत्यत आह–यथा चेति । यथा सङ्केतग्रहसापेक्षाऽभिधा तथा मुख्यार्थबाध–तद्योगरूढिप्रयोजनत्रितयस्य मुख्यार्थसंकेतग्रहस्य च सापेक्षा लक्षणा तत्कथं रूढेः प्रयोजनस्य वाऽभावे सा भवेदिति भावः । अत एवेति । यतो लक्षणा संकेतग्रहसापेक्षाऽत एवेत्यर्थः । अभिधापुच्छभूता शक्यसम्बन्धस्य लक्षणात्वेन अभिधापृष्ठलग्ना ल-

यथा च समयसव्यपेक्षाऽभिधा । तथा मुख्यार्थबाधादित्रयसमयविशेषसव्यपेक्षा लक्षणा अत एवाभिधापुच्छभूता सेत्याहुः। न च लक्षणात्मकमेव ध्वननम् । तदनुगमेन तस्य दर्शनात् । न च तदनुगतमेव अभिधावलम्बनेनापि तस्य भावात्, न चोभयानुसार्येव अवाचकवर्णानुसारेणापि तस्य दृष्टेः, न च शब्दानुसार्येव अशब्दात्मकनेत्रत्रिभागावलोकनादिगतत्वेनापि तस्य प्रसिद्धेरित्यभिधातात्पर्यलक्षणात्मकव्यापारत्रयातिवर्त्ती ध्वननादिपर्यायो व्यापारोऽनपलपनीय एव । तत्र अत्ता एत्थ इत्यादौ नियतसम्बन्धः कस्स वा ण होइ रोसो इत्यादावनियतसम्बन्धः ।

---

क्षणा तथा च मुख्यार्थबाधाद्यनपेक्षत्वरूपवैधर्म्याल्लक्षणातो व्यञ्जनाभेदः । लक्षणाव्यञ्जनयोर्भेदकान्तरमाह–न चेति । न हि लक्षणाव्यञ्जनयोरभेद इत्यर्थः । अत्र हेतुमाह–तदनुगमेनेति । लक्षणामूलव्यञ्जनास्थले लक्षणापश्चाद्भावेन तस्य ध्वननस्य व्यञ्जनायाः दर्शनात् प्रतीतेः लक्ष्यार्थं प्रत्याय्य विरतायां लक्षणायां व्यञ्जनाप्रवृत्तेरिति भावः। व्यञ्जनाया लक्षणानुगमोऽपि क्व चिन्नास्तीति सुतरां तयोर्भेद इत्याह–न चेति ।नापीत्यर्थः। नानार्थकशब्दव्यञ्जनास्थले भद्रात्मन इत्यादिपद्ये अभिधोपजीवनेनापि तस्य ध्वननस्य भावाद्विद्यमानत्वाद् । अस्तु तर्हि उभयानुगतमेवेत्यत आह–न चोभयेति । अवाचकेति अष्टमोल्लासे मूर्ध्नि वर्गान्त्यगाः स्पर्शा इत्यादिनाऽवाचकानां कोमलपरुषादिवर्णानामपि गुणव्यञ्जनद्वारा रसादिव्यञ्जकत्वस्य दर्शनान्न ध्वननमुभयानुगतमेवेति भावः । अस्तु तर्हि शब्दानुसारेण ध्वननन्तदाह–न च शब्देति । अशब्दात्मकं यद् नेत्रस्य विकसन्नर्तकीनेत्रस्य त्रिभागेन कटाक्षेणावलोकनम् आदिना अभिनयादि तस्य ध्वननस्य प्रसिद्धेः अनया कटाक्षेणाभिलाषो व्यञ्जित इति सर्वसाधारणप्रसिद्धेः । व्यञ्जनस्याभिधादिभेदसाधनमुपसंहरति–इतीत्यादिना । ध्वनन–व्यञ्जन–द्योतन–प्रकाशन–प्रत्यायन–बोधन–अञ्जनादिपर्यायो यस्य तादृशो व्यापारोऽङ्गीकार्यः न तु मात्सर्यमात्रादपलपनीय इत्यर्थः। प्रतीयमानो नियतादिसम्बन्ध इति क्रमेणोदाहरति–तत्रेति। नियतादिसम्बन्धमध्ये नियतसम्बन्धत्वं च वाच्यव्यङ्ग्यप्रतीत्योरेकविषयतात्मकत्वं यथा अत्ता एत्थेत्यत्र पथिकरूपैकविषयत्वम् । पूर्वोक्ते कस्स वा ण होइ रोसो इत्यादौ सखीतत्कान्तादिविषयभेदेनानियतत्वम् ।

विपरीअरए लच्छी वह्मं दठ्ठूण णाहिकमलठ्ठं ।
हरिणो दाहिणणअणं रसाउला झत्ति ढक्केइ ॥ १३७ ॥

इत्यादौ सम्बद्धसम्बन्धः । अत्र हि हरिपदेन दक्षिणनयनस्य सूर्यात्मकता व्यज्यते तन्निमीलनेन सूर्यास्तमयः तेन पद्मस्य सङ्कोचः ततो ब्रह्मणः स्थगनं तत्र सति गोप्याङ्गस्यादर्शनेन अनियन्त्रणं निधुवनविलसितमिति । अखण्डबुद्धिनिर्ग्राह्यो वाक्यार्थ एव वाच्यः वाक्यमेव च वाचकम् इति येऽप्याहुः, तैरप्यविद्यापदपतितैः पदपदार्थकल्पना कर्त्तव्यैवेति तत्पक्षेऽप्यवश्यमुक्तोदाहरणादौ विध्यादिर्व्यङ्ग्य एव ॥

ननु वाच्यादसम्बद्धं तावन्न प्रतीयते, यतः कुतश्चिद् यस्य कस्य चिदर्थस्य प्रतीतेः प्रसङ्गाद् एवं च सम्बन्धाद् व्यङ्ग्यव्यञ्जकभावो-

---

विपरीतेति ।

**विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् ।**
**हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति ॥**

**इति संस्कृतम् । विपरीतरतौ प्रसक्ता लक्ष्मीः हरेर्नाभिकमले स्थितं चतुर्मुखमवलोक्य लज्जमाना सती सुरतान्निवर्तितुमक्षमा विष्णोर्दक्षिणनयनमाच्छादयतीति वाच्योऽर्थः । गाथा छन्दः । अत्र सम्बन्धपरम्पराश्रयत्वेन प्रतीतिपरम्पराविषयत्वरूपस्य सम्बद्धसंबन्धत्वस्य व्यङ्ग्ये दर्शयति**-अत्र हीति । **अनियन्त्रणम् अप्रतिबन्धम् निधुवनस्य सुरतस्य विलसितं विलासः ॥ १३७ ॥**

**अखण्डवाक्यस्य वाक्यार्थे शक्तिः तथा च व्यङ्ग्येऽपि वाक्यगम्ये वाक्यस्य शक्तिरेवेति वेदान्तिमतं शङ्कते**-अखण्डेति । **क्रियाकारकभावमुररीकृत्य जायमाना धीः खण्डा तदन्याऽखण्डा तया बुद्ध्या नितरां ग्राह्यः ।** आहुरिति । **अयम्भावः धर्मधर्मिभावमनादृत्य क्रियाकारकभावो न सम्भवति संसारस्य च मिथ्यात्वेन धर्मधर्मिभावश्च न संभवति नापि ब्रह्मणः तस्य निर्धर्मकत्वात् अतः पदपदार्थविभागमन्तरेणैव सत्यं ज्ञानमनन्तं ब्रह्मेत्यादि महावाक्यमखण्डमेव अखण्डं ब्रह्म बोधयतीति** वेदान्तिमतानुसारेण **व्यङ्ग्येऽपि वाक्यगम्ये वाक्यस्य शक्तिरेवेति पूर्वः पक्षः । समाधत्ते** तैरपीति । **अविद्यापदपतितैः संसारदशायामाविद्यिकव्यवहारावलम्बिभिः । उक्तोदाहरणे निःशेषच्युतचन्दनमित्यादौ तदन्तिकं गतासीत्यादिरूपो विध्यादिर्व्यङ्ग्य एवेत्यर्थः ।**

**अथानुमानाद्व्यङ्ग्यप्रतीतिरिति न्यायाचार्य**महिमभट्टमतं **निराकर्तु-**

ऽप्रतिबन्धेऽवश्यं न भवतीति व्याप्तत्वेन नियतधर्मिनिष्ठत्वेन च त्रिरूपाल्लिङ्गाल्लिङ्गिज्ञानमनुमानं तद्रूपः पर्यवस्यति । तथा हि—

भम धम्मिअ वीसद्धो सो सुणओ अज्ज मारिओ तेण ।
गोलाणईकच्छकुडङ्गवासिणा दरिअ सीहेण ॥ १३८ ॥

अत्र गृहे श्वनिवृत्त्या भ्रमणं विहितं गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमापयति । यद् यद् भीरुभ्रमणं तत्तद्भयकारणनिवृत्त्युपलब्धिपूर्वम्, गोदावरीतीरे च सिंहोपलब्धिरिति व्यापकविरुद्धोपलब्धिः ।

---

माशङ्कते—नन्वित्यादिना विरुद्धोपलब्धिरित्यन्तेन । व्याप्तिं साधयति—वाच्यादिति । वाच्यादर्थादसम्बद्धं वस्तु न प्रतीयते, हेतुमाह—यत इति । यद्यसम्बद्धमपि प्रतीयेत तदा यतः कुतश्चिच्छब्दाद् यस्य कस्य चिदर्थस्य प्रतीतिः स्यात् तावता प्रकृते किमायातन्तत्राह—एवं चेति । सम्बन्धाद् व्याप्तिरूपाद् व्यङ्ग्यव्यञ्जकभावः व्यञ्जनयाऽर्थविषयकशाब्दप्रतीतिः अप्रतिबन्धे व्याप्त्याख्यनियतसम्बन्धरहिते अवश्यं नियमेन न भवतीति हेतोः व्याप्तत्वेन सपक्षसत्त्वेन नियतत्वेन विपक्षव्यावृत्तत्वेन धर्मिनिष्ठत्वेन पक्षवृत्तित्वेन च रूपत्रयेण, तदेवाह—त्रिरूपादिति । सपक्षसत्त्व-विपक्षासत्त्व-पक्षसत्त्व-लक्षणरूपत्रयवतः लिङ्गाद् हेतोः लिङ्गिज्ञानं साध्यविषयकं ज्ञानम् अनुमानम् अनुमितिः यद् तद्रूपः अनुमित्यात्मकः व्यङ्ग्यव्यञ्जकभावः पर्यवस्यति सिद्धो भवति । अथ व्यञ्जनावादिनो मूर्द्धाऽभिषिक्तध्वन्युदाहरणे प्रथममनुमानं योजयति तथा हीति गाथासप्तशत्या पद्यमिदम् ।

भ्रम धार्मिक विश्रब्धः स शुनकोऽद्य मारितस्तेन ।
गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन ॥

इति संस्कृतम् ॥ पुष्पावचयार्थं स्वसङ्केतस्थानभूते गोदाकूलनिकुञ्जे यान्तमभिसारविघ्नकारिणं कञ्चन धार्मिकं भीषयितुं कस्याश्चिदभिसारिण्याः स्वविनयं सूचयन्त्या उक्तिरियम् । हे धार्मिकेति । परश्रेयोविघातकत्वेन साक्षेपसम्बोधनम् त्वं विश्रब्धः विश्वस्तः सन् भ्रम गृहे यथेच्छं विचर स यद्भयाद्ग्रामे भ्रमणं त्यक्तमासीत्स शुनकः श्वा अद्य तेन प्रसिद्धेन गोदानद्याः कच्छकुञ्जे जलप्रायदेशसम्बन्धिनि कुञ्जे वासिना दर्पयुक्तेन सिंहेन मारित इति वाच्यार्थः । सिंहस्य दृप्तता नगरमागत्य हननात् तेनेत्यनेन मिथ्या मया नोच्यते इति व्यज्यते । अत्र किं वाच्यं किमनुमेयमिति दर्शयति—अत्रेति विहितं भ्रमेतिविधि-

अत्रोच्यते-भीरुरपि गुरोः प्रभोर्वा निदेशेन, प्रियाऽनुरागेण, अन्येन चैवंभूतेन हेतुना सत्यपि भयकारणे भ्रमतीत्यनैकान्तिको हेतुः, शुनो बिभ्यदपि वीरत्वेन सिंहान्न बिभेतीति विरुद्धोऽपि गोदावरीतीरे सिंहसद्भावः प्रत्यक्षादनुमानाद्वा न निश्चितः, अपि तु वचनात् न च वचनस्य प्रामाण्यमस्ति अर्थेनाप्रतिबन्धादित्यसिद्धश्च, तत्कथमेवं विधाद्धेतोः साध्यसिद्धिः ।

तथा निःशेषच्युतेत्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि, तानि कारणान्तरतोऽपि भवन्ति, अतश्चात्रैव स्नानकार्यत्वेनो-

---

विषयीभूतं गृहे भ्रमणमभ्रमणमनुमापयतीत्यर्थः । तदेव दर्शयति—यद्यदिति । अनेन यद्यद्भीरुभ्रमणं तत्तद्भयकारणाभावज्ञानपूर्वकमिति व्याप्तिः सूचिता । व्यापकविरुद्धेति । भीरुभ्रमणस्य व्यापिका भयकारणाभावोपलब्धिः । तद्विरुद्धम् भयकारणम् तदुपलब्धिः । अनेन व्यतिरेकव्याप्तिर्दर्शिता तथा च गोदावरीतीरं भीरुभ्रमणायोग्यं सिंहवत्त्वाद् यन्नैवं तन्नैवं यथा गृहमिति भ्रमणाभावाऽनुमितिः ॥ ३१८ ॥

इत्थं पूर्वपक्षमनूद्य दूषयति—अत्रोच्यत इति साध्यसिद्धिरित्यन्तेन । प्रथमं व्याप्तिविघटकं व्यभिचारमाह—भीरुरपीति । निदेशेन आज्ञया अन्येन निधिलाभादिना अनैकान्तिको व्यभिचारी अनेन यद्यद्भीरुभ्रमणं तत्तद्भयकारणनिवृत्त्युपलब्धिपूर्वकमिति व्यतिरेकव्याप्तिरेवासिद्धिरिति सूचितम् ॥ अथ हेतोर्विरुद्धत्वमाह—शुन इति । बिभ्यदपि स्पर्शेन पापजननदोषाद् वीरत्वेन धार्मिकस्य भयानास्पदत्वाद् एवं च सिंहवत्त्वभीरुभ्रमणाभावयोर्न सामानाधिकरण्यमित्याह—विरुद्धोऽपीति । पक्षधर्मताविघटनमाह—गोदावरीतीर इति । वचनात् कुलटावाक्याद् अनाप्तोक्ततयाऽप्रामाण्यमाह—न वचनस्येति । प्रामाण्यं नियतमिति शेषः । तदेवाह—अर्थेनाऽप्रतिबन्धादिति । शाठ्योक्तौ प्रामाण्यसन्देहाच्छब्दार्थयोर्नियतसम्बन्धाभावादिति भावः । एवं चार्थानिश्चयस्तदाह—इत्यसिद्ध इति । हेतुरसिद्धः । तथा च हेत्वनिश्चयान्नानुमितिरित्युपसंहरति तत्कथमिति । एवं विधाद् अनैकान्तिकविरुद्धासिद्धरूपात् ।

एवं ध्वनिकारोक्तोदाहरणेऽनुमानं निरस्य स्वोक्तोदाहरणेऽपि तन्निराकुर्वन् ध्वनिलक्ष्यं समर्थयति—तथेति अदूषणमित्यन्तेन । गमकतया सम्भोगज्ञापकतया । दूषयति—तानीति । कारणान्तरतः कारणान्तरमुपभोगभिन्नं स्नानादि तस्मात् तदेव दर्शयति—अतश्चेति । अत एवेत्य-

क्तानीति नोपभोगे एव प्रतिबद्धानीत्यनैकान्तिकानि । व्यक्तिवादिना चाधमपदसहायानामेषां व्यञ्जकत्वमुक्तम् । नचात्राधमत्वं प्रमाणप्रतिपन्नमिति कथमनुमानम् । एवंविधादर्थादेवंविधोऽर्थ उपपत्त्यनपेक्षत्वेऽपि प्रकाशते इति व्यक्तिवादिनः पुनस्तद् अदूषणम् ॥

इति श्रीकाव्यप्रकाशे ध्वनिगुणीभूतव्यङ्ग्यसङ्कीर्णभेदनिर्णयो नाम पञ्चमोल्लासः ॥ ५ ॥



## अथ षष्ठोल्लासः ।

(७०) शब्दार्थचित्रं यत्पूर्वं काव्यद्वयमुदाहृतम् ।
गुणप्राधान्यतस्तत्र स्थितिश्चित्रार्थशब्दयोः ॥ ४८ ॥

---

र्थः । अत्रैवेति । निःशेषेत्यत्रैव प्रतिबद्धानि व्याप्तानि अनैकान्तिकानि व्यभिचारीणि तत्कथमनुमितिः स्यादिति भावः तर्हि व्यभिचारे तदन्तिकगमनस्य व्यञ्जनाऽपि कथमित्याह—व्यक्तिवादिनेति । व्यञ्जनावादिना एषां चन्दनच्यवनादीनाम् । ननु अधमपदार्थसहकारेण यथा व्यञ्जकत्वन्तथा अधमपदार्थसहकारेणानुमापकत्वमपि स्यादत आह—न चात्रेति । प्रमाणेन प्रतिपन्नमवधारितमित्यर्थः । तथाचाधमत्वस्य पक्षधर्मतासन्देहान्नानुमानम् न च शब्दादेव निश्चयः तस्य कोपाकुलितकामिनीवचनत्वेनानिश्चायकत्वात् । ननु व्यञ्जनापक्षेऽप्येष दोषोऽस्त्येव तथा व्यञ्जना कथमत आह—एवंविधादिति । उपपत्तिः व्याप्त्यादिः । अनपेक्षत्वेऽपि अनङ्गत्वेऽपि प्रकाशते प्रतीयते तद् अनैकान्तिकत्वादि अदूषणम् न दुष्टम् अत्र व्याप्तेरनङ्गत्वेन सम्भावनामात्रादेव व्यङ्ग्यप्रतीतिरिति न किमपि व्यञ्जनावादिनां दूषणमिति भावः ॥

इति श्रीकाव्यप्रकाशे नागेश्वरीटीकायां ध्वनिगुणीभूतव्यङ्ग्यसङ्कीर्णभेदनिर्णयो नाम पञ्चमोल्लासः ॥ ५ ॥



अथ क्रमप्राप्तमधमकाव्यं निरूपयति—शब्दार्थेति । शब्दचित्रमर्थचित्रं चेति यत्काव्यद्वयं पूर्वं प्रथमोल्लासे उदाहृतं स्वच्छन्देत्याद्युदाहरणाभ्यां वोक्तं तत्र काव्ये चित्रार्थशब्दयोः चित्रौ तावर्थशब्दौ च तयोर्गुणप्राधान्यतः गुणत्वेन प्राधान्येन च स्थितिरवस्थानमित्यर्थः शब्दचित्रेऽर्थस्य गुणभावः शब्दस्य प्राधान्यम् अर्थचित्रे शब्दस्य गुणभावः

न तु शब्दचित्रेऽर्थस्याचित्रत्वम् अर्थचित्रे वा शब्दस्य ।

तथा चोक्तम्—

रूपकादिरलङ्कारस्तस्यान्यैर्बहुधोदितः ।
न कान्तमपि निर्भूषं विभाति वनिताननम् ॥
रूपकादिमलङ्कारं बाह्यमाचक्षते परे ।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम् ॥
तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।
शब्दाभिधेयालङ्कारभेदादिष्टं द्वयन्तु नः ॥ इति ॥

---

**अर्थस्य प्राधान्यम् एतदेव व्यतिरेकमुखेन व्याचष्टे**—न त्विति । **एवं च यत्कृतं कवेरुत्कटचारुत्वं विवक्षितं तस्य प्राधान्यमन्यस्य गुणत्वं तथा च नैकैकासत्त्वप्रयुक्तोऽयं विभागः अपि तूत्कटचमत्कारजनकत्वरूप-प्राधान्यपुरस्कारेणेति युक्तोऽयं विभाग इति बोध्यम् ।**

**शब्दालङ्काराणामर्थालङ्काराणां च चमत्कारप्रयोजकत्वे प्रामाणिकसम्मतिमाह**—तथा चोक्तमिति इतीत्यन्तेन । **उक्तमिति ध्वनिकारेणेति शेषः।ननु विवादाभावात्किमर्थं प्रामाणिकादरणमिति वादिनो मतमाह**—रूपकादिरिति । **तस्य काव्यस्य रूपकादि रूपकोपमादिरेव अलङ्कारः अन्यैः कैश्चिदालङ्कारिकैः बहुधा बहुप्रकार उदित उक्तः। अर्थस्य विभावादिरूपस्य रसव्यञ्जकत्वेन अर्थनिष्ठो रूपकादिरेवालङ्कारः कैश्चिदुक्त इति भावः । तत्र व्यतिरेकदृष्टान्तमाह**—न कान्तमिति । **यथाऽङ्गनाननं कान्तं सलावण्यमपि निर्भूषं निरलङ्कारं सन्न विभाति नाह्लादाय पर्याप्यते तथा शब्दार्थशरीरं काव्यं सगुणमपि निरलङ्कारं न विभातीत्यर्थः।शब्दालङ्कार एवादरणीयो न त्वर्थालङ्कार इति केषांचिन्मतमाह**—रूपकादिमिति । **परे अन्ये रूपकादिमर्थालङ्कारं बाह्यं काव्यार्थप्रतीत्युत्तरवर्त्तिनम् आचक्षते कथयन्ति यतस्ते हि सुपां सुबन्तानां तिङां तिङन्तानां च पदानां व्युत्पत्तिं विशेषेणानुप्रासादिरूपेण उत्पत्तिं सन्निवेशं वाचामलङ्कृतिं शब्दालङ्कारं वाञ्छन्ति अत्यन्तोपादेयत्वेनाभिलषन्तीत्यर्थः। तस्या एवालङ्कृतित्वे हेतुमाह**—तदेतदिति । **सौशब्द्यं शोभनशब्दस्य काव्यस्य शोभनत्वमेतदाहुः स्वत एव शब्दालङ्काराणां चमत्कारित्वमिति भावः । अर्थव्युत्पत्तिः अर्थालङ्कारः ,नेदृशी न शब्दवत् स्वतश्चमत्कारिका अपि तु विभावाद्युत्कर्षमुखेनैव । स्वसिद्धान्तमाह**—शब्देति । **नोऽस्माकन्तु शब्दाभिधेयालङ्कारभेदात् शब्दार्थालङ्कारयोर्भे-**

शब्दचित्रं यथा—

प्रथममरुणच्छायस्तावत्ततः कनकप्रभः
तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः ।
उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥ १३९ ॥

अर्थचित्रं यथा—

ते दृष्टिमात्रपतिता अपि कस्य नात्र
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च ।
नीचाः सदैव सविलासमलीकलग्ना
ये कालतां कुटिलतामिव न त्यजन्ति ॥ १४० ॥

---

दाद् द्वयं शब्दार्थालङ्कारयुगलमिष्टमभिमतमित्यर्थः । अयंभावः न हि शब्दे स्वरूपेणालङ्कारः निरर्थकेऽपि तदापत्तेः नाप्यर्थे सर्वदाऽर्थसत्त्वेन तदापत्तेः किन्तु शब्दबोधितेऽर्थे अर्थबोधके शब्दे च चित्रता अत एव द्वे काव्ये तेन द्वयोरप्यास्वादोपकारकत्वस्य सहृदयैकवेद्यत्वात् कविसंरम्भगोचरत्वाच्च द्वावप्यलङ्काराविति ।

तत्र शब्दचित्रमुदाहरति—प्रथमेति । मृगलाञ्छनश्चन्द्रः क्षणदामुखे रजनीप्रारम्भे प्रथममरुणच्छायो रक्तकान्तिः तावदित्यवधारणे अरुणच्छाय एवेत्यर्थः । ततः कनकप्रभः पीतवर्णः तदनु विरहेण प्रियवियोगेन उत्ताम्यन्ती क्लिश्यमाना या तन्वी कामिनी तस्याः कपोलस्य गण्डस्थलस्य द्युतिरिव द्युतिर्यस्य तादृशः पाण्डुवर्णः ततः सरसा स्निग्धा या बिसिनी कमलिनी तस्याः कन्दो मूलं तस्य च्छेदः खण्डस्तद्वच्छविः कान्तिर्यस्य सः अतिधवलत्वात्तथाभूतः अत एव ध्वान्तस्यान्धकारस्य ध्वंसे नाशे क्षमः समर्थः अत एव विपक्षजयाद् उदयतीत्यर्थः । अत्र मकारयोस्तकाराणां ककारयोर्धकारयोः क्षकारयोश्छकारयोः सकारछकारलकाराणामनुप्रासः शब्दालङ्कार एव प्रधानम् आसमाप्ति कवेस्तत्रैव संरम्भात् प्राधान्यस्य कविविवक्षामात्रनिबन्धनत्वादिति शब्दचित्रता स्वभावोक्त्युपमयोरर्थचित्रयोः सत्त्वेपि तयोर्गौणतैव । हरिणी छन्दः ॥१३९॥

अर्थचित्रमुदाहरति—ते दृष्टीति । ते प्रसिद्धाः सकलवशीकरणसमर्था वा पक्ष्मले बहुपक्ष्मयुक्ते दृशौ यासान्तासां सुन्दरीणाम् अल-

यद्यपि सर्वत्र काव्येऽन्ततो विभावादिरूपतया पर्यवसानम् तथापि स्फुटस्य रसस्यानुपलम्भादव्यङ्ग्यमेतत्काव्यद्वयमुक्तम् । अत्र च शब्दार्थालङ्कारभेदाद्बहवो भेदाः ते चालङ्कारनिर्णये निर्णेष्यन्ते—

इति श्रीकाव्यप्रकाशे शब्दार्थचित्रनिरूपणं नाम षष्ठोल्लासः ॥ ६ ॥

---

काश्चूर्णकुन्तला खला दुर्जनाश्च दृष्टिमात्रे पतिता दृग्गोचरतां गता अपि अत्र संसारे कस्य पुरुषस्य क्षोभाय धैर्यविघाताय अस्वस्थत्वाय च न भवन्ति अपि तु सर्वस्यापि क्षोभं जनयन्ति कथंभूताः नीचाः अधोगामिनः अनुच्चाशयाश्च तथा सदैव सविलासं विलाससहितं यथा तथा अलीके ललाटे मिथ्याभाषणे च लग्ना आसक्ता एतादृशास्ते के ये कुटिलतामिव कालतां न त्यजन्ति कालता कृष्णरूपता यमस्वरूपता च । वसन्ततिलका छन्दः । अत्रानुप्राससंभवेऽपि श्लेषप्रतिभाहेतुरर्थालङ्कारः समुच्चयः । प्रधानमित्यर्थचित्रता आसमाप्ति कवेस्तत्रैव संरम्भात् क्षोभरूपैककार्येऽलकखलयोः समुच्चयोक्तेः समुच्चयोऽर्थालङ्कारः श्लेषोपमयोस्तदङ्गत्वात्तस्यैव प्राधान्यमिति दिक् ॥ १४० ॥

ननु प्रथमश्लोके चन्द्रोदयरूपस्योद्दीपनविभावस्य वर्णितत्वेन शृङ्गाररसस्य व्यङ्ग्यत्वाद् द्वितीये खलसदृशा अलका इत्युपमायास्तन्मूलकविप्रलम्भस्य च व्यंग्यत्वात्कथमुभयमव्यङ्ग्यं कथम्वाऽधमं व्यंग्यरहितस्यैवाऽधमत्वकथनादित्याशङ्कते—यद्यपीति। विभावादीति। तेषामेव रसत्वेन पर्यवसानम् । समाधत्ते-तथापीति । अयंभावःअव्यङ्ग्यं त्ववरं स्मृतमिति सूत्रे अव्यंग्यशब्दस्य स्फुटव्यंग्यरहितत्वमित्यर्थवर्णनाद् अत्र चित्रस्यैवोद्भटतया चमत्कारित्वेन कवितात्पर्यविषयत्वाद्रसरूपव्यंग्यस्य चातथात्वादधमत्वव्यवहार इति । ननु ध्वनिगुणीभूतव्यंग्यभेदवत् शब्दार्थचित्रावान्तरभेदास्त्वत्र नोक्ताः ते किं न सन्त्येव आहोस्विन्न ते सचमत्कारा इत्याशङ्कायामाह—अत्र चेति । शब्दार्थचित्रकाव्ययोः । एतद्भेदाश्चालङ्कारभेदाद्भवन्तीति अलङ्कारनिर्णयेनैव ते निर्णेष्यन्ते इति भावः ।

इति श्रीकाव्यप्रकाशे नागेश्वरीटीकायां षष्ठोल्लासः ।

# सप्तमोल्लासः ।

काव्यस्वरूपं निरूप्य दोषाणां सामान्यलक्षणमाह—

(७१) मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद्वाच्यः ।
उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः ॥ ४९ ॥

हतिरपकर्षः । शब्दाद्या इत्याद्यग्रहणाद्वर्णरचने ।

विशेषलक्षणमाह—

(७२) दुष्टं पदं श्रुतिकटु च्युतसंस्कृत्यप्रयुक्तमसमर्थम् ।
निहतार्थमनुचितार्थं निरर्थकमवाचकं त्रिधाऽश्लीलम् ॥५०॥

---

उद्देशक्रमप्राप्तं दोषाभावं निरूपयितुमादौ दोषसामान्यलक्षणमाह—मुख्यार्थेति । मुख्यस्यार्थस्य हतिरपकर्षो यस्मात्स दोषः । अथ च मुख्यार्थो हन्यतेऽपकृष्यतेऽनेन स दोषः तथा च मुख्यार्थापकर्षकत्वन्दोषत्वमिति सिद्धम् । मुख्यत्वं च इतरेच्छानधीनेच्छाविषयत्वम् । तच्च सुखरूपे रसेऽक्षतमित्याह—रसश्च मुख्य इति । रसशब्देन रस्यते आस्वाद्यते इतिव्युत्पत्त्या भावादिरप्युपसंगृह्यते । नन्वेवं नीरसेषु विधात्यस्य रसस्याभावेन न कश्चिद्दोषः स्यादत आह—तदाश्रयादिति । तेन रसेन आश्रयादुपकारकतयाऽपेक्षणाद् वाच्यः शब्दबोध्योऽपि मुख्य इति केचित् । वस्तुतो रसस्यैव मुख्यत्वेऽर्थे मुख्यत्वव्यवहारः कथमत आह—तदाश्रयादिति । तथा च गौणोऽयं व्यवहार इति भावः । नन्वेवं रसवाच्ययोरेव दोषाधारत्वमुचितन्न तु शब्दादीनामत आह—उभयोपयोगिन इति । विभावादिप्रतीतिद्वारा रसप्रत्यायकत्वेन शब्दाद्या उभयो रसवाच्ययोः उपयोगिनः व्यञ्जकवाचकत्वादिना उपकारकाः स्युः तेन तेषु अर्थशब्दादिष्वपि स दोषो न तु रस एवेत्यर्थः । अपकर्षश्च आनन्दांशे सम्यगावरणध्वंसाभावः ॥ ४९ ॥

काव्यदोषाणां विशेषलक्षणमाह—दुष्टं पदमिति । श्रुतिकटु श्रुत्युद्वेगजनकं परुषवर्णं पदं दुष्टं भवेत् च्युतसंस्कृति व्याकरणलक्षणहीनम् असाधु अप्रयुक्तं तथाऽऽम्नातमपि कविभिर्नादृतम् असमर्थं तदर्थाबोधकम् निहतार्थम् अर्थान्तरप्रतीत्या प्रकृतव्यवधायकम् अनुचितार्थम् अयोग्यार्थकम् निरर्थकं पादपूरणमात्रार्थकम् अवाचकम् अनभिधायकम् अश्लीलं व्रीडानिन्दाऽशुभविधया त्रिधा त्रिप्रकारकम् सन्दिग्धम् नानार्थे सन्देहविषयभूतम् अप्रतीतं यत्किञ्चिच्छास्त्रपरिभाषितम् ग्राम्यं लोकमात्रप्रयुक्तम् नेयार्थम् निषिद्धमपि लक्षणया प्रयु-

सन्दिग्धमप्रतीतं ग्राम्यं नेयार्थमथ भवेत्क्लिष्टम् ।
अविमृष्टविधेयांशं विरुद्धमतिकृत्समासगतमेव ॥ ५१ ॥

(१) श्रुतिकटु परुषवर्णरूपं दुष्टं यथा—

अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः ।
आलिङ्गितः स तन्वङ्ग्या कार्तार्थ्यं लभते कदा ॥१४१॥

अत्र कार्तार्थ्यमिति ।

(२) च्युतसंस्कृति व्याकरणलक्षणहीनं यथा—

एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डर-
प्रान्तं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते ।
तत् पल्लीपातिपुत्रि ! कुञ्जरकुलं कुम्भाभयाभ्यर्थना-
दीनं त्वामनुनाथते कुचयुगं पत्रावृतं मा कृथाः ॥ १४२ ॥

अत्रानुनाथते इति सर्पिषो नाथते इत्यादाविवाशिष्येव नाथतेरात्मनेपदं विहितम् ( आशिषि नाथ इति ) अत्र तु याचनमर्थः । तस्मादनुनाथतिस्तनयुगमिति पठनीयम् ।

---

कम् एते दोषाः केवलपदगताः समासगताश्च क्लिष्टत्वादयस्तु समासगता एव । क्लिष्टं बलाद्व्याख्येयार्थकम् । अविमृष्टविधेयांशम् अविमृष्टः प्राधान्येनानुक्तो गुणीभूतो विधेयांशो यत्र तादृशम् विरुद्धमतिकृत् विरुद्धस्य मतिं विरुद्धां विपरीतां वा मतिं करोतीति तादृशमिति कारिकार्थः । पदशब्देनात्र सुबन्तं तिङन्तं तत्प्रकृतिभूतं प्रातिपदिकादि च गृह्यते । पदानां वाक्यघटकत्वेन प्राथम्यात्प्रथमं तद्दोषलक्षणमिति बोध्यम् ॥ ५० ॥ ५१ ॥

क्रमेणोदाहरति—अनङ्गमङ्गलेति । कयोश्चित्कामिनोः समागमानुध्यानमिदं कुट्टिन्याः । स मद्बुद्धिस्थो युवा अनङ्गमङ्गलगृहापाङ्गानां कन्दर्पोत्सवमन्दिरायमाणकटाक्षाणां या भङ्ग्यः प्रकारास्तासां तरङ्गितैः तरङ्गवदाचरणैः उपलक्षितया तन्वङ्ग्या आलिङ्गितः सन् कार्तार्थ्यं कृतार्थतां कदा लभते प्राप्स्यति भविष्यति लट् अत्र स्वायत्ते शब्दप्रयोगे निरर्थं प्रयुक्तो दुःश्रवः कार्तार्थ्यमिति शब्दः श्रोतुर्विरक्तिमापादयतीति दुष्टः । यमकाद्यर्थं प्रयुक्तस्तु न दुष्ट इति बोध्यम् ॥१४१॥

द्वितीयं पददोषमुदाहरति—एतन्मन्देति । पल्लीपतिपुत्र्याः कुचयुगं दिदृक्षोः कस्यचिद्विदग्धस्योक्तिरियम् । हे पल्लीपतिपुत्रि ! पल्लीशब्दः

(३) अप्रयुक्तन्तथाऽऽम्नातमपि कविभिर्नादृतम् यथा—

यथाऽयं दारुणाचारः सर्वदैव विभाव्यते।
तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथ वा॥ १४३॥

अत्र दैवतशब्दो दैवतानि पुंसि वा इति पुंस्याम्नातोऽपि न केनचित्प्रयुज्यते॥

(४) असमर्थं यत्तदर्थं पठ्यते न च तत्रास्य शक्तिः यथा—

तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतिः।
सुरस्रोतस्विनीमेष हन्ति सम्प्रति सादरम्॥ १४४॥

---

पिप्पल्यादिङीषन्तः क्षुद्रग्रामवाची तत्स्वामिनः प्रधानशबरस्य पुत्रि! एतत्पुरोदृश्यमानं त्वत्कुचयुगम् पुलिन्दसुन्दरस्य शबरयूनः करस्पर्शक्षमं हस्तमर्दनयोग्यं यतो लक्ष्यते दृश्यते तत्तस्मात्कारणात् कुञ्जरकुलं हस्तिसमूहं त्वामनुनाथते याचते, किमित्याह—त्वं कुचयुगं पत्रैः पर्णैः आवृतमाच्छन्नं मा कृथाः मा कुरु इति याचने हेतुगर्भं कुञ्जरकुलविशेषणमाह—कुम्भेति। कुंभयोः कुंभस्थलयोर्याऽभयस्याभ्यर्थना प्रार्थना तथा दीनं कातरम्। कुचयोः पत्रानावृतत्वे तदासक्तमनसःपुलिन्दसुन्दरस्य अनयोः कतरः कुम्भ इति संशयेन हनने मौढ्यं भविष्यतीति भावः। कीदृशं कुचयुगम् मन्दमीषत् विपक्वं तिन्दुकस्य कालस्कन्धस्य यत्फलं तद्वत् श्याममुदरं मध्यभागो यस्य तथाभूतं च तत् आपांडर ईषत्पांडरः प्रान्तो यस्य तथाभूतमित्यर्थः हन्तेति हर्षे। अत्राशिषि नाथ इति वार्त्तिकेन आशिष्येवात्मनेपदविधानादनुनाथते इति पदं व्याकरणलक्षणविरुद्धं च्युतसंस्कृतिः। शार्दूलविक्रीडितं छन्दः॥१४२॥

तृतीयं पददोषमुदाहरन् अप्रयुक्तपदं व्याचष्टे—अप्रयुक्तमिति। तथा प्रयुज्यमानतावच्छेदकरूपेण आम्नातमनुशिष्टं कोशव्याकरणादिसिद्धम् कविभिर्नादृतन्न प्रयुक्तम् कविसंप्रदायनिषिद्धप्रयोगवत्। उदाहरति—यथायमिति। यथा यतः अयं पुरुषः दारुणाचारः क्रूरकर्मा सर्वदैव न तु कदाचित् विभाव्यते दृश्यते तथा ततः अस्य पुरुषस्य दैवत उपास्यः पिशाचः अथ वा राक्षस इत्यहं मन्ये इत्यर्थः। अत्र—

वृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम्।

इत्यमरकोशे पुंल्लिंगे दैवतशब्द आम्नातोऽपि कविभिर्न्न क्वापि प्रयुक्त इत्यप्रयुक्तत्वं दोषः। यमकादौ तु नायं दोषः॥ १४३॥

चतुर्थमसमर्थपदं व्याचष्टे—असमर्थमिति। यत्तदर्थं परिपठितमपि

अत्र हन्तीति गमनार्थम् ॥

(५) निहतार्थं यदुभयार्थमप्रसिद्धेऽर्थे प्रयुक्तं, यथा—

यावकरसार्द्रपादप्रहारशोणितकचेन दयितेन ।
मुग्धा साध्वसतरला विलोक्य परिचुम्बिता सहसा ॥ १४५ ॥

अत्र शोणितशब्दस्य रुधिरलक्षणेनार्थेनोज्ज्वलीकृतत्वरूपोऽर्थो व्यवधीयते ।

(६) अनुचितार्थं यथा—

तपस्विभिर्या सुचिरेण लभ्यते
प्रयत्नतः सत्रिभिरिष्यते च या ।
प्रयान्ति तामाशुगतिं यशस्विनो
रणाश्वमेधे पशुतामुपागताः ॥ १४६ ॥

अत्र पशुपदं कातरतामभिव्यनक्तीत्यनुचितार्थम् ।

---

प्रकृतस्थले विवक्षितार्थसामर्थ्यरहितन्तदसमर्थम् यत्किञ्चित्सहकारं विनाऽनुशिष्टार्थबोधकत्वमसमर्थत्वमिति भावः । तीर्थेति । एष पुरुषः तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतिः लब्धसत्फलजनकपुण्यः सन् संप्रति सुरस्रोतस्विनी गङ्गां सादरं यथा तथा हन्ति गच्छतीत्यर्थः । अत्र हन हिंसागत्योरिति गमनार्थे परिपठितोपि हन्तिस्तत्प्रत्यायने स्वरूपायोग्य इत्यसमर्थम् ॥ १४४ ॥

पञ्चमं निहतार्थपदं व्याचष्टे—निहतार्थमिति । अविवक्षितप्रसिद्धार्थप्रत्ययव्यवधानेन विवक्षिताप्रसिद्धार्थबोधकत्वमिति फलितम् । यावकेति । यावकस्यालक्तकस्य रसेन आर्द्रो यः पादस्तेन यः प्रहारस्ताडनं तेन शोणिता उज्ज्वलीकृता ईषदारक्तीकृताः कचाः केशा यस्य तादृशेन दयितेन प्रियेण साध्वसेन रुधिरभ्रमाद्भयेन तरला व्याकुला अत एव मुग्धा मूढा विलोक्य इयं साध्वसवतीति ज्ञात्वा सहसा तत्क्षणमेव परिचुम्बिता । सति विलम्बे नायिकाया भ्रमोच्छेदसम्भवादिति भावः । अत्र नानार्थकस्य शोणितपदस्य रुधिरे प्रसिद्धिः अप्रसिद्धिस्तूज्ज्वलीकृतत्वरूपे विवक्षितार्थे इति निहतार्थत्वम् ॥१४५॥

षष्ठमनुचितार्थमुदाहरति—अनुचितार्थमिति । अनुचितो विवक्षितार्थतिरस्कारकधर्मव्यञ्जकोऽर्थो यस्य तदित्यर्थः । तपस्विभिरिति । या गतिः तपस्विभिः सुचिरेण चिरकालेन लभ्यते या च सत्रिभिः

(७) निरर्थकं पादपूरणमात्रप्रयोजनं चादिपदम् यथा—

उत्फुल्लकमलकेसरपरागगौरद्युते ! मम हि गौरि ! ।
अभिवाञ्छितं प्रसिद्ध्यतु भगवति ! युष्मत्प्रसादेन ॥ १४७ ॥

अत्र हिशब्दः ।

(८) अवाचकं यथा—

अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः ॥ १४८ ॥

अत्र जन्तुपदमदातर्यर्थे विवक्षितन्तत्र च नाभिधायकम् ।

---

याज्ञिकैः प्रयत्नतः प्रयत्नेन इष्यते कालान्तरभावित्वान्न प्राप्यते तां गतिं रणः संग्राम एवाश्वमेधः तत्र पशुतां वध्यतामुपागताः प्राप्ताः अत एव यशस्विनः आशु शीघ्रं यथा स्यात्तथा प्रयान्ति प्राप्नुवन्ति । वंशस्थवृत्तम् । अत्र पशुतामित्यनेन कातरत्वाभिव्यक्त्या वर्णनीयस्य तिरस्कारादनुचितार्थत्वन्तदाह अत्रेति ॥ १४६ ॥

सप्तमं निरर्थकपदं व्याचष्टे-निरर्थकमिति । अविवक्षितार्थकं वृत्तन्यूनतापरिहारमात्रप्रयोजनकमिति यावत् । उत्फुल्लेति । नागानन्दनाटके मलयवत्या गौरीस्तुतिरियम् । उत्फुल्लं विकसितं यत्कमलं तस्य केसरेषु किंजल्केषु लग्नो यः परागो रेणुस्तद्वद्गौरी गौरवर्णा द्युतिः कान्तिर्यस्यास्तथाभूते भगवति ! सकलैश्वर्यसम्पन्ने हे गौरि ! युष्मत्प्रसादेन ममाभिवाञ्छितमिष्टं प्रसिद्ध्यत्वित्यर्थः । अत्र हिपदं निरर्थकमर्थस्याविवक्षितत्वात् ॥ १४७ ॥

अष्टममवाचकपदं व्याचष्टे-अवाचकमिति । विवक्षितधर्मविशिष्टस्य विवक्षितधर्मिणः क्वापि न वाचकं यत्तदित्यर्थः । एतादृशविशिष्टविरहश्च क्वचिद्धर्मिणि शक्तावपि धर्मिणि शक्तिविरहात् क्वचित्प्रकारधर्मिणोरुभयोरपि शक्तिविरहात् । तत्राद्यं द्विधा अपेक्षितावयवशक्ति-अनपेक्षितावयवशक्ति च, तयोराद्यमुदाहरति-अवन्ध्येति । किराते दुर्योधननिग्रहाय युधिष्ठिरमुद्बोधयन्त्या द्रौपद्या उक्तिः अवन्ध्यः सफलः कोपो यस्य तस्य शूरस्य तथा आपदां परकीयदारिद्र्यरूपाणां विहन्तुर्नाशयितुः दातुः जनस्य स्वयमेव यत्नं विनैव देहिनः शत्रुमित्ररूपा जनाः वश्या भवन्ति भयलोभाभ्यामाक्रान्तत्वात् । अर्थान्तरं न्यस्यति-अमर्षेति । यतः अमर्षशून्येन अशूरेण भवादृशेन विद्विषा शत्रुणापि जनस्य शत्रुरूपस्य दरो भयं न भवति लोके इति शेषः तथा जात-

यथा वा—

हा धिक् सा किल तामसी शशिमुखी दृष्टा मया यत्र सा
तद्विच्छेदरुजाऽन्धकारितमिदं दग्धं दिनं कल्पितम् ॥
किं कुर्मः कुशले सदैव विधुरो धाता न चेत्तत्कथं
तादृग्यामवतीमयो भवति मे नो जीवलोकोऽधुना ॥ १४९ ॥

अत्र दिनमिति प्रकाशमयमित्यर्थेऽवाचकम् ।

---

हार्देन जातस्नेहेन मित्रेणापि जन्तुना अदात्रा जनस्य मित्रस्य आदरो न भवतीत्यर्थः । अत्र जन्तुपदं विवक्षितेनादातृत्वेन रूपेणावाचकन्तदाह-अत्रेति । वंशस्थं वृत्तम् ॥ १४८ ॥

अनपेक्षितावयवशक्तिमुदाहरति-हा धिगिति । स्वप्ने उर्वशीं दृष्टवतः पुरुरवस उक्तिर्विक्रमोर्वशीये । निर्वेदातिशयसूचकं हा धिगिति । यत्र रात्रौ साऽनिर्वचनीयरमणीयगुणा शशिमुखी चन्द्रवदना उर्वशी मया दृष्टा सा रात्रिः किल तामसी तमोगुणयुक्ता कल्पितेति लिङ्गविपरिणामेनान्वयः । धात्रेति विभक्तिविपरिणामेन च । तथा तस्या उर्वश्या विच्छेदो वियोगः तद्रूपया रुजा रोगेण अन्धकारितं अन्धकारीकृतम् अत एव दग्धं दुःखत्वान्निन्द्यं इदमनुभूयमानं कालरूपं वस्तु दिनं प्रकाशमयं कल्पितमित्यनुचितम् विषयाग्राहकस्य प्रकाशमयत्वायोगाद्, एवमनुचितकारिणि धातरि किं कुर्मः इति साकूतोक्तिः । धाता कुशले इष्टे सदैव विधुरः प्रतिकूलः चेद्यदि न विधुरः तत्तदा जीवलोको भूलोकः अधुना इदानीं मे मम तादृक् तन्नायिकादर्शनजनकयामिनीमयः कथं नो न भवतीत्यर्थः। यत्र सा दृष्टा तद्रात्रिरूपः कथं न भवतीति भावः । अत्र सूर्यावच्छिन्नकालत्वरूपे दिनत्वे रूढ्या दिनपदं शक्तं न पुनः प्रकाशमयत्वे इति धर्मिणि योगमनपेक्ष्यैव तत्पदं प्रयुक्तमित्यवाचकम् । शार्दूलविक्रीडितं छन्दः ॥ १४९ ॥

द्वितीयोदाहरणन्तु—

जलं जलधरे क्षारमयं वर्षति वारिदः ।
इदं बृंहितमश्वानां ककुद्मानेष ह्रेषते ॥

अत्र जलधरशब्दस्य जलाधारकत्वे प्रकारे सामर्थ्येऽपि न समुद्रे धर्मिणि सामर्थ्यमित्यवाचकत्वम् ॥

यच्चोपसर्गसंसर्गादर्थान्तरगतम् यथा--

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।
भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-
सम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः॥ १५० ॥

अत्र दधदित्यर्थे विदधदिति ।

(९) त्रिधेति व्रीडाजुगुप्साऽमङ्गलव्यञ्जकत्वाद् यथा--

साधनं सुमहद्यस्य यन्नान्यस्य विलोक्यते ।
तस्य धीशालिनः कोऽन्यः सहेतारालितां भ्रुवम् ॥ १५१ ॥

---

तृतीयभेदरूपमवाचकं पदन्तूपसर्गसंसर्गादर्थान्तरवाचकम् अन्यथा च, तयोराद्यमुदाहरति-जङ्घेति । भर्तुर्महेश्वरस्य नृत्तस्य ताललयाश्रितस्यानुकारेऽनुकरणदशायां भवान्या अभिनवः कोमलः दण्डपादः प्रसह्योर्ध्वीकृतः पादो दण्डपादोऽभिधीयत इत्युक्तलक्षणलक्षितश्चरणो जयति सर्वोत्कर्षेण वर्त्तते । कीदृशः निजा भवानीसम्बन्धिनी या तनुः सैव स्वच्छा लावण्यस्य वापी तत्र संभूतं यदम्भोजं तस्य शोभां विदधत् विशेषेण धारयन् । अत्र जलस्थानीयं लावण्यम्, एतदेव विशेषणचतुष्टयेनोपपादयति-जङ्घेति । जङ्घाकाण्ड एव उरुर्महान् नालो यस्य तादृशः तथा नखानां किरणा एव लसन्तः शोभमानाः केसराः किञ्जल्कास्तेषां माला पंक्तिस्तया करालो नतोन्नतः तथा प्रत्यग्रो नूतनो यः अलक्तको यावकरसस्तस्या भा कान्तिस्तस्याः प्रसराः प्रसरणान्येव किसलयानि नवदलानि यत्र तथाभूतः एवं मञ्जुमञ्जीरः सुन्दरपादभूषणमेव भृङ्गो यस्य यत्र वा तथाभूतः । अत्राम्भोजशोभाया दण्डपादे आरोपान्निदर्शनालङ्कारः । अत्र विद् धातो र्विधाने शक्तेर्नियमितत्वेन धारणेऽर्थेऽवाचक इत्याह-अत्रेति । स्रग्धरा छन्दः ॥ १५० ॥

नवमं दोषमुदाहरन् त्रिधा शब्दार्थमाह-त्रिधेति । अश्लीलमशोभनम् ।

लक्ष्मीवाँल्लक्ष्मणः श्लीलः श्रीमान्,

इत्यमरात् । व्रीडा लज्जा ।

दोषेक्षणादिभिर्गर्हा जुगुप्सेति निगद्यते ।

अमङ्गलं मङ्गलविरोधि । साधनमिति । यद् यादृशमन्यस्य न

लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः
कश्चित्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।
मुग्धा कुड्मलिताननेन ददती वायुं स्थिता यत्र सा
भ्रान्त्या धूर्त्ततयाऽथ वा नतिमृते तेनानिशं चुम्बिता ॥ १५२ ॥

मृदुपवनविभिन्नो मत्प्रियाया विनाशाद्
घनरुचिरकलापो निःसपत्नोऽद्य जातः ।
रतिविगलितबन्धे केशपाशे सुकेश्याः
सति कुसुमसनाथे कं हरेदेष बर्हीं ॥ १५३ ॥

एषु साधन–वायु–विनाशशब्दा व्रीडादिव्यञ्जकाः ।

---

विलोक्यते तादृशं सुमहदतिविपुलं साधनं सैन्यं यस्य धीशालिनः बुद्धिमतः विलोक्यते तस्य राज्ञः अरालितां कोपेन कुटिलीकृतां भ्रुवं कोऽन्यः सहेतेत्यर्थः । अत्र सैन्यार्थकसाधनशब्दस्य पुरुषलिङ्गव्यञ्जनमर्थान्तरम् एवं च सैन्यार्थकं साधनपदं पुरुषलिङ्गरूपार्थान्तरोपस्थापकतया व्रीडादायीत्यश्लीलम् ॥ १५१ ॥

लीलेति । अन्यस्य वनितया निःशङ्कं यथा तथा दष्टोऽधरो यस्य तथाभूतः अत एव लीलातामरसेन क्रीडाकमलेन आहतः क्रोधातिशयात्स्ववनितया ताडितः कश्चिद्विलासी केसरदूषितेक्षण इव परागपीडितनयन इव नेत्रे व्यामील्य निमील्य स्थितोऽभूत् ततो मुग्धा तदीयधूर्त्तत्वानभिज्ञतया मूढा कुड्मलितेन कुड्मलाकारीकृतेन आननेन तत्र नायकनेत्रयोः वायुं फूत्कारं ददती स्थिताऽभूत् मुखमारुतेन नेत्रपीडा शाम्यतीति प्रसिद्धिः । अथ तेन नायकेन भ्रान्त्या धूर्ततया वा नतिं प्रणतिं ऋते विनैव सा मुग्धा अनिशं बहुकालं चुम्बितेत्यर्थः । कोपोऽस्या अपगत इति भ्रान्तिः । कोपानपगमेऽपि एनां चुम्बेयमिति धूर्तता । अत्र वायुशब्दोऽपानवायुस्मारकतया जुगुप्सादायी । शार्दूलविक्रीडितं छन्दः ॥ १५२ ॥

मृदुपवनेति । विक्रमोर्वशीये पुरूरवस उक्तिः । मृदुपवनेन मन्दानिलेन विभिन्नः संयोगध्वंसवान् घनो निबिडः रुचिरः सुन्दरः कलापो मयूरपिच्छं मत्प्रियायाः उर्वश्याः विनाशाद् अदर्शनाद् अद्य प्रियारहिते जगति निःसपत्नः सदृशरहितो जातः सुकेश्याः शोभनकेशायाः उर्वश्याः केशपाशे सति एष बर्हीं मयूरः कं जनं हरेद् अनुरञ्जयेन्न कमपि कीदृशे केशपाशे रतौ रतिकाले विगलितः विस्खलितः

( १० ) सन्दिग्धं यथा—

आलिङ्गितस्तत्र भवान्सम्पराये जयश्रिया ।
आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥ १५४ ॥

अत्र वन्द्यां किं हठहृतमहिलायां किम्वा नमस्यामिति सन्देहः ।

( ११ ) अप्रतीतं यत्केवले शास्त्रे प्रसिद्धम् । यथा—

सम्यग्ज्ञानमहाज्योतिर्दलिताशयताजुषः ।
विधीयमानमप्येतन्न भवेत्कर्म बन्धनम् ॥ १५५ ॥

अत्राशयशब्दो वासनापर्यायो योगशास्त्रादावेव प्रयुक्तः ।

---

बन्धो ग्रन्थिर्यस्य तथाभूते तथा कुसुमैः सनाथे युक्ते चन्द्रकला-न्याय कुसुमसनाथत्वोक्तिः अत्र विनाशशब्दस्य मरणार्थकतयाऽमङ्गलत्वम् । मालिनी छन्दः । अनुभवसिद्धरसापकर्षकाश्लीलार्थोप-स्थितिर्दूषकताबीजम् ॥ १५३ ॥

दशमं सन्दिग्धदोषमाह—सन्दिग्धमिति । तात्पर्यसन्देहविषयीभूता-र्थद्वयोपस्थापकत्वं सन्दिग्धत्वम् । संपराये युद्धे जयश्रिया आलि-ङ्गितः तत्रभवान् पूज्यस्त्वं वन्द्यां वन्दनीयामाशीःपरंपरामाशीर्वाद-पङ्क्तिं जितशत्रुप्रयुक्तां कर्णे कृत्वा आकर्ण्य कृपां कुरु । अत्र वन्द्या-मिति पदं वन्दीशब्दे सप्तम्यन्तं वन्द्याशब्दे द्वितीयान्तम् तथा च हठेन बलात्कारेण हृतायां स्वपत्नीकृतायां महिलायां सपत्नराज-पत्न्यां दयां कुरु इत्यर्थे च सन्देहः ॥ १५४ ॥

एकादशं दोषमुदाहरन् अप्रतीतपदं व्याचष्टे—अप्रतीतमिति । शब्दा-नुशासनातिरिक्तशास्त्रमात्रप्रसिद्धम् । सम्यगिति । सम्यग्ज्ञानं तत्त्व ज्ञानं तदेव महज्ज्योतिः सकलाज्ञाननिवारकत्वेन सर्वप्रकाशकत्वात् तेन दलितः विनाशितः आशयो मिथ्याज्ञानजनितसंस्कारविशेषो-यस्य तस्य भावस्तत्ता तत्ताजुषस्तत्तासेविनः पुरुषस्य एतद् विहित-प्रतिषिद्धमपि कर्म कर्तृ विधीयमानमपि हस्तादिना क्रियमाणमपि बन्धनं बन्धजनकं संसारप्रयोजकं न भवेदित्यर्थः । अत्राशयशब्दः "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर" इति सूत्रेण वासनार्थे योगशास्त्रे एव प्रसिद्धो नान्यत्रेत्यप्रतीतम् । अत्र च त-च्छास्त्रानभिज्ञस्यार्थानुपस्थितिर्दूषकताबीजमिति बोध्यम् ॥ १५५ ॥

( १२ ) ग्राम्यं यत्केवले लोके स्थितम् । यथा—

राकाविभावरीकान्तसंक्रान्तद्युति ते मुखम् ।
तपनीयशिलाशोभा कटिश्च हरते मनः ॥ १५६ ॥

अत्र कटिरिति ।

( १३ ) नेयार्थं—

निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत् ।
क्रियन्ते सांप्रतं काश्चित्काश्चिन्नैव त्वशक्तितः ॥

इति यन्निषिद्धं लाक्षणिकम् ।

यथा —

शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम् ।
करोति ते मुखं तन्वि चपेटापातनातिथिम् ॥ १५७ ॥

अत्र चपेटापातनेन निर्जितत्वं लक्ष्यते ।

---

द्वादशं ग्राम्यं व्याचष्टे-ग्राम्यमिति । ग्रामे भवो ग्राम्योऽविदग्धस्तत्प्रयुक्तं ग्राम्यम् आपामरं सर्वलोकप्रसिद्धम् । राकेति । हे प्रिये ! राका पूर्णचन्द्रा पूर्णिमा तत्सम्बन्धी यो विभावर्याः रात्रेः कान्तश्चन्द्रस्तस्य संक्रान्ता प्रतिबिम्बिता द्युतिर्यत्र तथाभूतं ते तव मुखं तपनीयस्य स्वर्णस्य शिलायाः शोभा यत्र तादृशी कटिर्नितम्बश्च मे मनः हरते अनुरञ्जयतीत्यर्थः । अत्र कटिपदं ग्राम्यम् ग्राम्यशब्दश्रवणेन वक्तुरवैदग्ध्योन्नयनात् श्रोतुर्वैमुख्यं दूषकताबीजम् ॥ १५६ ॥

त्रयोदशं नेयार्थं व्याचष्टे-नेयार्थमिति । रूढिं प्रयोजनं च विना शक्यसम्बन्धमात्रेणाशक्यार्थोपस्थापनं नेयार्थम् । अत्र कुमारिलभट्ट कृतं तन्त्रवार्तिकं प्रमाणयति-निरूढा इति । अभिधानवत् शक्तिमत् सामर्थ्यात् प्रसिद्धेः शब्दस्वभावाद्वा निरूढा अनादिप्रसिद्धाः काश्चिल्लक्षणा भवन्ति यथा शुक्लो घट इत्यादौ साम्प्रतमधुना प्रयोजनवशादिति शेषः काश्चिल्लक्षणाः क्रियन्ते यथा गङ्गायां घोष इत्यादौ काश्चित् अशक्तितः प्रत्यायनसामर्थ्याभावात् नैव क्रियन्ते रूढिप्रयोजनान्यतराभावादिति शेषः यथा रूपो घट इत्यादाविति वार्त्तिकार्थः । निषिद्धम् रूढिप्रयोजनान्यतरशून्यम् ।

शरदिति । हे तन्वि ! ते मुखं कर्तृ शरत्काले समुल्लासी यः पूर्णिमासम्बन्धी शर्वरीप्रियस्तं चपेटा प्रसृतकरतलं तत्पातनस्य तत्प्रहारस्यातिथिं पात्रं करोतीत्यर्थः । अत्र चपेटापातनातिथिपदं मुख्यार्थबा-

अथ समासगतमेव दुष्टमिति सम्बन्धः। अन्यत्केवलं समासगतं च।

( १४ ) क्लिष्टं यतोऽर्थप्रतिपत्तिर्व्यवहिता यथा—

अत्रिलोचनसम्भूतज्योतिरुद्गमभासिभिः।
सदृशं शोभतेऽत्यर्थं भूपाल! तव चेष्टितम् ॥ १५८ ॥

अत्राऽत्रिलोचनसम्भूतस्य चन्द्रस्य ज्योतिरुद्गमेन भासिभिः कुमुदैरित्यर्थः।

( १५ ) अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयांशो यत्र तद् यथा—

मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम्।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णां चैषां किमेतत्फलमिह नगरीरक्षणे यत्प्रयासः ॥ १५९ ॥

अत्र मिथ्यामहिमत्वं नानुवाद्यम् अपि तु विधेयम्।

---

धान्निर्जितत्वे लक्षणया प्रयुक्तम् तच्च रूढेः प्रयोजनस्य वाऽभावेन नेयार्थम् लक्षणाजन्यबोधे रूढिप्रयोजनान्यतरज्ञानस्य हेतुत्वेन प्रकृते तदभावाद्वृत्त्यभावेनार्थानुपस्थितिर्दूषकताबीजम् ॥ १५७ ॥

अथ भवेत्कष्टमितिकारिकांशं व्याचष्टे-अथेति। क्लिष्टादिकं दुष्टं पदं समासगतमेव पदान्तरसाहित्येनैव दोषत्रयसम्भवात्। अन्यत् श्रुतिकट्वादि केवलमसमासगतं समासगतं च। तत्र क्लिष्टं व्याचष्टे-क्लिष्टमिति। अर्थप्रतीतौ क्लेशवत् आकाङ्क्षादिकारणाविलम्बेन विलम्बात्स्वार्थबोधजनकम् तदाह—यत इति। अत्रीति। हे भूपाल! तव चेष्टितं चरित्रं यशः अत्रेर्मुनिविशेषस्य लोचनात् सम्भूतं यज्ज्योतिश्चन्द्रस्तस्योद्गमेनोदयेन भासिभिर्भासनशीलैः कुमुदैः सदृशम् अत्यर्थमतिशयेन शोभत इत्यर्थः। अत्र कुमुदैरित्यस्य व्यवधानेनोपस्थितिस्तस्मादिदं क्लिष्टम् विवक्षितावशिष्टार्थप्रतीतिविलम्बो दूषकताबीजम् ॥ १५८ ॥

पञ्चदशमविमृष्टविधेयांशं व्याचष्टे-अविमृष्ट इति। अनिर्दिष्टोऽनुक्तो विधेयांशो विधेयरूपोंऽशो वाक्यार्थस्य भागः उद्देश्यविधेययोः पृथक्पदाभ्यामेवोपस्थितिर्न तु समासेनेति यथा यः क्रियावान् स पण्डित इत्यादौ। मूर्ध्नेति। रामसेनया लङ्कायां वेष्टितायां रावणस्योक्तिर्हनुमन्नाटके। एषां मदीयानां सम्यग्विद्यमानानां वा मूर्ध्नां मस्तकानां दोष्णां भु-

यथा वा—

स्रस्तां नितम्बादवरोपयन्ती पुनः पुनः केसरदामकाञ्चीम् ।

न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य ॥ १६० ॥

अत्र द्वितीयत्वमात्रमुत्प्रेक्ष्यम् मौर्वीं द्वितीयामिति युक्तः पाठः ।

यथा वा—

वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु ।

वरेषु यद्बालमृगाक्षि! मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥ १६१ ॥

अत्रालक्षिता जनिरिति वाच्यम् ।

---

जानां च किमेतदेव फलं यदिह अस्मिन्नगरीरक्षणे प्रयासोऽसामर्थ्य-मिति निर्वेदः । किमित्यनेन सूचितमनौचित्यं विशेषणेन प्रकटयति—उद्वृत्तेति । उद्वृत्तं निर्मर्यादं यत्कृत्तं छेदनं तेनाविरलं सान्द्रं यथा त-था गलात्कण्ठाद् गलन्ती या रक्तस्य संसक्ता अविच्छिन्ना धारा त-या धौतौ प्रक्षालितौ यौ ईशाङ्घ्री महेश्वरचरणौ तत्प्रसादेन उपन-तः प्राप्तो यो जयस्तेन जगति जातो मिथ्याभूतो महिमा येषान्ता-दृशानामिति मूर्धविशेषणम् । कैलासस्योल्लासने उत्थापने य इच्छा-या व्यतिकर आधिक्यं तस्य पिशुनानां सूचकानाम् तथा उत्सर्पी उत्कटो यो दर्पो गर्वस्तेनोद्धुराणाम् समर्थानामिति दोर्विशेषणम् । अत्रैवंविधानां मूर्ध्नां दोष्णां चैतत्फलमनुचितमित्यतो महिमा मि-थ्येति मिथ्यात्वस्य विधेयत्वं विवक्षितन्तच्च समासे गुणीभूतमित्य-विमृष्टविधेयांशत्वं दोषः ॥ १५९ ॥

बहुव्रीहावुदाहृत्य समासान्तरे तदुदाहरति—यथा वेति । कुमारस-म्भवे पार्वत्या वर्णनमिदम् । किम्भूता सा नितम्बात्कटिपश्चाद्भागा-त् स्रस्तां विगलितां केसरो बकुलस्तस्य दाम माला सैव काञ्ची नि-तम्बभूषणं तां पुनः पुनः अवरोपयन्ती नितम्बे निवेशयन्ती । अत्रो-त्प्रेक्षते स्मरेण कामेन न्यासीकृतां पुनर्ग्रहणाय निक्षेपीकृतां कार्मुक-स्य धनुःसम्बन्धिनीं द्वितीयमौर्वीमिवेति । अत्रैव किमिति न्यस्ता ना-न्यत्रेत्यत आह—स्थानविदेति । स्वास्त्रभूता पार्वत्येव म्वीयमौर्वीस्था-पनस्थानमिति जानता । उपजातिश्छन्दः । अत्र द्वितीयत्वं मौर्व्या-मुत्प्रेक्ष्य विधेयं तच्च कर्मधारयसमासे गुणीभूतमित्यविमृष्टविधे-यांशत्वम् ॥ १६० ॥

पुनर्बहुव्रीहावेव तद्धितार्थगुणीभूतेऽन्यपदार्थे गुणीभावमुदाहरति-वपुरिति । कुमारसम्भवे बटुवेषधारिणः शिवस्य पार्वतीम्प्रत्युक्तिः । भो

यथा वा—

आनन्दसिन्धुरतिचापलशालिचित्त-
सन्दाननैकसदन क्षणमप्यमुक्ता ।
या सर्वदैव भवता तदुदन्तचिन्ता-
तान्तिं तनोति तव सम्प्रति धिग् धिगस्मान् ॥ १६२ ॥

अत्र न मुक्तेति निषेधो विधेयः ।

---

बालमृगाक्षि ! वरेषु वोढृषु यद् रूपकुलधनादि समस्तं मृग्यते ।

कन्या वरयते रूपं माता वित्तं पिता श्रुतम् ।
बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ॥

इत्युक्तदिशा कन्या तद्बन्धुभिरन्विष्यते तद् व्यस्तमेकैकमपि त्रिलोचने किमस्ति अपि तु न तथा हि वपुः शरीरं विरूपाणि विषमाणि भीषणानि वा अक्षीणि यस्य तादृशम् अलक्ष्यमज्ञातं जन्म यस्य तस्य भावस्तत्ता अस्तीति शेषः । जन्मैव न ज्ञायते गोत्रं कुलं च दूरापास्तम् वसु धनं दिगम्बरत्वेन नग्नतयैव निवेदितं नास्तीति ज्ञापितम् । अत्र जन्मनि अलक्ष्यत्वं विधेयन्तच्च गुणीभूतमित्यविमृष्टविधेयांशत्वम्, कथमत्र पठनीयमित्याह—अत्रेति । ॥ १६१ ॥

नञ्समासे तदुदाहरन्ति—आनन्देति । विरक्तनायकम्प्रति नायिकासखीनामुक्तिः । याऽस्मत्सखी भवता सर्वदैव क्षणमपि अमुक्ता त्यक्ता न तदुदन्तचिन्ता तस्या वार्तायाश्चिन्तापि सम्प्रति तव तान्तिं ग्लानिं तनोति अतोऽस्मान्धिग् धिग् एवंविधदुःखदर्शित्वादतिशोच्या वयमिति भावः । कथंभूता सखी आनन्दस्य त्वत्प्रमोदस्य सिन्धुः सागरः तथा अतिचापलेन शालते शोभते इत्यतिचापलशालि यत्तव चित्तं तस्य यत् सन्दाननं बन्धनं तस्यैकं केवलं सदनं स्थानं तत्रैव तव चित्तस्य विश्रान्तेरिति भावः । अत्रामुक्तेति नञा निषेधो विधेयः मुक्ता न भवतीत्यर्थात् स च समासे गुणीभूत इत्यविमृष्टविधेयांशत्वं दोषः ॥ १६२ ॥

निषेधप्राधान्ये समासाभावं दृष्टान्तयन्ति—यथेति । उर्वशीविरहे पुरूरवसो मेघादौ निशाचरादिभ्रमानन्तरं विशेषदर्शने सति उक्तिरियम् । अयं सन्नद्धः कवची हन्तुमुद्यतो वा नवजलधरो नूतनमेघः दृप्तनिशाचरो न गर्वितराक्षसो न इदं दूरमाकृष्टं सुरधनुः इन्द्रधनुः तस्य राक्षसस्य शरासनं धनुर्न अयमपि पटुस्तीव्रो धारासारो धारावर्षः बा-

यथा —

नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न तस्य शरासनम् ।
अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत् प्रिया न ममोर्वशी ॥ १६३ ॥

इत्यत्र, न त्वमुक्ततानुवादेनान्यदत्र किञ्चिद्विहितम् ।

यथा—

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुश्चाददे सोऽर्थानसक्तः सुखमन्वभूत् ॥ १६४ ॥

इत्यत्र अत्रस्तत्वाद्यनुवादेनात्मनो गोपनादि ।

( १६ ) विरुद्धमतिकृद्यथा—

सुधाकरकराकारविशारदविचेष्टितः ।
अकार्यमित्रमेकोऽसौ तस्य किं वर्णयामहे ॥ १६५ ॥

अत्र कार्यम्विना मित्रमिति विवक्षितम् अकार्ये मित्रमिति तु प्रतीतिः ।

---

णपरम्परा न इयमपि कनकस्य निकषः कषणरेखा तद्वत् स्निग्धा दीप्तिमती विद्युत् तडित् मम प्रिया उर्वशी न । सर्वत्र भवतीति शेषः । अत्र चतुर्षु वाक्येषु गम्यमानभवतिक्रियान्वयिनो नञोऽसामर्थ्यान्न समासः अत एव प्राधान्यान्निषेधस्य विधेयत्वम् । ननु अमुक्तेत्यत्र पर्युदासादमुक्तत्वमनुवाद्यमेवास्तु जुगोपात्मानमत्रस्त इति वक्ष्यमाणेऽत्रस्तत्ववदित्याशंक्य निराकरोति—न त्विति । तुरप्यर्थे यद्यनुवाद्यं तर्हि किंचिद्विधेयं स्यात् न चात्र तदस्ति अतो नानुवादः ॥ १६३ ॥

विधेयान्तरसत्त्वे त्वनुवाद्यत्वात्पर्युदासो दृष्टो नान्यथेत्याह—यथेति। जुगोपेति । स दिलीपः अत्रस्तः निर्भीकः सन् आत्मानं शरीरं जुगोप अनातुरः अरोगी सन् धर्मं भेजे अगृध्नुः अलुब्धः सन् अर्थान् आददे स्वीकृतवान् असक्तः अनासक्तः सन् सुखमन्वभूत् सुखानुभवं चक्रे । अत्र पर्युदासे गुणीभूतो निषेधोऽनुवाद्यो ननु विधेयस्तदाह—अत्रेति । गोपनादीति विधेयमिति शेषः ॥ १६४ ॥

षोडशं दोषं व्याचष्टे—विरुद्धेति । प्रकृतार्थधीप्रतिबन्धकीभूताप्रकृतार्थधीजनकं विरुद्धमतिकृत् इदञ्च पदान्तरसन्निधानेनैव प्रतीयते तेनानुचितार्थाश्लीलनिहतार्थानां व्युदासः । सुधाकरेति । सुधाकरस्य

यथा वा—

चिरकालपरिप्राप्तलोचनानन्ददायिनः ।
कान्ता कान्तस्य सहसा विदधाति गलग्रहम् ॥ १६६ ॥
अत्र कण्ठग्रहमिति वाच्यम् ।

यथा वा—

न त्रस्तं यदि नाम भूतकरुणासन्तानशान्तात्मनः
तेन व्यारुजता धनुर्भगवतो देवाद्भवानीपतेः ।
तत्पुत्रस्तु मदान्धतारकवधाद्विश्वस्य दत्तोत्सवः
स्कन्दः स्कन्द इव प्रियोऽहमथ वा शिष्यः कथं विस्मृतः॥१६७॥

अत्र भवानीपतिशब्दो भवान्याः पत्यन्तरे प्रतीतिं करोति ।

---

चन्द्रस्य कराकारं निर्मलतया किरणसदृशं विशारदं प्रगल्भं च विचेष्टितं यस्य तादृशः असौ एकः अकार्यमित्रं कार्यं विनैव मित्रं तस्य पुरुषस्य किं वर्णयामहे अर्थाद्गुणान् अत्र कार्यस्याभावोऽकार्यमित्यर्थाभावेऽव्ययीभावः ततोऽकार्यं मित्रमिति मयूरव्यंसकादित्वात्समासः तथा च कार्यं प्रयोजनं विनैव मित्रमित्यर्थो विवक्षितस्तदाह—अत्रेति । इति तु प्रतीतिरिति । न कार्यमकार्यमिति नञ्समासे नञोऽल्पार्थकत्वे कुकार्ये मित्रमित्यपि प्रतीतिरिति विरुद्धमतिकृत् ॥ १६५ ॥

क्व चित्समासे विरुद्धार्थे निरूढस्य पदस्य घटनया संभवतीत्युदाहरति—चिरेति । कान्ता चिरकालेन परिप्राप्तस्य लोचनानन्ददायिनं कान्तस्य गलग्रहं गलस्य कण्ठस्य ग्रहो ग्रहणं आलिङ्गनं सहसा झटिति विदधाति करोति अत्रालिङ्गनार्थकतया विवक्षितो गलग्रहशब्दो रोगविशेषे अर्धचन्द्रदाने च निरूढ इति रूढिर्योगमपहरतीति न्यायेन रोगविशेषस्यैव प्रतीत्या विरुद्धमतिकृत् ॥ १६६ ॥

क्व चिद्विवक्षितविशेषपरत्वे पदवैयर्थ्यप्रसङ्गेन अविवक्षितविशेषपरत्वज्ञानात्संभवतीत्याह—अथेति । वीरचरिते कृतधनुर्भङ्गं राममुद्दिश्य परशुरामस्योक्तिः । धनुर्व्यारुजता भङ्गं कृतवता तेन दाशरथिना देवाद् विजिगीषोरपि भगवतो भवानीपतेः सकाशाद् यत् न त्रस्तं न भीतं तद् नाम युक्तम् अत्र हेतुगर्भविशेषणं भूतेत्यादि भूतेषु प्राणिषु करुणासन्तानो दयासमूहस्तेन शान्त आत्मा यस्य तादृशाद् ननु तत्पुत्र एव योत्स्यते किन्तवेत्याह—तदिति । तस्य भवानीपतेः पुत्रस्तु स्कन्दः जगदास्कन्दनसमर्थोऽपि मदेनान्धस्य तारकासुरस्य वधाद् विश्वस्य

यथा वा—

गोरपि यद्वाहनतां प्राप्तवतः सोऽपि गिरिसुतासिंहः ।
सविधे निरहङ्कारः पायाद्वः सोऽम्बिकारमणः ॥ १६८ ॥

अत्राम्बिकारमण इति विरुद्धां धियमुत्पादयति ।

श्रुतिकटु समासगतं यथा—

सा दूरे च सुधासान्द्रतरङ्गितविलोचना ।
बर्हिनिर्ह्लादनार्होऽयं कालश्च समुपागतः ॥ १६९ ॥

एवमन्यदपि ज्ञेयम् ।

---

सर्वलोकस्य दत्त उत्सवो येन तादृशः अतस्तद्विपरीतं कर्तुं नेष्टे इति भावः । ननु तथापि मुनेस्तव किम्प्रयोजनं कश्च सम्बन्धो येन त्वत्तो भयं कार्यमत आह—स्कन्द इवेति । स्कन्द इव तस्य देवस्य यतोऽहं प्रियः अतः कथं विस्मृतः । अनुचितं मम विस्मरणमिति भावः । ननु त्वत्प्रियत्वं नास्माकं विदितन्तत्राह अथ वेति । शिष्यः शिष्यत्वं जगद्विदितमिति भावः । अत्र भवस्य पत्नीत्यर्थे सिद्धो भवानीशब्दो देवदत्तपत्न्या पतिरितिवत्पतिशब्दसमभिव्याहारे भवान्याः पत्यन्तरे प्रतीतिमुपस्थापयति एवं चाराध्याया देव्या एवं प्रतीतिरातङ्काधर्मदायिनीति मतिर्विरुद्धेति दिक् ॥ १६७ ॥

क्व चित्समासैक्येऽपि समस्यमानपदयोर्द्व्यर्थकतया भवति । गोरपीति । स अम्बिकायाः पार्वत्या रमणो वो युष्मान् पायात् स कः यस्य वाहनतां प्राप्तवतो गोर्वृषस्यापि सविधे निकटे सोऽपि अतिक्रूरतया प्रसिद्धोऽपि गिरिसुताया वाहनभूतः सिंहः निरहंकारः सौम्यो भवतीत्यर्थः । अत्राम्बिकाशब्दस्य ।

मृडानी चण्डिकाम्बिके तिकोशाद् गौरीव अम्बामाते त्यमरकोशादम्बैवाम्बिकेति व्युत्पत्त्या च माताप्यर्थः एवं रमणपदस्य प्रीतिकर इव जाररूपासभ्योप्यर्थोऽस्ति तथा चाम्बिकारमणपदस्य गौरीपतिरित्यर्थ इव मातृपतिरित्यर्थोऽपि प्रतीयत इति विरुद्धमतिकृतत्वन्तदाह—अत्रेति ॥ १६८ ॥

क्लिष्टादित्रयेषु समासगतत्वनियमात् श्रुतिकटुप्रभृतिष्वनियमोऽप्यनुज्ञातः तत्रासमासगतानि उदाहृतान्येव इदानीं समासगतेषु श्रुतिकटूदाहरति-सा दूरेति । विरहिणो रामस्योक्तिः । सुधाया अमृतस्य

( ७४ ) अपास्य च्युतसंस्कारमसमर्थं निरर्थकम् ।

वाक्येऽपि दोषाः सन्त्येते पदस्यांशेऽपि के चन ॥५९॥

केचन न पुनः सर्वे क्रमेणोदाहरणम् ।

सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट पितॄनताप्सींत्सममंस्त बन्धून् ।

व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च ॥१७०॥

स रातु वो दुश्च्यवनो भावुकानां परम्पराम् ।

अनेडमूकताद्यैश्च द्यतु दोषैरसम्मतान् ॥ १७१ ॥

अत्र दुश्च्यवन इन्द्रः अनेडमूको मूकबधिरः ।

---

सान्द्रतरङ्गाः संजाता ययोस्तथाविधे विलोचने यस्याः सा सीता दूरे स्थितेति शेषः । अयं बर्हिणां मयूराणां यन्निर्ह्लादनं अव्यक्तशब्दस्तदर्हस्तद्योग्यः कालो घनसमय एव कालोऽन्तकश्च समुपागतः समागत इत्यर्थः । अत्र बर्हिनिर्ह्लादनार्ह इति समासगतं श्रुतिकटु समासे च्युतसंस्कृत्यादि स्वयमूह्यमित्याह–एवमिति ॥ १६९ ॥

उक्तान् पददोषानेव वाक्ये पदैकदेशे चातिदिशति–अपास्येति । च्युतसंकारं च्युतसंस्कृतित्वम् असमर्थम् असमर्थत्वं निरर्थकं निरर्थकत्वं च अपास्य विहाय एते श्रुतिकटुत्वादयस्त्रयोदश दोषाः वाक्येऽपि भवन्ति के चन दोषाः पदस्यांशे एकदेशेपि भवन्तीति सूत्रार्थः । तत्र वाक्यगतं श्रुतिकटुत्वमुदाहरति–सोऽध्यैष्टेति । भट्टिकाव्ये दशरथवर्णनम् । स दशरथो वेदान् ऋग्यजुःसामादीन् अध्यैष्ट अधीतवान् त्रिदशान् देवान् अयष्ट अपूजयत् पितनताप्सींत् श्राद्धादिभिस्तर्पितवान् बन्धून् सममंस्त दानसूनृतादिभिः सम्मानं कृतवान् षड्वर्गं कामादिसमुदायं व्यजेष्ट विजितवान् नीतौ अरंस्त रेमे अरीन् समूलघातं न्यवधीत् समूलं हतवानित्यर्थः । अत्रानेकपदगतत्वेन श्रुतिकटुत्वस्य दोषत्वम् ॥ १७० ॥

वाक्यगतमप्रयुक्तत्वमुदाहरति–स रात्विति । स प्रसिद्धो दुश्च्यवन इन्द्रो वो युष्माकं भावुकानां कल्याणानां परंपरां सन्ततिं रातु ददातु च पुनः असम्मतान् शत्रून् अनेडमूकताद्यैर्मूकबधिरत्वाद्यैर्दोषैः करणभूतैः द्यतु खण्डयतु ।

अनेडमूक उद्दिग्नः शठे वाक्श्रुतिवर्जिते

इतिमेदिनी । अत्र दुश्च्यवनशब्द इन्द्रे अनेडमूकशब्दो मूकबधिरे कोशे पठितोऽपि कविभिरप्रयुक्तः ॥ १७१ ॥

साायकसहायबाहोर्मकरध्वजनियमितक्षमाधिपतेः ।
अब्जरुचिभास्वरस्ते भातितरामवनिपश्लोकः ॥ १७२ ॥

अत्र सायकादयः शब्दाः खड्गाब्धिभूचन्द्रयशःपर्यायाः शरा-द्यर्थतया प्रसिद्धाः ।

कुविन्दस्त्वं तावत्पटयसि गुणग्राममभितो
यशो गायन्त्येते दिशि दिशि च नग्नास्तव विभो ! ।
शरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा
तथापि त्वत्कीर्त्तिर्भ्रमति विगताच्छादनमिह ॥ १७३ ॥

अत्र कुविन्दादिशब्दोऽर्थान्तरं प्रतिपादयन् उपश्लोक्यमानस्य तिरस्कारं व्यनक्तीत्यनुचितार्थः ।

---

**वाक्यगतं निहतार्थत्वमुदाहरति**–सायकेति । **हे अवनिप राजन् ! तव श्लोको यशः अब्जस्य चन्द्रस्य रुचिवत् भास्वरः भासनशीलः भाति-तरामतिशयेन शोभते कीदृशस्य ते सायकः खड्गः सहायो यस्य तथाविधो बाहुर्यस्य तथाभूतस्य तथा मकरो नक्र एव ध्वजः केतुर्य-स्य तेन समुद्रे नियमिताः परिच्छिन्ना या क्षमा भूमिस्तस्य अधिपतेः सार्वभौमस्य । अत्र सायक–मकरध्वज–क्षमा–अब्ज–श्लोकशब्दानां शर–मदन–क्षान्ति–पद्म–पद्येषु प्रसिद्धिबाहुल्यात्प्रकृतार्थतिरोधानमिति निहतार्थत्वम् ॥ १७२ ॥**

**वाक्यगतमनुचितार्थत्वमुदाहरति**–कुविन्द इति । **राजानं प्रति कवे-रुक्तिः । हे विभो ! कुं पृथिवीं विन्दति लभते इति कुविन्दो भूपतिः त्वं तावद् गुणानां शौर्यादीनां ग्रामं समूहं अभितः समन्तात् पटयसि पटुं करोषि ईदृशी विद्या ईदृशन्दानम् अहो शौर्यमिति प्रसंशया निर्म-लीकरोषीति यावत् च पुनः एते नग्नाः वन्दिनः नग्नो वन्दिक्षपण-योरिति मेदिनी । दिशि दिशि तव यशो गायन्ति तथापि एवंविधवैभवे सत्यपि त्वत्कीर्त्तिः इह अस्मिल्लोके विगतमाच्छादनम् आवरणं यस्यां क्रियायां तद्यथा भवति तथा भ्रमति पर्यटति इति व्याजस्तुतिः कीदृ-शी शरज्ज्योत्स्नावत् गौराणि अतिनिर्मलानि स्फुटानि प्रकाशमानानि विकटानि विपुलानि यानि सर्वाङ्गाणि तैः सुभगा सुन्दरीत्यर्थः । व्य-ङ्ग्यार्थस्तु कुविन्दस्तन्तुवायस्त्वं तावद्गुणग्रामं तन्तुसमूहम् अभितः सव्यापसव्यतुरीचालनेन पटयसि वस्त्रं करोषि एते नग्ना वस्त्रहीनाः**

प्राभ्रभ्राड्विष्णुधामाप्य विषमाश्वः करोत्ययम्
निद्रां सहस्रपर्णानां पलायनपरायणम् ॥ १७४ ॥
अत्र प्राभ्रभ्राड्- विष्णुधाम-विषमाश्व-निद्रा-पर्ण-शब्दाः प्रकृष्ट
जलद-गगन-सप्ताश्व-सङ्कोच-दलानामवाचकाः ।

भूपतेरुपसर्पन्ती कम्पना वामलोचना
तत्तत्प्रहरणोत्साहवती मोहनमादधौ ॥ १७५ ॥
अत्रोपसर्पण-प्रहरण-मोहनशब्दा व्रीडादायित्वादश्लीलाः ।

---

त्वत्तः पटलाभे सति तव यशो गायन्ति तथापि एवं वस्त्रसमृद्धावपि त्वत्कीर्तिरूपा स्त्री इह विगताच्छादनं विगतवस्त्रं यथा तथा भ्रमतीति शेषं प्राग्वत्। शिखरिणी छन्दः। अत्र प्राकरणिकराजरूपार्थवत् तन्तुवायरूपोऽप्यर्थो व्यञ्जनया गम्यते ततश्चास्य पद्यस्यासंबद्धार्थाभिधायकत्वापत्त्या तद्द्वयेनोपमायां पर्यवसानम् एवं च वाक्यमहिमलभ्यं तन्तुवायौपम्यं राज्ञोऽनुचितमित्यनुचितार्थत्वन्तदाह वृत्तिकारः- अत्रेति। अर्थान्तरं तन्तुवायरूपम् प्रतिपादयन् व्यञ्जनया बोधयन् उपश्लोक्यमानस्य वर्णनीयस्य राज्ञः ॥ १७३ ॥

वाक्यगतमवाचकत्वमुदाहरति-प्राभ्रेति। अयं विषमाश्वः विषमसंख्याका अश्वा यस्य स सूर्यः अभ्रे आकाशे भ्राजते इति अभ्रभ्राट् जलदः प्रकृष्टोऽभ्रभ्राट् यत्र तादृशमपि विष्णुधाम विष्णुपदमाकाशम् आप्य प्राप्य सहस्रं पर्णानि पत्राणि येषान्तेषां कमलानां निद्रां संकोचं पलायनपरायणां पलायनतत्परां करोति कमलानि विकासयति अत्र प्राभ्रभ्राडिति प्रकृष्टजलदे विष्णुधामेति गगने विषमाश्व इति सप्ताश्वे निद्रेतिसंकोचे सहस्रपर्णेति सहस्रदले प्रकृष्टजलदत्वादिना प्रकारेणावाचकानीत्याह-अत्रेति ॥ १७४ ॥

त्रिविधेष्वश्लीलेषु व्रीडामुदाहरति-भूपतेरिति। वामे शत्रून्प्रति विरुद्धे लोचने यस्यास्तादृशी उपसर्पन्ती द्विषदभिमुखं गच्छन्ती भूपतेः कम्पना सेना तत्तत्प्रहरणे ततच्छस्त्रादिप्रक्षेपे उत्साहवती सती मोहनं विपक्षसम्मोहनम् आदधौ चकारेति विवक्षितार्थः। व्यङ्ग्यार्थस्तु उपसर्पन्ती रतोद्यता कम्पना स्वदर्शनेन पुंसः कम्पयुक्तान्कुर्वती वामलोचना सुन्दरनयना नायिका तत्प्रहरणे कामशास्त्रप्रसिद्धे दम्पतिजघनताडने उत्साहवती सती भूपतेर्मोहनं निधुवनविलासातिशयम् आदधौ कृतवतीति एवं च विवक्षितवाक्यार्थप्रतीतिदशायामर्थान्तरव्यञ्जनेन व्रीडादायित्वादुपसर्पन्तीत्यादिशब्दा अश्लीला इत्याह-अत्रेति ॥

तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गञ्च भुञ्जते
इतरार्थग्रहे येषां कवीनां स्यात्प्रवर्त्तनम् ॥ १७६ ॥

अत्र वान्तोत्सर्गप्रवर्त्तनशब्दा जुगुप्सादायिनः ।

पितृवसतिमहं व्रजामि तां सह परिवारजनेन यत्र मे ।
भवति सपदि पावकान्वये हृदयमशेषितशोकशल्यकम् ॥ १७७ ॥

अत्र पितृगृहमित्यादौ विवक्षिते श्मशानादिप्रतीतावमङ्गलार्थत्वम् ।

सुरालयोल्लासपरः प्राप्तपर्याप्तकम्पनः ।
मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यताम् ॥ १७८ ॥

अत्र किं सुरादिशब्दा देवसेना-शर-विभूत्यर्थाः किं मदिराद्यर्था इति सन्देहः ।

---

जुगुप्सादायिवाक्यमुदाहरति-तेऽन्यैरिति । येषां कवीनामितरार्थग्रहे अन्यकविनिबद्धार्थग्रहणे प्रवर्त्तनं प्रवृत्तिः स्यात् ते कवयः अन्यैर्वान्तं छर्दितं समश्नन्ति भक्षयन्ति तथा परेषामुत्सर्गं पुरीषं भुञ्जत इत्यर्थः । अत्र वान्तोत्सर्गशब्दौ छर्दिपुरीषार्थकतया जुगुप्सां प्रयच्छतः प्रवर्तनशब्दः प्रवृत्त्यर्थकतयोपात्तोऽपि व्यञ्जनया पुरीषत्यागरूपार्थान्तरतया जुगुप्सादायी तदाह-अत्रेति ॥ १७६ ॥

अमङ्गलदायिवाक्यमुदाहरति-पित्रिति । पतिगृहे प्राप्तशोकायाः कस्याश्चिदुक्तिः अहं परिवारजनेन सह तां पितृवसतिं जनकगृहं व्रजामि गच्छामि यत्र पितृवसतौ मे मम हृदयं पावकान्वये पवित्रत्वकारके वंशे सपदि तत्कालमेव अशेषितमुन्मूलितं शोकरूपं शल्यकं कुत्सितशल्यं यस्मात्तादृशं भवतीति विवक्षितवाक्यार्थः । एतद्बोधकाले व्यञ्जनया तां पितृवसतिं श्मशानं व्रजामि यत्र श्मशाने पावकान्वये अग्निसम्बन्धे सति मे हृदयम् अशेषितशोकशल्यकं भस्मरूपं भवतीत्यर्थान्तरव्यञ्जनेन पितृवसति-पावकान्वयशब्दौ अमङ्गलार्थकत्वादश्लीलावित्याह-अत्रेति ॥ १७७ ॥

वाक्यगतं सन्दिग्धत्वमुदाहरति-सुरेति । सुरालयो देवतागृहं तत्रोल्लासो हर्षस्तत्परः प्राप्ता पर्याप्ता शत्रुवधक्षमा कम्पना सेना येन तादृशः मार्गणे षुबाणेषु प्रवणो रतो भास्वती शोभमाना भूतिः संपत्तिर्यस्यैवंभूतः एष राजा विलोक्यतामिति विवक्षितार्थः । अथवा सुरालयो मदिरागृहं तत्र य उल्लासस्तत्परः प्राप्तं पर्याप्तमतिशयितं कम्पनं कम्पो येन सः मार्गणे अन्वेषणे याचने वा प्रवणस्तत्परः भा-

तस्याधिमात्रोपायस्य तीव्रसंवेगताजुषः।
दृढभूमिः प्रियप्राप्तौ यत्नः सफलितः सखे ॥ १७९ ॥

अत्राधिमात्रोपायादयः शब्दाः योगशास्त्रमात्रप्रयुक्तत्वादप्रतीताः।

ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः।
करोति खादनं पानं सदैव तु यथा तथा ॥ १८० ॥

अत्र गल्लादयः शब्दा ग्राम्याः।

वस्त्रवैदूर्यचरणैः क्षतसत्त्वरजःपरा।
निष्कम्पा रचिता नेत्रयुद्धं वेदय साम्प्रतम् ॥ १८१ ॥

अत्राम्बररत्नपादैः क्षततमा अचला भूः कृता नेत्रद्वन्द्वं बोधयेति नेयार्थता।

---

स्वती उज्ज्वला भूतिर्भस्म यस्य स एष जनो विलोक्यतामित्यर्थो विवक्षित इति सन्देहेन स्तुतिर्निन्दा वेति संशयस्तदाह—अत्रेति॥ १७८ ॥

वाक्यगतमप्रतीतत्वमुदाहरति—तस्येति। हे सखे! तीव्रः परमः संवेगो वैराग्यं उपायानुष्ठानशैघ्र्यं वा यस्य तत्तायुक्तस्य अधिमात्रो दृढज्ञानकारी उपायो यमनियमादिर्यस्य तादृशस्य तस्य योगिनः दृढभूमिः दृढसंस्कारः स लोकोत्तरो यत्नः निदिध्यासनादिरूपः प्रयत्नः चित्तैकाग्र्यविषयको वा यत्नः प्रियस्य आत्मसाक्षात्कारस्य प्राप्तौ सत्यां फलितः मोक्षरूपफलभाग्जात इत्यर्थः। अत्र अधिमात्र-उपाय-तीव्र-संवेग-भूमिशब्दानां योगशास्त्रमात्रप्रसिद्धत्वेनाप्रतीतत्वन्तदाह—अत्रेति ॥ १७९ ॥

ग्राम्यं वाक्यगतमुदाहरति—ताम्बूलेति। ताम्बूलेन भृतः पूर्णः गल्लः कपोलो यस्य सः अयं मानुषः सदैव यथा खादनं भक्षणं पानं च करोति तथा तु तथैव भल्लं सम्यक् जल्पति वदतीत्यर्थः। अत्र गल्ल-भल्ल मानुष-खादन-पानशब्दाः ग्राम्याः। विदग्धैस्तु गण्डादिषु गल्लादयो न प्रयुज्यन्ते किन्तु कपोलादय एवेति भावस्तदाह—अत्रेति ॥ १८० ॥

वाक्यगतं नेयार्थत्वमुदाहरति—वस्त्रेति। निद्रितां सखीं प्रबोधयन्त्याः कस्याश्चिदुक्तिः हे सखि! वस्त्रमम्बरं आकाशन्तस्य वैदूर्यम्मणिः सूर्यस्तस्य चरणैः पादैः कर्तृभिः क्षतं निरस्तं सत्त्वरजोभ्यां परं तमः अन्धकारो यस्यास्तादृशी निष्कम्पा अचला भूमिः रचिता कृता तस्मात्साम्प्रतं अधुना नेत्रयुद्धं नेत्रद्वन्द्वं वेदय बोधय उद्घाटयेत्यर्थः।

धम्मिलस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥ १८२ ॥

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति सम्बन्धे क्लिष्टत्वम् ।

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।
धिग् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥ १८३ ॥

अत्रायमेव न्यक्कार इति वाच्यम् उच्छूनत्वमात्रं चानुवाद्यम् न वृथात्वविशेषितम् अत्र च शब्दरचना विपरीता कृतेति वाक्यस्यैव दोषो न वाक्यार्थस्य ।

---

अत्र वस्त्र-वैदूर्य-चरण-सत्त्वरजःपरा-निष्कम्पा-युद्ध-वेदयेति पदैः स्ववाच्यवस्त्रादिवाचकत्वसम्बन्धेन यथाक्रमम् अम्बर-रत्न-पाद-तमः-अचला-द्वन्द्व-बोधयेति पदानि लक्ष्यन्ते तैश्च क्रमेण आकाशमणि-किरण-अन्धकार-भूमि-युगल-उद्घाटयेत्यर्था उपस्थाप्यन्ते इति लक्षितलक्षणाङ्गीकारे रूढिप्रयोजनान्यतराभावान्नेयार्थत्वन्तदाह—अत्रेति ॥१८१॥

वाक्यगतं क्लिष्टत्वमुदाहरति—धम्मिल्लेति । कुरङ्गशावाक्ष्याः हरिणशावकलोचनायाः अपूर्वस्य बन्धस्य व्युत्पत्तिर्विशिष्टा उत्पत्तिः सम्बन्धो यत्र तादृशस्य धम्मिल्लस्य शोभां प्रेक्ष्य कस्य पुरुषस्य मानसं निकाममतिशयेन न रज्यति हृष्यति अपि तु सर्वस्येत्यर्थः । धम्मिल्लः संयताः कचाः इत्यमरः । अत्र व्यवहितान्वयात्क्लिष्टत्वम् अत्र च आसत्तिज्ञानविलम्बादन्वयबोधविलम्बो दूषकताबीजन्तदाह—अत्रेति ॥१८२ ॥

वाक्यगतमविमृष्टविधेयांशत्वमुदाहरति—न्यक्कार इति । रामेण राक्षसक्षये रावणस्य स्वाधिक्षेपोक्तिः । अयमेव मे न्यक्कारः निन्दा यद् अरयः सन्तीति शेषः अत्र बहुवचनेन पूर्वमेकोऽपि नासीदधुनाऽकस्मादेव युगपदेव बहवो जाता इति ध्वन्यते तत्रापि तेष्वपि अरिषु मध्ये असौ मानुषो रामः सोऽपि तापसः तपस्वी मुख्य इति शेषः एतेन भक्ष्यत्वशस्त्रानभिज्ञत्वे द्योत्येते तेन च तपस्विसहस्रभक्षकस्यैकतपस्वी रिपुमुख्य इत्यन्तमेव न्यक्कार इति भावः । सोऽपि अत्रैव मत्स-

यथा वा--

अपाङ्गसंसर्गितरङ्गितं दृशोर्भ्रुवोरराल‌ान्तविलासि वेल्लितम्।
विसारिरोमाञ्चनकञ्चुकं तनोस्तनोति योऽसौ सुभगे तवागतः॥१८४॥

अत्रा योऽसाविति पदद्वयमनुवाद्यमात्रप्रतीतिकृत्। तथा हि प्र-क्रान्तप्रसिद्धाऽनुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते।

---

मीपे एव न तु दूरे राक्षसानां कुलमाबालवृद्धाङ्गनं निहन्ति नितरां मारयति अहो महदाश्चर्यं रावणो जीवति एवंविधपराभवातिशये क्रोधाग्निदग्धोऽपि रावणो न भस्मीभवतीति भावः। यद्वा जीवतीति काक्वा न जीवतीत्यर्थः। शक्रजितमिन्द्रजितं धिग्धिगिति वीप्सया निन्दातिशयः प्रबोधितवता उत्थापितेन कुम्भकर्णेन किम् न किंचित्फलं पत्रं स्वर्ग एव ग्रामटिकाऽल्पग्रामस्तस्य विलुण्ठनेन ध्वंसनेन वृथोच्छूनैर्वृथापुष्टैः एभिः प्रसिद्धपराक्रमैः विंशतिसंख्याकैर्वा भुजैः किम् भुजद्वयशालिशत्रोरप्यजयान्न किंचित्फलमित्यर्थ. अत्रानुवाद्यमनुक्त्वैव न विधेयमुदीरयेदिति वृद्धवचनेन उद्देश्यविधेययोः पौर्वापर्यप्रयोगनियमेनैव प्रतीतिर्नियमिता तथा चायंपद--न्यक्कारपदयोः पौर्वापर्यविपर्ययो दोष इति निर्दुष्टं पाठमुपदिशति—तत्रेति वाच्यं वक्तुं योग्यम् प्राप्तारिमत्त्वं अयमित्यननुवाद्य-अप्राप्तस्य न्यक्कारत्वस्य विधानात् प्रसङ्गादस्य पद्यस्यान्त्यपाददोषं दर्शयति—उच्छूनत्वेति। उच्छूनत्वमुद्दिश्य—विधीयमानं वृथात्वं समासे गुणीभूतमिति समासगतमविमृष्टविधेयांशत्वं पददोष एव न वाक्यदोषः। ननु न्यक्कारोऽयमित्यत्रानूद्यविधेयभावानुपपत्तिरर्थयोरेव तथा चार्थस्यैवायं दोषो न वाक्यस्येत्याशङ्क्याह—अत्र चेति। रचनायाः शब्दधर्मत्वेन तद्दोषतैवेति भाव इति दिक्॥१८३॥

न केवलं विधेयस्योपसर्जनत्वभिन्नक्रमाभ्यामेवायन्दोषः किन्तु विधेयानुपस्थित्यापीत्याशयेनोदाहरणान्तरं दर्शयति—यथा वेति। नायकागमनोत्सवं निवेदयन्त्याः सख्या उक्तिः। हे सुभगे सुन्दरि! यस्तव दृशोर्नेत्रयोरपाङ्गसंसर्गि नेत्रान्तसम्बद्धं तरङ्गितं वक्रप्रेक्षणपरंपरां तनोति विस्तारयति तथा तव भ्रुवोः अरालान्ते कुटिलप्रान्तभागे विलासि विलासयुक्तं वेल्लितं वक्रताधिक्यं नर्तनं वा तनोति तथा तव तनोर्विसारि प्रकाशयोग्यं रोमाञ्चनमेव कञ्चुकं तनोति असौ स नायक आगत इत्यर्थः। वंशस्थं वृत्तम्। अत्र यच्छब्दार्थानुवादेन तच्छब्दार्थपरामर्शकतयाऽसावित्यस्य विधेयपरामर्शकत्वमभिप्रेतम् तच्च न

क्रमेणोदाहरणम्—

कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम् ।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः ॥ १८५ ॥

द्वयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥ १८६ ॥

उत्कम्पिनी भयपरिस्खलितांशुकान्ता
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती ।
क्रूरेण दारुणतया सहसैव दग्धा
धूमान्धितेन दहनेन न वीक्षिताऽसि ॥ १८७ ॥

---

सम्भवति यच्छब्दसान्निध्येन प्रयुज्यमानस्यादसादेर्यच्छब्दार्थगतप्रसिद्धिबोधकतयाऽनुवाद्यकोटिप्रविष्टार्थकत्वाद् एवं च विधेयवाक्यस्यापूर्णतया उद्देश्यविधेयभावानवगम इत्यविमृष्टविधेयांशत्वन्तदाह— अत्रेति ॥ १८४ ॥

ननु केवलयोरपि यत्तदोः प्रयोगदर्शनात्सापेक्षत्वमेवानयोरसिद्धम् तथा चानयोरेकतरोपादानेऽपि निराकांक्षा प्रतीतिः स्यादेवेति नायमत्र दोष इत्याशंक्याह—तथा हीति परामृश्यते इत्यन्तेन । प्रक्रान्तः पूर्वप्रतीतिविषयः प्रसिद्धो लोकप्रसिद्धः अनुभूतोऽनुभवविषयो वा अर्थो विषयो यस्य तादृशस्तच्छब्दो यच्छब्दोपादानं नापेक्षते आक्षेपादेव सिद्धेरिति भावः । क्रमेणोदाहरति-कातर्यमिति । रघुवंशे दशमे सर्गे राज्ञोऽतिथेर्वर्णनमिदम् केवला शौर्यरहिता नीतिः सामदानादिरूपा कातर्यं कातरता भीरुत्वरूपा केवलं नीतिरहितं शौय श्वापदादीनां व्याघ्रादिपशूनां चेष्टितं चेष्टितप्रायम् अतो हेतोः स प्रक्रान्तोऽतिथिर्नाम राजा समेताभ्यां संयुक्ताभ्यामुभाभ्यां नीतिशौर्याभ्यां सिद्धिं जयप्राप्तिरूपाम् अन्वियेष गवेषितवानित्यर्थः । अत्र स इति तच्छब्दः प्रक्रान्तार्थकत्वाद्यच्छब्दोपादानं नापेक्षते ॥ १८५ ॥

द्वयमिति । व्याख्यातमेतद् अत्र सा इति तच्छब्दः प्रसिद्धार्थकत्वान्न यच्छब्दोपादानमपेक्षते ॥ १८६ ॥

अनुभूतार्थकमुदाहरति—उत्कम्पिनीति । रत्नावलीनाटिकायां वासवदत्तां दग्धां सम्भाव्य तामनुध्याय शोचतो वत्सराजस्योक्तिरिति बहवः ।

यच्छब्दस्तूत्तरवाक्यानुगतत्वेनोपात्तः सामर्थ्यात्पूर्ववाक्यानुगतस्य तच्छब्दस्योपादानं नापेक्षते यथा—

साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके।
उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥१८८॥

प्रागुपात्तस्तु यच्छब्दस्तच्छब्दोपादानम्विना साकांक्षः। यथा तत्रैव श्लोके आद्यपादयोर्व्यत्यासे द्वयोरुपादाने तु निराकांक्षत्वं प्रसिद्धम्। अनुपादानेऽपि सामर्थ्यात्कुत्र चिद्द्वयमपि गम्यते यथा—

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां-
जानन्ति ते किमपि तान्प्रति नैष यत्नः।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा
कालोह्ययं निरवधिर्विपुला च पृथ्वी ॥ १८९ ॥

---

हे प्रिये! उत्कम्पिनी कम्पयुक्ता तथा भयेन परिस्खलितो गलितः अंशुकान्त उत्तरीयवस्त्रप्रान्तो यस्यास्तादृशी तथा ते मदनशोभाविशेषे विधुरे कातरे लोचने प्रतिदिशं दिशि दिशि क्षिपन्ती त्वं क्रूरेण अतिप्रवृद्धेन दारुणतया निष्करुणतया दहनेन अग्निना सहसा अविचार्यैव दग्धा दग्धैव यतो धूमो धूम्रस्तेनान्धितेन आवृतेन तेन न वीक्षिताऽसि यदि पश्येत्तर्हि न दहेदिति भावः। वसन्ततिलका छन्दः। अत्र ते इति तच्छब्दोऽनुभूतार्थकत्वान्न यच्छब्दोपादानमपेक्षते ॥ १८७ ॥

एवं तच्छब्दस्य यच्छब्दोपादानानपेक्षत्वं प्रदर्श्य यच्छब्दस्यापि तद्दर्शयति—यच्छब्दस्त्विति। उत्तरवाक्यगतो यच्छब्दः सर्वत्र तच्छब्दाक्षेपसमर्थ इति तदुपादानं नापेक्षत इति भावः।

साध्विति। अभिरामतया सौन्दर्येण अधिके चन्द्रमसि उदिते सति पुष्करैः पद्मैः यद् मीलितं मुकुलितं तत् साधु समीचीनं कृतम् तेन चन्द्रमसा पुनस्तु कामिनीमुखे जयिनि उत्कर्षशालिनि सति उद्यता उदयं प्राप्नुवता साहसम् अविचार्यकारित्वमनुष्ठितं कृतमित्यर्थः। रथोद्धता छन्दः। अत्र यन्मीलितमित्युत्तरवाक्यगतो यच्छब्दः पूर्ववाक्ये तत्साधुकृतमिति तच्छब्दोपादानं नापेक्षते ॥ १८८ ॥

पूर्ववाक्यगतो यच्छब्दस्तच्छब्दाक्षेपासमर्थतया तदुपादानमपेक्षते इत्याह—प्रागिति। आद्यपादयोः पूर्वार्धपादयोः व्यत्यासे विपर्यासे द्वयोः यत्तच्छब्दयोः प्रसिद्धमिति यदुवाच तन्मिथ्येत्याद्युदाहरणे प्रसि-

अत्र य उत्पत्स्यते तं प्रतीति । एवं च तच्छब्दानुपादानेऽत्र साकांक्षत्वम् । न चासाविति तच्छब्दार्थमाह—

असौ मरुच्चुम्बितचारुकेसरः प्रसन्नताराधिपमण्डलाग्रणीः ।
वियुक्तरामातुरदृष्टिवीक्षितो वसन्तकालो हनुमानिवागतः ॥१९०॥

अत्र हि न तच्छब्दार्थप्रतीतिः ।

---

द्वमेवेत्यर्थः । क्व चिद्द्वयोरनुपादानेऽपि सामर्थ्यात्प्रतीतिरित्याह— अनुपादानेपीति ॥

उभयोरुपादानेऽनुपादाने चैकमेवोदाहरणमाह—ये नामेति । मालतीमाधवे भवभूतेरुक्तिः । ये नाम के चिज्जनाः नोऽस्माकमिह प्रबन्धे अवज्ञामवहेलनां प्रथयन्ति कुर्वन्ति ते किमपि जानन्ति अपि तु किमपि न जानन्ति अतस्तान्प्रति एष प्रकरणारम्भरूपो यत्नः प्रयत्नः न भवति न हि बधिरे गीयते इति न्यायात् । तर्हि कं प्रति यत्न इत्याह— उत्पत्स्यत इति । कालोऽयं निरवधिरनन्त इति हेतोः कोऽप्येकः मम समानधर्मा तुल्यगुणो य उत्पत्स्यते जन्माप्स्यति पृथ्वी विपुला विस्तृतेतिहेतोश्च अस्ति विद्यते वा तं प्रति यत्न इति यत्तच्छब्दयोर्वाशब्दस्य चाध्याहारेण योजना । अनेन इयता कालेनानुत्पन्नस्य कथमुत्पत्स्यमानत्वं विद्यमानत्वे वा कथमदृश्यत्वमिति शङ्काद्वयं हेतुद्वयेन परिहृतम् । वसन्ततिलका छन्दः । अत्र पूर्वार्धे द्वयोरुपादानान्निराकांक्षत्वम् उत्तरार्धे यः तमिति द्वयोरनुपादानेऽपि सामर्थ्यादध्याहारेण द्वयोरवगतिस्तदाह—अत्रेति ॥ १८९ ॥

इत्थं च तनोति योऽसौ सुभगे इत्यत्र पूर्ववाक्योपात्तस्य यच्छब्दस्य तच्छब्दसाकांक्षत्वव्यवस्थापनेनाविमृष्टविधेयांशत्वं सिद्धमित्याह—एवं चेति । अत्र तनोति योऽसावित्यत्र न चासाविति असाविति शब्दः तच्छब्दस्यार्थं महाहेत्यर्थः । अत्र हेतुमाह—असौ मरुदिति । हनुमन्नाटकीयं पद्यम् । हे प्रिये ! असौ दृश्यमानचिह्नः वसन्तकालः लङ्कातो हनुमानिवागतः । उभयसाधारणानि विशेषणान्याह— मरुत्पवनो दक्षिणानिलः तेन चुम्बिताः संयुक्ताः चारवः सुन्दरा केसराः बकुलाः नागकेसरा वा यस्मिंस्तथाभूतः पक्षे मरुता स्वपित्रा चुम्बिता आघ्राताश्चारवः केसराः स्कन्धलोमानि यस्य सः । तथा प्रसन्नः स्वच्छो यस्ताराधिपश्चन्द्रः तस्य मण्डलं बिम्बन्तत्रैव अग्रणीर्मुख्यं यस्मिंस्तथाभूतः पक्षे प्रसन्नस्तुष्टो यस्ताराधिपः सुग्रीवस्तस्य मण्डले राष्ट्रे अग्रणीः अग्रेसरः तथा वियुक्ता वियोगि-

प्रतीतौ वा—

करवालकरालदोःसहायो युधि योऽसौ विजयार्जुनैकमल्लः।

यदि भूपतिना स तत्र कार्ये विनियुज्येत ततः कृतं कृतं स्यात्॥१९१॥

अत्र स इत्यस्यानर्थक्यं स्यात्। अथ—

योऽविकल्पमिदमर्थमण्डलं पश्यतीश! निखिलं भवद्वपुः।

आत्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतो भयम्॥ १९२॥

---

न्यो या रामाः कामिन्यस्तासामातुरया खिन्नया दृष्ट्या वीक्षितः पक्षे वियुक्तः सीताविरहितो यो रामस्तेनातुरया उत्सुकया दृशा वीक्षित इत्यर्थः। वंशस्थवृत्तम्। अत्रादःशब्देन प्रत्यक्षत्वोक्तेर्न तच्छब्दार्थस्य परोक्षस्य प्रतीतिस्तदाह—अत्रेति॥ १९०॥

अदःशब्दस्य तच्छब्दपर्यायत्वे साधकमाह—प्रतीतौ वेति। अदःशब्दस्य परोक्षरूपतच्छब्दार्थकत्वेन प्रतीतौ स इत्यस्यानर्थक्यं स्यादित्यन्वयः। करवालेति। योऽसौ प्रसिद्धः कर्णः स भूपतिना दुर्योधनेन यदि तत्र तस्मिन् सेनाधिपत्ये कार्ये विनियुज्येत ततस्तदा कृतं पाण्डवराज्यत्यागादिकं कृतं सफलं युक्तं वा स्यात् कीदृशः करवालेन खड्गेन करालो भयजनको दोर्बाहुरेव सहायो यस्य सः। तथा युधि विजयनामा योऽर्जुनः स इव एक एव मल्लः। अथ वा विजयः पार्थः अर्जुनः कार्तवीर्यस्तयोरिवैकमल्लः प्रतीकारसमर्थ इत्यर्थः। मालभारिणी छन्दः। विषमे ससजा गुरू अनोजे सभरा यश्च तु मालभारिणीयमिति लक्षणात्। अत्र स इत्युपादानाददःशब्दस्य तच्छब्दार्थत्वं नास्तीति तदाह—अत्रेति॥ १९१॥

नन्वत्रानर्थक्याददःशब्दस्य तच्छब्दसमानार्थकत्वाभावेऽपि तनोति योऽसावित्यत्र तच्छब्दसमानार्थकत्वं स्यादेव नानार्थकत्वाद् इदमादिवद् इदमेतदसां तुल्यार्थकत्वादिति शङ्कते—अथेति। अभिधत्त इत्यन्तेन। अथ शब्दोऽत्र प्रश्नार्थकः। योऽविकल्पमिति। ईश्वरं प्रति अद्वैतदर्शिनो भक्तस्योक्तिः हे ईश! यः पुरुषः इदं प्रसिद्धं निखिलं सर्वमर्थमण्डलं जगद्रूपं पदार्थसमूहं अविकल्पं निःसन्देहं यथा तथा भवद्वपुः त्वत्स्वरूपं त्वदभिन्नं पश्यति नित्यसुखिनः प्रकाशमाननित्यानन्दस्य अस्य तस्य आत्मैक्यदर्शिनः पुरुषस्य आत्मपक्षेण आत्मस्वरूपेण पक्षेण परिपूरिते व्याप्ते आच्छादिते बाधिते जगति प्रपञ्चे कुतः कस्माद् भयं न कुतोऽपीत्यर्थः। रथोद्धता छन्दः। अत्र यथा अस्येतीदंशब्दस्य शब्दार्थे तथा प्रकृतेऽदःशब्दोऽपीति शङ्कार्थस्तदाह—इतीदमिति। दूषयति—

इतीदंशब्दवददःशब्दस्तच्छब्दार्थमभिधत्ते इति उच्यते तत्रैवत्रैव वाक्यान्तरे उपादानमर्हति न तत्रैव । यच्छब्दस्य हि निकटे स्थितः प्रसिद्धिं परामृशति-यथा--

यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः ।
दीव्यताऽक्षैस्तदाऽनेन नूनं तदपि हारितम् ॥१९३॥

इत्यत्र तच्छब्दः ॥

ननु कथं—

कल्याणानां त्वमसि महसां भाजनं विश्वमूर्त्ते !
धुर्यां लक्ष्मीमथ मयि भृशं धेहि देव ! प्रसीद ।
यद्यत्पापं प्रतिजहि जगन्नाथ ! नम्रस्य तन्मे
भ्रमं भद्रं वितर भगवन् ! भूयसे मङ्गलाय ॥१९४॥

अत्र यद्यदित्युक्त्या तन्मे इत्युक्तम् । उच्यते यद्यदिति येन केन चिद्रूपेण स्थितं सर्वात्मकं वस्त्वाक्षिप्तम् तथाभूतमेव तच्छब्देन परामृश्यते ।

---

उच्यते इति । अत्रैव योऽविकल्पमित्यत्रैव तत्रैव एकस्मिन्वाक्ये एव तथा च अस्येति वत् असावित्यस्य वाक्यान्तरे प्रयोगः स्यात् तत्रैवैकवाक्ये यच्छब्देन सह प्रयोगो न स्यात् सहप्रयोगे किं स्यात्तत्राह यच्छब्दस्येति । हि यतः निकटे स्थितः तच्छब्द इति शेषः । अव्यवहितानन्तरवर्ती समानलिङ्गविभक्तिवचनक एकवाक्योपात्तस्तच्छब्द इत्यर्थः । प्रसिद्धिं प्रसिद्धिमात्रं परामृशति बोधयति एवं चैतादृशस्तच्छब्दोऽपि प्रसिद्धिमात्रबोधको न तु विधेयसमर्पकः किं पुनरिदमादिशब्द इति भावः १९२

प्रसिद्धौ तच्छब्दप्रयोगमाह—यत्तदिति । वेणीसंहारे युधिष्ठिरं निन्दतो भीमस्य सहदेवं प्रत्युक्तिः । अस्य भूपतेर्युधिष्ठिरस्य तत् प्रसिद्धं यदूर्जितं उद्भटम् अत्युग्रं क्षात्रं क्षत्रसम्बन्धि तेजः प्रतापरूपम् आसीत् तदा द्यूतप्रसङ्गे अक्षैः पाशकैः दीव्यता क्रीडता अनेन भूपतिना नूनं तदपि तेजोऽपि हारितं शत्रुभिर्ग्राहितमित्यर्थः । अत्र यच्छब्दानन्तरवर्त्ती तच्छब्दोऽपि प्रसिद्धिपरामर्शकः किं पुनरिदमादिरिति एवं च तनोति योसावित्यत्रोक्तदोषो वज्रलेपायित इति सिद्धम् । तदाह—इत्यत्रेति । यद्यत्र तच्छब्दः प्रसिद्धिन्न परामृशेत्तदा द्वितीयं तच्छब्दोपादानं निरर्थकं स्यादिति भावः ॥ १९३ ॥

ननूक्तविषयादन्यत्र यत्तत्पदयोः साकाङ्क्षत्वं वक्ष्यमाणलक्ष्ये व्यभिचारीत्याशङ्कते—नन्विति इत्युक्तमित्यन्तेन । कल्याणानामिति। मालतीमा-

यथा वा—

किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतं
मात्रा स्त्रीलघुतां गता किमथ वा मातैव मे मध्यमा ।
मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्यानुजोऽसौ गुरु-
र्माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम् ॥ १९५ ॥

अत्रार्यस्येति तातस्येति च वाच्यं न त्वनयोः समासे गुणीभावः कार्यः । एवं समासान्तरेऽप्युदाहार्यम् ॥

---

धत्ते सूत्रधारस्योक्तिः हे विश्वमूर्त्ते! सर्वात्मक! सूर्य! त्वं कल्याणानां कल्याणकारिणां महसां तेजसां भाजनम् आश्रयः असि अथ नृत्यारम्भे मयि मद्विषये धुर्यां नृत्यभारक्षमां लक्ष्मीं संपत्तिं भृशमतिशयेन धेहि अर्पय हे देव! प्रसीद हे जगन्नाथ!·भुवनपते! नम्रस्य प्रणतस्य मे यद्यत् ज्ञातमज्ञातं च पापम् आरब्धविरुद्धं तत् प्रतिजहि नाशय भो भगवन्! भूयसे महत्तमाय मङ्गलाय निःश्रेयसे भद्रं भद्रम् अत्यन्ताभीष्टं वितर देहीत्यर्थः । मन्दाक्रान्ता छन्दः । अत्र यद्यदिति यत्पदद्वयमुक्त्वा तन्मे इति तत्पदमेकमेव कथमुक्तं यत्तदोर्नित्यमभिसम्बन्धात् अत्र हि एकेन तत्पदेन एकस्य यत्पदस्य निराकांक्षत्वेऽपि द्वितीयस्य साकांक्षत्वमस्त्येवेत्यविमृष्टविधेयांशत्वमत्र दुर्वारमेवेति शङ्कितुराशयः समाधत्ते—उच्यते इति । येन केनचिद्रूपेण ज्ञानत्वाज्ञानत्वादिरूपेण सर्वात्मकं सकलं वस्तु पापरूपं तच्छब्देन एकेनैव बुद्धिविषयतावच्छेदकावच्छिन्ने तदादीनां शक्तेर्यत्पदद्वयेन ज्ञानत्वाज्ञानत्वाभ्यां रूपाभ्यां परामृष्टस्य सकलस्य पापस्यैकेनैव तत्पदेन पापत्वेन रूपेण परामर्शोपपत्तेर्न द्वितीयतत्पदापेक्षा यत्पदार्थस्तत्पदेन परामृश्यते इति नियमादिति भावः ॥ १९४ ॥

इत्थमसमासे सप्रपञ्चं वाक्यगतमविमृष्टविधेयांशत्वमुदाहृत्य समासेऽप्यनेकपदगतत्वेनास्य वाक्यदोषत्वमित्युदाहरति—यथा वेति । रामवनवासे हेतुं चिन्तयतो लक्ष्मणस्योक्तिः । सः विनयादिमत्त्वेन प्रसिद्धो भरतो लोभेन विलङ्घितः आक्रान्तः किं येन भरतेन कर्त्रा मात्रा कैकेय्या एतद् रामवनवासादि एवं कपटेन कृतमुत्पादितम् अथ वा मे मम मध्यमा माता कैकेयी एव स्त्रीषु निसर्गसिद्धां लघुतां क्षुद्रतां गता प्राप्ता किमिति वितर्कः । पुनर्विमृश्याह—मिथ्येति । एतन्मम चिन्तितं द्वितयमपि मिथ्या यतः असौ भरतः आर्यस्य श्रेष्ठस्य श्रीरामस्य अनु-

विरुद्धमतिकृद्यथा--

श्रितक्षमा रक्तभुवः शिवालिङ्गितमूर्त्तयः ।
विग्रहक्षपणेनाद्य शेरते ते गता सुखाः ॥ १९६ ॥

अत्र क्षमादिगुणयुक्ताः सुखमासते इति विवक्षिते हता इति विरुद्धा प्रतीतिः ।

---

जः कनिष्ठभ्राता गुरुर्मम ज्येष्ठभ्राता माता च तातस्य पितुः कलत्रं भार्या इति अतो हेतोः विधात्रा विधिना अनुचितं कृतमित्यहम्मन्ये इत्यर्थः । शार्दूलविक्रीडितं छन्दः । अत्रानुजे आर्यसम्बन्धस्य कलत्रे च तातसम्बन्धस्योत्कर्षाधायकत्वेन विधित्सितस्य प्राधान्यमुचितन्तच्च समासे गुणीभूतमित्यविमृष्टविधेयांशत्वन्तदाह—अत्रेति ॥ १९५ ॥

षष्ठीतत्पुरुषे उदाहृत्य समासान्तरेऽप्येवमेवोह्यमित्याह—एवमिति । यथा बहुव्रीहौ

यः स्थलीकृतविन्ध्याद्रिराचान्तापरवारिधिः ।
यश्च तापितवातापिः स मुनिः श्रेयसेऽस्तु वः ॥

अत्र येन स्थलीकृतो विन्ध्यो येनाचान्तः पयोनिधिरित्यादिवाच्यः । तृतीयासमासे

धात्रा स्वहस्तलिखितानि ललाटपट्टे
कोवाऽक्षराणि परिमार्जयितुं समर्थः

इत्यत्र स्वहस्तेनेति वाच्यम् । द्वन्द्वे

सीताया ऊर्मिलायाश्च सदृशौ रामलक्ष्मणौ

इत्यत्र रामो लक्ष्मणश्चेति वाच्यम् । द्विगौ

ब्रह्मा विष्णुश्च रुद्रश्च त्रिलोकीमधिकुर्वते ।

अत्र त्रीन् लोकानिति वाच्यम् ॥

वाक्यगतं विरुद्धमतिकृत्त्वमुदाहरति—श्रितेति । सामोपायलब्धसिद्धीनां राज्ञां वर्णनमिदम् । अद्य ते राजानः विग्रहस्य युद्धस्य क्षपणेन त्यागेन सामोपायाभिनिवेशाद्युद्धत्यागेन गतम् असुखं सुखविरुद्धं दुःखं येषां तादृशा सन्तः शेरते निश्चितान्तःकरणाः सन्तो निद्रां लभन्ते कीदृशाः श्रिता आश्रिता क्षमा क्षान्तिर्यैस्तथाभूताः तथा रक्ताऽनुरक्ता भूः लक्षणया तद्गतनिखिलजना येषु तादृशाः तथा शिवेन कल्याणेन आलिङ्गिताः सम्बद्धाः मूर्त्तयः शरीराणि येषां तथाभूता इति विवक्षितोऽर्थः । विरुद्धार्थस्तु श्रिता क्षमा भूमिर्यैस्ते भूमगतिता रक्तस्य रुधिरस्य भुवः स्थानभूताः शिवाभिः क्रोष्ट्रीभिः आलिङ्गितमूर्त्तयः वि-

पदैकदेशे यथासम्भवं क्रमेणोदाहरणम्--

अलमतिचपलत्वात्स्वप्नमायोपमत्वा-
त्परिणतिविरसत्वात्संगमेनाङ्गनायाः ।
इति यदि शतकृत्वस्तत्त्वमालोचयाम-
स्तदपि न हरिणाक्षी विस्मरत्यन्तरात्मा ॥ १९७ ॥

अत्र त्वादिति ।

यथा वा--

तद्गच्छ सिद्ध्यै कुरु देवकार्यमर्थोऽयमर्थान्तरलभ्य एव ।
अपेक्षते प्रत्ययमङ्गलब्ध्यै बीजाङ्कुरः प्रागुदयादिवाम्भः ॥ १९८ ॥

अत्र द्ध्यै ब्ध्यै इति कटुः ।

---

ग्रहस्य शरीरस्य क्षरणेन नाशेन गता असवः प्राणा एतानि इन्द्रियाणि च येषान्तथाभूताः शेरते इति प्रतीयते ॥ १९६॥

अथ पदस्यांशेऽपि केचनेति सूत्रांशस्योदाहरणं प्रदर्शयन्नाह—पदैकदेश इति । अलमिति कस्यांचित्कामिन्यामनुरक्तस्योक्तिः । अतिचपलत्वाद् अस्थिरत्वात् स्वप्नश्चित्तवृत्तिमात्रपरिकल्पिता सृष्टिः माया मन्त्रादिसामर्थ्यादविद्यमानार्थप्रकाशनन्तयोरुपमत्वात्सदृशत्वात् परिणतौ परिणामे विरसत्वाद् विरहादिदुःखानुबन्धित्वाच्च हेतोः अङ्गनायाः सङ्गमेन अलं प्रयोजनाभाव इतितत्त्वं परमार्थं शतकृत्वोऽनेकवारं यदि यद्यपि आलोचयामो विचारयामस्तदपि तथापि अन्तरात्मा जीवः हरिणाक्षीं न विस्मरतीत्यर्थः । मालिनी छन्दः । अत्र पदैकदेशस्य त्वादित्यस्य श्रुतिकटुत्वं तदेवाह—अत्रेति । एकस्मिन्पदे वर्णद्वयकटुत्वे पददोषत्वं एकस्य कटुत्वे पदैकदेशदोषत्वमिति विवेकः ॥१९७॥

त्वादित्यस्य श्रुतिकटुत्वेऽनुभवविरोध इति विप्रतिपत्तावुदाहरणान्तरमाह—यथा वेति । कुमारसम्भवे कामं प्रतीन्द्रस्योक्तिः । हे काम ! त्वं तत् तस्मात्कारणात् सिद्ध्यै कार्यसिद्ध्यर्थं गच्छ किन्तदित्याह देवकार्यं स्कन्दोत्पत्तिरूपं कुरु यद्यपि अयं स्कन्दोत्पत्तिरूपः अर्थः प्रयोजनम् अर्थान्तरेण शिवयोःसङ्गमरूपकारणान्तरेण लभ्य एव लभ्योऽपि तथापि बीजसाध्योऽङ्कुरो बीजाङ्कुरः उदयादुत्पत्तेः प्राक् अम्भो जलमिव अङ्गलब्ध्यै स्वरूपलाभाय प्रत्ययं कारणं त्वाम् अपेक्षत इत्यर्थः । एतद्व्याख्याने टीकाकृतां मतभेदा विस्तरभयान्नोपदर्शिताः । उपजातिश्छन्दः । अत्र सिद्ध्यै लब्ध्यै इत्युभयोः पदयोरेकदेशौ दुष्टावित्याह—अत्रेति ॥ १९८ ॥

यश्चाप्सरो विभ्रममण्डनानां संपादयित्रीं शिखरैर्बिभर्त्ति ।
बलाहकच्छेदविभक्तरागामकालसंध्यामिव धातुमत्ताम् ॥ १९९ ॥

अत्र मत्ताशब्दः क्षीबार्थे निहतार्थः ॥

आदावञ्जनपुञ्जलिप्तवपुषां स्वासानिलोल्लासित-
प्रोत्सर्पद्विरहानलेन च ततः सन्तापितानां दृशाम् ।
संप्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो
भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा ॥२००॥

अत्र दृशामिति बहुवचनं निरर्थकम् कुरङ्गेक्षणाया एकस्या एवोपादानात् । नचालसवलितैरित्यादिवद् व्यापारभेदाद्बहुत्वम् व्यापाराणामनुपात्तत्वात् । न च व्यापारेऽत्र दृकूशब्दो वर्त्तते अत्रैव कुरुते इत्यात्मनेपदमप्यनर्थकम् प्रधानक्रियाफलस्य कर्त्रसम्बन्धे कर्त्रभिप्रायक्रियाफलाभावात् ।

---

पदैकदेशे निहतार्थत्वमुदाहरति—यश्चेति । कुमारसंभवे हिमालयवर्णनम् । चकारः किंचेत्यर्थकः । किञ्च यो हिमालयः शिखरैः शृङ्गैः करणभूतैः धातवः सिन्दूरादयस्तेऽस्य सन्तीति धातुमान् तस्य भावस्तत्तां बिभर्त्ति धत्ते कीदृशीं अप्सरसां देवाङ्गनानां विभ्रमाय विलासार्थं यानि मण्डनानि तिलकपत्रादीन्यलङ्करणानि तेषां सम्पादयित्रीम् तथा बलाहकस्य मेघस्य छेदेषु खण्डेषु विभक्तः अवयवभेदेन स्थितो रागो लौहित्यं यस्यास्तथाभूताम् अकालसन्ध्यामिव अनियतकालप्राप्तसन्ध्यामिवेत्युत्प्रेक्षा । उपजातिश्छन्दः । अत्र पदैकदेशो मत्ताशब्दः क्षीबार्थे उन्मत्ततायां सुप्रसिद्ध इति क्षीबार्थेन मत्वर्थो निहन्यते तिरोधीयते तदाह—अत्रेति ॥ १९९ ॥

पदैकदेशे निरर्थकमाह—आदाविति । भाविविरहेण रुदत्याः कस्याश्चिद्वर्णनम् कुरङ्गीव ईक्षणे यस्याः सा कुक्कुट्यादीनामण्डादिष्विति पुंवद्भावः नायिका यद् दृशां नेत्राणां सम्प्रत्येव सन्तापनाद्यव्यवहितमेव अश्रुपयसा निषेकमभिषेचनं काममतिशयेन कुरुते तद् चेतोभुवो देवस्य कामस्य भल्लीनां बाणविशेषाणां पानकर्म इव कुरुते धारातैक्ष्ण्याय शस्त्रं पंकेन लिप्त्वाऽग्नौ सन्ताप्य पयसि निक्षिप्यते इति पानकर्मस्वरूपम् । अत्र लेपतापयोः सम्पादनाय दृशां विशेषणद्वयमाह—आदौ पूर्वम् अञ्जनस्य कज्जलस्य पुञ्जेन समूहेन लिप्तं वपुर्यासां तासाम्

चापाचार्यस्त्रिपुरविजयी कार्त्तिकेयो विजेयः
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः ।
अस्त्येवैतत् किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥ २०१ ॥

अत्र विजेय इति कृत्यप्रत्ययः क्तप्रत्ययार्थेऽवाचकः ।

---

ततोऽनन्तरं श्वासानिलेन निःश्वासवातेनोल्लासितः प्रवृद्धः अत एव प्रोत्सर्पन् समन्तात्प्रसरन् सर्वाङ्गं व्याप्नुवन् यो विरहजन्माऽनलस्तेन सन्तापितानां चेत्यर्थः । अञ्जनसत्त्वेन भविष्यत्प्रवासपतिका नायिकेति सूच्यते । शार्दूलविक्रीडितं छन्दः । अत्र दृशामिति बहुवचनं निरर्थकन्तदाह—अत्रेति । ननु दृशोर्द्वित्वेऽपि व्यापारभेदाद्बहुत्वं दृष्टमत आह—न चेति ।

अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः
क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः ।
हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः
कथय सुकृतीकोऽयं मुग्धे त्वयाऽद्य विलोक्यते ॥

इत्यमरुकशतकपद्य इवेत्यर्थः । समाधत्ते—व्यापारेति । तत्र दर्शनरूपव्यापारार्थकेक्षणैरितिवदत्र व्यापाराणामनुपादानादित्यर्थः । ननु संपदादिक्विबन्तदृक्शब्द एव व्यापारे वर्त्तत एवेत्याह—न चेति । अञ्जनलेपादीनां क्रियायामसम्भवेन विशेषणानन्वयभिया दृक्शब्दः करणसाधन एव न व्यापारे वर्त्तत इति भावः । अत्रैव पदान्तरांशेऽपि निरर्थकत्वं दर्शयति—अत्रैवेति । प्रधानस्य मुख्यस्य क्रियाफलस्य सकलविलासिजनविजयरूपस्य कर्त्तरि कुरङ्गेक्षणारूपे असम्बन्धे अविद्यमानत्वे कर्त्रभीति । उत्प्रेक्षितभल्लीपातकर्मसाध्यमन्मथसम्बन्धिसकलजगद्विजयलक्षणकार्यस्य मृगदृशोऽनभिप्रेतत्वेन तदसम्बद्धत्वे न च कर्तृगामिक्रियाफलादात्मनेपदमनुपपन्नम् अत एव निरर्थकम् असाधुत्वन्न कामदेवगतफलस्य तत्सम्बन्धिनायिकायामारोपमात्रेण दृग्द्वयेऽपि बहुत्वारोपेण च साधुत्वस्य निरूपयितुं शक्यत्वादित्यास्तां विस्तरेण ॥२००॥

पदैकदेशेऽवाचकत्वमुदाहरति—चापेति । बालरामायणे परशुरामं प्रति रावणस्योक्तिः हे परशुराम ! तव चापाचार्यः धनुर्विद्यागुरुः त्रिपुरविजयी महेश्वरः, तथा कार्त्तिकेयः स्कन्दः विजेयः विजितः तथा शस्त्रेण बाणेन व्यस्तः स्वस्थानाद्दूरमुत्क्षिप्तः उदधिः समुद्रः तव सदनं गृहं तथा इयं भूमिः तव हन्तकारः षोडशग्रासरूपाऽतिथिभिक्षा

अतिपेलवमतिपरिमितवर्णं लघुतरमुदाहरति शठः ।
परमार्थतः स हृदयं वहति पुनः कालकूटघटितमिव ॥ २०२ ॥

अत्र पेलवशब्दः ॥

यः पूयते सुरसरिन्मुखतीर्थसार्थस्नानेन शास्त्रपरिशीलनकीलनेन ।
सौजन्यमान्यजनिरूर्जितमूर्जितानां सोऽयं दृशोः पतति कस्यचिदेव पुंसः २०३

अत्र पूयशब्दः ॥

विनयप्रणयैककेतनं सततं योऽभवदङ्ग ! तादृशः ।
कथमद्य स तद्वदीक्ष्यतां तदभिप्रेतपदं समागतः ॥ २०४ ॥

अत्र प्रेतशब्दः ॥

---

एतैर्विशेषणैर्देवासुरमनुष्यजेतेति वदान्य इति च फलितम् । अस्त्येवै-तत् सर्वं श्लाघ्यमेतदिति सत्यम् किमु किन्तु रेणुकायाः त्वन्मातुः कण्ठबाधां गलकर्त्तनं कृतवता तव परशुना कुठारेण सह बद्धस्पर्धः चन्द्रहासः मम खड्गः लज्जत इत्यर्थः । अनेन एवंविधनिन्द्यकर्मकारि-णा त्वया सह स्पर्धितुमहं लज्जे इत्युक्तं भवति । मन्दाक्रान्ता छन्दः । अत्र यत्प्रत्ययः क्तप्रत्ययार्थे प्रयुक्तोऽवाचकस्तदाह—अत्रेति ॥ २०१ ॥

पदैकदेशं व्रीडादायिनमश्लीलमुदाहरति—अतीति । मित्रं प्रति आप्तस्योपदेशोक्तिः । शठः खलः अतिपेलवमत्यन्तकोमलम् अतिपरिमि-ता अल्पा वर्णा यत्र तथाभूतं वाक्यं लघुतरमतिसुन्दरं यथा स्यात्तथा उदाहरति वदति परमार्थतः तत्त्वतस्तु स शठः कालकूटेन उत्कटवि-षेण घटितमिव हृदयं वहति । अत्र पेलेति पेलवशब्दैकदेशो लाटभा-षायां वृषणरूपगुह्याङ्गबोधकतया व्रीडादायीत्याह अत्रेति । पेलशब्दः पेलवशब्दैकदेशः ॥ २०२ ॥

पदैकदेशं जुगुप्साव्यञ्जकमुदाहरति—यः पूयेति । कस्यचिन्महापुरु-षस्य प्रशंसनम् सुरसरित् गङ्गा तन्मुखानि तत्प्रभृतीनि यानि ती-र्थानि तेषां सार्थं समूहस्तत्र स्नानेन शास्त्राणां वेदान्तादीनां परि-शीलनेन अभ्यासेन यत्कीलनं संस्कारदृढीकरणं तेन च कर्त्रा यः पूयते पवित्रीक्रियते तथा सौजन्येन मान्या जनिरुत्पत्तिर्यस्य सः । तथा ऊर्जितानां बलवतामूर्जितं बलं सोऽयं महापुरुषः कस्य चिदे-व अर्थात्पुण्यशालिनः पुंसः दृशोः पतति दृग्गोचरो भवति न तु सर्व-स्येत्यर्थः । वसन्ततिलको छन्दः । अत्र पूयेत्येकदेशो विकृतरुधिररूप-पूयव्यञ्जकतया जुगुप्सादायीत्याह—अत्रेति । ॥ २०३ ॥

अमङ्गलव्यञ्जकं पदैकदेशमुदाहरति—विनयेति । कस्य चित्पूर्ववृत्त-

कस्मिन्कर्मणि सामर्थ्यमस्य नोत्तपतेतराम् ।
अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ॥ २०५ ॥

अत्र किं पूर्वं साधुः उत साधुषु चरतीति सन्देहः ।

किमुच्यतेऽस्य भूपालमौलिमालामहामणेः ।
सुदुर्लभं वचोबाणैस्तेजो यस्य विभाव्यते ॥ २०६ ॥

अत्र वचःशब्देन गीःशब्दो लक्ष्यते अत्र खलु न केवलं पूर्वपदम् यावदुत्तरपदमपि पर्यायपरिवर्तनं न क्षमते जलध्यादावुत्तरपदमेव वडवानलादौ पूर्वपदमेव ॥

यद्यप्यसमर्थस्यैवाप्रयुक्तादयः के चन भेदाः तथाप्यन्यैरलङ्कारिकैर्विभागेन प्रदर्शिता इति भेदप्रदर्शनेनोदाहर्त्तव्या इति च विभज्योक्ताः ।

---

मैत्रीकस्य पुरुषस्य सखायं प्रति वृत्तान्तकथनम् । हे अङ्ग ! भोः ! अद्य तस्य नीचस्य अभिप्रेतं अभिलषितं यत्पदं नीचपदं तत्समागतः उपगतोऽपि स तद्वत् नीचपुरुषवत् कथमीक्ष्यतां दृश्यतां यः सततं विनयो नम्रता प्रणयः प्रीतिस्तयोरेकं केतनं मुख्यं स्थानं यस्तादृशः अनिर्वचनीयगुणवान् अभवदित्यर्थः । अत्र प्रेतशब्दो मृतबोधकतयाऽमङ्गलव्यञ्जकः ॥ २०४ ॥

पदैकदेशे सन्दिग्धत्वमुदाहरति—कस्मिन्निति । अस्य पुरुषस्य सामर्थ्यं शक्तिः कस्मिन्कर्मणि न प्रकाशते अयं पुरुषः साधुचरः साधुषु चरतीति भूतपूर्वः साधुर्वा तस्मादिह अस्मिन्पुरुषे अञ्जलिर्बध्यतामित्यर्थः । अत्रैकदेशश्चरशब्दः कुरुचर इतिवत् टप्रत्ययान्त उत आद्यो भूतपूर्व आद्यचर इति वत् चरट्प्रत्ययान्त इतिप्रकरणाद्यभावाद्वक्तृतात्पर्यसन्देहस्तदाह—अत्रेति । ॥ २०५ ॥

पदैकदेशे नेयार्थकमुदाहरति—किम्विति । भूपालानां या मौलिमाला किरीटसमूहस्तत्र महामणेः मेरुस्थानीयमणेः अस्य राज्ञः किमुच्यते किं वर्ण्यते न किमपि वर्णयितुं शक्यम् यस्य तेजः वचोबाणैः गीर्वाणैः देवैरपि सुदुर्लभं सुतरां दुर्लभमिति विभाव्यते ज्ञायत इत्यर्थः । अत्र स्ववाच्यवाचकत्वसम्बन्धेन वचःशब्देन गीःशब्दो लक्ष्यते न चात्र लक्षणायां रूढिः प्रयोजनं वेति नेयार्थत्वन्तदाह—अत्रेति । अस्य शब्ददोषत्वं प्रतिपादयति—अत्रेति न क्षमते इत्यन्तेन । अत्र गीर्वाणशब्दे पूर्वपदं गीरूपं यावत् किन्तु उत्तरपदमपि बाणपदमपि गीःशरशब्देनापि देवताया अप्रतीतेः कुत्र तर्हि उत्तरपदमेव

(७५) प्रतिकूलवर्णमुपहतलुप्तविसर्गं विसन्धि हतवृत्तम् ।
न्यूनाधिककथितपदं पतत्प्रकर्षं समाप्तपुनरात्तम् ॥ ५३ ॥
अर्धान्तरैकवाचकमभवन्मतयोगमनभिहितवाच्यम् ।
अपदस्थपदसमासं संकीर्णं गर्भितं प्रसिद्धिहतम् ॥ ५४ ॥
भग्नप्रक्रममक्रमममतपरार्थं च वाक्यमेव तथा ।
रसानुगुणत्वं वर्णानां वक्ष्यते तद्विपरीतं प्रतिकूलवर्णम् ।

यथा शृङ्गारे—

अकुण्ठोत्कण्ठया पूर्णमकण्ठं कलकण्ठिः माम् ।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्त्तिमुद्धर ॥ २०७ ॥

---

कुत्र वा पूर्वपदमेव पर्यायपरिवर्त्तनं न क्षमते तदाह—जलध्यादाविति । जलधर-जलपातादिशब्देन पयोध्यप्रतीतेः । अश्वानलेत्यादिना वडवाग्नेरप्रतीतेः वचोबाणशब्दे कवेर्लक्षणायां तात्पर्यान्नावाचकत्वम् ।२०६।

ननु यत्र यस्याप्रयोगस्तत्र तस्याबोधकत्वमिति अप्रयुक्तावाचकनिहतार्थादयोऽप्यसमर्थभेदा एव एवं विरुद्धमतिकृदपि शक्यान्तरबोधकमिति तदप्यसमर्थ एवेति कथममी दोषाः पृथगुक्ता इत्याह यद्यपीति । प्राचीनालङ्कारिकमार्गानुसारेण शिष्याणां प्रभेददर्शनद्वारा उदाहरणज्ञापनानुरोधेन च एवं कृतमित्याशयेन सिद्धान्तयति—तथापीति ।

अथ वाक्यमात्रगामिदोषाणां लक्षणमाह प्रतिकूलेत्यादि । क्रमेण दोषस्वरूपप्रदर्शनद्वारा उदाहरणप्रदर्शनम् । तद्विपरीतमिति आस्वादोद्बोधप्रतिबन्धकम् प्रतिकूलवर्णम् प्रतिकूला विवक्षितरसादेरननुगुणा आस्वादोद्बोधप्रतिबन्धका वर्णा यत्र वाक्ये तत् । श्रुतिकटौ तु परुषवर्णमात्रं दुष्टम् इह तु सुकुमारा अपि वर्णा रौद्रादौ दुष्यन्तीति ततोऽस्य भेदः ॥

शृङ्गारे उदाहरति—अकुंठेति । नायिकासमागमोत्सुकस्य कस्यचिदुक्तिः । हे कलकण्ठि ! मधुरस्वरे ! त्वं मां कम्बुः शंखः स इव कंठो ग्रीवा यस्यास्तस्या नायिकायाः कण्ठे क्षणं क्षणमात्रं कुरु तदालिंगनशालिनं कुर्विति भावः । कंठस्यार्त्तिं तदालिंगनौत्सुक्यरूपां कण्ठपीडाम् उद्धर अपहर । कीदृशं मां अकुंठा अप्रतिहता उत्कंठा औत्सुक्यं तया आकंठं कण्ठपर्यन्तं पूर्णं व्याप्तमित्यर्थः । अत्र शृङ्गाररसानुगुणेन कोमलवर्णेनोच्चारणे कर्त्तव्ये तद्विपरीतठकारोच्चारणात्प्रतिकूलवर्णत्वं वाक्यदोषः ॥ २०७ ॥

रौद्रे यथा—

देशः सोऽयमरातिशोणितजलैर्यस्मिन्ह्रदाः पूरिताः
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः।
तान्येवाहितहेतिघस्मरगुरूण्यस्त्राणि भास्वन्ति मे
यद्रामेण कृतं तदेव कुरुते द्रोणात्मजः कोपनः॥ २०८॥

अत्र हि विकटवर्णत्वं दीर्घसमासत्वं चोचितम्।

यथा—

प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वेधाविधाविर्भव-
त्क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणात्।
उज्ज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथि-
र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते॥ २०९॥

यत्र तु न क्रोधस्तत्र चतुर्थपादाभिधाने तथैव शब्दप्रयोगः॥

---

रौद्ररसे उदाहरति-देश इति। वेणीसंहारे क्रुद्धस्याश्वत्थाम्नः कर्णं प्रत्युक्तिः यस्मिन्देशे अरातीनां शोणितान्येव जलानि तैः ह्रदाः पंचह्रदाः परशुरामेण पूरिताः सोऽयं कुरुक्षेत्ररूपो देशः क्षत्रात् क्षत्रियादेव कार्तवीर्यात् धृष्टद्युम्नाच्च तातस्य पितुः जमदग्नेर्द्रोणाचार्यस्य च तथाविधः तुल्य एव केशग्रहः केशाकर्षणरूपः परिभवोऽनादरः परशुरामतातस्य जमदग्नेरपि कार्त्तवीर्यार्जुनेन केशग्रहणं कृतं मत्तातस्य द्रोणस्यापि धृष्टद्युम्नेन केशान् गृहीत्वा शिरश्छिन्नमिति भावः। अहितानां या हेतयोऽस्त्राणि तेषां घस्मराणि भक्षकाणि अत एव गुरूणि श्रेष्ठानि भास्वन्ति भास्वराणि मे मम अस्त्राणि ब्रह्मास्त्रादीनि तान्येव यानि मत्तातेन परशुरामात्प्राप्तानि अतः क्रोधनः क्रोधशीलो द्रोणात्मजो मद्रूपो जनो यद् रामेण परशुरामेण कृतं क्षत्रक्षयरूपं पितृवैरनिर्यातनं तदेव कुरुते इत्यर्थः। शार्दूलविक्रीडितं छन्दः। अत्र रौद्रे रसे विकटवर्णत्वस्य दीर्घसमासत्वस्य चानुगुणत्वेन तत्प्रतिकूला मृदवो वर्णाः॥ २०८॥

विकटवर्णत्वस्य दीर्घसमासत्वस्य च रौद्रे दर्शयति-यथेति। वीरचरितनाटके कृतधनुर्भङ्गं रामं प्रति जामदग्नेरुक्तिः। रे रे क्षत्रियार्भक! स परशुर्मम कुठारः क्षणात्क्षणमात्रेण त्वत्कण्ठरूपे पीठे आसने अतिथिस्त्वत्सद्दृशो भवतु येनानेन परशुना देवो हरो जगत्सु लोकेषु खंडप-

उपहत उत्वं प्राप्तो लुप्तो वा विसर्गो यत्र तत् यथा—

धीरो विनीतो निपुणो वराकारो नृपोऽत्र सः ।
यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभाविताः ॥ २१० ॥

---

रशुरिति ख्याप्यते हरेणार्धीकृतः परशुः स्वशिष्याय परशुरामाय दत्त इति प्रसिद्धिः क्रियते अतो यद्धनुस्त्वया खंडितं तत्परशुना त्वमपि खंडिष्यसे इति ध्वनिः । कथंभूतः परशुः प्राक् पूर्वमप्राप्तो निशुम्भो नमनं भंगो वा येन तथाभूतं यच्छाम्भवं शम्भुसम्बन्धि धनुः तस्य या द्वेधा विधा द्वैधीकरणं तेनाविर्भवत्प्रकटो यः क्रोधस्तेन प्रेरितो भीमो भयंकरो यः भार्गवस्य मम भुजो बाहुः स एव पुष्टदीर्घत्वात् स्तम्भस्तेनापविद्धः क्षिप्तः अत एव अशिथिलो वेगवत्तरः तथा उज्ज्वल उद्गतदीप्तिरित्यर्थः । अत्र परशोरवारणीयत्वद्योतनायातिथित्वोक्तिः । शार्दूलविक्रीडितं छन्दः । अत्र रौद्ररसप्राधान्यात्तदुचितो विकटवर्णदीर्घसमासयोः पादत्रये विन्यासः ॥२०९॥

ननु चतुर्थपादे दीर्घसमासविकटवर्णयोरभावात्साध्यविकलोऽयं दृष्टान्तोऽत आह-यत्र त्विति । तत्रेत्यस्यैवार्थमाह चतुर्थपादाभिधाने इति तुरीयचरणकथने तथैव शिथिल एव । चतुर्थपादे गुरुस्मरणेन तद्विषयकभावोद्रेकात्तदौचित्येन मसृणवर्णादिविन्यास इति भावः ॥

अथोपहतविसर्गत्वं लुप्तविसर्गत्वं च दोषद्वयमेकेनैव वाक्येन विवृणोति-उपहत इति । अत्रैकवचनं जात्यभिप्रायकं तथा च उपहता उत्वं प्राप्ता लुप्ता वा विसर्गा यस्मिन्वाक्ये तदित्यर्थः । उक्तदोषद्वयं चैकस्यैव श्लोकस्यार्धद्वयेनोदाहरति-धीर इति । सर्वं विशेषणं सावधारणमिति न्यायेन स एव नृपो धीरः पंडितो विनीतः सुशिक्षितः निपुणः प्रवीणः वरः श्रेष्ठ आकारः आकृतिर्यस्य स सुन्दराकृतिः यस्य नृपस्य भृत्याः सेवका बलेनोत्सिक्ताः अहंकृताः बुद्धिप्रभाविताः बुद्धिजनितसामर्थ्ययुता भक्ताः सेवानिरता इत्यर्थः । अत्र पूर्वार्धे उपहतविसर्गत्वम् उत्तरार्धे विसर्गस्यादर्शनाल्लुप्तविसर्गत्वम् आभ्यां बन्धशैथिल्येन सहृदयोद्वेगो दूषकताबीजमिति सहृदयानुभवः । एवं विसर्गबहुत्वमपि दोषः । यथा स्मरः खरः खलः कान्तः कायः कृशतरः सखि ! इत्यादौ । यमके तु चमत्कारातिशयान्नायं दोषः । यथा पिकोपि कोऽपि कोपिको वियोगिनीरभर्त्सयदित्यादाविति दिक् ॥ २१० ॥

विसन्धि सन्धेर्वैरूप्यम् विश्लेषोऽश्लीलत्वं कष्टत्वं च। तत्राद्यं यथा—

राजन्! विभान्ति भवतश्चरितानि तानि
इन्दोर्द्युतिं दधति यानि रसातलेऽन्तः।
धीदोर्बले अतितते उचितानुवृत्ती
आतन्वती विजयसम्पदमेत्य भातः॥ २११॥

यथा वा—

तत उदित उदारहारहारिद्युतिरुच्चैरुदयाचलादिवेन्दुः।
निजवंश उदात्तकान्तकान्तिर्वत मुक्तामणिवच्चकास्त्यनर्घः॥ २१२॥

संहितां न करोमीति स्वेच्छया सकृदपि दोषः। अगृह्यादिहेतुकत्वे त्वसकृत्॥

---

विसन्धिपदं विवृणोति—विसन्धीति। वैरूप्यं त्रिधा भवतीत्याह—विश्लेष इति। विश्लेषः सन्ध्यभावः अश्लीलत्वं प्रागुक्तमेव कष्टत्वं श्रुतिकटुत्वं एषु च विश्लेषो द्विविधः ऐच्छिकः आनुशासनिकश्चेति आनुशासनिकोऽपि प्रगृह्यहेतुकः प्राप्तसंहिताकार्याभावः असिद्धिहेतुकश्चेति द्विविध इति त्रिविधोऽयं विश्लेषः। तत्रैच्छिकः प्रगृह्यहेतुककानुशासनिकश्चेति द्विविधमुदाहरति—राजन्निति। हे राजन्! भवतस्तव तानि चरितानि चरित्राणि विभान्ति शोभन्ते यानि रसातले पाताले अन्तर्मध्ये गम्भीरप्रदेशे वा इन्दोर्द्युतिं दधति धारयन्ति इन्दुवत्प्रकाशमानानि सन्ति एवं भवतः धीर्नीत्यनुसारिणी बुद्धिः दोर्बलं बाहुबलं ते उभे विजयस्य संपदं संपत्तिमेत्य प्राप्य भातः शोभेते। कथंभूते अतितते अत्यन्तविस्तृते तथा उचितयोः अवसरयोः अनुवृत्ती अनुसरणे आतन्वती कुर्वाणे इत्यर्थः। अत्र पूर्वार्धे तानि इन्दोरित्यत्र वाक्ये तु सा विवक्षामपेक्षत इतिवचनादैच्छिकः। उत्तरार्धे तु "ईदूदेद्द्विवचनं प्रगृह्यमि" त्यनुशासनबलादानुशासनिकः संहिताकार्याभावः अनयोरैच्छिकः सकृदपि दोषः द्वितीयस्तु असकृदेवेति बोध्यः यथा प्रकृते। छेदादिना विच्छिद्य पाठे नैच्छिकस्य दुष्टत्वम् यथा एका एका शिरोरुहेत्यत्रेति केचित्। वसन्ततिलका छन्दः॥२११॥

असिद्धिहेतुकमानुशासनिकन्तदुदाहरति—तत उदित इति। पतिस्वराम्प्रति सख्या उक्तिः। उच्चैरुन्नतात् उदयाचलादुदित उदयं प्राप्तः इन्दुरिव उच्चैरुत्कृष्टात् ततः पूर्वोक्तवंशाद् उदित उत्पन्न उदारो महान् हारो मुक्तादाम तेन हारिणी मनोहारिणी द्युतिः कान्तिर्यस्य सः।

वेगादुड्डीय गगने चलण्डामरचेष्टितः ।
अयमुत्तपते पत्री ततोऽत्रैव रुचिङ्कुरु ॥ २१३ ॥

अत्र सन्धावश्लीलता ॥

उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः ।
नात्रर्जु युज्यते गन्तुं शिरो नमय तन्मनाक् ॥२१४॥

---

अयं राजा निजवंशे मुक्तामणिवत् मौक्तिकमणिरिव चकास्ति दीप्यते ।

गजेन्द्रजीमूतवराहशंखमत्स्यादिशुक्त्युद्भववेणुजानि ।
मुक्ताफलानि प्रथितानि लोके तेषान्तु शुक्त्युद्भवमेव भूरि ॥

इति प्रसिद्ध्या मुक्तामणिरपि स्ववंशे वेणौ चकास्ति । पुनः कीदृशः उदात्ता उदग्रा कान्ता मनोहरा कान्तिः शोभा यस्य सः तथाऽनर्घः श्रेष्ठोऽमूल्यश्चेत्यर्थः । बतेति हर्षे विस्मये वा ।

भिन्नचिन्हचतुष्पादं विषमं परिकीर्तितम् ।

इति लक्षणात् । विषमं छन्दः । अत्र तत इत्यादिषु "लोपः शाकल्यस्ये" तिविहितलोपस्य आद्गुण इति गुणम्प्रत्यसिद्धत्वविधानादसिद्धहेतुक आनुशासनिको विश्लेषः । अत्रापि बन्धशैथिल्यमेव दूषकताबीजम् । उक्तोदाहरणत्रये दोषविवेकमाह-संहितामिति ॥ २१२ ॥

अश्लीलत्वमुदाहरति—वेगादिति । नायकाधिष्ठितं संकेतस्थानं बोधयन्त्या दूत्या उक्तिः । हे सखि ! अयं पत्री पक्षी वेगाद् उड्डीय गगने चलन् गच्छन् उत्तपते ततस्तस्मात् अत्रैव प्रदेशे रुचिं प्रीतिम् अवस्थितिं कुरु कीदृशः डामरमुद्भटं चेष्टितं चेष्टा यस्य तादृश इत्यर्थ. अत्र सन्धौ लंडाचिङ्कुशब्दाभ्यां कश्मीरदेशप्रसिद्धशिश्न-योन्यन्तर्गताङ्कुरार्थयोरभिधानात् जुगुप्साव्रीडाव्यंजकत्वेन अश्लीलः सन्धिरिति बोध्यम् ॥ २१३ ॥

कष्टत्वमुदाहरति—उर्व्यसाविति । अध्वगम्प्रति कस्यचिदुपदेशोक्तिः । अत्र अस्मिन् मरोर्मरुदेशस्य अन्ते समीपे चार्वी सुन्दरा अवस्थितिरवस्थानं यस्यास्तथाभूता उर्वी महती असौ दृश्यमाना तर्वाली तरुपंक्तिः अस्तीति शेषः अतः अत्र वने ऋजु सरलं यथा स्यात्तथा गन्तुं न युज्यते तत्तस्मात्कारणात् त्वं मनाक् किञ्चित् शिरो मस्तकं नमय नीचैः कुर्वित्यर्थः । उर्व्यसावित्यादौ सन्धेः श्रुतिकटुत्वरूपं कष्टत्वम् । अत्र च तरुश्रेण्या विशेषणविशेष्यभावेनान्वयाद्वाक्यदोषत्वम् ॥ २१४ ॥

हतं लक्षणाऽनुसरणेऽप्यश्रव्यम् अप्राप्तगुरुभावान्तलघु रसान-नुगुणं च वृत्तं यत्र तत् हतवृत्तम् क्रमेणोदाहरणम्—

अमृतममृतं कः सन्देहो मधून्यपि नान्यथा
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम्।
सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो
वदतु यदिहान्यत्स्वादु स्यात्प्रियादशनच्छदात्॥ २१५॥

अत्र यदिहान्यत्स्वादु स्यादित्यश्रव्यम्।

यथा वा--

जं परिहरिउं तीरइ मणअं पिण सुन्दरत्तणगुणेण।
अह णवरं जस्स दोसो पडिपक्खेहिं पि पडिवण्णो॥ २१६॥

अत्र द्वितीयतृतीयगणौ सकारभकारौ।

---

त्रिविधं हतवृत्तं वदन् तद्विग्रहं दर्शयति—हतमित्यादि। हतं निन्दितं वृत्तं छन्दो यत्र तदित्यर्थः। तत्र प्रथमार्थमाह—लक्षणेति। लक्षणं पिङ्गलादिप्रणीतं छन्दःशास्त्रम्। द्वितीयमाह—अप्राप्तेति। वा पादान्ते इत्युक्तेः अप्राप्तो गुरुभावो गुरुत्वं येन तथा भूतः अन्ते लघुर्लघुवर्णो यत्र तत्। तृतीयमाह—रसेति। प्रकृतरसप्रतिकूलम्। वृत्तस्याश्रव्यत्वं च लक्षणाननुसरणे छन्दोभङ्गात्, लक्षणानुसरणे यतिभङ्गात्, स्थानविशेषे गणविशेषयोगाच्चेति त्रिविधम्। तत्राद्यं प्रसिद्धत्वादुपेक्ष्य अन्त्ययोः प्रथममुदाहरति—अमृतमिति। कश्चित्प्रियाया अधरस्य स्वादिष्टतामभिधित्सुः स्वादुतया प्रसिद्धाँस्तांस्तानर्थाननुजानाति अमृतं लक्षणया स्वादुतरं कः सन्देहः न कोपि मधूनि मक्षिकान्यपि अन्यथा अमधूनि न किन्तु मधुराण्येव चूतस्य आम्रस्यापि प्रसन्नरसं स्वच्छरसं फलम् अधिकं मधुरं इदमप्यन्यथा न पुनः परन्तु प्रियाया दशनच्छदात् अधरात् तदपेक्षया अन्यत् यद् इह जगति यदि स्वादु मधुरं स्यात् तर्हि रसानामन्तरं तारतम्यम् आन्तरं मर्म वा वेत्तीति तथाभूतो जनो मध्यस्थः पक्षपातरहितः सन् सकृदेकवारमपि वदत्वित्यर्थः तादृशं जगति न किमपीति भावः। अत्र हरिणीछन्दसि प्रतिपादं षष्ठाक्षरे यतिरुचिता चतुर्थपादे हा इति षष्ठाक्षरे परपदानुसन्धानापेक्षत्वेन यतिभङ्गादश्राव्यत्वन्तदेवाह—अत्र यदीत्यादि।॥ २१५॥

तृतीयमुदाहरति—जं परीति।

यत्परिहर्तुं तीर्यते मनागपि न सुंदरत्वगुणेन।
अथ केवलं यस्य दोषः प्रतिपक्षैरपि प्रतिपन्नः॥

विकसितसहकारतारहारि परिमलगुञ्जितपुञ्जितद्विरेफः ।
नवकिसलयचारुचामरश्रीर्हरति मुनेरपि मानसं वसन्तः ॥२१७॥

अत्र हारिशब्दः, हारिप्रमुद्रितसौरभेति पाठो युक्तः ।

यथा वा—

अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा
सम्भाराः खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा ।
श्रीमत्कान्तिजुषां द्विषां करतलात्स्त्रीणां नितम्बस्थलात्
दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च ॥ २१८ ॥

अत्र वस्त्राण्यपि इति पाठे लघुरपि गुरुतां भजते ।

---

इति संस्कृतम् । मानिनीं प्रति दूत्याः समाधानोक्तिः ॥ तादृशमेतत्कामचेष्टितं यत्सुन्दरत्वगुणेन रमणीयत्वरूपेण गुणेन युक्तं वस्तु मनागीषदपि परिहर्तुं त्यक्तुं न तीर्यते न पार्यते अथ च यस्य दोषः उक्तापरिहार्यत्वरूपः प्रतिपक्षैः यत्यादिभिरपि विरक्तैरपि केवलं प्रतिपन्नोऽङ्गीकृतः न तु परिहृतः त्वत्कान्तस्य तु कथैव का तस्य दैवादन्यवनितासङ्गेऽपि कोपातिशयो न विधेय इतिभावः। अत्र सगणभगणौ अन्तगुरुर्वादिगुरुः प्रथमगणस्यान्ते यत्यकरणादश्रव्यौ सगणस्य प्रागुपादानं तूचितमिति यावत् ॥ २१६ ॥

अप्राप्तगुरुभावान्तलघुवृत्तमुदाहरति—विकसितेति । वसन्तः मुनेरपि मानसं हरति वशीकरोति कीदृशः विकसितः पुष्पितो यः सहकारः आम्रस्तस्य तारोऽत्युत्कटो हारी मनोहरश्च यः परिमलो गन्धस्तेन गुञ्जिता उन्मत्ततया शब्दं कुर्वाणाः पुञ्जिताः मिलिताश्च द्विरेफा यस्मिन्सः । पुनः नवकिसलयानि नवपल्लवा एव चारुचामराणि तेषां श्रीः शोभा यत्र । अनेन तस्मिन्राजत्वं तेन च हरणे शक्तिर्ध्वन्यते । पुष्पिताग्रा वृत्तं । अत्र वा पादान्ते इति छन्दःशास्त्रनियमनात्पादान्तस्य गुरुत्वाच्छन्दोभङ्गाभावेऽपि प्रथमपादान्तर्वर्तिन इकारस्य लघोर्गुरुकार्यकरणाक्षतत्वं बन्धशैथिल्यात् वा पादान्ते इति सूत्रस्य वसन्ततिलकेन्द्रवज्रादिवृत्तपरत्वमेवेति तत्त्वम् तदेव प्रकाशयति अत्रेत्यादि । युक्तश्च पाठमुपदिशति—हारीति ॥ २१७ ॥

पुष्पिताग्रावृत्ते दोषमुदाहृत्य शार्दूलविक्रीडितेप्युदाहरति—यथा वेति । राजवर्णनमिदम् । एष युवा विधिना विधात्रा यैः पदार्थैः सृष्ट उत्पादितः तास्तदन्तर्गताः गुणरूपाणां रत्नानां सम्बन्धिन्यो रोहणस्य रत्नोत्पत्तिहेतुभूतपर्वतविशेषस्य भुवो भूमयः अन्या भिन्ना विलक्षणा

हा नृप ! हा बुध ! हा कविबन्धो ! विप्रसहस्रसमाश्रय ! देव ! ।
मुग्ध ! विदग्ध ! सभान्तररत्न ! क्वासि गतः क्व वयं च तवैते २१९
हास्यरसव्यञ्जकमेतद्वृत्तम् ।

न्यूनपदं यथा—

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥ २२० ॥

अत्रास्माभिरिति खिन्ने इत्यस्मात्पूर्वमित्थमिति च ॥

---

वा सा मृत् समवायिकारणभूतः पार्थिवो भागः अन्यव परं धन्या तत्सम्बन्धलाभेन प्रशस्या एवं ते खलु सम्भाराः सामग्र्यः इतरकारणकलापभूताः अन्य एव भिन्ना भिन्ना एव स कः यस्मिन्यूनि दृष्टे सति द्विषां शत्रूणां करतलाद् अस्त्राणि स्त्रीणां नितम्बस्थलाद् वस्त्राणि च पतन्ति कथंभूतानां श्रीमन्तश्च ते कान्तिजुषः कान्तियुक्तास्तेषां श्रीमत्यश्च ताः कान्तिजुषस्तासां पुनः मूढमनसां भयात्कामाच्च मोहयुक्तचेतसामित्यर्थः ॥ अत्र शार्दूलविक्रीडिते चतुर्थचरणे चकारस्य गुरुत्वनियामकलक्षणानुसरणेऽपि बन्धशैथिल्याद् गुरुकार्यकरणाक्षमत्वेन दोषः । वस्त्राण्यपीति पाठे तु लघोरपि संयोगपरत्वेन गुरुकार्यकारित्वान्न दोष इत्याह—अत्रेत्यादि । ॥ २१८ ॥

प्रकृतरसाननुगुणं वृत्तमुदाहरति—हा नृपेति । राजनि मृते सति तदीयानां विलापोक्तिः । हा शब्दः खेदे मुग्धा सुन्दरा विदग्धा चतुरा या सभा तदन्तरे तन्मध्ये रत्न ! हे राजन् ! त्वं क्व गतोऽसि तव सम्बन्धिनः एते वयं क्व अन्यत्सुगमम् । दोधकवृत्तम् । इदञ्च हास्यरसोचितं करुणरसाननुगुणं दोषः । प्रकृतरसप्रतिकूलवर्णत्वं दुष्टताबीजम् । करुणे मन्दाक्रान्ता पुष्पिताग्रादीनां शृङ्गारे पृथ्वी—स्रग्धरादीनां वीरादौ शिखरिणी—शार्दूलविक्रीडितादीनां हास्ये च दोधकस्यानुगुण्यमिति भरतादीनां संप्रदायः ॥ २१९ ॥

न्यूनपदमुदाहरति—न्यूनपदमिति । न्यूनमनुपात्तविवक्षितार्थकं पदं वाचकशब्दो यत्र वाक्ये तदित्यर्थः । तथाभूतामिति । तृतीयोल्लासे व्याख्यातमिदम् । अत्र पादत्रयमध्ये अस्माभिरिति खिन्ने इत्यस्मात्पूर्वमित्थमिति च पदं नास्ति ते चावश्यके अन्यथा कर्तुरला-

अधिकं यथा-

स्फटिकाकृतिनिर्मलः प्रकामं प्रतिसंक्रान्तनिशातशास्त्रतत्त्वः ।
अविरुद्धसमन्वितोक्तियुक्तिः प्रतिमल्लास्तमयोदयः स कोऽपि ॥२२१॥

अत्राकृतिशब्दः ।

यथा वा—

इदमनुचितमक्रमश्च पुंसां यदिह जरास्वपि मान्मथा विकाराः ।
यदपि च न कृतं नितम्बिनीनां स्तनपतनावधि जीवितं रतं वा ॥२२२॥

अत्र कृतमिति, कृतं प्रत्युत प्रक्रमभङ्गमावहति तथा च यदपि च न कुरङ्गलोचनानामिति पाठे निराकाङ्क्षैव प्रतीतिः ॥

---

भादेकवाक्यत्वासंभवाच्च तदर्थस्य विवक्षितत्वाद् अर्थश्चैतादृश एव विवक्षित इति शब्दस्यैवापराधाच्छब्ददोषः ॥ २२० ॥

अधिकपदमुदाहरति-अधिकमिति । अविवक्षितार्थकपदकवाक्यमित्यर्थः । स्फटिकेति कस्य चिद्विदुषो वर्णनम् स्फटिकाकृतिवन्निर्मलः स्वच्छान्तःकरणः रागादिरहितः प्रकाममत्यन्तं प्रतिसंक्रान्तं हृदयमारूढं निशातानि तीक्ष्णानि गूढार्थानि यानि शास्त्राणि तेषां तत्त्वं गूढार्थरूपं यस्मिंस्तादृशः पुनः अविरुद्धाः लोकवेदशास्त्रासिद्धाः समान्विताः परस्परान्विताः उक्तयो युक्तयश्च यस्य तादृशः पुनः प्रतिमल्लानां प्रतिवादिनाम् अस्तमयस्य पराभवस्य उदयः प्रादुर्भावो यस्मात्तादृशः स कोपि महापुरुष इत्यर्थः । मालभारिणी छन्दः । अत्र निर्मलतायाः स्फटिकपदेनैव प्राप्तत्वादाकृतिपदमधिकमिति बोध्यम् २२१ ॥

असमासेऽप्यधिकपदमुदाहरति-यथा वेति । इह जगति पुंसां जरास्वपि चरमावस्थास्वपि यत् मान्मथाः कामसम्बन्धिनो विकाराः इतीदमनुचितम् असामर्थ्येऽपि तत्प्रवृत्तत्वाल्लोकविरुद्धम् अक्रमश्च असंप्रदायः शास्त्रविरुद्धश्च वा । इत्थं पुरुषधर्मान्निन्दित्वा स्त्रीधर्मं निन्दति यदपि चेति । यदपि च नितम्बिनीनां स्त्रीणां जीवितं जीवनं रतं रमणं वा स्तनपतनमवधि सीमा यस्य तथाभूतं न कृतं विधात्रेति शेषः तदपि वैरस्याधायकत्वादनुचितमित्यर्थः । पुष्पिताग्रावृत्तम् । अत्र कृतमिति पदस्विनापि पूर्वार्धवत् निराकांक्षप्रतिपत्तेः संभवात्तदधिकमिति । भग्नप्रक्रमत्वरूपं दोषान्तरमाह कृतमिति । प्रत्युत विपरीतं पूर्वार्धेऽकरणात्प्रक्रमभङ्गम् । निर्दुष्टं पाठमुपदिशति-तथा चेति ॥ २२२ ॥

कथितपदं यथा—

अधिकरतलतल्पं कल्पितस्वापलीला परिमिलननिमीलत्पांडिमा गण्डपाली।
सुतनु! कथम कस्य व्यञ्जयत्यञ्जसैव स्मरनरपतिलीलायौवराज्याभिषेकम्॥२२३॥

अत्र लीलेति।

पतत्प्रकर्षं यथा—

कः कः कुत्र न घुर्घुरायितघुरीघोरोघुरेत्सूकरः
कः कः कं कमलाकरं विकमलं कर्तुं करी नोद्यतः।
के के कानि वनान्यरण्यमहिषां नोन्मूलयेयुर्यतः
सिंहीस्नेहविलासबद्धबसतिः पञ्चाननो वर्त्तते॥२२४॥

---

योजनशून्यत्वेऽपि समानार्थकसमानानुपूर्वीकपदत्वं कथितपदत्वन्तदुदाहरति–अधिकेति। करतले कपोले समाधाय चिन्तयन्तीं नायिकां प्रति सख्या उक्तिः। हे सतनु! करतलतल्पे इति अधिकरतलतल्पं करतलरूपे तल्पे शय्यायां कल्पिता या स्वापलीला तया यत्परिमिलनं करतलकपोलयोर्दृढतरसम्बन्धस्तेन निर्मीलन् तिरोभवन् पांडिमा विरहधावल्यं यस्यां सा तथाभूता तव गण्डपाली कपोलस्थली अञ्जसा शीघ्रं कस्य नायकस्य स्मर एव नरपतिस्तस्य लीलाश्चुमन–दर्शनाद्यस्तत्र यौवराज्यं युवराजत्वं तत्राभिषेकं व्यञ्जयति सूचयतीति त्वं कथयेत्यर्थः। स्मरेणावशीकृतामपि त्वां वशीकुर्वाणं तं जनमवलोक्य अवश्यमेव रमणीजयलक्षणे स्वराज्ये- प्रवृद्धः स्मरोऽभिषेक्ष्यतीति भावः। एतेन तन्नायकस्य कन्दर्पादप्यधिकवशीकरणकर्तृता ध्वन्यते। मालिनी छन्दः। अत्र लीलापदं वारद्वयमुपात्तमिति कथितपदत्वन्तदाह–अत्रेति। अत्र स्मरनरपतिलक्ष्मीति पाठे नायं दोषः॥२२३॥

अलङ्कारकृतस्य बन्धकृतस्य वा प्रकर्षस्य यत्र वाक्येऽुत्तरोत्तरं पातो निकर्षो वर्तते तत्पतत्प्रकर्षमुदाहरति–कः क इति। पञ्चं विस्तृतमाननं यस्य स सिंहः यद्यस्मात् सिंह्याः स्वप्रियायाः स्नेहेन यो विलासः दन्तादिना कंडूयनादिः तेन बद्धा नियतीकृता वसतिः एकदेशवासो येन तादृशो वर्त्तते अतः कः कः सूकरः कुत्र न घुरेत् भीमशब्दं कुर्वीत अपि तु सर्व एव सर्वत्र कीदृशः घुर्घुरायिता घुर्घुरशब्दवती या घुरी नासिका तया घोरो भीमः। एवं कः कः करी कं कमलाकरं कमलोत्पत्तिस्थानं विकमलं विगतोत्पलं कर्त्तुं नोद्यत-

समाप्तपुनरात्तं यथा—

क्रेङ्कारः स्मरकार्मुकस्य सुरतक्रीडापिकीनां रवो-
झङ्कारो रतिमञ्जरीमधुलिहां लीलाचकोरीध्वनिः ।
तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्खलत्कङ्कणः
क्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः ॥२२५॥

द्वितीयार्धगतैकवाचकशेषप्रथमार्धं यथा—

मसृणचरणपातं गम्यतां भूः सदर्भा विरचय सिचयान्तं मूर्ध्नि घर्मःकठोरः ।
तदिति जनकपुत्री लोचनैरश्रुपूर्णैः पथि पथिकवधूभिर्वीक्षिता शिक्षिता च २२६

---

अपि तु सर्वः सर्वमपि एवं के के अरण्यमहिषाः कानि वनानि नोन्मूलयेयुः न समूलं नाशयेयुः अपि तु सर्वे सर्वाणीत्यर्थः । अत्र राजनि व्यसनशीले सति क्षुद्रा अपि निर्मर्यादा भवन्तीति ध्वननादप्रस्तुतप्रशंसाऽलंकारः । अत्रानुप्रासकृतस्य प्रकर्षस्य सिंहाभिधाने पतनात्पतत्प्रकर्षत्वम् । पूर्वापेक्षयोत्तरत्र बन्धशैथिल्यमेव दूषकताबीजम् । शार्दूलविक्रीडितं छन्दः ॥ २२४ ॥

क्रियाकारकभावेनान्वयबोधकसकलपदोक्त्यनन्तरं तद्घटकयत्किञ्चित्पदान्वयिविशेषणोपादानं समाप्तपुनरात्तत्वमुदाहरति-क्रेङ्कार इति । स्वगृहं प्रति प्रस्थितान्पथिकान्प्रति कस्यचित्कवेरुक्तिः । तन्व्याः कृशाङ्ग्याः कञ्चुलिका चोलिका तस्या अपसारणे निष्कासने सति यो भुजयोराक्षेपो धूननं तेन स्खलन्ति यानि कंकणानि करभूषणानि तेषां क्वाणः शब्दो वो युष्माकं प्रेम प्रीतिं तनोतु कीदृशः स्मरकार्मुकस्य कामधनुषः क्रेङ्कारः शत्रुविजयकालिकज्याकर्षणजः शब्दः । तथा सुरतक्रीडारूपाणां पिकीनां कोकिलानां रवः कूजितम् तथा रतिः सुरतमेव मंजरी विलासादिफलजनकत्वात् तत्सम्बन्धिनो ये मधुलिहो भ्रमरास्तेषां झंकारः रवः । तथा लीला कटाक्षादिरूपः तद्रूपायाश्चकोर्याः ध्वनिः । तथा नववयसस्तारुण्यस्य लास्याय नृत्याय वेणुस्वनः वंशीध्वनिरूपः । अत्रैतादृशः क्वाणो वः प्रेम तनोत्विति समाप्तमेव वाक्यं नवेत्यादि पञ्चविशेषणेन पुनरुपात्तमिति समाप्तपुनरात्तत्वम् । एतद्विशेषणानुगुणत्वेऽपि तन्निरपेक्षतया विवक्षितबोधसत्त्वेन पुनरन्वये आकांक्षाभावादिति निराकांक्षत्वमेवास्य दूषकताबीजम् । शार्दूलविक्रीडितं छन्दः ॥ २२५ ॥

अर्थान्तरैकवाचकमुदाहरन् व्याचष्ट -द्वितीयार्धेति । द्वितीयार्धगत-

अभवन्मत इष्टो योगः सम्बन्धो यत्र तत् यथा—

येषां तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभि-
र्लीलापानभुवश्च नन्दनवनच्छायासु यैः कल्पिताः।
येषां हुंकृतयः कृतामरपतिक्षोभाः क्षपाचारिणां
किन्तैस्त्वत्परितोषकारि विहितं किं चित्प्रवादोचितम् ॥२२७॥

अत्र गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यादित्युक्तनयेन यच्छब्दनिर्देश्यानामर्थानां परस्परमसमन्वयेन यैरित्यत्र विशेष्यस्याप्रतीतिरिति। क्षपाचारिभिरिति पाठे युज्यते समन्वयः।

---

मेकं वाचकं शेषमवशिष्टं यस्य तादृशं प्रथमार्धं यत्र वाक्ये तत् अर्थात् प्रथमार्धगतं वाक्यं द्वितीयार्धगतेनैव पदेन यत्र पूर्यते तत्। मसृणेति राजशेखरकृते बालरामायणे वनान्निवृत्तस्य सुमन्त्रस्य दशरथं प्रत्युक्तिः। जनकपुत्री पथि पथिकानां वधूभिः कर्त्रीभिः अश्रुपूर्णैः लोचनैः करणैः वीक्षिता दृष्टा इति पूर्वार्धोक्तप्रकारेण शिक्षिता च। शिक्षाप्रकारमाह हे बाले! यतः भूर्भूमिः सदर्भा कुशांकुरसहिता तत् तस्मात् त्वया मसृणो मन्दो लघुर्वा चरणयोः पातो यस्मिन्कर्मणि तद्यथा स्यात्तथा गम्यताम् तथा यतो घर्म आतपः कठोरस्तीक्ष्णः तस्मान्मूर्ध्नि सिचयान्तं वस्त्राञ्चलं विरचयेति। अहो धन्यतमेयं राजपुत्र्यपि कोमलाभ्यां पद्भ्यामेव पथिकं स्वभर्त्तारमनुयाति अधन्यतमा वयं या एवं विरहदुःखेन पीड्येमहि इत्यश्रुपूर्णता॥ अत्र भूः सदर्भा तन्मसृणचरणपातं गम्यतामिति वाक्यं द्वितीयार्धगतेन तदित्यनेन पूर्यते इत्यर्धान्तरैकवाचकत्वम्। अत्र निराकांक्षतादुष्टिबीजम्। मालिनीछन्दः॥ २२६॥

अभवन्मतयोगमुदाहरन् व्याचष्टे-अभवन्निति। अभवन्नविद्यमानो मतोऽभिमतो योगः सम्बन्धो यत्र वाक्ये तत्। अत्र पदार्थयोरन्वयस्यैवासम्भवः अविमृष्टविधेयांशे तु अन्वयसम्भवेऽपि उद्देश्यविधेयभावानवगम इति भेदः। एतच्च क चिद्विभक्तिभेदनिबन्धनम् क चिन्न्यूनतादिनिबन्धनम् क चिदाकांक्षाविरहनिबन्धनम् क चिद्वाच्यव्यंग्ययोर्विवक्षितयोगाभावनिबन्धनम् क चित्समासच्छन्नतया मतयोगाभावनिबन्धनं क चिद्व्युत्पत्तिविरोधनिबन्धनं चेति षड्विधम् तत्राद्यमुदाहरति-येषामिति। हनुमता लंकायां दग्धायां वीरराक्षसानधिक्षिपतः कस्य चिद्रावणं प्रत्युक्तिः। हे प्रभो! येषां क्षपाचारिणां राक्ष-

यथा वा--

> त्वमेवंसौन्दर्या स च रुचिरतायाः परिचितः
>
> कलानां सीमानं परमिह युवामेव भजथः ।
>
> अपि द्वन्द्वं दिष्ट्या तदिति सुभगे सम्वदति वा-
>
> मतः शेषं यत्स्याज्जितमिह तदानीं गुणितया ॥ २२८ ॥

अत्र यदित्यत्र तदिति तदानीमित्यत्र यदेति वचनं नास्ति चे-त्स्यादिति युक्तः पाठः ।

---

सानां प्रतापस्य ऊष्मभिः ताः प्रसिद्धाः त्रिदशानां इभस्य ऐरावत-गजस्य दानं मदजलं तस्य सरितो नद्यः पीताः शोषिताः । तथा यैः क्षपाचारिभिर्नन्दनवनस्य छायासु लीलया यत्पानं अर्थान्मद्यस्य तस्य भुवो भूमयः कल्पिता रचिताः । अनेन स्वर्गोऽपि येषां भूतुल्य इति सूचितम् तथा येषां हुंकृतयः हुंकाराः कृतो विहितः अमरपते-रिन्द्रस्य क्षोभो भयविक्लवो याभिस्तथाभूताः तैः क्षपाचारिभिः तव रावणस्य परितोषकारि सन्तोषदायि प्रवादोचितं सदसि कथन-योग्यं स्वख्यातेरुचितं वा किंचिद्विहितं कृतम् अपि तु न किंचिदपि कृतमित्यर्थः । शार्दूलविक्रीडितं छन्दः । अत्र दोषमाह—अत्रेत्यादि अप्रतीतिरित्यन्तेन । गुणानामप्रधानानां परार्थत्वात् प्रधानान्वयापे-क्षितत्वात् असम्बन्धः परस्परमनन्वयः समत्वात् परापेक्षया नियत-त्वादिति हि पूर्वमीमांसायां जैमिनिना सूत्ररूपेण पठितस्यार्थः । पदा-र्थानां गुणप्रधानभावेनैवान्वयो न तु गुणानां प्रधानानां वा परस्प-रम् निराकांक्षत्वादिति परमार्थः । इत्युक्तनयेन इत्युक्तन्यायेन । प्रकृते यैरिति यदर्थस्य विशेष्यतया क्षपाचारिसम्बन्धो विवक्षितः । स च न सम्भवति भिन्नविभक्तिकत्वादित्यभवन्मतयोगत्वम् ॥ कीदृश-पाठे समन्वय इत्याकांक्षायामाह क्षपाचारिभिरिति ॥ २२७ ॥

न्यूनतादिनिबन्धनमुदाहरति-त्वमेवमिति । क्रुद्धाम्प्रति सखीवा-क्यम् । हे सुभगे ! त्वम् एवं विशिष्य वक्तुमशक्यं सौन्दर्यं यस्या-स्तथाभूता स च प्रकृतनायकोऽपि रुचिरतायाः परिचितः ख्यातः इह संसारे कामिलोके वा कलानां वैदग्धीनां सीमानं पराकाष्ठां परमतिशयेन युवामेव भजथः आश्रयथः । अपीति सम्भावनायां वां युवयोः तत् अनिर्वचनीयगुणगरिम द्वन्द्वं मिथुन दिष्ट्या भाग्येन इति पूर्वार्धोक्तप्रकारेण सम्वदति योग्यं भवति अतो हेतोः शेषमव-

यथा वा—

संग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत्समासादितम्।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्त्तिरतुला कीर्त्या च लोकत्रयम् ॥२२९॥

अत्राकर्णनक्रियाकर्मत्वे कोदण्डं शरानित्यादिवाक्यार्थस्य कर्मत्वे कोदण्डः शरा इति प्राप्तम् न च यच्छब्दार्थस्तद्विशेषणं वा कोदण्डादि। न च केन केनेत्यादिप्रश्नः।

---

**शिष्टं यत् संगमरूपं तद् यदि स्यात्तदानीं गुणितया गुणवत्तया इह संसारे जितं सर्वमित्यर्थः। अन्यथा योग्यसमागमाभावेन गुणवत्त्वमेव विफलमिति भावः। अत्र शेषं यत् तत् यदा स्यादित्यर्थोऽपेक्षितः। यत्पदेन तदानींपदस्यान्वये आकांक्षाया अभावादिदमभवन्मतयोगत्वन्तदाह-अत्रेति। युक्तं पाठमुपदिशति चेत्स्यादिति शिखरिणी छन्दः॥ २२८॥**

**आकांक्षाविरहानिबन्धनमुदाहरति-**संग्रामेति**। हे देव! राजन्! संग्रामो युद्धमेवाङ्गणमजिरं तदागतेन प्राप्तेन भवता चापे धनुषि समारोपिते ज्याविशिष्टे कृते सति येन येन सहसा झटिति यद्यत्समासादितं प्राप्तं तद् आकर्णय श्रृणु केन केन किं किं समासादितमित्याह-कोदंडेन धनुषा शराः बाणाः शरैः अरिशिरः तेनारिशिरसापि भूमंडलं तेन त्वं भवता च अतुलाऽनुपमा कीर्त्तिः कीर्त्या च लोकत्रयमित्यर्थः। समासादितमित्यत्र "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामि" त्येकशेषैकवद्भावेन सर्वत्रान्वयः। मालादीपकमलंकारः। अत्राभवन्मतयोगन्दर्शयति **अत्रेत्यादि प्रश्न इत्यन्तेन**। अत्राकर्णनक्रियायां कोदंडादीनां कर्मतयाऽन्वये द्वितीयापत्त्या कोदंडं शरानित्यादिप्राप्तम्। ननु परस्परमनन्वितानामपि कोदंडादीनां वाक्यार्थविधया एकदैव कर्मत्वमिति न द्वितीयापत्तिः अप्रातिपदिकत्वादिति चेन्न।**

**यो यो वीरः समायातस्तं तं शृणु महीपते!।**
**भीष्मो द्रोणः कृपः कर्णः सौमदत्तिर्धनंजयः॥**

**इत्यादाविव कोदंडादिभ्यः प्रथमापत्त्या कोदंडः शरा इत्यापत्तेः। ननु यच्छब्दस्य बुद्धिस्थवाचकतया कोदंडादिपदार्थ एव यच्छब्दार्थ इति यच्छब्दार्थस्य क्रियान्वये कोदंडादीनामन्वयो लभ्यत एव**

यथा वा—

चापाचार्यस्त्रिपुरविजयी ॥ २३० ॥

इत्यादौ भार्गवस्य निन्दायां तात्पर्यम्, कृतवतेति परशौ सा प्रतीयते कृतवत इति तु पाठे मतयोगो भवति।

---

तथा च तदभिन्नत्वात्कोदंडादौ तृतीयाद्युपपत्तिरित्याशंक्य निराकरोति नचेति। यदि हि यच्छब्देन कोदंडत्वादिरूपेण कोदंडादिकर्तृकशरादिकर्मकासादनावगमस्तदा कोदंडादीनां पुनरुपादानं घटो घट इति वद्व्यर्थमेव स्यादिति भावः। अथ यदर्थयोः कर्तृकर्मणोः विशेष्याणि विशेषणानि वा कोदंडादीनीत्याशंक्य निराकरोति तद्विशेषणं वेति। न च कोदंडादि तद्विशेषणमित्यन्वयः। अत्र स यच्छब्दार्थ एव विशेषणं यस्य तस्य यच्छब्दार्थस्य विशेषणमिति वा विग्रहः आद्ये येन कोदंडेन यत् शराः समासादितं तदाकर्णयेति वाक्यार्थपर्यवसानेन केन कोदंडेन के शरा इति विशेषाकांक्षाया अनिवृत्तिः। द्वितीये कोदंडेन येन शराः यत्समासादितं तदाकर्णयेति वाक्यार्थपर्यवसाने नोक्तदोषतादवस्थ्यमिति भावः। ननु येन यदिति सामान्यतोऽवगमेन केन के ते किं किमिति विशेषप्रश्ने सति तदुत्तरतया कोदंडेन शरा इत्युत्तरार्धमुक्तमित्याशङ्क्य निराकरोति नच केन केनेति। आदिशब्दात्किं किमिति येन येन यद्यत्समासादितं तदाकर्णयेति प्रतिज्ञयैव कोदंडादीनामुक्तत्वादिति भाव इति दिक् ॥ २२९ ॥

व्यङ्ग्यस्यापि विवक्षितयोगाभावेऽस्यावान्तरभेदमुदाहरति—यथा वेति। चापाचार्य इति पद्यमत्रैवोल्लासे व्याख्यातम् अत्र रावणस्य भार्गवेण सह युद्धमनभिलषितमिति तदुपेक्षावाक्यार्थः स च भार्गवनिन्दायामेव परशोर्निन्दायामपि भार्गवस्यानुपेक्ष्यत्वात् निन्दितशस्त्रं विना शस्त्रान्तरेणापि भार्गवेण सह युद्धसंभवात् कृतवतेत्यस्य परशुविशेषणत्वेन परशुनैव तदर्थाभिसम्बन्धात्परशावेव निन्दा प्रतीयते तथा सति न संगतिरित्यभवन्मतयोगत्वम्। इतितु पाठे इति तदेकोपेक्षावगमात्। मतयोग इति। भार्गवनिन्दायोगरूप इत्यर्थः॥ २३०॥

यथा वा—

चत्वारो वयमृत्विजः स भगवान्कर्मोपदेष्टा हरिः
संग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं हतो दुन्दुभिः॥ २३१॥

अत्राध्वरशब्दः समासे गुणीभूत इति न तदर्थः सर्वैः संयुज्यते।

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मंजुमंजीरभृङ्गः।
भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-
सम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः॥२३२॥

अत्र दण्डपादगता निजतनुः प्रतीयते भवान्याः सम्बन्धिनी तु विवक्षिता॥

---

समासाच्छन्नतया मतयोगाभावमुदाहरति–यथा वेति। वेणीसंहारे भीमसेनस्योक्तिः। भीमार्जुननकुलसहदेवाश्चत्वारो वयम् ऋत्विजः संग्रामाध्वरे स सर्वज्ञत्वेन प्रसिद्धः भगवान् पूज्यः हरिः श्रीकृष्णः कर्मणामुपदेष्टा प्रधानसदस्यः नरपतिः राजा युधिष्ठिरः सङ्ग्राम एवाध्वरो यज्ञस्तत्र दीक्षितो गृहीतनियमो यजमानः। पत्नी द्रौपदी गृहीतं व्रतं यया तथाभूता कौरव्याः दुर्योधनादयः पशवः छागलकाः प्रियायाः द्रौपद्याः परिभवः सभायां केशाम्बराकर्षणादिरूपः तज्जनितस्य क्लेशस्य उपशान्तिरेव फलम्। 'योऽश्वमेधेन यजते स शोकं तरती'त्यादिश्रुतेः। राजन्यानां क्षत्रियाणां उपनिमन्त्रणाय आव्हानाय हतस्ताडितः दुन्दुभिर्भेरी स्फीतं स्निग्धं यथा तथा रसति शब्दं करोतीत्यर्थः। शार्दूलविक्रीडितं छन्दः। अत्र सङ्ग्रामाध्वरस्य ऋत्विगादिषु सर्वत्रान्वयो विवक्षितः स च समासच्छन्नत्वान्न प्रतीयत इत्यभवन्मतयोगत्वन्तदाह–अत्रेति॥ २३१॥

व्युत्पत्तिविरोधनिबन्धनमुदाहरति–जंघाकाण्डेति। अत्रैवोल्लासे व्याख्यातमिदम् अत्र ससम्बन्धिनां निजस्वाम्यादिपदार्थानां प्रधानक्रियान्वयिकारकपदार्थे एवान्वय इति व्युत्पत्त्या निजपदार्थस्य दंडपादे एवान्वयः स्यान्न तु भवान्याम् भवान्यामन्वयस्तु विवक्षित इत्यभवन्मतयोगत्वन्तदाह–अत्रेत्यादि॥ २३२॥

अवश्यवक्तव्यमनुक्तं यत्र, यथा—

अप्राकृतस्य चरितातिशयैश्च दृष्टैरत्यद्भुतैरपहृतस्य तथापि नास्था ।
कोऽप्येष वीरशिशुकाकृतिरप्रमेयसौन्दर्यसारसमुदायमयः पदार्थः॥२३३॥

अत्रापहृतोऽस्मि इत्यपहृतत्वस्य विधिर्वाच्यः । तथापीत्यस्य द्वितीयवाक्यगतत्वेनैवोपपत्तेः ॥

यथा वा—

एषोऽहमद्रितनयामुखपद्मजन्मा प्राप्तः सुरासुरमनोरथदूरवर्त्ती ।
स्वप्नेऽनिरुद्धघटनाधिगताभिरूपलक्ष्मीफलामसुरराजसुतां विधाय॥२३४॥

---

अनभिहितवाच्यं व्याचष्टे-अवश्येति । अनभिहितमनुक्तं वाच्यं वाचकपदातिरिक्तं अवश्यवक्तव्यं यस्मिन्वाक्ये तद् उद्देश्यविधेयभावादिद्योतकविभक्तीनां निपातानां च न्यूनत्वेऽयं दोषः । वाचकपदस्य न्यूनत्वे न्यूनपदत्वं दोष इति भेदः । तत्र विभक्तिन्यूनत्वे उदाहरति अप्राकृतस्येति । वीरचरितनाटके रामेण धनुर्भंगे कृते परशुरामस्य स्वगतोक्तिः । अप्राकृतस्य अनन्यसामान्यस्य श्रीरामस्य यद्वा अप्राकृतस्य विदग्धस्य मम अत्यद्भुतैः अमानुषैः दृष्टैः श्रुतैश्च चरितातिशयैः चरित्रोत्कर्षैः अपहृतस्य वशीकृतमनसः मम तथापि नास्था नादरः न निश्चयः दशरथपुत्रेणैव धनुर्भङ्गमिति निश्चयो नेति भावः। अत्र हेतुमाह कोऽप्येष इति । एष पुरोवर्तिपदार्थः रामरूपः कोऽपि जनागम्यः वीरशिशुकाकृतिः वीरबालकाकृतिः अप्रमेयसौन्दर्यसारसमुदायमयः अन्यत्रादृष्टसौन्दर्यसारसमुदायप्रचुर इत्यर्थः । वसन्ततिलका छन्दः । अत्र तथापीति तच्छब्दार्थः पूर्ववाक्योक्तं कमप्यर्थमपेक्षत इति पृथग्वाक्यसंपादयित्री यद्यपि अपहृतोऽस्मीति प्रथमाविभक्तिरवश्यं वाच्या तदभावादनभिहितवाच्यत्वम् तथापीति तच्छब्दश्च पूर्वप्रक्रान्तपरामर्शकः न चैकवाक्यतयाऽन्वये तत्सम्भव इत्याह अत्रेत्यादि । उपपत्तेरित्यन्तेन ॥ २३३ ॥

निपातानां न्यूनत्वे उदाहरति-एषोऽहमिति । उषाहरणनाटके चित्रलेखामुषासखीं प्रति अनिरुद्धस्योक्तिः । सुरासुराणां देवदैत्यानामपि ये मनोरथास्तेषामपि दूरवर्ती दुष्प्रापः अद्रितनयायाः पार्वत्याः मुखपद्मात् जन्म उत्पत्तिर्यस्य तादृशोऽहं वरः असुरराजस्य बाणासुरस्य सुतां उषानाम्नीं स्वप्ने स्वप्नावस्थायामनिरुद्धेन श्रीकृष्णपौत्रेण सह घटनया समागमरूपया अधिगतं प्राप्तमभिरू-

अत्र मनोरथानामपि दूरवर्त्तीत्यप्यर्थो वाच्यः यथा वा—

त्वयि निबद्धरतः प्रियवादिनः प्रणयभङ्गपराङ्मुखचेतसः।
कमपराधलवं मम पश्यसि त्यजसि मानिनि! दासजनं यतः ॥२३५॥

अत्रापराधस्य लवमपीति वाच्यम् ॥

अस्थानस्थपदं यथा—

प्रियेण संग्रथ्य विपक्षसन्निधा-
वुपाहितां वक्षसि पीवरस्तने।
स्रजं न काचिद्विजहौ जलाविलां
वसन्ति हि प्रेम्णि गुणा न वस्तुषु ॥ २३६ ॥

अत्र काचिन्न विजहाविति वाच्यम्।

---

पलक्ष्म्याः परमसौन्दर्यसंपत्तेः फलं यथा तथाभूतां विधाय कृत्वा एष प्राप्तः परावृत्त इत्यर्थः। वसन्ततिलका छन्दः। अत्र सुरासुराणामपि मनोरथानामपि दूरवर्त्तीत्यप्यर्थद्वयमवश्यं वाच्यम् अन्यथाऽन्यमनोरथविषयत्वं सुरासुरबहिरिन्द्रियाविषयत्वं च प्रतीयत इत्यनभिहितवाच्यत्वन्तदाह—अत्रेति ॥ २३४ ॥

असमासेऽप्युदाहरति—त्वयीति। विक्रमोर्वशीये गिरिनद्यामुर्वशीं सम्भाव्य ताम्प्रति पुरूरवस उक्तिः। हे मानिनि! मम कमपराधस्य लवं लेशं पश्यसि यतोऽपराधालेशात् दासभूतं जनं मां त्यजसि कीदृशस्य मम त्वयि निबद्धरतेः स्थिरानुरागस्य तथा प्रियवादिनः मधुरभाषणशीलस्य एवं प्रणयभङ्गे पराङ्मुखं विमुखं चेतो यस्य तथा भूतस्येत्यर्थः। द्रुतविलम्बितं छन्दः। अत्र लवमपीत्यप्यर्थोऽवश्यं वाच्यः। अन्यथा लवनिषेधे स्थूलप्रतीतिप्रसङ्गादित्यनभिहितवाच्यत्वन्तदाह—अत्रेति ॥ २३५ ॥

अपदस्थपदसमासमिति सूत्रे पदं स्थाने विभक्त्यन्ते इत्यादिकोशबलेन पदशब्दस्य स्थानार्थकत्वेन अस्थानस्थपदमस्थानस्थसमासं चेति दोषद्वयम् तत्राद्यमुदाहरति—प्रियेणेति। किरातार्जुनीये जलक्रीडावर्णने नायिकाया वर्णनमिदम् विपक्षस्य सपत्नीजनस्य सन्निधौ प्रियेण भर्त्रा सङ्ग्रथ्य सम्यगादरेण ग्रथित्वा पीवरौ स्तनौ यस्मिंस्तथाभूते वक्षसि उपाहितां स्पर्शपूर्वकनिवेशितां स्रजं मालां जलेन आविलां म्लानामपि काचिन्नायिका न विजहौ न तत्याज हि यतः

यथा वा--

लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे
मुद्राङ्कः शितिकन्धरेन्दुशकलेनान्तःकपोलस्थलम् ।
पार्वत्या नखलक्ष्मशंकितसखीमर्मस्मितह्रीतया
प्रोन्मृष्टः करपल्लवेन कुटिला ताम्रच्छविः पातु वः ॥२३७॥

अत्र नखलक्ष्मेत्यतः पूर्वं कुटिला ताम्र इति वाच्यम् ।

---

प्रेम्णि गुणा उत्कर्षा वसन्ति न तु वस्तुषु प्रेम्णि सति वस्तुनि उत्कर्षो न तु वस्तुमात्रे इत्यर्थः । सपत्नीसमक्षं निर्माय प्रेमपूर्वकं कान्तेन हृदि निहितायाः स्रजो जलाविलतया सौरभाभावेऽपि प्रेमास्पदतयाऽपरित्याज्यत्वं युक्तमेवेति भावः । अत्र काचिन्न विजहौ इति वक्तव्ये न का चिदित्युक्तं तस्मान्नकारोऽस्थानस्थ इत्यपदस्थपदत्वं दोष इत्याह-अत्रेति । एवं पाठे न का चिद्विजहौ अपि तु सर्वा एव विजहुरिति विरुद्धं प्रतीयते ॥ २३६ ॥

विरुद्धप्रतीतिजननादिव विवक्षितोपयोगस्य पदस्योपयोगासंभवादपि स्थानस्यायोग्यत्वमुदाहरति-यथा वेति । कदा चित्प्रणयकलहे हरजटामाकृष्य चन्द्रखंडसहितां तां कपोलतले निधाय भवानी निद्रिताऽऽसीत् ततः प्रभाते चन्द्रखंडमुद्राङ्कितं कपोलं दृष्ट्वा नखक्षतमेतदिति शंकमानायाः सख्या हास्येन लज्जिता सती कपोलस्थं चन्द्रमुद्राङ्कं हस्तेन ममार्जेति कविकल्पितं वर्णनम् । शितिकन्धरो महादेवस्तस्येन्दुशकलेन निद्रान्तरे अन्तःकपोलस्थलं पार्वतीकपोलस्थलमध्ये लग्नः सक्तः मुद्राङ्कः वो युष्मान्पातु कीदृशेन केलिः सुरतक्रीडा तत्र यः कचग्रहः पार्वतीकर्तृकं केशाकर्षणं तेन श्लथा शिथिला या जटा तस्यां लम्बेन लम्बायमानेन । कीदृशो मुद्राङ्कः नखलक्ष्म नखचिह्नं तत्र शंकिता संजातशंका या सखी तस्या नर्मस्मितं लीलास्मितं रहस्यहास्यं वा तेन ह्रीतया लज्जितया पार्वत्या करपल्लवेन प्रोन्मृष्टः प्रमार्जितः । पुनः कीदृशः कुटिला वक्रा आताम्रा ईषद्रक्ता छविः कान्तिर्यस्येत्यर्थः । इदं च नखलक्ष्मशंकाहेतुः । अत्र कुटिलाताम्रछवित्वं नखक्षतशंकाबीजमिति नखलक्ष्मेत्यतः पूर्वमेव प्रयोग उचितो न तु पश्चादित्यपदस्थपदत्वन्तदाह अत्रेति । हेतुहेतुमद्भावेन झटित्यन्वयलाभेन पूर्वं वाच्यमिति भावः ॥ २३७ ॥

अस्थानस्थसमासं यथा—

अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः ।
प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्
फुल्लत्कैरवकोशनिःसरदलिश्रेणीकृपाणं शशी ॥ २३८ ॥

अत्र क्रुद्धस्योक्तौ समासो न कृतः । कवेरुक्तौ तु कृतः ।

संकीर्णम् यत्र वाक्यान्तरस्य पदानि वाक्यान्तरमनुप्रविशन्ति । यथा—

किमिति न पश्यसि कोपं पादगतं बहुगुणं गृहाणेमम् ।
ननु मुञ्च हृदयनाथं कण्ठे मनसस्तमोरूपम् ॥ २३९ ॥

अत्र पादगतं बहुगुणं हृदयनाथं किमिति न पश्यसि इमं कण्ठे गृहाण मनसस्तमोरूपं कोपं मुञ्चेति । एकवाक्यतायां तु क्लिष्टमिति भेदः ।

---

अद्यापीति । असौ दृश्यमानः शशी फुल्लाद्विकसत् यत्कैरवं कुमुदं तस्य कोशः कुड्मलमेव कोशः खड्गपिधानं तस्मान्निःसरन्ती याऽलिश्रेणी भ्रमरपंक्तिः सैव कृपाणं करवालिका तां तत्क्षणात्कर्षति निष्कासयति कुत इत्याकांक्षायां हेतुमुत्प्रेक्षते अद्यापीति । अद्यापि मत्सानिध्येऽपि एष मानः सीमन्तिनीनां कान्तानां हृदि स्थातुं वांछति धिक् निन्द्यमिदमिति क्रोधादिव आलोहितः आरक्तः कोपेन रक्तिमोदयात् हृदि तिष्ठासायां हेतुगर्भं तद्विशेषणमाह स्तनेति । स्तनावेव शैलौ तद्रूपेण दुर्गेण विषमे अनाक्रमणीये । शशी कीदृक् प्रोद्यन्त एव दूरतरप्रसारिताः कराः किरणा एव करा हस्ता येन तथाभूतः । खड्गकर्षणेऽपि हस्तस्य तथात्वादिति भावः । एवं च यथा कान्तो जारवधार्थं खड्गमाकर्षति तथा शशी मानवधार्थं खड्गमाकर्षतीति भावः । अत्र पूर्वार्धे क्रुद्धस्य शशिन उक्तिरिति तत्र दीर्घसमासव्यंग्यौजोगुणलाभाय दीर्घसमासः कर्त्तव्यः स च न कृतः । कवेरुक्तौ दीर्घसमासव्यंग्यौजोगुणस्याप्रयोजकत्वादपि दीर्घसमासः कृत इत्यस्थानस्थसमासत्वन्तदाह–अत्रेति ॥ २३८ ॥

संकीर्णं व्याचष्टे संकीर्णमिति वाक्यान्तरपदे मिश्रमित्यर्थस्तदाह–यत्रेति । उदाहरति किमिति मानिनीम्प्रति सख्या उक्तिः । पादगतं पादप्रणतं बहुगुणं हृदयनाथं किमिति न पश्यसि इमं हृदयनाथं कण्ठे गृहाण आलिंगय मनसस्तमोरूपं तमोगुणात्मकं कोपं

गर्भितं यत्र वाक्यस्य मध्ये वाक्यान्तरमनुप्रविशति यथा—

परापकारनिरतैर्दुर्जनैः सह सङ्गतिः ।
वदामि भवतस्तत्त्वं न विधेया कदा चन ॥ २४० ॥

अत्र तृतीयपादो वाक्यान्तरमध्ये प्रविष्टः ।

यथा वा—

लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्यारिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।
तत्सक्तोऽयं न किञ्चिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद्गदितुमिव गतेत्यम्बुधिं यस्य कीर्त्तिः ॥२४१॥

अत्र विदितं तेऽस्तु इत्येतत्कृतम् प्रत्युत लक्ष्मीस्ततोऽपसरतीति विरुद्धमतिकृत् ।

---

मुञ्चेत्यर्थः । अत्र विवक्षितमन्वयं दर्शयति अत्रेत्यादि अत्र वाक्यत्रये अन्योन्यवाक्यस्थपदमादाय अनभिमतं प्रतीयते । इष्टबोधविलम्बाद्रसभंगो दूषकताबीजम् । ननु संकीर्णत्वं क्लिष्टत्वदोष एवेत्याशङ्कायामाह-एकवाक्येति । अनेकवाक्यतायां सङ्कीर्णत्वं एकवाक्यतायान्तु क्लिष्टत्वमिति भेदः ॥ २३९ ॥

गर्भितं व्याचष्टे-गर्भितमिति । अन्तःस्थितवाक्यान्तरं वाक्यमित्यर्थस्तदाह-यत्रेति । वाक्यान्तरे अन्यवाक्यीयपदप्रदेशे सङ्कीर्णता अन्यवाक्यस्यैव प्रवेशे तु गर्भितत्वमिति भेदः । इदं च द्विविधं क चित्स्वभावत एवैकं वाक्यं क चिद् हेतुहेतुमद्भावेन वाक्यैकवाक्यतया एकीभूतं तत्राद्यमुदाहरति-परापकारेति । परापकारनिरतैः परपीडारतैः दुर्जनैः सह सङ्गतिः कदा चन कदापि न विधेया न कार्या भवतस्तव तत्त्वं वास्तविकस्वरूपत्वं वदामीत्यर्थः । अत्र वदामि भवतस्तत्त्वमिति वाक्यान्तरं प्रथमवाक्यस्य मध्ये प्रविष्टम् सङ्गतेः सदसत्त्वसंशयः अन्त्यपादे कर्मसाकांक्षत्वं चेतिदूषकताबीजम् ॥ २४० ॥

द्वितीयमुदाहरति-लग्नमिति । यस्य राज्ञः कीर्त्तिः श्रियो लक्ष्म्याः नियोगात् शासनात् अम्बुधिं प्रति गदितुमिव तत्सन्देशं वक्तुमिव गता यस्य कीर्त्तिः समुद्रपर्यन्तगामिनीति भावः सन्देशस्वरूपमाह-लग्नमिति हे अम्बुधे ! रागो रुधिरलौहित्यन्तेनावृतं लिप्त-

मञ्जीरादिषु रणितप्रायं पक्षिषु च कूजितप्रभृति ।
स्तनितमणितादि सुरते मेघादिषु गर्जितप्रमुखम् ॥ २ ॥

इति प्रसिद्धिमतिक्रान्तम् यथा--

महाप्रलयमारुतक्षुभितपुष्करावर्त्तक-
प्रचण्डघनगर्जितप्रतिरुतानुकारी मुहुः ।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः ॥ २४२ ॥

अत्र रवो मण्डूकादिषु प्रसिद्धो न तूक्तविशेषे सिंहनादे ।

---

मङ्गं विशिष्टलोहरेखाविशेषो यस्याः पक्षे रागोऽनुरागस्तेनावृतानि व्याप्तानि अङ्गान्यवयवा यस्याः तथाभूतया यथैव असियष्ट्या कृपाण्या नायिकया इह सङ्ग्रामे अरीणां कण्ठ सुदृढं यथा तथा लग्नम् खंडनाय रमणाय चेति भावः । तथा या च आसियष्टिरेव या च नायिका इहसङ्ग्रामे मातंगानां गजानामुपरि स्वयमेव गत्वा खण्डनाय पतन्ती परपुरुषैः शत्रुभटैर्दृष्टा पक्षे मातंगानां चांडालानामुपरि स्वयमेव गत्वा रमणाय पतन्ती परपुरुषैरुदासीनैः श्रेष्ठपुरुषैर्वा दृष्टा एतेन मिथ्यात्वनिरासः तत्सक्तः तस्यामासियष्ट्यां सम्बद्ध एव तस्यां नायिकायामनुरक्तः अयं त्वज्जामाता मम भर्त्ता राजा न किंचिद्गणयति न किमपि युक्तायुक्तं विचारयति तेनाविचारेणैव हेतुना अहं भृत्येभ्यः दत्ताऽस्मि इदं ते तव मत्पितुः विदितमस्त्वित्यर्थः । अत्र भङ्गिविशेषेण शौर्यदातृत्वयशसामुत्कर्षो वर्णितः व्याजस्तुतिरत्रालङ्कारः । अत्र विदितं तेऽस्त्विति वाक्यान्तरं प्रविष्टमिति गर्भितत्वन्तद्देवाह-अत्रेति । एतत्कृतमिति प्रयोजनं विनैव गर्भितं कृतमित्यर्थः । दोषान्तरमपीत्याह-प्रत्युतेति । विपरीतं ततो राज्ञः शकाशात् अपसरति अपगच्छति विरुद्धेति विदितं तेऽस्त्वित्यनेन स्वापराधेन नाहमपसरामि किन्तु राजकीयेनैवेति प्रतीयते अतो लक्ष्मीस्ततोऽपसरतीति स्तुतिविरुद्धप्रतीतिकृत्वादित्यर्थः । अत्राप्यनासत्तिः प्रतीतिविच्छेदो वा दूषकताबीजम् ॥ २४१ ॥

प्रसिद्धिहतं प्रसिद्धिमतिक्रान्तमिति व्याकुर्वन्प्रसिद्धिं तावद्दर्शयति-मञ्जीरादिष्विति । मञ्जीरादिषु नूपुरादिषु रणितप्रायं प्रसिद्धमिति शेषः सर्वत्र आदिना रशना-घंटा-भ्रमरादिपरिग्रहः । प्राय पदं प्रभृत्यर्थकन्तेन क्वणिताशिञ्जितगुंजितादिपरिग्रहः । पक्षिषु कूजितप्रभृ-

भग्नः प्रक्रमः प्रस्तावो यत्र । यथा--

नाथे निशाया नियतेर्नियोगादस्तंगते हन्त निशाऽपि याता ।
कुलाङ्गनानां हि दशानुरूपं नातः परं भद्रतरं समस्ति ॥२४३॥

अत्र गतेति प्रक्रान्ते यातेति प्रकृतेः । गता निशाऽपि इति तु युक्तम् ।

---

ति । अत्र प्रभृतिपदेन रव-वासितादिः । सुरते स्तनितमणितादि आदिना भणितादिः । स्तनितादिकं सुरते एव चमत्काराय नान्यत्रे-ति कविप्रयोगनियमात् स्तनितं गर्जितं मेघनिर्घोष इत्यमरेण न वि-रोधः । मेघादिषु गर्जितप्रमुखं आदिना सिंहादिः प्रमुखपदेन ध्वन्या-दिः । इति प्रसिद्धिमिति । उक्तरूपा या प्रासाद्धस्तामतिक्रान्तमित्य-र्थः । उदाहरति महाप्रलयेति । वेणीसंहारेऽश्वत्थाम्न उक्तिः । अ-थायमभूतपूर्वो नूतनः रवः सिंहनादः पुरः अग्रे समरोदधेः सङ्ग्रा-मसमुद्रात् मुहुर्वारंवारं कुतो जायत इति प्रश्नः । कीदृशः महान्यः प्रलयमारुतस्तेन क्षुभितौ प्रचण्डो यौ पुष्करावर्तकाख्यौ मेघौ तयोः प्रचण्डं भीषणं घनं निबिडं च यद्गर्जित गर्जनं तस्य प्रतिरुतं प्रति-ध्वनिस्तदनुकारी तत्सदृशः अत एव श्रवणयोर्भैरवो भयङ्करः । तथा स्थगिता आच्छादिता रोदस्योः स्वर्गभूम्योः कन्दरा अन्तरं येन तथाभूत इत्यर्थः अत्र रवशब्दस्य मण्डूकादिशब्द एव कविप्रयो-गप्रसिद्धिर्न त्वेवंविधे वीराणा गर्जित इति प्रसिद्ध्यतिक्रमात्प्रसिद्धि-हतत्वन्तदाह-अत्रेति ॥ २४२ ॥

भग्नप्रक्रमपदं व्याचष्टे-भग्न इति । भग्नो नष्टः प्रक्रमः प्रस्तावः उपक्रमो यत्र वाक्ये । प्रस्ताव औचित्यं भग्नप्रक्रमत्वं च प्रकृतिप्रत्य-यसर्वनामपर्यायादिविषयत्वादनेकधा व्यवस्थितम् । तत्राद्यमुदाहर-ति-नाथे इति । नियतेरदृष्टस्य नियोगादाज्ञया निशाया नाथे चन्द्रे ऽस्तंगते सति निशाऽपि अस्तं याता गता-हन्तेति हर्षे एतद्युक्ततरमि-ति भावः । इदमेवार्थान्तरन्यासेन समर्थयति कुलेति । हि यस्मात् कुलाङ्गनानां पतिव्रतास्त्रीणां दशानुरूपं वैधव्यदशायोग्यं भद्रतरं कल्याणातिशयः अतः परमनुगमनादन्यत् न समस्ति न सम्भवती-त्यर्थः । पतिव्रतालक्षणन्तु स्मृतावुक्तं--

आर्त्तार्त्ते मुदिते हृष्टा प्रोषिते मलिना कृशा ।
मृते म्रियेत पत्या सा स्त्री ज्ञेया पतिव्रता ॥

इति । अत्र गतइति गम धातोः प्रक्रमात् अग्रेऽपि तत्प्रयोग एवो-चितो न तु यातेति प्रकृते प्रक्रमभङ्गस्तदाह-अत्रेति ॥ २४३ ॥

ननु नैकं पदं द्विःप्रयोज्यं प्रायेण इत्यन्यत्र कथितपदं दुष्टमिति चेहैवोक्तम् तत्कथमेकस्य पदस्य द्विःप्रयोगः। उच्यते उद्देश्यप्रतिनिर्देश्यव्यतिरिक्तो विषय एकपदप्रयोगनिषेधस्य तद्वति विषये प्रत्युत तस्यैव पदस्य सर्वनाम्नो वा प्रयोगम्विना दोषः। तथा हि—

उदेति सविता ताम्रस्ताम्र एवास्तमेति च।
सम्पत्तौ च विपत्तौ च महतामेकरूपता॥ २४४॥

अत्र रक्त एवास्तमेतीति यदि क्रियते तदा पदान्तरप्रतिपादितः स एवार्थोऽर्थान्तरतयेव प्रतिभासमानः प्रतीतिं स्थगयति।

---

ननु गतेतिपाठे पूर्वाचार्यवचनविरोधः स्वग्रन्थविरोधश्चेति शंकते नन्वित्यादिना। एकं पदं प्रायेण द्विवारं न प्रयोज्यमित्यर्थः। यमकनिरासार्थं प्रायेणेति। अन्यत्रेति। वामनेन स्वकृतकाव्यालङ्कारसूत्रवृत्त्याख्यग्रन्थे उक्तमित्यग्रिमेणान्वयः। स्वग्रन्थविरोधं दर्शयति—कथितेति। इहैवेति अस्मिन्नेवोल्लासे। विषयभेदेन विरोधो नास्तीति समाधत्ते उच्यत इति। उद्देश्यः प्राक्प्रत्यायित एव प्रतिनिर्देश्यः पुनः प्रत्याय्यो यत्र तस्माद्व्यतिरिक्त इति विग्रहः। उद्देश्यप्रतिनिर्देश्यकादतिरिक्तं हि एकपदद्विःप्रयोगनिषेधस्य विषय इत्यर्थः। प्रकृतेऽभेदज्ञापनार्थं पुनरुक्तिरेवोत्कर्षिकेति न दोष इति भावः तद्वति उद्देश्यप्रतिनिर्देश्यकत्ववति तु विषये प्रत्युत विपरीतं तस्यैव प्रागुक्तस्यैव पदस्य सर्वनाम्नो वा प्रयोगम्विना दोष एव भवतीति उदेति सवितेत्यादौ तस्यैव पदस्य प्रयोगम्विना कोदंडेन शरा इत्यादौ च सर्वनाम्नः प्रयोगम्विनाऽभेदप्रत्यभिज्ञाऽनापत्तिरूपदोषः स्यादिति भावः। इदमत्र तत्त्वम् यदि वाक्यद्वये एकस्योद्देश्यत्वं विधेयत्वं वा स्यात् यदि वा पूर्वस्मिन्विधेयस्योद्देश्यस्य वा परस्मिन्नुद्देश्यत्वं विधेयत्वं वा भवेत्तदा पुनर्निर्देश आवश्यकः। यथोदेति सवितेत्यादावुभयत्रैव सवितुरुद्देश्यत्वं ताम्रत्वस्य विधेयत्वं कोदंडेनेत्यादौ पूर्वत्र शरादेर्विधेयस्य परस्मिन्नुद्देश्यत्वमिति दिक्।

कथितपदस्यादोषत्वे दृष्टान्तं दर्शयन्नुद्देश्यप्रतिनिर्देश्यभावे द्विःप्रयोगावश्यकत्वमुदाहरति—उदेतीति। स्पष्टार्थः। अत्र न सोऽस्ति प्रत्ययो लोके इत्यादिन्यायेन शब्दस्यापि विशेषणतया शाब्दबोधे भा-

यथा वा—

यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसङ्ख्यामतिवर्त्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥ २४५ ॥

अत्र प्रत्ययस्य । सुखमीहितुं वा इति युक्तः पाठः ।

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥ २४६ ॥

अत्र सर्वनाम्नः । अनेन विसृष्टा इति वाच्यम् ।

महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ।
अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा ॥ २४७ ॥

अत्र पर्यायस्य । महीभृतोऽपत्यवतोऽपीति युक्तम् । अत्र सत्यपि पुत्रे कन्यारूपेऽप्यपत्ये स्नेहोऽभूदिति केचित्समर्थयन्ते ।

---

नात् भिन्न इव प्रतीयमानः एकरूपताप्रतीतिं व्यवदधीतेत्यर्थः । अर्थान्तरतयेवेति भिन्न इवेत्यर्थः । प्रतीतिम् एकरूप्यप्रतीतिं स्थगयति तिरोधत्ते । एवं च यथाऽत्र प्रकान्तमेव ताम्रपदं प्रयुज्यते तथा पूर्वोदाहरणे गतेति प्रकान्तमेव प्रयोक्तुमुचितमिति भावः ॥२४४॥

प्रत्ययस्य प्रक्रमभङ्गमुदाहरति—यशोऽधिगन्तुमिति । किरातार्जुनीयेऽर्जुनं प्रति द्रौपद्या उक्तिः। यशः कीर्त्तिमधिगन्तुं लब्धुं सुखस्य लिप्सया लब्धुमिच्छया वा मनुष्येषु संख्यां गणनामतिवर्तितुमतिक्रम्यावस्थातुं वा निरुत्सुकानामनुत्कण्ठानाम् अभियोगभाजां यत्नवतां पुंसां सिद्धिः समुत्सुकेव उत्कण्ठितेव अङ्कमुत्संगमुपैति स्वयमागच्छतीत्यर्थः । अत्र तुमुनः प्रक्रमे सनोऽभिधानमेकरूपताप्रतीतिं स्थगयति तदेवाह अत्रेति । ॥ २४५ ॥

सर्वनाम्नः प्रक्रमभंगमुदाहरति—ते इति । कुमारसंभवे षष्ठे सर्गे पद्यमिदम् । ते मरीच्यादयो हिमालयमामन्त्र्य दृष्ट्वा पुनः शूलिनं शिवं प्रेक्ष्य च अस्मै शूलिने अर्थं पार्वतीदानरूपं सिद्धं पित्रङ्गीकृतं निवेद्य ज्ञापयित्वा तेन शूलिना विसृष्टा आज्ञप्ताः सन्तः खमाकाशमुद्ययुरुत्पेतुरित्यर्थः । अत्रास्मै इतीदमः सर्वनाम्नः प्रक्रमात्तद्विसृष्टा इत्यत्राप्यनेन विसृष्टा इत्येव युक्त इति सर्वनाम्नः प्रक्रमभंग इत्याह—अत्रेति । ॥ २४६ ॥

पर्यायस्य प्रक्रमभंगमुदाहरति—महीभृत इति । कुमारसम्भवे प्रथमसर्गस्थोऽयम् । पुत्राः मैनाकादयोऽस्य सन्तीति तस्य पुत्रवतोऽपि म-

विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः।
नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः॥ २४८॥

अत्रोपसर्गस्य पर्यायस्य च। तदभिभवः कुरुते निरायतिं लघुतां भजते निरायतिर्लघुतावान्न पदं नृपश्रिय इति युक्तम्।

का चित्कीर्णा रजोभिर्दिवमनुविदधौ मन्दवक्त्रेन्दुलक्ष्मी-
रश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः।
भ्रेमुर्वात्या इवान्याः प्रतिपदमपरा भूमिवत्कम्पमानाः
प्रस्थाने पार्थिवानामशिवमिति पुरो भाविनार्यः शशंसुः॥२४९॥

अत्र वचनस्य, काश्चित्कीर्णा रजोभिर्दिवमनुविदधुर्मन्दवक्त्रेन्दुशोभा निःश्रीका इति कम्पमाना इत्यत्र कम्पमापुरिति च पठनीयम्।

---

हीभूतो हिमालयस्य दृष्टिः तस्मिन्गौर्याख्यकन्यारूपेऽपत्ये तृप्तिमिच्छाविच्छेदं न जगाम न प्राप हि यतः अनन्तपुष्पस्य बहुतरकुसुमस्य मधोर्वसन्तस्य सम्बन्धिनी द्विरेफमाला भ्रमरपंक्तिः चूतस्य पुष्पं चूतं तस्मिन्सविशेषः सातिशयः संग आसक्तिर्यस्यास्तथाभूता भवतीत्यर्थः। अत्रापत्येषु बहुषु सत्स्वपि तस्मिन्कन्यारूपेऽपत्ये स्नेहातिशयविवक्षणादपत्यशब्दे प्रयोक्तव्ये पुत्रशब्दप्रयोगात्सामान्यपर्यायप्रक्रमभंगस्तदाह—अत्रेति। केषाञ्चिन्मतमनुवदति—अत्रेति। पुत्रे मैनाके अपत्यशब्दस्य वंशायतनहेतुत्वरूपमपत्यत्वं शक्यतावच्छेदकन्तदेव च पुत्रशब्दस्यापीति पर्यायतेत्याहुरिति दिक्॥ २४७॥

उपसर्गपर्याययोः प्रक्रमभंगमेकस्मिन्नेव पद्ये उदाहरति—विपद इति। किरातार्जुनीये युधिष्ठिरम्प्रति भीमोक्तिः। विपदो विपत्तयः अविक्रमं पराक्रमरहितं कातरम् अभिभवन्ति तिरस्कुर्वन्ति आयतिः उत्तरकालः आपदा आपत्त्या उपेतं युक्तं रहयति त्यजति शुभोदर्को न भवतीति भावः निरायतेः आयतिरहितस्य लघुता नीचता नियता अवश्यंभाविनी अगरीयान् गौरवहीनो लघुर्जनः नृपश्रियो राजलक्ष्म्याः पदं स्थानं न भवतीत्यर्थः। अत्र पूर्वपूर्वस्योत्तरोत्तरं प्रति कारणत्वात्कारणमालाऽलंकारः। सुन्दरी छन्दः। अत्र विपद इति व्युपसर्गमुपक्रम्य आपदुपेतमित्याङ उपादानादुपसर्गस्य प्रक्रमभङ्गः। लघुतेत्युपक्रम्य अगरीयानिति पर्यायान्तरोपादानात्पर्यायस्य प्रक्रमभंगस्तदेवाह अत्रेति। द्वितीयादिपादत्रये युक्तं पाठमुपदिशति तदिति।॥ २४८॥

वचनस्य प्रक्रमभङ्गमुदाहरति—का चिदिति। माघकाव्ये पंचदशे शिशुपालपक्ष्यमहीपतिषु युद्धप्रस्थानोद्यतेषु तत्पत्नीनाममंगलचेष्टावर्ण-

गाहन्तां महिषा निपानसलिलं शृंगैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यताम् ।
विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥२५०॥

अत्र कारकस्य । विश्रब्धा रचयन्तु सूकरवरा मुस्ताक्षतिमित्यदुष्टम् ।

---

नम् नार्यः पार्थिवानां प्रस्थाने पुरोऽग्रे भुवि उत्पत्स्यमानं अशिवममंगलमिति अनेन प्रकारेण शशंसुः प्रकटयामासुः । केनेत्याह का चिदित्यादि काचिद्रजोभिरार्त्तवैः कीर्णा व्याप्ता रजस्वला अत एव मन्दा वक्त्रेन्दोर्मुखचन्द्रस्य लक्ष्मीः शोभा यस्यास्तादृशी सती दिवमाकाशमनुविदधौ अनुकृतवती द्यौरपि रजोभिः पांसुभिः कीर्णा मन्दवक्त्रसदृशचन्द्रशोभा जाता । सकलनृपक्षयरूपोत्पातसूचकत्वात् । उद्भ्रान्तं व्याकुलीभूतं सत्त्वं चित्तं यासां तथाभूताः काश्चित् अश्रीकाः शोभाहीनाः सत्यः दिश इव अन्तर्हृदये दाहं सन्तापं दधिरे दिशोऽपि तत्काले उद्भ्रान्ता इतस्ततो विक्षिप्ताः सत्त्वाः प्राणिनो यासु तथाभूताः सत्योऽन्तर्मध्ये दाहं वह्निं दधुः । अन्या वात्या वातसमूहा इव प्रतिपदं पदे पदे भ्रेमुः भ्रमणं चक्रुः । तत्काले अमंगलसूचका वात्या अपि जाताः । अपराः भूमिवत्कम्पमानाः कम्पयुक्ता जाताः । तत्काले भूकम्पोऽप्यमंगलसूचको जात इत्यर्थः । अत्र का चिदित्येकवचनमुपक्रम्य काश्चिदित्यादिबहुवचनोपादानाद्वचनस्य प्रक्रमभंगस्तदाह अत्रेति । युक्तमुपदिशति, काश्चिदिति आख्यातप्रक्रमभंगमपि पाठान्तरेण परिहरति कम्पेति । ॥ २४९ ॥

कारकस्य प्रक्रमभंगमुदाहरति—गाहन्तामिति । शाकुन्तले शकुन्तलादर्शनान्निवृत्तमृगयाभिलाषस्य राज्ञो दुष्मन्तस्य सेनापतिं प्रत्युक्तिः । महिषाः शृंगैर्मुहुस्ताडितम् उत्फालितं निपानस्याहावस्य सलिलं गाहन्तां विलोडनं कुर्वतां त्रासत्यागात्प्रकृतिस्वाच्छन्द्येन शृंगैः सलिलम् उर्द्ध्वं क्षिप्त्वा शरीरोपरि पातयन्त्विति भावः तथा मृगकुलं छायायां बद्धं कदम्बकं समूहो येन तादृशं सत् रोमन्थमाकृष्य चर्वणमभ्यस्यताम् । एवं वराहपतिभिः सूकरश्रेष्ठैः विश्रब्धैर्विश्वासयुतैः सद्भिः पल्वले अल्पसरसि मुस्तायास्तृणविशेषस्य क्षतिर्नाशः उत्खननं वा क्रियताम् तथा इदमस्मद्धनुः शिथिलो ज्याबन्धो मौर्वीबन्धनं यस्य तथाभूतं सत् विश्रान्तिं विश्रामं लभतामित्यर्थः । अत्र 'गाहन्तामिति कर्तृकारकवाचकलिङः प्रक्रमे क्रियतामिति कर्मकारकवाचकस्योपादानात्कारकप्रक्रमभंगस्तदाह—अत्रेति । युक्तमुपदिशति विश्रब्धेति॥२५०॥

अकलिततपस्तेजोवीर्यप्रथिम्नि यशोनिधा-
ववितथमदाध्माते रोषान्मुनावभिगच्छति।
अभिनवधनुर्विद्यादर्पक्षमाय च कर्मणे
स्फुरति रभसात्पाणिः पादोपसङ्ग्रहणाय च॥ २५१॥

अत्र क्रमस्य। पादोपसङ्ग्रहणायेति पूर्वं वाच्यम् एवमन्यदप्य-
नुसर्त्तव्यम्।

अविद्यमानः क्रमो यथा—

द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः।
कला च सा कान्तिमती कलावतः त्वमस्य लोकस्य च नेत्रकौमुदी॥२५२॥

अत्र त्वंशब्दानन्तरं चकारो युक्तः।

---

क्रमस्य प्रक्रमभङ्गमुदाहरति—अकलितेति। वीरचरितनाटके धनुर्भ-
गकुपिते भार्गवे आगते श्रीरामस्योक्तिः। अकलितमपरिमितं यत्तपस्ते-
जो वीर्यञ्च ताभ्यां प्रथिमा पृथुता यत्र तथाभूते यशोनिधौ अतिप्र-
सिद्धे अवितथो यथार्थो यो मदोऽहंकारस्तेनाध्माते उद्दीपिते मुनौ
परशुरामे रोषाद् अभिगच्छति अभ्यागते सति पाणिर्मद्धस्तः अभिन-
वाऽलौकिकी या धनुर्विद्या तया यो दर्पस्तस्य क्षमाय योग्याय कर्मणे
बाणाकर्षणरूपाय च पादयोरुपसंग्रहाय वन्दनाय च रभसादावेगात्
स्फुरति चेष्टत इत्यर्थः। चकारद्वयेन तुल्यकालत्वाभिव्यक्तिः। हरिणी
छन्दः। अत्र तपस्तेजोवीर्ये क्रमेणोपक्रम्य तदुभयोचितयोः पादग्रह-
णबाणाकर्षणयोः पौर्वापर्यं योग्यम् तदन्यथाकरणेन क्रमप्रक्रमभंग
इत्याह—अत्रेति अन्यदपीति। शशी दिवसधूसरो गलितयौवना कामिनी
इत्याद्युदाहरणे शोभनत्वेन प्रतीतस्य धूसरत्वादिनाऽशोभनत्वमिति वि-
वक्षितः क्रमस्तस्य द्वितीयचतुर्थषष्ठवाक्येष्वन्यथात्वेन भंगः। अत्र
सर्वत्रैकरूपप्रस्तुतायाः प्रतीतेः स्थगनमुपघ्रातता वा दूषकताबीजमिति
दिक्॥ २५१॥

अक्रमपदं व्याचष्टे—अविद्यमान इति। यस्य यदव्यवहितपूर्वत्वेन यद-
व्यवहितपरत्वेन विवक्षितार्थानुभावकत्वन्तस्य तत्परिहारेणान्यत्र
स्थितत्वमक्रमत्वमिति यथोपसर्गाणां धातोः पूर्वमेव एवेत्यादीनां व्यव-
च्छेद्यानन्तरमेव इवादीनामुपमानानन्तरमेव प्रयोगः। उदाहरति यथे-
ति व्याख्यातं प्राक्। अत्र त्वंशब्दार्थस्यैव शोच्यतायां समुच्चयस्य
द्योतनीयत्वात् लोकपदार्थे समुच्चयाभावात् त्वंशब्दानन्तरं चकारो
युक्त इत्याह—अत्रेति॥ २५२॥

यथा वा—

शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथ ! दोषाकरश्री-
र्वक्त्रे पार्श्वे तथैषा प्रतिवसति महाकुट्टनी खड्गयष्टिः ।
आज्ञेयं सर्वगा ते विलसति च पुरः किं मया वृद्धया ते
प्रोच्येवेत्थं प्रकोपाच्छशिकरसितया यस्य कीर्त्या प्रयातम् ॥ २५३ ॥

अत्रेत्थं प्रोच्येवेति वाच्यम् । तथा—

लग्नं रागावृताङ्ग्या ॥२५३॥ इत्यादौ इति श्रीनियोगादिति वाच्यम् ।

---

न चायं चादिपदेष्वेव दोषः किन्तु इत्थमादिष्वपीत्याशयेनोदाहरति-यथा वेति । यस्य राज्ञः शशिकरसितया चन्द्रकिरणवद्धवलया कीर्त्या प्रकोपात् इत्थमनेन प्रकारेण प्रोच्येव उक्त्वेव प्रयातम् दूरं पलायितम् कीर्तौ पत्नीत्वाध्यवसाय.। शक्त्यादेरसन्नायिकात्वस्याध्यवसायः । कथमित्याह—शक्तिरिति । हे नाथ ! इयं प्रत्यक्षा निर्गतास्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः तज्जा तदुत्पन्ना त्रिंशद्भ्यो निर्गताः निस्त्रिंशाः त्रिंशदधिकाः तज्जा तदुत्पन्ना च नानापितृजन्या वेश्येति फलितम् । एतादृशी शक्तिः सामर्थ्यमेव नायिका तव भुजयुगले प्रतिवसति तथा दोषाकरस्य चन्द्रस्य दोषाणामाकरस्य महामूर्खस्य च श्रीः शोभा तव वक्त्रे प्रतिवसति तथा तव पार्श्वे प्रदेशे एषा प्रत्यक्षा कुट्टयति छिनत्तीति कुट्टनी छेदिका परस्त्रीपुरुषादिसंघट्टनकर्त्री च महती चासौ सा खड्गयष्टिः प्रतिवसति । अनेनात्यन्तं परवनितासक्त इति व्यज्यते । तथा सर्वगा सर्वगामिनी सर्वजनग्राह्या सर्वोपभोग्या कुलटा इयं ते तव आज्ञा ते तव पुरः पुरतो विलसति ईदृशस्य दुर्वृत्तस्य ते मया वृद्धया महत्या जरत्या च किं किंप्रयोजनमितीत्थमुक्त्वेत्यर्थः । अत्रेत्थंशब्दस्याव्यवहितपूर्वपरामर्शकत्वात्पादत्रयस्यैव च परामर्शनीयत्वान्न तु वचनस्येति तदन्यथाकरणादक्रमत्वमिति. तदाह अत्रेति ॥ २५३ ॥

लग्नं रागावृताङ्ग्या इति गर्भितोदाहरणेऽपि अक्रमत्वदोषं प्रकटयति-लग्नमिति । इतिशब्दस्याव्यवहितपूर्वपरामर्शकत्वादिति भावः । उद्देश्यप्रतीतिविरहोऽत्र दूषकताबीजम् उद्देश्यप्रतीतिविरहश्च आकांक्षाविरहादासत्तिविरहादपि वा बोध्यः । आद्यो यथा शक्तिरित्यत्र । अन्त्यो यथा लग्नमित्यत्रेति ॥ २५३ ॥

अमतः प्रकृतविरुद्धः परार्थो यत्र ॥ यथा—

रामसन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥ २५४ ॥

अत्र प्रकृते रसे विरुद्धस्य शृङ्गारस्य व्यञ्जकोऽपरोऽर्थः ॥

अर्थदोषानाह—

(७६) अर्थोऽपुष्टः कष्टो व्याहतपुनरुक्तदुष्क्रमग्राम्याः ॥ ५५ ॥
सन्दिग्धो निर्हेतुः प्रसिद्धिविद्याविरुद्धश्च ॥
अनवीकृतः सनियमा नियमविशेषा विशेषपरिवृत्ताः ॥५६॥
साकाङ्क्षोऽपदयुक्तः सहचरभिन्नः प्रकाशितविरुद्धः ॥
विध्यनुवादायुक्तत्यक्तपुन स्वीकृतोऽश्लीलः ॥ ५७ ॥

दुष्ट इति सम्बध्यते ॥

---

अमतपरार्थं व्याचष्टे—अमत इति । प्रकृतविरुद्धः प्राकरणिकरसविरुद्धरसव्यञ्जकः परार्थो द्वितीयार्थो यत्र ॥ उदाहरति—रामेति रघुवंशे रामेण हतायास्ताटकाया वर्णनमिदम् । दुःसहेनासह्येन रामो मन्मथ इव पक्षे राम एव मन्मथो मदनस्तस्य शरेण हृदये उरसि मनसि च ताडिता अत एव गन्धवत् गन्धयुक्तं रुधिरचन्दनं रुधिरमेव चन्दनं रक्तचन्दनं च तेनोक्षिता सिक्ता कृताङ्गरागा, सा प्रस्तुता निशाचरी ताटका निशायां चरतीति निशाचरी अभिसारिका च जीवितेशस्य यमस्य प्राणनाथस्य च वसतिं गृहं सुरतस्थानं च जगामेत्यर्थः । रथोद्धता छन्दः । अत्र रूप्यमाणानामप्रकृतार्थानां प्रकृतबीभत्सरसविरोधिशृङ्गाररसव्यञ्जकत्वादमतपरार्थत्वं दोषस्तदाह अत्रेति । द्वितीयार्थोपस्थित्या प्रकृतबीभत्सरसापकर्षतास्य दोषत्वमतोऽयं नित्यो दोषः ॥२५४

इत्थं शब्ददोषानभिधायेदानीं त्रयोविंशतिमर्थदोषानाह—अर्थेति । अर्थदोषलक्षणान्याहेत्यर्थः । अर्थस्य शब्दायत्तत्वाच्छब्ददोषलक्षणकथनानन्तरमेवार्थदोषलक्षणकथनस्यौचित्यादिति भाव । अर्थोऽपुष्ट इति । एतेषां स्वरूपं विशेषतस्तदुदाहरणावसरे स्फुटी भविष्यति । अत्रापुष्टः पुष्टाद्भिन्नः पुष्टत्वं च विवक्षितार्थबाधप्रयोजकानुपादानकत्वम् । तद्विरहश्च द्विधा अप्रयोजकत्वात् प्रयोजकत्वेऽप्यन्यलभ्यत्वाच्च अपुष्टमर्थमुदाहरति ।

क्रमेणोदाहरणम् ॥

( १ ) अतिविततगगनसरणिप्रसरणपरिमुक्ताविश्रमानन्दः ॥

मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयति ॥ २५५ ॥

अत्रातिविततत्वादयोऽनुपादानेऽपि प्रतिपाद्यमानमर्थं न बाधन्त इत्यपुष्टा न त्वसङ्गताः पुनरुक्ता वा ॥

( २ ) सदा मध्ये यासामियममृतनिस्यन्दसुरसा
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम् ।
प्रसादं ता एता घनपरिचिताः केन महतां
महाकाव्यव्योम्नि स्फुरितमधुरा यान्तु रुचयः ॥ २५६ ॥

अत्र यासां कविरुचीनां मध्ये सुकुमारविचित्रमध्यमात्मकत्रिमार्गा भारती चमत्कारं वहति ताः गम्भीरकाव्यपरिचिताः कथमितरकाव्यवत्प्रसन्ना भवन्तु । यासामादित्यप्रभाणां मध्ये त्रिपथगा वहति ताः मेघपरिचिताः कथं प्रसन्ना भवन्तीति संक्षेपार्थः ॥

---

( १ ) अतीति । रविर्जयति सर्वोत्कर्षेण वर्तते कीदृशः अतिविततं अत्यन्तदीर्घं यद्गगनं तद्रूपा या सरणिर्मार्गस्तत्र प्रसरणे गमनागमने परिमुक्तः परित्यक्तो विश्रामानन्दो विश्रान्तिजं सुखं येन तादृशः तथा मरुद्भिः पवनैरुल्लासितं प्रसारितं सौरभं सौगन्ध्यं यस्य तथाभूतस्य कमलाकरस्य कमलसमूहस्य हासकृत् विकासकर्तेत्यर्थः। गीतिश्छन्दः। अत्रातिविततत्व-सरणित्व-मरुदुल्लासितसौरभत्व-रूपाणामर्थानामनुपादानेऽपि प्रकृतार्थस्याक्षतेरपुष्टार्थत्वन्तदाह—अत्रेति । नन्विदमपुष्टार्थत्वमधिकपदत्वं पुनरुक्तत्वं वा स्यादित्यत आह—नत्विति । असंगता अधिकाः प्रयोजनान्तराभावात्तदर्थाविवक्षायामपि तत्पदाभिधानेऽधिकपदत्वम् । स्वरूपकथनार्थं प्रस्तुताऽनुपयोगिनोऽप्यर्थस्य विवक्षायामपुष्टार्थत्वमित्यनयोर्भेदः पुनरुक्ता वेति तु स्वेप्रदोषांशयेनोक्तम् ॥२५५॥

( २ ) कष्टः प्रतीतिक्लेशवान्दुरूह इत्यर्थस्तमुदाहरति—सदा मध्ये इति । स्वकाव्यस्य गम्भीरचमत्कृतार्थशालितया स्फुटार्थत्वाभावेऽपि दोषाभावसमर्थनाय कस्य चित्कवेरुक्तिः । यासां कविरुचीनां कवेरभिप्रायाणां काव्यरूपाणां मध्ये सदाऽमृतनिस्यन्दा सुधास्राविणी चासौ सुरसा सुष्ठुरसाः शृङ्गारादयो , यत्र तादृशी उद्दामा प्रौढा बहुमार्गा सुकुमारविचित्रमध्यमात्मकमार्गत्रयवती एतादृशीयं सरस्वती कवित्वरूपा भारती परिमलं चमत्कारं वहति दधाति ता

( ३ ) जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ॥ २५७ ॥

अत्रेन्दुकलादयो यं प्रति पस्पशप्रायाः स एव चन्द्रिकात्वमुत्कर्षार्थमारोपयतीति व्याहतत्वम् ॥

---

एता महतां कवीनां रुचयोऽभिप्रायाः काव्यरूपाः घनपरिचिताः निबिडाभ्यस्ताः स्फुरिताः अनुभवारूढाः सत्यो मधुरा अभीष्टाः अथ वा स्फुरिता विषयीकृतो मधुरः श्रृङ्गारादिरसो याभिस्ता महाकाव्यव्योम्नि व्योमसदृशात्यन्तापरिच्छेद्ये महाकाव्ये केन प्रकारेण प्रसादं सुबोधत्वं स्फुटतां यान्तु गच्छन्तु कथमितरकाव्यवत् सुबोधा भवन्तु कथमपि नेति भाव इति प्रकृतोऽर्थः । अप्रकृतपक्षे तु यासामादित्यप्रभाणां मध्ये सदाऽमृतनिस्यन्दा जलस्राविणी चासौ सुरसा सुष्ठुस्वादा उद्दामा महती बहुमार्गा त्रिपथगामिनीयं गङ्गारूपा सरस्वती नदी परिमलं सुराङ्गनाङ्गसम्भवं सौगन्ध्यं वहति ता एताः स्फुरितेन प्रकाशेन मधुरा मनोहरा महतां द्वादशादित्यानां रुचयः प्रभाः महाकाव्यव्योम्नि महाकाव्यसदृशाकाशे घनपरिचिता मेघसम्बद्धाः वर्षाकालीनाः सत्यः केन प्रकारेण प्रसादं स्वच्छतां यान्तु कथमितरशरदादिकालिकप्रभावत् स्वच्छा भवन्त्वित्यर्थः । शिखरिणी छन्दः । कठिनत्वात्पद्यं संक्षेपेण व्याचष्टे अत्रेति । सुकुमारेति वैदर्भी गौडी पांचाल्याख्यरीतित्रयवती च । अप्रकृतपक्षे योऽर्थस्तमाह—यासामादित्येति । अत्रायं विवक्षितोऽर्थः शब्दान्तरैः कथं चिद्योजितोऽपि क्लेशेनैव प्रतीयते इत्यर्थ एवायं दुष्टः ॥ क्लिष्टत्वादिकं तु शब्ददोषः घटनान्तरेणार्थस्य सुखेनैव प्रतिपत्तेः । सम्यक् प्रतीतिविरहश्च दूषकताबीजमिति नित्योऽयं दोषः ॥ २५६ ॥

( ३ ) निन्दित्वा पुरस्कृत्य वा तदन्यथाकरणं व्याहतत्वमिति द्विविधं व्याहतत्वन्तत्राद्यमुदाहरति—जगतीति । मालतीमाधवे माधवस्योक्तिः । ये नवेन्दुकलादयः भावाः पदार्थाः सन्ति ते जगत्येव जयिन उत्कृष्टाः न तु ममेति भावः येऽप्यन्ये मनो मदयन्ति हर्षयन्ति तेऽपि जगत्येव प्रकृतिमधुराः स्वभावरमणीयाः । लोका एव तान् प्रकृतिमधुरत्वेन व्यवहरन्तु न त्वहं व्यवहरिष्ये इति भावः । तव किं तथेत्याह ममत्विति । मम तु इयं मालत्येव लोके विलोचनयोर्नेत्रयोश्चन्द्रिका आल्हादिका

( ४ ) कृतमनुमतमित्यादि ॥ २५८ ॥

अत्रार्जुनार्जुनेति भवद्भिरिति चोक्ते सभीमकिरीटिनामिति किरीटिपदार्थः पुनरुक्तः ॥

यथा वा—

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन्मम पितरि गुरौ सर्वधन्वीश्वराणाम् ।
कर्णाऽलं सम्भ्रमेण व्रज कृप ! समरं मुञ्च हार्दिक्यशङ्काम्
ताते चापद्वितीये वहति रणधुरं को भयस्यावकाशः ॥२५९॥

अत्र चतुर्थपादवाक्यार्थः पुनरुक्तः ॥

---

सा च यन्नयनविषयं दृग्गोचरतां याता गता स एक एव जन्मनि महोत्सवो नत्वन्य इत्यर्थः । हरिणी छन्दः । अत्र पूर्वार्धे येन साधारणचन्द्रिकाचन्द्रकलादयः स्वं प्रत्यसारतया प्रतिपादिता तेनैवोत्तरार्धे चन्द्रिकात्वमुत्कर्षायारोप्यत इति व्याहतत्वं तदाह अत्रेति । यं प्रति माधवं प्रति पस्पशप्रायाः तुच्छप्रायाः ॥ स एव माधव एव आरोपयति मालत्यामिति शेषः । अत्र हेयोपादेयत्वविरोधो दूषकताबीजम् ॥२५७

द्वितीयस्य पुरस्कृत्य तदन्यथाकरणरूपव्याहतत्वस्योदाहरणम्—

देवि ! त्वन्मुखपंकजेन शशिनः शोभातिरस्कारिणा
पश्याऽब्जानि विनिर्जितानि सहसा गच्छन्ति विच्छायताम् ।
श्रुत्वा ते परिवारवारवनिता गीतानि भृङ्गाङ्गना
लीयन्ते मुकुलान्तरेषु शनकैः संजातलज्जा इव ।

इति रत्नावल्यां पूर्वार्धे मुखोपमानतया पङ्कजान्युत्कर्ष्य तेषामेवाग्रे विनिर्जितानीति तत्कृतापकर्षवर्णनाद्व्याहतत्वम् ॥

( ४ ) पुनरुक्तः शब्देनावगतत्वे सति पुनस्तद्वाचकेन पर्यायान्तरेण प्रतिपादितः स चायं द्विविधः पदार्थवाक्यार्थभेदात् ॥ तत्र पदार्थस्य पुनरुक्तत्वमुदाहरति कृतमिति । व्याख्यातमिदं चतुर्थोल्लासे । अत्रार्जुनार्जुनेतिसम्बोध्य यैर्भवद्भिरित्यनेन परामर्शादर्जुनस्यापि प्राप्तेः सभीमकिरीटिनामिति किरीटिपदार्थः पुनरुक्तस्तदाह अत्रेति ॥ २५८ ॥

द्वितीयं वाक्यार्थस्य पुनरुक्तत्वमुदाहरति—यथा वेति । वेणीसंहारनाटकेऽश्वत्थाम्न उक्तिः । अस्त्राण्येव ज्वाला वह्निशिखास्ताभिरवलीढो व्याप्तो योऽसौ प्रतिबलं शत्रुसैन्यमेव जलधिः समुद्रस्तस्यान्तर्मध्ये और्वायमाणे वाडवाग्नितुल्ये सर्वधन्वीश्वराणां सकलधनुर्धर-

( ५ ) भूपालरत्ननिर्दैन्यप्रदानप्रथितोत्सवः।
विश्राणय तुरङ्गं मे मातङ्गं वा मदालसम् ॥ २६० ॥

अत्र मातङ्गस्य प्राङ्निर्देशो युक्तः ॥

( ६ ) स्वपिति यावदयं निकटे जनः स्वपिमि तावदहं किमपैति ते।
तदयि! साम्प्रतमाहर कूर्परं त्वरितमूरुमुदञ्चय कुञ्चितम् ॥ २६१ ॥

एषोऽविदग्धः ॥

( ७ ) मात्सर्यमुत्सार्येत्यादि ॥ २६२ ॥

अत्र प्रकरणाद्यभावे सन्देहः शान्तशृङ्गार्यन्यतराभिधाने तु निश्चयः।

---

**श्रेष्ठानां गुरौ सेनानाथे दुर्योधनसेनापतौ अस्मिन्समीपवर्तिनि मम पितरि द्रोणाचार्ये स्थिते विद्यमाने सति हे कर्ण! संभ्रमेण पलायनवेगेन अलम्। हे कृप! कृपाचार्य! समरं व्रज हे हार्दिक्य! कृतवर्मन्? शंकां मुञ्च यतः चापं धनुरेव द्वितीयं यस्य चापैकसहाये ताते मत्पितरि रणधुरं युद्धभारं वहति सति भयस्य कोऽवकाशोऽवसर इत्यर्थः। स्रग्धरा छन्दः। अत्रालं सम्भ्रमेण को भयस्यावकाश इत्यभिन्नार्थावित्ति चतुर्थपादवाक्यार्थः पुनरुक्तस्तदाह—**अत्रेति। **निष्प्रयोजनद्वितीयाभिधानेन श्रोतुर्वैमुख्यं दूषकताबीजम् ॥ २५९ ॥**

**( ५ ) दुष्क्रमः दुष्टोऽनुचितः क्रमो यत्र। दुष्टत्वञ्च क्रमस्य लोकशास्त्रविरुद्धत्वं तत्राद्यमुदाहरति—**भूपालेति। **राजानं प्रति कस्यचिदर्थिन उक्तिः ॥ हे भूपालेषु रत्न! श्रेष्ठ! निर्गतं दैन्यं यस्मात्तथाभूते प्रदाने प्रकृष्टदाने प्रथितः ख्यातः उत्सवो यस्य तादृश हे राजन्! त्वं मे मह्यं तुरङ्गमश्वं विश्राणय देहि, मदेनालसमालस्ययुक्तं मातङ्गं गजं वा विश्राणयेत्यर्थः। अत्र तुरङ्गं मातङ्गं वेति क्रमो लोकविरुद्धः गुरुदानाशक्तौ लघुदानौचित्यात् तदाह—**अत्रेति ॥ २६० ॥

**शास्त्रविरुद्धं तु कारयित्वा क्षौरं ग्रामवृद्धो मङ्क्त्वा स्नात्वा भुक्त्वा च नक्षत्रं तिथिवारौ ज्यौतिषिकं प्रष्टुं चलित इत्यत्र नक्षत्रादिज्ञानपूर्वकं क्षौरस्य धर्मशास्त्रेण विधानादयं क्रमो धर्मशास्त्रविरुद्धः विरोधेनार्थप्रतीतिदूषकताबीजम् ॥**

**( ६ ) ग्राम्यो ग्रामसम्भवः अविदग्धोक्तिप्रतिपादितो रिरंसादिस्तमुदाहरति—**स्वपितीति। **नवोढां प्रति रिरंसोरुक्तिः। अयं जनः कश्चित् यावत्स्वपिति स्वापं करोति तावदहं निकटे त्वत्समीपे स्वपिमि आस्मामि तेन तव किमपैति अपगच्छति। न काचित्ते क्षतिरिति भावः**

( ८ ) गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ॥
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भयात्
विमोक्ष्ये शस्त्र ! त्वामहमपि यतः स्वस्ति भवते ॥२६३॥

अत्र शस्त्रविमोचने हेतुर्नोपात्तः ।

---

अयीति संबोधनम् तत्तस्मात्साम्प्रतमिदानीं कूर्परः कफोणिस्तमाहर अपसारय । तथा कुञ्चितं संकुचितमूरुं जानूपरिभागम् त्वरितं शीघ्रं उदञ्चय प्रसारयेत्यर्थः ॥ द्रुतविलम्बितं छन्दः ॥ अत्र निकटे तावदहं स्वपिमीत्यविदग्धस्य रिरंसोरुक्तिरित्ययमर्थो ग्राम्य इत्याह—एष इति । एष नायकः अविदग्धः पामरः सहृदयहृदयवैमुख्यं दूषकताबीजम् । रिरंसादिरित्यत्रादिपदस्योदाहरणम्—

गोरपत्यं बलीवर्दो घासमत्ति मुखेन सः ।
मूत्रं मुञ्चति शिश्नेन अपानेन तु गोमयम् इति ॥ २६१ ॥

( ७ ) सन्दिग्धः सन्देहविषयः तत्प्रयोजकरूपवानिति यावत् प्रकरणाद्यभावात्सन्दिह्यमानोऽर्थः सन्दिग्धः । तमुदाहरति—मात्सर्यमिति व्याख्यातमिदं पञ्चमोल्लासे ॥ अत्र भूधरनितम्बानां कामिनीनितम्बानां वा सेव्यत्वं व्यञ्जनया प्रतिपिपादयिषितम् तद्विरुद्धद्वयोपस्थित्या द्वितीयेन संदिह्यते प्रकरणाद्यभावात्तदाह—अत्रेति । उद्देश्यनिश्चयविरहो दूषकताबीजम् । शान्तेति वक्तुः शान्तत्वे शृंगारित्वे वा निश्चिते निश्चय एवेति भावः ॥ २६२ ॥

( ८ ) निर्हेतुः निष्क्रान्तो हेतुर्यस्मात् अनुपात्तहेतुकोऽर्थो निर्हेतुस्तमुदाहरति गृहीतमिति । वेणीसंहारे द्रोणाचार्ये हते सति सशोकस्याश्वत्थाम्नः स्वशस्त्रं प्रत्युक्तिः ॥ हे शस्त्र ! येन मत्पित्रा नोचितमपि ब्राह्मणवृत्तिविरोधात् अनुचितमपि त्वं परिभवभयात्क्षात्रकृतानादरभयाद्गृहीतमङ्गीकृतमासीः यस्य प्रभावात्सामर्थ्यात्तव खलु कश्चिद्विषयो गोचरो नाभूदिति न अपि तु सर्वोऽपि युयुत्सुविषयोऽभूदित्यर्थः तेन पित्रा त्वं सुतशोकात् मम मिथ्यामरणश्रवणजाच्छोकात्परित्यक्तमुज्झितमसि न तु भयात् । अतो हेतोरहमपि त्वां विमोक्ष्ये त्यक्ष्यामि क्वेत्यपेक्षायामाह यतः यत्र भवते तुभ्यं स्वस्ति विश्रामसुखं तत्रेत्यर्थः शिखरिणी छन्दः । अत्र यथा द्रोणाचार्यकर्तृकशस्त्रमोचने सुतशोकादिति हेतुरुक्तस्तथाऽश्वत्थामकर्तृकशस्त्रमोचने पितृशोकादिति हेतुर्वक्तव्यः स च नोक्त इति निर्हेतुत्वं तदाह अत्रेति ॥ २६३ ॥

इदं ते केनोक्तं कथय कमलातङ्कवदने !
यदेतस्मिन्हेम्नः कटकमिति धत्से खलु धियम् ।
इदं तद्दुःसाध्याक्रमणपरमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमलमूले विनिहितम् ॥ २६४ ॥

अत्र कामस्य चक्रं लोकेऽप्रसिद्धम् ॥

यथा वा—

उपपरिसरं गोदावर्याः परित्यजताध्वगाः !
सरणिमपरो मार्गस्तावद्भवद्भिरवेक्ष्यताम् ॥
इह हि विहितो रक्ताशोकः कयापि हताशया
चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः ॥२६५॥

अत्र पादाघातेनाशोकस्य पुष्पोद्गमः कविषु प्रसिद्धो न पुनरङ्कुरोद्गमः ।

---

प्रसिद्धिविद्याविरुद्ध इत्यत्र द्वन्द्वान्ते श्रूयमाणं पदमिति न्यायेन विरुद्धपदस्य प्रत्येकमन्वयः प्रसिद्धिविरुद्धो विद्याविरुद्धश्चेति दोषद्वयम् । तत्र यत्रार्थे न प्रसिद्धिः स प्रसिद्धविरुद्धः स च द्विविधः लोकप्रसिद्धिविरुद्धः कविप्रसिद्धिविरुद्धश्चेति–तत्राद्यमुदाहरति–इदंत इति । कमलानामातङ्को भयं यस्मात्तादृशं वदनं यस्यास्तत्सम्बुद्धौ हे कमलातङ्कवदने ! चन्द्रमुखि ! ते तव इदं केन प्रतारकेणोक्तम् कथय यदेतस्मिन्वस्तुनि करस्थिते कटकारे चक्रे हेम्नः सुवर्णस्य कटकं कङ्कणमिति खलु धियं बुद्धिं धत्से धारयसि निश्चयं करोषीति यावत् तर्हि किमिदं तत्राह इदं प्रत्यक्षतो दृश्यमानं तत्प्रसिद्धं दुःखेन साधयितुं शक्या दुःसाध्या दुराराध्या तरुणा जितेन्द्रियाश्च तेषामाक्रमणे वशीकरणे परमास्त्रभूतं स्मृतिभुवा कामेन प्रीत्या तव करकमलमूले प्रकोष्ठे विनिहितं स्थापितं चक्रमित्यर्थः अपह्नुतिरत्रालङ्कारः । शिखरिणी छन्दः । अत्र कामस्य चक्रं लोके न प्रसिद्धमिति लोकप्रसिद्धिविरुद्धोऽर्थस्तदाह–अत्रेति । कामस्य पञ्चशरत्वमेव प्रसिद्धम् ॥ २६४ ॥

कविप्रसिद्धिविरुद्धमर्थमुदाहरति—यथा वेति । अशोककलिकादर्शनमूर्च्छितस्य कथंचिद्गृहमागच्छतः पथिकस्य तेनैव पथा व्रजतोऽन्यान्पथिकान्प्रत्युक्तिरियम् । भो अध्वगाः ! पान्थाः ! यूयं गोदावर्याः उपपरिसरं तटसमीपे सरणिं मार्गं परित्यजत इह प्रदेशे भवद्भिस्तावत् यावदशोकोऽङ्कुरितस्तावत् अपरो मार्गः ईक्ष्यताम् अन्वेष्यताम् तत्र हेतुमाह हि यतः इह गोदावरीपरिसरे सरणौ वा हताशया हता

सुसितवसनालङ्कारायां कदाचन कौमुदी
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः ।
तदनु भवतः कीर्तिः केनाप्यगीयत येन सा
प्रियगृहमगान्मुक्ताशंका क नासि शुभप्रदः ॥ २६६ ॥

अत्रामूर्तापि कीर्तिः ज्योत्स्नावत्प्रकाशरूपा कथितेति लोकविरुद्धमपि कविप्रसिद्धेर्न दुष्टम् ॥

---

पापजनत्वेन निन्द्या आशा पथिकमारणेच्छा यस्यास्तथाभूतया कयाचिन्मत्तरुण्या रक्ताशोकः चरणनलिनन्यासेन पादपद्माघातेन उदञ्चन्तः उद्गच्छन्तः नवाङ्कुरा एव कंचुकः कवचो यस्य तादृशो विहितः कृत इत्यर्थः । "हरिणी छन्दः" अत्र वनितायाः पादाघातेनाशोकस्य पुष्पोद्गम एव कविप्रसिद्धो नत्वङ्कुरोद्गम इति कविप्रसिद्धिविरुद्धोऽर्थस्तदाह—अत्रेति । यद्यपि पुष्पोद्गमेन नवांकुरोद्गमोऽपि स्यादेवेति न बाधस्तथापि तथाकविवर्णनाविरहेण तद्विरुद्धः । उक्तञ्च—

स्त्रीणां स्पर्शात्प्रियंगुर्विकसति वकुलः सीधुगण्डूषसेकात्
पादाघातादशोकस्तिलककुरवकौ वीक्षणालिंगनाभ्याम् ।
मन्दारो नर्मवाक्यात्पटुमधुहसनाच्चम्पको वक्त्रवाता
च्चूतो गीतान्नमेरुर्विकसति च पुरो नर्तनात्कर्णिकारः ॥२६५॥

लोकविरुद्धस्यापि कविप्रसिद्धत्वेन न विरुद्धत्वमिति दर्शयति—सुसितेति । राजानं प्रति कवेरुक्तिः । हेराजन् ! कदाचन एकदा कौमुदी महसि ज्योत्स्नोद्योते सुसितानि अत्यन्तधवलानि वसनानि वस्त्राणि अलंकारा आभरणानि च यस्यास्तथाभूतायां सुदृशि मृगनयनायां स्वैरं यान्त्यामभिसरन्त्यां सत्यां विधुश्चन्द्रोऽस्तंगतोऽभूत् तदनु तदनन्तरं केनापि केनचित्पुरुषेण भवतस्तव कीर्तिरगीयत गीता येन कीर्तिगानेन साऽभिसारिका मुक्ता त्यक्ता आशंका श्वेतवस्त्राभरणैर्लोकदृश्यत्वभयं यया तथाभूता सती प्रियगृहं कान्तवसतिम् अगाद्गतवती अतस्त्वं क्व कस्मिन्देशेऽवसरे वा शुभप्रदो नासि अपि तु सर्वत्र सुखप्रदोऽसीत्यर्थः ॥ हरिणी छन्दः । अर्थान्तरन्यासोऽत्राऽलङ्कारः । अत्र कीर्तेर्धवलता गुणाश्रयत्वरूपं मूर्तत्वं ज्योत्स्नावत्प्रकाशकता च लोकविरुद्धे अपि कविसमयसिद्धे इत्यदोषस्तदाह अत्रेति । कविसमयश्च साहित्यदर्पणे सप्तमपरिच्छेदे द्रष्टव्यः ॥ २६६ ॥

सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः।
नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च ॥ २६७ ॥
अत्र ग्रहोपरागादिकं विना रात्रौ स्नानं धर्मशास्त्रेण विरुद्धम् ॥
अनन्यसदृशं यस्य बलं बाह्वोः समीक्ष्यते।
षाड्गुण्यानुसृतिस्तस्य सत्यं सा निष्प्रयोजना ॥ २६८ ॥
एतद् अर्थशास्त्रेण ॥
विधाय दूरे केयूरमनङ्गाङ्गणमङ्गना।
बभार कान्तेन कृतां करजोल्लेखमालिकाम् ॥२६८॥
अत्र केयूरपदे नखक्षतं न विहितमिति, एतत्कामशास्त्रेण।

---

विद्याविरुद्ध इत्यत्र विद्याशब्दस्य शास्त्रपरत्वेन शास्त्रस्य चानेकत्वाद्धर्मशास्त्रविरुद्धं तावदुदाहरति—सदा स्नात्वेति। बुधः पण्डितः सदा प्रतिदिनं निशीथिन्यां रात्रौ स्नात्वा सकलं वासरं दिनमभिव्याप्य नानाविधानि अनेकप्रकाराणि शास्त्राणि दर्शनानि व्याचष्टे व्याकरोति शृणोति चेत्यर्थः॥ अत्र निमित्तं ग्रहोपरागादिकं विना रात्रौ मध्ययामद्वये स्नानं धर्मशास्त्रेण प्रतिषिद्धमिति तद्विरुद्धोऽयमर्थस्तदाह—अत्रेति। रात्रिस्नाननिषेधकेषु वचनेषु रात्रिशब्दो मध्ययामद्वयपर एवेति दिक्॥ २६७॥

नीतिशास्त्रविरुद्धमुदाहरति—अनन्येति। यस्य पुरुषस्य बाह्वोर्बलं सामर्थ्यं अनन्यसदृशम् अनुपमं समीक्ष्यते विलोक्यते—तस्य सा प्रसिद्धा षाड्गुण्यानुसृतिः सन्धिविग्रहयानासनद्वैधसंश्रयाः षड्गुणास्त एव षाड्गुण्यम् तस्यानुसृतिरनुसरणं निष्प्रयोजनेति सत्यमित्यर्थः॥ अत्र महाबलस्यापि सन्ध्यादि षाड्गुण्यानुसरणमर्थशास्त्रेण विहितमिति तद्विरोधस्तदाह—एतदिति। अर्थशास्त्रेण नीतिशास्त्रेण विरुद्धमिति शेषः॥ २६८॥

कामशास्त्रविरुद्धमुदाहरति—विधायेति। अनङ्गाङ्गणं कन्दर्पविलासस्थानरूपा अंगना का चिद्वनिता केयूरं बाहुभूषणं दूरे विधाय दूरीकृत्य कान्तेन भर्त्रा कृतां करजानां नखानामुल्लेखा क्षतानि तेषां मालिकां पङ्क्तिं बभार दधावित्यर्थः॥ अत्र केयूरस्थाने नखक्षतवर्णनं कामशास्त्रविरुद्धं तदाह अत्रेति।

स्तने नखक्षतं प्रोक्तं जघनेऽपि क्वचिद्भवेत्।
इत्यादिमतभेदेन स्थानानि कामशास्त्रे वर्णितानि॥ २६९॥

अष्टांगयोगपरिशीलनकीलनेन
दुःसाध्यसिद्धिसविधं विदधद्विदूरे ।
आसादयन्नभिमतामधुना विवेक-
ख्यातिं समाधिधनमौलिमणिर्विमुक्तः ॥ २७० ॥

अत्र विवेकख्यातिस्ततः सम्प्रज्ञातसमाधिः पश्चादसंप्रज्ञातस्ततो मुक्तिर्न तु विवेकख्यातौ, एतत् योगशास्त्रेण । एवं विद्यान्तरैरपि विरुद्धमुदाहार्यम् ॥

प्राप्ताः श्रियः सकलकामदुघास्ततः किं
दत्तं पदं शिरसि विद्विषतां ततः किम् ।
सन्तर्पिताः प्रणयिनो विभवैस्ततः किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥ २७१ ॥

अत्र ततः किमिति न नवीकृतम् ॥

---

योगशास्त्रविरुद्धमुदाहरति—अष्टांगेति । समाधिश्चित्तवृत्तिनिरोधः स एव धनं येषां ते समाधिधनास्तेषां मौलिमणिः शिरोमणिः प्रसिद्धो योगी ।

यमश्च नियमश्चैवमासनं प्राणसंयमः ।
प्रत्याहारो धारणा च ध्यानं चैव समाधियुक् ॥
एतानि कथितान्यष्टौ योगाङ्गानि मनीषिभिः ।

इति पठितानि अष्टावङ्गानि यस्य तथाभूतस्य योगस्य परिशीलनं मुहुर्मुहुराचरणं तेन यत्कीलनमभ्यासदार्ढ्यं तेन दुःसाध्या दुष्प्राप्या या सिद्धिर्मुक्तिस्तस्याः सविधं समीपवर्तिनं असंप्रज्ञातलक्षणं पुरुषमात्रविश्रान्तमनोवृत्तिरूपं योगं दूरे विदधत् दूरीकुर्वन् तमनपेक्ष्यैव अभिमतामभीष्टां विवेकख्यातिं प्रकृतिपुरुषयोर्भिन्नत्वज्ञानरूपां आसादयन्प्राप्नुवन् अधुना साम्प्रतं विमुक्तो मुक्तिं गत इत्यर्थः ॥ वसन्ततिलका छन्दः ॥ अत्र प्रथमं प्रकृतिपुरुषयोर्भिन्नत्वज्ञानरूपा विवेकख्यातिः । ततो वितर्कविचाराद्यनुसारिरूपः संप्रज्ञातयोगस्ततः पुरुषमात्रावलम्बनस्वरूपोऽसंप्रज्ञातयोगः ततो मुक्तिर्नतु विवेकख्यातिमात्र एवेति योगशास्त्रेण विरुद्धः असंप्रज्ञातयोगमनपेक्ष्यैव मोक्ष इति तदाह अत्रेति विवेकख्यातौ मुक्तिरिति शेषः ॥ विद्यान्तरैरिति गजतुरगखड्गादिलक्षणशास्त्रैरपि विरुद्धमेवं रीत्या स्वयमूहनीयम् ग्रन्थविस्तरभिया नोदाहृतमिति भावः विरुद्धार्थप्रतीत्या सहृदयहृदयवैरस्यं दूषकताबीजम् ॥ २७० ॥

अनवीकृतः भङ्ग्यन्तरेण प्रकारान्तरेण यन्नवत्वं तत्र आपितस्त-

तत्तु यथा--

यदि दहत्यनिलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः ॥
लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता ॥ २७२ ॥

यत्रानुल्लिखितार्थमेव निखिलं निर्माणमेतद्विधे-
रुत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा ॥
याताः प्राणभृतां मनोरथगतीरुल्लंघ्य यत्संपद-
स्तस्या भासमणीकृताश्मसु मणेरश्मत्वमेवोचितम् ॥२७३॥

अत्र "छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचिता" इति सनियमत्वं वाच्यम् ॥

---

मुदाहरति–प्राप्ता इति। वैराग्यशतके शान्तस्य भर्तृहरेरुक्तिः। सकलकामदुघाः श्रियः सम्पदः प्राप्ताः ततः किम् तत्त्वज्ञानं विना सर्वमकिंञ्चित्करमिति भावः। विद्विषतां शत्रूणां शिरसि पदं चरणं दत्तं न्यस्तं प्रणयिनो मित्राद्याः विभवैः समृद्धिभिः संतर्पितास्तोषिताः तनुभृतां शरीरिणां तनुभिः शरीरैः कल्पं व्याप्य स्थितं जीवितं ततोऽपि किमित्यर्थः॥ वसन्ततिलका छन्दः॥ अत्र ततः किमिति पुनः पुनरुक्त्याऽनवीकृतत्वं तदाह—अत्रेति। सर्वेष्वर्थेषु ततः किमित्येकैवभंगिभंग्यन्तराभावान्न नवीकृतमित्यर्थः पिष्टपेषणन्यायेनाशक्तिप्रकाशनेन वा सहृदयोद्वेजकत्वं दूषकताबीजम्। एकप्रकारार्थाभिधानेऽनवीकृतत्वं भिन्नधर्मप्रकारेणार्थाभिधाने नवीकृतत्वमिति ॥ २७१ ॥

नवीकृतं दर्शयति—तत्तु यथेति। सतां साधूनामविषादिता विषादशून्यता प्रकृतिरेव स्वभाव एव नाश्चर्यकरी तत्र दृष्टान्तमुखेनोपमानभूतं वाक्यार्थत्रयमुपन्यस्यति—यदीति। यथाऽनलो वह्निर्यदि दहति। अत्राग्नेर्दाहकत्वे किमद्भुतं किमाश्चर्यं स्वाभाविकत्वान्नाश्चर्यमिति भावः नाद्भुतमित्यर्थः यदि च अद्रिषु गौरवं गुरुत्वमस्ति किं ततः तदपि स्वाभाविकत्वान्नाद्भुतं महोदधेः अम्बु सदैव लवणं क्षारं अतस्तदपि स्वाभाविकत्वान्नाद्भुतमित्यर्थः मालारूपा प्रतिवस्तूपमाऽत्रालङ्कारः। द्रुतविलम्बितं वृत्तम्। अत्रैक एवाश्चर्याभावरूपः पर्यवसितोऽर्थः किमद्भुतम् किं ततः सदैव प्रकृतिरेवेति भङ्गिभेदेन प्रकारभेदेनोक्तः इति नवीकृतत्वमिति बोध्यम् ॥ २७२ ॥

सनियमा नियमविशेषा विशेषपरिवृत्ता इत्यत्र सनियमादिभिश्चतुर्भिः परिवृत्तपदान्वयात्सनियमपरिवृत्तादिचतुष्टयं लभ्यते परि-

वक्त्राम्भोजे सरस्वत्यधिवसति सदा शोण एवाधरस्ते
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः ॥
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चत्यभीक्ष्णं
स्वच्छेऽन्तर्मानसेऽस्मिन् कथमवनिपते ! तेऽम्बुपानाभिलाषः ॥२७४॥

अत्र शोण एव इति नियमो न वाच्यः ॥

---

वृत्तिश्च सनियमानियमयोर्विशेषाविशेषयोश्च तत्र सनियमपरिवृत्तः सनियमेन वक्तुमुचितोऽनियमत्वेनोक्तस्तमुदाहरति—यत्रेति । यत्र यस्मिंश्चिन्तामणौ सति एतन्निखिलं सर्वमपि विधेर्ब्रह्मणो निर्माणं जगत् अनुल्लिखितोऽविभावितोऽर्थः प्रयोजनं यस्य तथाभूतमेव अ-प्रयोजकमेव भवतीति शेषः किञ्च यत्र चिन्तामणौ उत्कर्षस्य प्रतियो-गिनोऽवधेः कस्य चित्कल्पनमपि परा न्यक्कारकोटिः अवज्ञायाः परा काष्ठा सर्वोत्कृष्टतया यत्किञ्चिन्निरूपितोत्कर्षकथनस्यापकर्षहेतुत्वा-दिति भावः । किञ्च यत्संपदः यस्य चिन्तामणेर्गुणनिधानादिसम्पत्तयः प्राणभृतां मनोरथगतीरभिलाषसञ्चारान् उल्लंघ्यातिक्रम्य याताः प्राणिमनोगोचरा अपि न भवन्ति तस्य मणेश्चिन्तामणेराभासेन ईषत्स्फुरणेन मणीकृता अमणयोऽपि मणित्वेन कल्पिताः येऽश्मानः पाषाणास्तेषु मध्ये अश्मत्वमेवोचितम् अश्मत्वव्यवहार एवोचितो नतु मणित्वव्यवहार उचित इत्यर्थः । चिन्तामणेराभासेनैव मणीकृतैः पाषाणैः सह चिन्तामणेर्गणने चिन्तामणेरेव वरं पाषाणत्वमस्तु ते-षान्तु मणित्वमिति सोपहासान्योक्तिरियम् ॥ शार्दूलविक्रीडितं छन्दः ॥ अत्राऽन्योक्तौ अभासमात्रेण मणीकृतेषु इति सनियमत्वं वक्तु-मुचितम् निन्दनीयानां मणीनां गुणान्तरव्यावर्तनेन निन्दातिशयप्रती-तेः ॥ अनियमे तु न निन्दनीयानां मणीनां गुणान्तरव्यवच्छेदप्रत्ययः । तस्माच्छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचितेति पठनीयं तदाह—अत्रेति ॥ २७३ ॥

अनियमपरिवृत्तमुदाहरति—वक्त्रेति । भोजप्रबन्धे राजानं प्रति मग-धस्योक्तिः । हे अवनिपते ! ते तव अस्मिन् स्वच्छं पवित्रमेव स्वच्छं निर्मलं तादृशे मानसं-मानसाख्यं सरस्तस्मिन्सति अन्तः अभ्यन्तरे अम्बुपानस्याभिलाषः इच्छा कथं भवतीति शेषः । जलाधारतया तव पिपासाऽनुचितेति भावः । अनौचित्यातिशयं प्रतिपादयितुमाह वक्त्रेति । ते तव वक्त्राम्भोजं-मुखकमलं कर्म सरस्वती वाण्येव सरस्वती नदी-विशेषः सदा अधिवसति ते तव अधरः अधरोष्ठः शोणो रक्त एव

श्यामां श्यामलिमानमानयत भोः ! सान्द्रैर्मषीकूर्चकैः
मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां श्रियम् ॥
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः ॥ २७५ ॥

अत्र "ज्योत्स्नाम्" इति श्यामाविशेषो वाच्यः ॥

---

शोणो नदविशेषः ॥ ते तव बाहुः दक्षिणो दानदक्षः सव्येतरो वा स एव दक्षिणः दक्षिणदेशस्थः समुद्रः मुद्रया राजचिह्नभूतया सहित एव समुद्रो जलधिः कीदृशो बाहुः काकुत्स्थस्य रामस्य वीर्यस्मृतिः पराक्रमस्मरणं तस्याः करणे उत्पादने पटुः समर्थः समुद्रोऽपि सेतुदर्शनाद्रामस्य स्वबन्धनकर्तृत्वेन रामवीर्यस्मारकत्वात्तथाभूतः एता वाहिन्यः सेना एव वाहिन्यो नद्यो भवतः पार्श्वं क्षणमपि अभीक्ष्णं निरन्तरं नैव मुञ्चन्ति नैव त्यजन्तीत्यर्थः ॥ स्रग्धरा छन्दः ॥ अत्र शोण एवेत्यवधारणमनुचितम् अन्यजलाशयव्यावृत्तेः पिपासाऽनौचित्यातिशयप्रतिकूलत्वादित्यानियमपरिवृत्तत्वं तदाह अत्रेति ॥ २७४ ॥

विशेषपरिवृत्तमुदाहरति—श्यामामिति । विद्धशालभञ्जिकायां राज्ञो विद्याधर मल्लदेवस्योक्तिः॥ भोः परिजनाः ! यूयं सान्द्रैर्निबिडैः मषीकूर्चकैः मषीयुक्ततूलिकाभिः श्यामां रात्रिं श्यामलिमानं श्यामलतामानयत प्रापयत अथ अथवा मन्त्रं तन्त्रं च प्रयुज्य श्वेतोत्पलानां श्रियं शोभां हरत नाशयत ॥ चन्द्रस्यैव रात्रिश्वेतोत्पलयोः शोभाहेतुत्वात्तं द्वेष्टि चन्द्रमिति चन्द्रं च चन्द्रं वा शिलापट्टके विपुलपाषाणफलके कृत्वा निधाय क्षणात् कणशः चूर्णयत येन एवंविधकरणेन अहं तस्या मृगाङ्कवत्या वक्त्रमेव मुद्राङ्कः संजातो यासु तथाभूताः दश दिशो द्रष्टुं अवलोकयितुं क्षमे शक्नोमीत्यर्थः ॥ भावनोपनीतं तन्मुखं दशसु दिक्षु पश्यतो मम चन्द्रादिभिरुद्दीपकतया सन्तापकैः क्रियमाणं प्रतिबन्धमुकरीत्याऽपहरतेति भावः ॥ शार्दूलविक्रीडितं छन्दः ॥ अत्र ज्योत्स्नीरूपरात्रिविशेषस्य विवक्षितत्वाद्विशेषत एव तदभिधातुमुचितम् अन्यथा 'श्यामा स्याच्छुरिका निशे'त्यमराच्छ्यामाशब्दस्य निशासामान्यवाचितया तद्विशेषस्य प्रतीतौ विलम्बापत्तेस्तदाह—अत्रेति ॥ २७५ ॥

कल्लोलवेल्लितदृषत्परुषप्रहारै रत्नान्यमूनि मकरालय ! मावमंस्थाः ॥
किं कौस्तुभेन विहितो भवतो न नाम याञ्चाप्रसारितकरः पुरुषोत्तमोऽपि७६
अत्र एकेन किं न विहितो भवतः स नाम इति सामान्यं वाच्यम् ॥

अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभो ! प्रत्युत-
द्रुह्यन् दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया ।
उत्कर्षश्च परस्य मानयशसो र्विस्रंसनं चात्मनः
स्त्रीरत्नञ्च जगत्पतिर्दशमुखो देवः कथं मृष्यते ॥ २७७ ॥

अत्र स्त्रीरत्न''मुपेक्षितुं''इत्याकांक्षति ॥ नहि परस्येत्यनेन सम्बन्धो योग्यः ॥

---

अविशेषपरिवृत्तमुदाहरति—कल्लोलेति । भल्लटशतके पद्यमिदम् । हे मकरालय ! समुद्र ! त्वं कल्लोलैर्महोर्मिभिर्वेल्लिताश्चालिता या दृषदः पाषाणास्तासां परुषप्रहारैः कठोरताडनैः अमूनि स्वाश्रितानि रत्नानि माऽवमंस्थाः मा तिरस्कुरु, कुत इत्यत आह किमिति । नामेति प्रसिद्धौ भवतः कौस्तुभेन तदाख्यरत्नेन पुरुषोत्तमः श्रीकृष्णोऽपि पुरुषश्रेष्ठोऽपि च याञ्चार्थं प्रसारितः करो येन तादृशः किन्न विहितः अपि तु याचकः कृत एवेत्यर्थः ॥ वसन्ततिलका छन्दः ॥ अत्रैकेन रत्नेन एवंविधोत्कर्षलाभादन्येषामपि रत्नानामवमाननं नोचितमित्यर्थो विवक्षितः स च कौस्तुभेनेति विशेषतोऽभिधानेन निर्वहति कौस्तुभस्योपकारकत्वेऽपि अन्यरत्नसामान्यावमाननिषेधायोगात् कौस्तुभस्य रत्नसामान्यान्तर्गतत्वेनाप्रतीतेः अतः सामान्यपरिवृत्तत्वं तदाह अत्रेति२७६॥

साकांक्षः" आकांक्षया सह वर्तते इत्यर्थः साकांक्षत्वं च ''अनुपात्तार्थाकाङ्क्षाविषयार्थकत्वम्' तमुदाहरति—अर्थित्व इति । वीरचरिते सीताप्राप्तिनिराशस्य माल्यवत उक्तिः ॥ अर्थित्वे याचकत्वे प्रकटीकृतेऽपि प्रभोः रावणस्य फलप्राप्तिः सीतालाभो न । न केवलं फल प्राप्तिरेव, किन्तु वैपरीत्यमपीत्याह प्रत्युतेति । विपरीतं द्रुह्यन् ताटकावधादिना द्रोहं कुर्वन् विरुद्धचरितो यज्ञादिसंरक्षको दाशरथिः रामः तया प्रार्थ्यमानया कन्यया सीतया युक्तः संयुक्तः, स्वप्रार्थितं न स्वयं न लब्धं किन्तु शत्रुणेति वैपरीत्यम् एवं सति परस्य शत्रोः रामस्य मानयशसोरुत्कर्षश्च आत्मनो विस्रंसनमवमाननञ्च स्त्रीरत्नं सीताख्यञ्च जगतां पतिः देवो विजिगिषुर्दशमुखो रावणः कथं मृष्यते क्षमते न कथंचिदपीत्यर्थः ॥ शार्दूलविक्रीडितं छन्दः ॥ अत्र साका-

आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावण. क्व नु पुनः सर्वत्र सर्वे गुणाः ॥२७८॥
अत्र "स्याच्चेदेष न रावणः" इत्यत एव समाप्यम् ॥

---

ङ्क्षितत्वं दर्शयति—अत्रेति। स्त्रीरत्नमित्यस्यार्थः उपेक्षितुमित्यस्यार्थमाकाङ्क्षति अन्यथा कथं मृष्यत इत्यनेनामर्षार्थकेनान्वयप्रसङ्गः नहि श्रीरत्ने एवामर्षः किन्तु तदुपेक्षायाम्। ननु परस्येत्यनेन सम्बन्धात्परस्त्रीष्वमर्षो युज्यत एव तथा च श्रीरत्नस्य नाऽमर्षायोग्यत्वमित्याशंक्य निषेधति—नहीति। परस्येत्यस्योत्कर्षेण सह जनितान्वयबोधत्वेन निराकांक्षत्वादिति भावः ॥ २७७ ॥

अपदयुक्तः अपदेऽस्थाने युक्तः सम्बद्धः ॥ प्रकृतार्थविरुद्धार्थकपदशालित्वमपदयुक्तत्वम् तदुदाहरति—अत्रेति। बालरामायणे जनकं प्रति शतानन्दस्योक्तिः ॥ यस्य रावणस्याज्ञा शक्रस्य शिखामणेः प्रणयिनी प्रिया शरोधार्या यस्य शास्त्राण्येव नवं नूतनं चक्षुः शास्त्रदृष्ट्यैवाचरणात् तथा भूतपतौ सकलप्राणिनामीश्वरे पिनाकिनि हरे भक्तिः। तथा लङ्केति प्रसिद्धा दिव्या उत्कृष्टा पुरी पदं निवासस्थानम् द्रुहिणान्वये ब्रह्मणः कुले चोत्पत्तिर्जन्म तत्तस्मादहो आश्चर्यम् ईदृक् उक्तगुणगणयुक्तो वरो न लभ्यते दुर्लभ इत्यर्थः एष रावणः रावयति पीडाजननेन लोकानाक्रन्दयतीति तथाभूतश्चेन्न स्यात्तदा क्व नु पुनः सर्वत्र जने सर्वे गुणा न क्वापीत्यर्थः ॥ रावण एव सर्वगुणशालितयोत्कृष्टः स्यात् जगदाक्रन्दकारित्वेन तु बलवता दोषेणायमुपेक्ष्य इति भावः ॥ शार्दूलविक्रीडितं छन्दः ॥ अत्र आश्चर्यम् एकोऽपि गरीयान्दोषः समग्रमपि गुणग्रामं दूषयतीति चूर्णिकासाहाय्येन रावणोपेक्षैव विवक्षिता सा च स्याच्चेदेष रावण इत्येतावतैव सम्पन्ना रावणपदस्य जगदाक्रन्दकारित्वरूपार्थान्तरसंक्रमितवाच्यत्वात् अतः स्याच्चेदेष न रावण इत्यत्रैव काव्यार्थसमाप्तिरुचिता तदनन्तरं क्व नु पुन इत्यभिधानं समाधाने पर्यवस्यद्विवक्षितां रावणोपेक्षाप्रतीतिं स्थगयतीति अपदयुक्तत्वन्तदाह अत्रेति। समाप्यं पद्यमिति शेषः न त्वग्रे वक्तव्यमिति भावः ॥ २७८ ॥

श्रुतेन बुद्धिर्व्यसनेन मूर्खता मदेन नारी सलिलेन निम्नगा ॥
निशा शशाङ्केन धृतिः समाधिना नयेन चालंक्रियते नरेन्द्रता ॥२७९॥
अत्र श्रुतादिभिरुत्कृष्टैः सहचरितैर्व्यसनमूर्खतयोर्निकृष्टयोर्भिन्नत्वम् ॥
लग्नं रागावृताङ्गया ॥ २८० ॥
इत्यत्र विदितं तेऽस्त्वित्यनेन श्रीस्तस्मादपसरतीति विरुद्धं प्रकाश्यते ।

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-
मकेशवधमपाण्डवं भुवनमद्य निःसोमकम् ।
इयं परिसमाप्यते रणकथाऽद्य दोःशालिना-
मपैतु रिपुकाननातिगुरुरद्य भारो भुवः ॥ २८१ ॥

अत्र "शयितः प्रयत्नेन बोध्यते"-इति विधेयम् । यथा वा-

---

सहचरभिन्नः सहचरेषु समभिव्याहृतेषु सहचरेभ्यः समभिव्याहृतेभ्यो वा भिन्नो विजातीयः एवञ्च समभिव्याहृतविजातीयार्थकत्वं सहचरभिन्नत्वं तदुदाहरति—श्रुतेनेति । श्रुतेन शास्त्रेण शास्त्रश्रवणेन वा बुद्धिरलंक्रियते एवं सर्वत्र योज्यम् व्यसनं द्यूतादि मदो यौवनादिजन्मा निम्नगा नदी धृतिः धैर्यम् समाधिर्धर्मचिन्ता योगो वा नयो नीतिमार्गः नरेन्द्रता राजत्वम् ॥ अत्र क्रियादीपकाऽलंकारः ॥ वंशस्थं वृत्तम् । अत्र श्रुतबुध्यादिभ्य उत्कृष्टेभ्यः सहचरेभ्यो व्यसनमूर्खतयोर्निकृष्टतया विजातीयत्वमित्याह अत्रेति । सहचरितानां हि प्रायश एकरूपतया सर्वेषामुपादेयत्वं त्याज्यत्वं वा प्रतीयेत तथा हि श्रुतादिसमभिव्याहारेण मूर्खस्य व्यसनं कर्तव्यमित्यपि स्यात् व्यसनादिसमभिव्याहारेण बुद्धिशालिनः श्रुतमपि त्याज्यं स्यादिति एतदेवात्र दूषकताबीजम् ॥ २७९ ॥

प्रकाशितविरुद्धः, प्रकाशितो व्यञ्जितः विरुद्धो विवक्षितार्थस्य प्रतिकूलोऽर्थो येन सः । तथा च प्रतिपादितविवक्षितार्थविरोधिव्यञ्जकार्थकत्वं प्रकाशितविरुद्धत्वम् ॥ सहचरभिन्ने पदार्थस्यैव तथात्वं अत्र तु वाक्यार्थस्येति ततो भेदः तदुदाहरति-लग्नमिति । अत्रैवोल्लासे व्याख्यातमिदम् । अत्र विदितं तेऽस्त्विति वाक्यस्यार्थो लक्ष्मीस्ततोऽपसरतीति राजस्तुतिविरोधिनमर्थं प्रकाशयतीति प्रकाशितविरुद्धत्वमित्याह अत्रेति । विरुद्धप्रकाशनमेव दूषकताबीजमिति नित्योऽयं दोषः ॥ २८० ॥

विध्यनुवादायुक्त इति सूत्रांशेन विध्ययुक्तोऽनुवादायुक्तश्चेति

वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः ॥
तेऽपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकै-
र्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥२८२॥
अत्र वाताहारादित्रयं व्युत्क्रमेण वाच्यम् ॥

---

दोषद्वयमुक्तम् ॥ तत्र विध्ययुक्तोऽयुक्तविधिः विधेरयुक्तत्वं च अविधेयस्यैव विधेयत्वेन अयुक्तक्रमतया वेति द्विविधन्तत्राद्यमुदाहरति–प्रयत्नेति । वेणीसंहारे दुर्योधनं प्रति अश्वत्थाम्न उक्तिः । हे राजन् ! अद्य त्वं निशां रात्रिं व्याप्य शेषे निद्रास्यसि । वर्तमानसामीप्ये इति भविष्यति लट् । कीदृशस्त्वं स्तुतिभिः वैतालिकस्तवैः प्रयत्नेन परिबोधितः प्रबोधितः तथा निद्रास्यसि यथैवं प्रतिबोधनीय इति भावः । अद्य भुवनमकेशवं श्रीकृष्णरहितं अपाण्डवं पाण्डवैश्च रहितं निःसोमकं निर्गताः सोमकाः पांचाला यस्मात्तथाभूतं च यतः करोमीति शेषः अद्य दोःशालिनां बाहुबलशालिनां वीरक्षत्रियाणां इयं रणकथा संग्रामवार्ता परिसमाप्यते दूरतस्तु संग्राम इति भावः । अद्य भुवः पृथिव्याः भारोऽपैतु दूरं यातु कीदृशः रिपुरूपेण काननेनातिगुरुरित्यर्थः । कालान्तरकर्तव्यत्वसंभावनायाः सर्वथैव निरासाय प्रतिपादमद्येत्युक्तिः ॥ पृथ्वी छन्दः । अत्र पाण्डवभयेनाद्यावधि तव निद्रा नाभूदेव अद्य तु मया शमितेषु तेषु निःशंकतया निद्राणस्त्वं वैतालिकस्तुतिभिः प्रयत्नेन बोध्यसे इति तात्पर्यम् एवं च शयितस्त्वं प्रयत्नेन बोध्यसे इति विधिर्युक्तो न तु शेषे इति शयनस्य यतः शयित एव बोध्यते न तु बोधितः शेते इत्ययुक्तविधित्वम् तदाह अत्रेति ॥ २८१ ॥

द्वितीयमुदाहरति–वातेति । भल्लटशतके पद्यमिदम् । विषधरैः सर्पैः वाताहारतया वायुभक्षणव्रतधारितया आश्वास्य सर्वेषां विश्वासमुत्पाद्य जगन्निःशेषितं नाशितं जगन्ति निःशेषयितुमेव वाताहारत्वमाचरितमिति भावः ते पुनर्विषधराः अभ्रतोयकणिकापानरूपं व्रतं येषां तादृशैः मेघजलबिन्दुमात्राहारैः बर्हिभिर्मयूरैर्ग्रस्ता भक्षिताः सर्पान्ग्रसितुमेव अभ्रतोयकणिकायाः पानव्रतमाचरितमिति भावः । ते बर्हिणोऽपि क्रूरं कर्कशं यच्चमूरोश्चित्रमृगस्य चर्म तदेव वसनं येषां तथाभूतैः लुब्धकैः व्याधैः क्षयं नाशं नीताः प्रापिताः ॥ बर्हिमारणार्थैव चर्मधारिव्रताचरणमिति भावः युक्तोऽयमर्थ इत्याह दम्भस्येति । जाल्मोऽसमीक्ष्यकारी मूर्खः जनः परप्रतार्यः शाठ्येन धर्माचरणं दम्भः

अरे रामाहस्ताभरणभसलश्रेणिशरण !
स्मरक्रीडाव्रीडाशमन ! विरहिप्राणदमन !
सरोहंसोत्तंस ! प्रचलदलनीलोत्पलसखे !
सखेदोऽहं मोहं श्लथय कथय क्वेन्दुवदना ॥ २८३ ॥

अत्र "विरहिप्राणदमन" इति नानुवाद्यम् ॥

लग्नं रागावृताङ्ग्येत्यादि ॥ २८४ ॥

अत्र विदितं तेऽस्तु इत्युपसंहृतोऽपि तेनेत्यादिना पुनरुपात्तः ॥

---

तस्य स्फुरितं चेष्टितं परहिंसारूपं विदन्नपि जानन्नपि गुणान्धार्मिकत्वादीन् ईहते सम्भावयति दाम्भिकेष्विति शेषः अत्रार्थान्तरन्यासोऽलंकारः। अत्र चर्मवसनं मेघतोयकणिकापानं वा बुभुक्षणं चेत्युत्तरोत्तरं तीव्रमिति तत्क्रमेणैव विधिर्युक्तः तदन्यथाकरणेनायुक्तक्रमतया विध्ययुक्तत्वन्तमाह अत्रेति ॥ २८२ ॥

अनुवादायुक्तः अयुक्तानुवादः ॥ अयुक्तत्वं चात्र विध्यननुगुणत्वम् ॥ अनुवादश्च सिद्धस्योपन्यासः। तमुदाहरति—अरे इति। नीलोत्पलं प्रति विरहिणः पुरूरवस उक्तिः। अरे हे सखे ! नीलोत्पल अहं सखेदो दैन्यसहितः अस्मि अत इन्दुवदना क्व तत्कथय मदीयं मोहं श्लथय शिथिली कुरु। कीदृशः रामायाः सुन्दर्या हस्तस्याभरण अलंकारभूत ! अनेन तदागमनस्य तत्र सम्भावना ध्वनिता। पुनः भसलश्रेणिशरण ! भ्रमरावलीगृहभूत ! पुनः स्मरक्रीडाव्रीडाशमन ! उद्दीपकतया कामकौतुकत्रपाशमन !। अनेन मदनोपकारकत्वं ध्वनितम् ! पुनः विरहिप्राणदमन ! स्मरसपक्षत्वेन वियोगिप्राणसंत्रासक ! पुनः सरोहंसोत्तंस सरःश्रेष्ठभूषण ! पुनः प्रचलानि मन्दमारुतेन चंचलानि दलानि पत्राणि यस्य तथाभूतेत्यर्थः। शिखरिणी छन्दः। अत्र विरहिणः पुरुषस्य स्वमोहश्लथनप्रार्थनायां विरहिप्राणदमत्वेनानुवादो न युक्तः विरहिविरोधित्वेन तन्मोहश्लथनायोगात् विधिविरुद्धत्वमेव दूषकताबीजमिति नित्योऽयं दोषस्तदाह अत्रेति ॥ २८३ ॥

त्यक्तः पुनः स्वीकृतः ॥ पूर्वं त्यक्तोऽनन्तरं पुनः स्वीकृतः पुनरुपात्तस्तमुदाहरति—लग्नमिति। व्याख्यातमत्रैव अत्र न किंचिद्गणयति इत्यनेन कर्मकारकेण विदिक्रियान्वये समाप्तेऽपि भृत्येभ्य इत्यादिना पुनः कर्मकारकाभिधानमिति त्यक्तःपुनःस्वीकृतत्वम् ॥ समाप्तपुन-

हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः ॥
यथास्य जायते पातो न तथा पुनरुन्नतिः ॥

अत्र पुंव्यञ्जनस्यापि प्रतीतिः ॥

यत्रैको दोषः प्रदर्शितस्तत्र दोषान्तराण्यपि सन्ति तथापि तेषां तत्राप्रकृतत्वात्प्रकाशनं न कृतम् ।

कर्णावतंसादिपदं कर्णध्वनिनिर्मितिः । सन्निधानादिबोधनार्थम् । अवतंसादीनि कर्णाद्याभरणान्येवोच्यन्ते, तत्र कर्णादिशब्दाः कर्णादिस्थितिप्रतिपत्तये ॥

यथा—

अस्याः कर्णावतंसेन जितं सर्वं विभूषणम् ॥
तथैव शोभतेऽत्यर्थमस्याः श्रवणकुण्डलम् ॥ २८६ ॥
अपूर्वमधुरामोदप्रमोदितादिशस्ततः ॥

---

रात्ते तु पूर्वोक्तस्य कारकस्य विशेषणदानमिति भेदस्तदाह—अत्रेति । लोके यथा त्यक्तस्य भक्ष्यादेः पुनरुपादानं वैरस्यमावहति तथा सहृदयवैरस्याधानं दूषकताबीजमिति नित्योऽयं दोषः ॥ २८४ ॥

अश्लीलः व्रीडादिसमर्पको दोषस्तमुदाहरति-हन्तुमिति । हन्तुं हिंसां सुरतक्रियारूपयोनिताडनं च कर्तुमेव प्रवृत्तस्य स्तब्धस्यानम्रस्य निष्क्रियोन्नतस्य च विवरैषिणः परदोषान्वेषिणः स्त्रीवरांगमध्यान्वेषिणश्च अस्य दुष्टस्य लिंगस्य च यथा पातोऽपचयः वीर्यत्यागजनितशैथिल्यं च जायते तथा उन्नतिरुपचयः रागोद्रेकेण दृढता च पुनर्न जायत इत्यर्थः । अत्र पुंव्यञ्जनस्य पुरुषलिंगस्यापि प्रतीतेरश्लीलत्वं तदाह अत्रेति ॥ २८५ ॥

ननूक्तेषु दोषोदाहरणेषु किमुदाहृता एव दोषाः, तथा सत्यन्यलक्षणानां तेषु दर्शनादतिव्याप्तिः ॥ अथ तत्र दोषान्तराण्यपि सम्भवन्ति तर्हि किमिति न प्रकाशितानीत्याशंकायामप्रकृतत्वान्नेति समाधत्ते यत्रैक इति ॥

अथ दोषाणामेव विषयविशेषे यथा सम्भवमदोषत्वे प्रतिपादयितव्येऽर्थदोषाणां सन्निधानात्प्रथममर्थदोषस्यैवादोषत्वं प्रतिपादयति—कर्णेत्यादिना । कर्णावतंसादिपदे कर्णादिशब्दप्रयोगः सन्निधानादिबोधनार्थं कर्णस्थित्यादिरूपाधिकार्थप्रतिपत्त्यर्थं क्रियत इत्यर्थः ॥

आययुर्भृङ्गमुखराः शिरःशेखरशालिनः ॥ २८७ ॥

अत्र कर्ण-श्रवण- शिरःशब्दाः सन्निधानप्रतीत्यर्थाः ॥

विदीर्णाभिमुखारातिकराले सङ्गरान्तरे ॥

धनुर्ज्याकिणचिह्नेन दोष्णा विस्फुरितं तव ॥ २८८ ॥

अत्र धनुःशब्द आरूढत्वावगतये—

अन्यत्र तु—

ज्याबन्धनिष्पन्दभुजेन यस्य विनिश्वसद्वक्त्रपरम्परेण ॥

कारागृहे निर्जितवासवेन लङ्केश्वरेणोषितमाप्रसादात् ॥ २८९ ॥

---

सूत्रं व्याचष्टे अवतंसेति—आदिना शेखरादिपरिग्रहः ॥ तदुदाहरति अस्या इति । अस्याः कामिन्याः कर्णावतंसेन कर्णाभरणेन सर्वं विभूषणं जितं तथैवास्याः श्रवणकुण्डलमत्यर्थं शोभत इत्यर्थः ॥ अत्रावतंसपदेनैव कुण्डलपदेनैव च कर्णश्रवणाभरणोक्तावपि कर्णादिपदस्य,कर्णादिस्थितिव्यंजकतया न पुनरुक्तत्वादि दोषः ॥ २८६ ॥

न केवलं कर्णश्रवणपदयोरेवायं महिमा किन्त्वन्येषामपीत्युदाहरणान्तरमाह—अपूर्वेति। अपूर्वो लोकोत्तरो मधुरो हृद्यो य आमोदो गन्धपुष्पादिपरिमलस्तेन प्रमोदिताः सुगन्धिता दिशो यैः भृङ्गैर्भ्रमरैर्मुखराः सञ्जातशब्दाः भ्रमरकृतगुंजारवयुक्ताः शिरःशेखरशालिनः शिरोभूषणशोभिनः पुरुषा आययुरागता इत्यर्थः ॥ अत्रापि शिखास्वापीडशेखराविति कोशात् शेखरपदेनैव शिरोभूषणोक्तावपि शिरःपदस्य शिरःस्थितिव्यञ्जकतया न पुनरुक्तत्वादिदोषस्तदाह अत्रेति ॥२८७॥

सन्निधानादीत्यादि शब्दार्थं दर्शयन्नुदाहरणान्तरमाह—विदीर्णेति । हे राजन्! आदौ विदीर्णाः विक्षता शरनिर्भिन्नाः पश्चादभिमुखा अनुकूलाः वशतां गताः ये अरातयः शत्रवस्तैः कराले व्याप्ते भीषणे वा संगरान्तरे संग्राममध्ये तव धनुर्ज्यायाः धनुर्मौर्व्याः किणो व्रणः स एव चिह्नं लिंगं यस्य तादृशेन दोष्णाबाहुना विस्फुरितमित्यर्थः ॥ अत्र मौर्वीज्या शिंजनी गुण इतिकोशात् ज्याशब्देनैव धनुर्गुणोक्तावपि धनुःशब्दप्रयोगो ज्याया आरूढत्वप्रतीतये तत्प्रतीत्या च किणस्य प्रहारकृतत्वमवगम्यते तदवगमे च वर्णनीयोत्कर्ष इति न पुनरुक्तत्वादिदोषस्तदाह—अत्रेति ॥ २८८ ॥

यत्र तु आरूढत्वप्रतीतिरूपं प्रयोजनं नास्ति तत्र न धनुःशब्दोपादानं तदाह—अन्यत्र त्विति । तादृशमुदाहरति ज्याबन्धेति । रघुवंशे इन्दु-

इत्यत्र केवलो ज्याशब्दः ।

प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः ॥
मुक्ताहारेण लसता हसतीव स्तनद्वयम् ॥ २९० ॥

अत्र मुक्तानामन्यरत्नामिश्रितत्वबोधनाय मुक्ताशब्दः ।

सौन्दर्यसम्पत्तारुण्यं यस्यास्ते ते च विभ्रमाः ॥
षट्पदान् पुष्पमालेव कान् नाकर्षति सा सखे ! ॥ २९१ ॥

अत्रोत्कृष्टपुष्पविषये पुष्पशब्दः । निरुपपदो हि मालाशब्दः पुष्पस्रजमेवाभिधत्ते ।

---

**भर्तीं प्रति सुनन्दाया उक्तिः । यस्य कार्त्तवीर्यस्य कारागृहे बन्धनागारे निर्जितवासवेन लङ्केश्वरेण आप्रसादात्प्रसादपर्यन्तमुषितं स्थितम् कीदृशेन ज्याया मौर्व्या यो बन्धो बन्धनं तेन निष्पन्दा निष्क्रिया निश्चेष्टा भुजा यस्य तथाभूतेन अत एव विशेषतो निश्वसती वक्त्रपरंपरा मुखपंक्तिर्यस्य तथाभूतेनेत्यर्थः ॥ पुरा किल जलक्रीडार्थं स्वविलासिनीसार्धं रेवावारिप्रवाहपतितं कार्तवीर्यं दृष्ट्वा रुषितं रावणं युद्धे जित्वा कार्तवीर्यो निजचापबन्धेन तं बबन्धेति श्रीमद्रामायणीया कथाऽत्रानुसंधेया ॥ उपजातिश्छन्दः ॥ अत्रारूढत्वप्रतीतिरूपप्रयोजनाभावाद्धनुःशब्दानुपादानन्तदाह—**अत्रेति ॥ २८९ ॥

उदाहरणान्तरमाह—प्राणेश्वरेति । **स्तनद्वयं प्राणेश्वरस्य परिष्वंगे आलिंगने ये विभ्रमाः नायिकाया हावभावभेदास्तेषां प्रतिपत्तिभिर्ज्ञानैरुपलक्षितं लसता शोभमानेन मुक्ताहारेण हसतीत्युत्प्रेक्षा ॥ मुक्ताहार एव शुभ्रत्वात्स्तनद्वयस्य हास इत्यर्थः ॥ अत्र हारशब्दस्य मुक्तासन्दर्भशक्तत्वेऽपि न मुक्ताशब्दवैयर्थ्यम् पद्मरागादिरत्नान्तरामिश्रितत्वप्रतिपादनेनोत्प्रेक्षायामुपयोगात्तदाह** अत्रेति ॥ २९० ॥

उदाहरणान्तरमाह—सौन्दर्येति । **हे सखे ! सा वनिता कान्पुरुषान्नाकर्षति न वशीकरोति अपि तु सर्वानेव, केव षट्पदान् पुष्पमालेव सा का यस्याः सौन्दर्यसम्पत् सौन्दर्यातिशयः तारुण्यं चास्ति ते ते अनुभवैकवेद्या विभ्रमा हावभावभेदाः सन्तीत्यर्थः अत्र निरुपपदान्मालाशब्दादेव पुष्पस्रक्प्रतीतेः पुष्पपदमुत्कृष्टपुष्पत्वे संक्रमितवाच्यन्तदाह**—अत्रेति । **ननु रत्नमाला शब्दमालेत्यादि प्रयोगदर्शनान्न मालाशब्दस्य पुष्पस्रङ्मात्रे शक्तिरिति चेन्न, निरुपपदस्य तथात्वात् तदाह—** निरुपपदो हीति ॥ २९१ ॥

(७८) स्थितेष्वेतत्समर्थनम् ॥ ५८ ॥

न खलु कर्णावतंसादिवज्जघनकाञ्चीत्यादि क्रियते ॥

जगाद मधुरां वाचं विशदाक्षरशालिनीम् ॥ २९२ ॥

इत्यादौ क्रियाविशेषणत्वेऽपि विवक्षितार्थप्रतीतिसिद्धौ "गतार्थस्यापि विशेष्यस्य विशेषणदानार्थं क्वचित्प्रयोगः कार्यः"-इति न युक्तम् । युक्तत्वे वा,

चरणत्रपरित्राणरहिताभ्यामपि द्रुतम् ॥
पादाभ्यां दूरमध्वानं व्रजन्नेव न खिद्यते ॥ २९३ ॥

---

नन्वेवं जितमपुष्टार्थेन ईदृशप्रयोजनस्य सर्वत्र वक्तुं शक्यत्वात् तथा च जघनकांच्यादिपदप्रयोगप्रसंग इत्यत आह—स्थितेष्विति । स्थितत्वं चादिप्रयोगविषयत्वम् समर्थनं युक्तिप्रदर्शनम् तथा च चमत्कारजनकतया स्थितेषु महाकविप्रयुक्तेष्वेव हि पदेष्वेतत्समर्थनं न तु स्वेच्छया पदमात्रे तादृशं च कर्णावतंसादिपदमेव न जघनकांच्यादि । न खल्विति ॥ क्रियते प्रयुज्यते महाकविभिरिति शेषः ॥

ननु वामनेन काव्यालंकारे जगाद मधुरां वाचमित्यत्र जगादेति क्रिययोक्तार्थस्यापि वाचमिति विशेष्यस्य नानर्थक्यं मधुरां विशदाक्षरशालिनीमिति विशेषणदानार्थं तदुपादानात् अन्यथाऽनन्वयः स्यादित्युक्तम् तदुदाहरणं निराकरोति—जगादेत्यादिना न युक्तमित्यन्तेन ॥ गतार्थस्य पदान्तरेणोक्तार्थस्य इति न युक्तमिति । किन्तु जगादमधुरं विद्वान् विशदाक्षरशालि चेति पठनेन मधुरं विशदाक्षरशालि च यथास्यात्तथा जगादेत्यादिरीत्या क्रियाविशेषणतया विवक्षितार्थप्रतीतिसंभवाद्वाचमित्यनर्थकमेवेति भावः ॥ २९२

यत्र क्रियाविशेषणत्वं न योग्यं स्वयं तदुदाहरति चरणेति । एषः पुरुषः चरणौ त्रायते इति चरणत्रमुपानहं तेन यत्परित्राणं तद्रहिताभ्यामपि पदाभ्यां द्रुतं दूरमध्वानं व्रजन् गच्छन् न खिद्यते दुःखं न प्राप्नोतीत्यर्थः । अत्र चरणत्रेत्यादिपादविशेषणमेव न क्रियाविशेषणार्हमित्युत्तरदेशसंयोगानुकूलपादविहरणार्थकेन व्रजधातुना उक्तार्थस्यापि पादाभ्यामित्यस्य नानर्थक्यम् उक्तविशेषणदानार्थमुपात्तत्वात् तदाह-इत्युदाहार्यमिति । तथा च यत्र यदुपादानं विना विशेषणदानासम्भवेन विवक्षितार्थप्रतीतिविघातस्तत्रैव गतार्थस्यापि तस्योपादानं युक्तं नान्यत्रेति सिद्धम् ॥ २९३ ॥

इत्युदाहार्यमिति—

(७९) ख्यातेऽर्थे निर्हेतोरदुष्टता। यथा—

चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम्॥
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः॥२९४॥

अत्र रात्रौ पद्मस्य सङ्कोचः, दिवा चन्द्रमसश्च निष्प्रभत्वं लोकप्रसिद्धमिति तु न भुंक्ते इति हेतुं नापेक्षते।

(८०) अनुकरणे तु सर्वेषाम्॥

सर्वेषां श्रुतिकटुप्रभृतीनां दोषाणाम्।

यथा—

मृगचक्षुषमद्राक्षमित्यादिकथयत्ययम्॥
पश्यैष च गवित्याह सुत्रामाणं यजेति च॥ २९५॥

---

अथ निर्हेतोरदुष्टत्वं गीतिवृत्तेनाह— ख्यातेऽर्थ इति। ख्याते तद्धेतुकत्वेन प्रसिद्धे उदाहरति—यथेति। कुमारसम्भवे पद्यमिदम् लोला लक्ष्मीः चन्द्रंगता सती पद्मगुणान् सौरभादीन् न भुंक्ते नानुभवति रात्रौ पद्मस्य संकुचितत्वात् पद्माश्रिता दिवा विकसत्कमलाश्रिता सती चान्द्रमसीं चन्द्रसंबन्धिनीमभिख्यां परमां शोभां न भुंक्ते उमायाः पार्वत्या मुखं तु प्रतिपद्य प्राप्य द्विसंश्रयां चन्द्रपद्मोभयगतां प्रीतिमवापेत्यर्थः। उमामुखस्योभयगतगुणशोभाश्रयत्वादिति भावः। अत्र रात्रौ चन्द्रगताया लक्ष्म्याः पद्मगुणानुपभोगे पद्मसंकोचो हेतुः दिवा च पद्माश्रितायाः चन्द्रगुणानुपभोगे चन्द्रस्य निष्प्रभत्वं हेतुः ते चातिप्रसिद्धेरेवावगम्येते इति न तदुपादानापेक्षेति न निर्दोषहेतुत्वदोषस्तदाह अत्रेति॥ २९४॥

अथ पदादिदोषाणामपि क्व चिददोषत्वमाह—अनुकरणे त्विति। अनुकरणत्वं च सदृशशब्दमात्रबोधतात्पर्यकोच्चारणविषयत्वम् तस्मिन्सर्वेषां श्रुतिकट्वादीनामदुष्टतेत्यर्थः। उदाहरति मृगेति। मृगचक्षुषं मृगनेत्राम् सुत्रामाणमिन्द्रम् अत्र प्रथमार्धे शृङ्गारव्यञ्जकेऽद्राक्षमिति पदं श्रुतिकटु तृतीयपादे न केवला प्रकृतिः प्रयोक्तव्येति विरोधाद् गोपदं च्युतिसंस्कृति चतुर्थपादे सुत्रामपदं काव्यादराविषयत्वादप्रयुक्तम् परन्तु परोक्तानुकरणादेतेषामदुष्टता प्रतिपादितदूषकताबीजस्य वैरस्योत्पादनरूपस्याभावादिति भावः॥ २९५॥

(८१) वक्त्राद्यौचित्यवशाद्दोषोऽपि गुणः क्वचित्क्वचिन्नोभौ ॥५९॥

वक्तृ–प्रतिपाद्य–व्यङ्ग्य–वाच्य·प्रकरणादीनां महिम्ना दोषोऽपि क्वचिद्गुणः क्वचिन्न दोषो न गुणः । तत्र वैयाकरणादौ वक्तरि प्रतिपाद्ये च, रौद्रादौ च रसे व्यङ्ग्ये कष्टत्वं गुणः । क्रमेणोदाहरणम् ।

दीधीङ्वेवीङ्समः कश्चिद्गुणवृद्ध्योरभाजनम् ॥
क्विप्प्रत्ययनिभः कश्चिद्यत्र सन्निहिते न ते ॥ २९६ ॥

यदा त्वामहमद्राक्षं पदविद्याविशारदम् ॥
उपाध्यायं तदाऽस्मार्षं समस्प्राक्षं च सम्मदम् ॥ २९७ ॥

---

इदानीं वक्त्रादिमहिम्ना दोषस्यापि क्व चिद्रसोत्कर्षापकर्षकारित्वाभावाद्दोषत्वाभावमात्रम् क्व चित्तु प्रकृतरसोत्कर्षकत्वात् भाक्तो गुणव्यवहारो ऽपीत्याह वक्त्रादीति । वक्त्रादीनाम् औचित्यवशात्तदनुसारात् सूत्रं व्याकरोति—वक्त्रिति । दोषस्य गुणत्वं कुत्रेत्याह—तत्रेति । स्ववैयाकरणत्वं प्रतिपादयिषौ वक्तरीत्यर्थः । रौद्रादौ आदिना वीरबीभत्सयोः परिग्रहः । कष्टत्वमर्थस्य दुरूहत्वं शब्दस्य श्रुतिकटुत्वं च वैयाकरणे वक्तरि कष्टत्वरूपदोषस्य गुणत्वमुदाहरति—दीधीङिति । अस्मिन् ग्रामे कीदृशा लोका इति प्रश्नस्योत्तरम् कश्चित्पुरुषः दीधीङ् वेवीङ् धातुद्वयम् इन्निति आगमस्तैः समः यतः गुणस्य पाण्डित्यदानशौर्यधैर्यादेः वृद्धेः समृद्धेश्च अभाजनमनाश्रयः धातुपक्षे दीधीवेवीटामिति गुणवृद्धिनिषेधेन तेषां तथात्वम् कश्चित्पुरुषः क्विप्प्रत्ययेन निभस्तुल्यः सर्वतः प्राप्तलोपः । क्विप्प्रत्ययोऽपि तथाभूतः । यत्र यस्मिन् पुरुषे सन्निहिते समीपस्थे सति ते गुणवृद्धी न अन्यस्यापि न भवतः क्विप्प्रत्यये सन्निहितेऽपि लिट् भित् भृट् इत्यत्र क्ङिति चेति निषेधात् गुणवृद्धी न भवत इत्यर्थः अत्र विलम्बेनार्थप्रत्ययेऽपि वक्तुर्वैयाकरणव्युत्पत्त्यतिशयप्रतीतेर्गुणत्वमिति भावः ॥ २९६ ॥

वैयाकरणे प्रतिपाद्ये कष्टत्वरूपदोषस्य गुणत्वमुदाहरति—यदा त्वामिति । पदानां सुप्तिङन्तरूपाणां विद्या शास्त्रं व्याकरणशास्त्रं तत्र विशारदं निपुणं त्वामहं यदाऽद्राक्षं दृष्टवान् तदा उपाध्यायं गुरुमस्मार्षं सादृश्यात् स्मृतवान् सम्मदं हर्षञ्च समस्प्राक्षं प्राप्तवानस्मीत्यर्थः । अत्र पदविद्याविशारदं त्वामिति वैयाकरणस्य संबोध्यत्वेन श्रुतिकटुत्वरूपकष्टत्वं गुणः । वैयाकरणसामाजिकस्य वक्तृव्युत्पत्तिज्ञानेन चमत्कारात् दोषत्वाभावः ॥ २९७ ॥

अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कंकण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम् ॥
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लस-
द्व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥ २९८ ॥

वाच्यवशाद्यथा—

मातङ्गाः ! किमु वल्गितैः किमफलैराडम्बरैर्जम्बुकाः !
सारङ्गा ! महिषा ! मदं व्रजथ किं शून्येषु शूरा न के ॥
कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः पुरः
सिन्धुध्वानिनि हुङ्कृते स्फुरति यत्तद्गर्जितं गर्जितम् ॥ २९९ ॥
अत्र सिंहे वाच्ये परुषाः शब्दाः।

---

रसरूपव्यंग्यमहिम्ना श्रुतिकटोर्गुणत्वमुदाहरति—अन्त्रेति। वीरचरिते लक्ष्मणकर्तृकं ताटकाया वर्णनमिदम्। का पुनरियं दर्पेण गर्वेणोद्धतं यथा तथा धावति। कीदृशी अन्त्रेषु पुरीतत्सु प्रोतानि ग्रथितानि बृहन्ति महान्ति यानि कपालानि शिरोऽस्थीनि नलकानि जंघास्थीनि च तान्येव क्रूरं यथा स्यात्तथा क्वणन्ति सशब्दानि कङ्कणानि करभूषणानि तत्प्रायाणि तद्बहुलानि प्रेंखितानि चञ्चलानि यानि भूरिभूषणानि बहुभूषणानि ग्रैवेयकाङ्गदादीनि तेषां रवैः शब्दैः अम्बरमाकाशमाघोषयन्ती समन्ताच्छब्दायमानं कुर्वती तथा पूर्वं पीतं पश्चाच्छर्दितं वान्तं यद्रक्तं तदेव कर्दमः पङ्कस्तेन घनो व्याप्तो यः प्राग्भारः उत्तरकायस्तत्र घोरं यथा तथा उल्लसन्तौ विपुलतया व्यक्तं दृश्यमानौ व्यालोलौ वेगवशाच्चलन्तौ यौ स्तनौ तयोर्भारेण भैरवं भयङ्करं वपुः शरीरं यस्यास्तथाभूतेत्यर्थः। अत्र कठिनशब्दस्य वीभत्सरसगतौजोगुणव्यञ्जनद्वारा वीभत्सरसव्यञ्जकत्वात्कष्टत्वं गुणः ॥ २९८ ॥

वाच्यमहिम्ना कष्टत्वस्य गुणत्वमुदाहरति—मातङ्गा इति। हेमातङ्गाः! गजाः! वल्गितैर्गतिविशेषैः किमु प्रयोजनमिति शेषः हेजंबुकाः! शृगालाः! अफलैर्व्यर्थैः आडम्बरैर्गर्जितैः किम्। तथा हे सारङ्गाः! मृगाः महिषाः अरण्यतुलायाः मदं किम् किमर्थं व्रजथ शून्येषु बलवद्रहितेषु के न शूरा अपि सर्वेऽपि। किं तर्हि सार्थकं तत्राह कोपेति। कोपस्य आटोप उद्रेकस्तेन समुद्भटा उत्कटा उत्थिताः सटानां ग्रीवारोम्णां कोटयोऽग्रभागा यस्य तथाभूतस्य इभारेः सिंहस्य सिंधुध्वनिनि समुद्र इव ध्वनिशालिनि तादृशे हुङ्कृते, हुङ्कारे पुरः अग्रे स्फुरति सति यद्ग-

प्रकरणवशाद्यथा—

रक्ताशोक ! कृशोदरी क्व नु गता त्यक्त्वानुरक्तं जनं
नो दृष्टेति मुधैव चालयसि किं वातावधूतं शिरः ।
उत्कण्ठाघटमानषट्पदघटासङ्घट्टदष्टच्छद-
स्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥ ३०० ॥

अत्र शिरोधूननेन कुपितस्य वचसि ॥

क्वचिन्नीरसे न गुणो न दोषः । यथा—

शीर्णघ्राणांघ्रिपाणीन्व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्
दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन् यः ।
घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते-
र्दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमंहोविघातम् ॥ ३०१ ॥

---

र्जितं तदेव गर्जितं सफलगर्जितमित्यर्थः। अत्र सिंहे ओजस्विनि वाच्ये तन्निष्ठौजोगुणप्रकाशकाः दीर्घसमासविकटवर्णा अनुगुणा एव न दुष्टा इत्याह अत्रेति ॥ २९९ ॥

प्रकरणमहिम्ना कष्टत्वस्य गुणत्वमुदाहरति-रक्तेति। विक्रमोर्वशीये पुरूरवस उक्तिः। हे रक्ताशोक ! वृक्षविशेष ! अनुरक्तं जनं मद्रूपं त्यक्त्वा कृशोदरी उर्वशी क्व नु गता। वातचालितां तदग्रशाखां दृष्ट्वा पुनराह नो दृष्टेतीति। इतीत्यनन्तरं सूचयितुमिति शेषः वातेनावधूतं कम्पितं शिरः मुधैव वृथैव किं कुतः चालयसि मिथ्यात्वं समर्थयति उत्कण्ठेति। तस्याः कृशोदर्याः पादाहतिं पादघातमन्तरेण विना भवत स्तवायमदृष्टपूर्वः पुष्पोद्गमः पुष्पोदयः कुतः कथं जातः स्त्रीणां पादाघातादशोके पुष्पोद्गम इति कविप्रसिद्धेः। कीदृशः पुष्पोद्गमः उत्कण्ठया औत्सुक्येन घटमाना युक्ता मिलिता वा ये षट्पदास्तेषां या घटा समूहस्तस्या यः संघट्टो गाढमिलनं तेन दष्टाः खंडिताश्छदाः पत्राणि यस्य तथाभूत इत्यर्थः अत्र मिथ्याशिरोऽवधूननेन कोपप्रकरणम् तदौचित्यात्कष्टत्वं गुण इत्याह अत्रेति। दीर्घसमासविकटवर्णयोः क्रोधप्रकर्षद्योतकत्वेन गुणत्वमिति भावः ॥ ३०० ॥

क्वचिन्न दोषो न गुण इत्यस्योदाहरणं प्रदर्शयन्नाह—क्वचिदिति। नीरसे श्रृंगारादिरसशून्ये। यथेत्युदाहरति—शीर्णघ्राणेति । मयूरकविकृते सूर्यशतके सूर्यस्तुतिरियम् । तस्य घर्मांशोः सूर्यस्य घृणयः किर-

अप्रयुक्तनिहितार्थौ श्लेषादावदुष्टौ। यथा—

येन ध्वस्तमनोभवेन बलिजित्कायः पुरा स्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गंगां च योऽधारयत्॥
यस्याहुः शशिमच्छिरो हर इति स्तुत्यं च नामामराः
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः॥ ३०२॥

---

णा वो युष्माकं अंहसां पापानां विघातं शीघ्रं विदधतु स कः य एकोऽसहायः सन् शीर्णं विदीर्णं घ्राणांघ्रिपाणि येषां तान् तथा व्रणिभिर्व्रणयुक्तैः अपघनैरङ्गैः शेषावयवैः उपलक्षितान् अत एव घर्घरो बलवद्वारिध्वनिस्तद्वदव्यक्तो वर्णप्रतिभारहितो घोषः शब्दो येषां तान् अथवा अघौघैः पापसमूहैः दीर्घाघ्रातान् दृढव्याप्तान् गलत्कुष्ठिनो जनान् उल्लाघयन् नीरोगीकुर्वन् पुनरपि घटयति भूयोऽपि नवीकरोति कीदृशस्य घर्मांशोः अन्तर्हृदये द्विगुणा बहुला घना निबिडा या घृणा कृपा तन्निघ्ना तदायत्ता निर्विघ्ना विघ्नरहिता वृत्तिर्व्यवसायो यस्यैवं भूतस्य कीदृशा घृणयः सिद्धानां देवविशेषाणां संघैः दत्ता अर्घाः पूजोपहारा येषां तथाभूता इत्यर्थः। स्रग्धरा छन्दः। शब्दचित्रेऽस्मिन्काव्ये सतोऽपि कविनिष्ठसूर्यविषयकभावस्य न प्राधान्यमिति नीरसत्वव्यपदेशः। तेनानुप्रासैकपरतया नीरसत्वात्कष्टत्वं न गुणोन दोष इति बोध्यम्॥ ३०१॥

श्लेषे अप्रयुक्तनिहितार्थयोरदोषत्वमुदाहरति—येनेति। चन्द्रकवेः पद्यमिदम् अत्र विष्णुपक्षे स माधवो लक्ष्मीपतिः त्वां स्वयं पापात् रक्षतु स कः येन अनः शकटं शकटासुरः ध्वस्तं पातितं तथा अभवेन अजन्मना येन बलिं जयतीति बलिजिद्बलिजयनशीलः स्वस्य कायो देहः पुरा अमृतहरणप्रस्तावे स्त्रीकृतः मोहिनीरूपतां प्रापितः यश्च उद्वृत्तस्य हतस्य भुजङ्गस्य कालियसर्पस्य हन्ता रवाणां शब्दानां नाम्नां लयो यत्र तादृशः नामरूपात्मकजगतो ब्रह्मणि लय इति वेदान्तसम्मतम्। यः अगं गोवर्द्धनं गां पृथिवीं च अधारयत् धृतवान् अमरा देवा यस्य शशिनं चन्द्रं मथ्नातीति शशिमत् राहुस्तस्य शिरो हरतीति शशिमच्छिरोहर इति स्तुत्यं स्तवनीयं नाम आहुः। अन्धकानां यादवानां क्षयं निवासं द्वारकारूपं गृहं कृतवान् सर्वदः सर्वदाता चतुर्वर्गप्रदः। क्षयो गेहे च कल्पान्ते इति हैमः। शिवपक्षे तु स उमाधवः शिवः सर्वदा त्वां पायात् स कः ध्वस्तमनोभवेन नाशितकन्दर्पेण येन पुरा त्रिपुरवधकाले बलिजितो विष्णोः कायः अस्त्रीकृतो

अत्र माधवपक्षे शशिमदन्धकक्षयशब्दावप्रयुक्तनिहतार्थौ ।

अश्लीलं क्वचिद्गुणः । यथा सुरतारम्भगोष्ठ्याम्,

"द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु"

इति कामशास्त्रस्थितौ—

करिहस्तेन सम्बाधे प्रविश्यान्तर्विलोडिते ॥

उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते ॥ ३०३ ॥

---

वाणरूपतां प्रापितः । यश्च उद्वृत्ता उद्धता ये भुजङ्गा वासुक्यादयस्त एव हारा वलयानि च यस्य सः यो गङ्गामधारयत् उत्तमांगेन धृतवान् यस्य शिरः शशिमच्चन्द्रयुक्तम् यस्य हर इति ब्रह्मादिसंहारकत्वेन स्तुत्यं नाम अमरा आहुः । य अन्धकनामदैत्यस्य क्षयो नाशस्तत्कर्तेत्यर्थः ॥ अत्र विष्णुपक्षे शशिमत्पदस्य राहावप्रयुक्तत्वं क्षयपदस्य गृहे निहितार्थत्वं च न दोषः श्लेषनिर्वाहकत्वात्तदाह अत्रेति । शार्दूलविक्रीडितं छन्दः ॥ ३०२ ॥

अनुचितार्थनिरर्थकावाचकानां नित्यदोषत्वेन तानपहाय अश्लीलस्य प्रतिप्रसवमाह—अश्लीलमिति । सुरतारम्भाय गोष्ठ्यां वार्तायाम् ।

ताम्बूलदानविधिना विसृजेद्वयस्याम् ।

द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु ॥

इत्यादिकामशास्त्रस्य स्थितौ सत्यामित्यर्थः । व्रीडाव्यंजकस्याश्लीलस्य गुणत्वमुदाहरति—करीति । पुंसो वीरस्य ध्वजः केतुः साधनस्य सैन्यस्यान्तः मध्ये प्रविश्य उपसर्पन्नितस्ततो गच्छन् विराजते, कीदृशे साधनान्तः सम्बाधे नराश्वादिभिः सङ्कटे तथा करिणां हस्तेव शुण्डेन विलोडिते सावकाशे कृते इत्यर्थः । अत्र पुंसः कामिनः ध्वजो लिङ्गं साधनस्य स्त्रीवराङ्गस्य अन्तः प्रविश्य उपसर्पन् गतागतं कुर्वन् विराजते कीदृशे सम्बाधे सङ्कुचिते कथं प्रवेशस्तत्राह—करीति ।

तर्जन्यनामिके युक्ते मध्यमा स्याद्बहिष्कृता ।

करिहस्तः समुद्दिष्टः कामशास्त्रविशारदैः ॥

इति । करिहस्तो नाम कठिनयोनिशैथिल्यापादको बहिष्कृतमध्यमाङ्गुलीकः संयुक्ततर्जन्यनामिकारूपः । तेन विलोडिते विकाशिते क्लेदिते वा इति गुप्ताश्लीलार्थः । अत्रोक्तकामशास्त्रेण सुरतारम्भोपयुक्तवार्तायामश्लीलार्थस्यानुमतत्वात् व्युत्पत्तिप्रकटनात् उ-

शमकथासु—

उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे ॥

क्लेदिनि स्त्रीव्रणे सक्तिरक्रमेः कस्य जायते ॥ ३०४ ॥

निर्वाणवैरदहनाः प्रशमादरीणां नन्दन्तु पाण्डुतनयाः सह माधवेन ।

रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥

अत्र भाव्यमङ्गलसूचकम् ।

सन्दिग्धमपि वाच्यमहिम्ना क्वचिन्नियतार्थप्रतीतिकृत्त्वेन व्याजस्तुतिपर्यवसायित्वे गुणः यथा—

पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ! ।

विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥ ३०६ ॥

---

दासीनवञ्चनया स्वार्थसम्पत्त्या च रसोत्कर्षत्वाच्च करिहस्तादिष्वश्लीलेषु गुणत्वम् ॥ ३०३ ॥

शमकथास्वपि अश्लीलत्वस्य 'गुणत्वमित्युदाहरति–उत्तानेति । उत्ताना वैपरीत्येन स्थितः उच्छूनः शोफवाँश्च यो मण्डूको भेकस्तस्य पाटितं विदारितं यदुदरं तत्सान्निभे तत्तुल्ये क्लेदिनि क्लिन्ने स्रवन्मन्मथजले स्त्रीव्रणे वराङ्गभूते कस्य अक्रमेः क्रमिभिन्नस्य सक्तिरासक्तिर्जायेत इत्यर्थः । तदासक्तः क्रमिरेवेति भावः । अत्र शान्तिकथायां जुगुप्साश्लीलत्वं गुणः वैराग्यहेतुघृणोत्पादनेन शान्तिपोषकत्वात् ॥ ३०४ ॥

अमङ्गलव्यञ्जकस्याश्लीलस्य भाव्यर्थसूचकतया गुणत्वमुदाहरति—निर्वाणेति । वेणीसंहारे सूत्रधारस्योक्तिः ॥ पाण्डुतनयाः युधिष्ठिरादयः अरीणां प्रशमात्कलहोपशमात् निर्वाणः शान्तो वैरं विरोध एव दहनोऽग्निर्येषां तथाभूताः सन्तः माधवेन श्रीकृष्णेन सह नन्दन्तु समृद्धा भवन्तु तथा सभृत्याः कुरुराजस्य धृतराष्ट्रस्य सुताः रक्ताऽनुरक्ता प्रसाधिता प्रकर्षेण साधिता वशीकृता च भूर्यै स्तादृशाः क्षतो निवृत्तो विग्रहः कलहो येषां ते खण्डितयुद्धाश्च सन्तः स्वस्थाः सुखिनो भवन्त्वित्यर्थः । अत्र प्रशमात् नाशात् रक्तं रुधिरं तेन प्रसाधिताऽलंकृता भूर्यैस्तादृशाः क्षतविग्रहाः खण्डितशरीराश्च सन्तः स्वस्थाः स्वर्गस्था मृताः भवन्त्वित्यमङ्गलार्थो व्यज्यते इदञ्चामङ्गलाश्लीलत्वं भाव्यर्थसूचकतया गुणस्तदाह—अत्र भाव्येति ॥ ३०५ ॥

सन्दिग्धत्वस्यापि क्वचिद्गुणत्वमित्याह–सन्दिग्धमिति । वाच्यो अर्थ-

प्रतिपाद्यप्रतिपादकयोर्ज्ञत्वे सत्यप्रतीतत्वं गुणः । यथा--

आत्मारामा विहितरतयो निर्विकल्पे समाधौ
ज्ञानोद्रेकाद्विघटिततमोग्रन्थयः सत्त्वनिष्ठाः ।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्
तं मोहान्धः कथमयममुं वेत्ति देवं पुराणम् ॥ ३०७ ॥

---

नीयो राजादिस्तस्य महिम्ना सामर्थ्यप्रतिपत्त्या नियतार्थप्रतीतिकृत्त्वेन प्रकृतार्थनिश्चयकारित्वेन गुणः। गुणत्वे हेतुमाह-व्याजेति। सम्पत्तिबाहुल्येन राजोत्कर्षप्रतीतिर्व्याजस्तुतेर्भावोत्कर्षकतया सन्दिग्धत्वस्य गुणत्वमिति भावः। उदाहरति-पृथुकेति राजानं प्रति कवेरुक्तिः। हे देव ! सम्प्रति आवयोः सदनं गृहं समं तुल्यम् तथा हि राजसदनपक्षे पृथूनि विपुलानि कार्तस्वरस्य सुवर्णस्य पात्राणि भाजनानि यत्र तत् तथा भूषिता अलंकृता निःशेषाः सकलाः परिजनाः सेवकाः यत्र तत् तथा विलसन्त्यः शोभमानाः करेणवः करिण्यस्ताभिर्गहनं सङ्कीर्णम् कविसदनपक्षे पृथुकानां शिशूनां आर्तस्वरस्य क्षुद्बाधाकृतकातरध्वनेः पात्रमधिकरणम् भुवि पृथिव्यामुषिताः निःशेषाः परिजनाः पुत्रकलत्रादयो यत्र तत् विले छिद्रे सीदन्तीति विलसत्काः मूषकास्तेषां रेणुभिर्धूलिभिर्गहनं व्याप्तमित्यर्थः। आर्या छन्दः। अत्र पृथुकार्तेत्यादिविशेषणानि उक्तरीत्या द्व्यर्थकत्वेन सन्दिग्धानि तथाप्यत्रोक्तविशेषणानां योग्यतया तत्तत्पक्षानुकूलार्थनिर्णयाद्व्याजस्तुतिनिर्वाहकतया सन्दिग्धत्वे गुणः ॥ ३०६ ॥

अप्रतीतत्वस्यापि क्वचिद्गुणत्वमुदाहर्तुमाह-प्रतिपाद्येति। प्रतिपाद्यः शब्दप्रयोगोद्देश्यः प्रतिपादको वक्ता तयोर्ज्ञत्वे शास्त्रपटुत्वे सति। उदाहरति-आत्मेति। वेणीसंहारे श्रीकृष्णबन्धनोद्यतं दुर्योधनं श्रुत्वा पृच्छन्तं सहदेवं प्रति भीमस्योक्तिः। मोहेनाज्ञानेनान्धो वस्तुतत्त्वप्रतिपत्तिरहितः अयं दुर्योधनः पुराणं प्रकृतेरपि प्राग्वर्त्तिनं तममुं देवं श्रीकृष्णं कथं वेत्ति केन प्रकारेण जानाति न कथमपि वेत्तीति भावः तं कं आत्मनि चिदानन्दे आरमन्ति प्रत्याहृतेन्द्रियाः सन्तस्तदेकताना भवन्तीति आत्मारामाः। अथ वा आत्मैवारामः क्रीडास्थानं येषां तादृशा योगिनः निर्विकल्पे भेदसंसर्गभानशून्ये समाधौ ध्याने विहिता कृता रतिः निरन्तरा प्रीतिर्यैस्तादृशाः ज्ञानोद्रेकात् आत्मसाक्षात्कारदार्ढ्येन विघटितो नाशितस्तमोग्रन्थिर्मिथ्याज्ञानजन्यः संस्कारो येषां तथाभूताः सत्त्वनिष्ठाः सत्त्वगुणमात्रविश्रान्ताः सन्तः

स्वयं वा परामर्शे यथा—

षडधिकदशनाडीचक्रमध्यस्थितात्मा
हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः ।
अविचलितमनोभिः साधकैर्मृग्यमाणः
स जयति परिणद्धः शक्तिभिः शक्तिनाथः ॥ ३०८ ॥

अधमप्रकृत्युक्तिषु ग्राम्यो गुणः । यथा—

फुल्लुक्करं कमलकूराणिहं वहन्ति जे सिन्धुवारविडवा मह वल्लहा दे ।
जे गालिदस्स महिसीदहिणो सरिच्छा दे किं च मुद्धविअइल्लपसूणपुञ्जा ॥

---

यं श्रीकृष्णं कमपि वागाद्यगोचरं वीक्षन्ते साक्षात्कुर्वन्तीत्यर्थः । कथं त एव पश्यन्तीत्यत्र हेतुगर्भं यत्पदार्थविशेषणमाह—तमसामिति । तमसां तामसानां ज्योतिषां राजसानां वा परस्तात् दूरे वर्तमानमिति शेषः रजस्तमःस्पृष्टैरलभ्यमित्यर्थः । मन्दाक्रान्ता छन्दः । अत्र निर्विकल्पादिशब्दा आत्ममात्रावलम्बनत्वाद्यावर्थे योगशास्त्रमात्रप्रसिद्धा इत्यप्रतीताः । तथाप्यत्र प्रतिपाद्य-प्रतिपादकौ सहदेव-भीमसेनौ तौ च योगशास्त्रज्ञाविति प्रतीतिविलम्बाभावान्न दोषत्वमिति॥३०७

सहृदयविमर्शवेलायामपि अप्रतीतत्वस्य गुणत्वमाह—स्वयं वेति । परामर्शे पर्यालोचने अप्रतीतत्वं गुण इत्यनुषंगः । उदाहरति—षडधिकेति । मालतीमाधवे कपालकुण्डलायाः स्वयं परामर्शोऽयम् । स मत्परामर्शविषयीभूत ईश्वरो जयति स कः षड्भिरधिका दश षोडश या नाड्य इडादयस्तासां यच्चक्रं मणिपूराख्यं हृदयस्थितं तन्मध्ये स्थित आत्मा स्वरूपं यस्य तादृशः हृदि हृदये विशिष्टं निहितं रूपं ज्योतिरादिरूप आकारो यस्य तथाभूतः । तद्विदां तथाज्ञानवतां सिद्धयोऽणिमादयस्ता ददातीति सिद्धिदः । तथाऽविचलितं निश्चलं मनश्चित्तं येषां तादृशैः साधकैरुपासकैर्मृग्यमाणोऽन्विष्यमाणः । तथा शक्तिभिः ब्राह्म्याद्यष्टभिः परिणद्धो व्याप्तो नित्ययुक्तो वा तथा शक्त्याः पार्वत्या नाथः पतिरित्यर्थः । मालिनी छन्दः । अत्र नाडीसिद्ध्यादिपदानामागममात्रप्रसिद्धत्वेनाप्रतीतत्वेऽपि वक्त्र्याः कपालकुण्डलायाः स्वयंपरामर्शात्प्राग्वद्गुणत्वम् ॥ ३०८ ॥

नीचपात्रोक्तिषु ग्राम्यत्वस्य गुणत्वमित्याह—अधमेति । विटचेटविदूषकाणां हास्यरसप्रधानानामुक्तिषु हास्यकरीषु तथैवौचित्या-ग्राम्यो गुणः । उदाहरति—फुल्लुक्करमिति ॥

अत्र कलम-भक्त-महिषी-दधिशब्दा ग्राम्या अपि विदूषकोक्तौ ।
न्यूनपदं क्व चिद्गुणः । यथा—

गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।
मा मा मानद माऽति मामलमिति क्षामा क्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥३१०॥

---

पुष्पोत्करं कलमभक्तनिभं वहन्ति ये सिन्धुवारविटपा मम वल्लभास्ते ।
ये गालितस्य महिषीदध्नः सदृक्षास्ते किञ्च मुग्धविचाकिलप्रसूनपुंजाः ॥

इति संस्कृतम् ॥ कर्पूरमञ्जरीसट्टके विदूषकोक्तिः । कलमाः शालिधान्यानि तेषां भक्तमोदनं तन्निभं तत्तुल्य पुष्पोत्करं कुसुमपुञ्जं ये वहन्ति ते सिन्धुवारस्य निर्गुण्डीवृक्षस्य विटपाः शाखाः मम वल्लभाः प्रियाः । तथा ये गालितस्य निर्जलीकृतस्य महिषीदध्नः सदृक्षाः सदृशाः किं चेति समुच्चये तेऽपि मुग्धस्य सुन्दरस्य विचकिलप्रसूनस्य मल्लिकापुष्पस्य पुंजाः मम वल्लभा इत्यनुषङ्गः । वसन्ततिलका छन्दः । अत्र कलम, कूर, महिषी दहिशब्दानामविदग्धप्रयोज्यत्वाद्ग्राम्यत्वेऽपि विदूषकोक्तौ हास्यरसपरिपोषकत्वाद्गुणत्वम् । तदाह—अत्रेति । मूलन्तु प्राकृतविवरणमाश्रित्योक्तम् ॥३०९॥

न्यूनपदमपि क्वचिद्गुण इति दर्शयति—न्यूनेति । क्वचित् यत्र न्यूनतयैवाभिमतविशेषसिद्धिस्तत्र उदाहरति—गाढेति । अमरुशतके कस्यचिन्नायकस्य रतिश्रमनिमग्नां प्रेयसीमनेकधोल्लिख्य वितर्कोयम् । गाढालिंगनेन वामनीकृतौ कठोरत्वात्कथंचिन्नामितौ कुचौ यस्याः सा चासौ अत एव प्रोद्भूताः प्रकटाः रोमोद्गमा रोमाञ्चा यस्याः सा तथा सान्द्रः प्रियसम्बन्धेन निबिडो यः स्नेहरसः आनन्दस्तस्यातिरेकेणाधिक्येन विगलद्विस्रंसत् श्रीमन्नितम्बात् सुन्दरतमकटिपश्चाद्भागात् अम्बरं वस्त्रं यस्यास्तादृशी हे मानद ! मानखण्डक ! सम्मानदायक ! च मा मां मा आयासय मामति अत्यन्तं मा पीडयेति शेषः । अलं पूर्यतां इति क्षामाणि कृशानि न्यूनानि अस्पष्टानि वा अक्षराणि यस्मिन्कर्मणि तद्यथा तथा उल्लापिनी वदन्ती एवंभूता प्रेयसी सुप्ता किं नु मृता किं नु मे मनसि लीना जतुकाष्ठन्यायेनैक्यं गता किन्तु विलीना नीरक्षीरन्यायेन मिश्रीभावं गता किन्तु वितर्के नु शब्दः सर्वत्र । शार्दूलविक्रीडितं छन्दः । अत्र मा मा इत्यत्र आयासय माऽतीत्यत्र पीडयेति च न्यूनम् । हर्षसम्मोहातिशयप्रत्यायकत्वेन रसातिरे·

क्व चिन्न गुणो न दोषः । यथा—

तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पातिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥ ३११ ॥

अत्र पिहितेत्यतोऽनन्तरं "नैतद्यतः" इत्येतैर्न्यूनैः पदैर्विशेषबुद्धेरकरणान्न गुणः । उत्तरा प्रतिपत्तिः पूर्वां प्रतिपत्तिं बाधते इति न दोषः ।

अधिकपदं क्व चिद्गुणः । यथा—

यद्वञ्चनाहितमतिर्बहुचाटुगर्भं कार्योन्मुखः खलजनः कृतकं ब्रवीति ।
तत्साधवो न न विदन्ति विदन्ति किंतु कर्तुं वृथा प्रणयमस्य न पारयन्ति ३१

अत्र "विदन्ति"—इति द्वितीयमन्ययोगव्यवच्छेदपरम् ।

---

कव्यञ्जकत्वाद्गुणो न दोषः । झटित्यध्याहारेण प्रतीतेः स्फुटत्वात् । एवं श्लोकादावपि गुणत्वं बोध्यम् ॥ ३१० ॥

क्व चिदिति न्यूनपदमित्यनुषङ्गः । उदाहरति—तिष्ठेदिति । विक्रमोर्वशीये विरहिणः पुरूरवस उक्तिः । सा उर्वशी कोपवशात्प्रभावेणान्तर्धानकरणविद्यया पिहिता तिरोहिता सती अत्रैव तिष्ठेदिति वितर्कः । एतदुत्तरं नैतद्युक्तं यत इति शेषः पूरणीयः । यतो यस्मात्कारणात् सा दीर्घं चिरकालं न कुप्यति स्वर्गाय स्वर्गं गन्तुमुत्पतिता ऊर्ध्वगमनानुकूलव्यापारवती भवेत् । नैतदपि युक्तं यतः अस्या मनः पुनर्मयि मद्विषये भावेन स्नेहेन आर्द्रम् सरसम् । मे मम पुरोवर्त्तिनीञ्च तां प्रियां हर्तुं विबुधद्विषः असुरा अपि न शक्ताः किमुतान्ये सा च अत्यन्तं नयनयोरगोचरमविषयत्वं यातेति कोऽयं विधिः प्रकारो वर्तत इति शेष इत्यर्थः । शार्दूलविक्रीडितं छन्दः । अत्र पिहितेत्यनन्तरं नैतद्युज्यते यत इत्येतैः पदैर्न्यूनम् एवं द्वितीयपादेऽपि । न चात्र गुणत्वं विशेषबुद्धेरनुत्पादात् नापि दोषत्वम् तद्व्यतिरेकेणापि दीर्घं न सा कुप्यतीत्यादिप्रतीत्या तिष्ठेत्कोपवशादित्यादिप्रतीतीनां बाध्यत्वावगमाद् भ्रमत्वेनावगमात् तदाह—अत्रेति । विशेषबुद्धेरिति वितर्करूपभावस्य न्यूनपदेनाप्रकर्षात् । उत्तरेति—दीर्घं न सा कुप्यतीत्यादिरूपा प्रतिपत्तिः ज्ञानं पूर्वां तिष्ठेत्कोपवशादित्यादिरूपाम् ॥ ३११ ॥

अधिकपदस्य गुणत्वमाह—यथेति । वञ्चनायां प्रतारणायां माहिता स्थापिता मति र्येन सः । कार्ये स्वकार्ये उन्मुखस्तत्परः खलजनः बहु

यथा वा—

वद वद जितः स शत्रुर्न हतो जल्पंश्च तव तवास्मीति ।
चित्रं चित्रमरोदीद्धा हेति परं मृते पुत्रे ॥ ३१३ ॥

इत्येवमादौ हर्षभयादियुक्ते वक्तरि ।

कथितपदं क्वचिद्गुणः लाटानुप्रासे अर्थान्तरसंक्रमितवाच्ये विहितस्यानुवाद्यत्वे च । क्रमेणोदाहरणम् ।

सितकरकररुचिरविभा विभाकराकार!धरणिधर!कीर्तिः ।
पौरुषकमला कमला सापि तवैवास्ति नान्यस्य ॥ ३१४ ॥

---

अनल्पं चाटुगर्भं प्रियवाक्यगर्भं कृतकं मिथ्याभूतं यद्वचनं ब्रवीति तत्साधवः पंडिता न विदन्ति इति न किन्तु विदन्ति, कथं तर्हि ज्ञात्वाप्युपकुर्वन्तीत्याह—कर्तुमिति । तथापि अस्य खलस्य प्रणयं कृतकमपि स्नेहं वृथाकर्तुं न पारयन्ति न शक्नुवन्तीत्यर्थः । वसन्ततिलका छन्दः । अत्र द्वितीयं विदन्तीति पदमन्ययोगव्यवच्छेदं प्रतिपादयन्नाधिकपदत्वेऽपि दुष्टमित्याह—अत्रेति । अन्यस्य साधुभिन्नस्य योगो वेदनसम्बन्धस्तस्य व्यवच्छेदो व्यावृत्तिस्तत्परमित्यर्थः । तथा च साधव एव विदन्ति मान्यं ज्ञापयन्तीत्यर्थविशेषप्रत्यायकतया गुणत्वमिति भावः ॥ ३१२ ॥

एवं हर्षभयादियुक्ते वक्तरि अधिकपदस्य गुणत्वमुदाहरति-यथा वेति । स शत्रुः जितः वद वदेति रणादागतं प्रति स्वामिनः प्रश्नः । तवास्मि तवास्मीति जल्पन् न हतः परं किन्तु पुत्रे मृते सति चित्रं चित्रं यथा स्यात्तथा हा हेति अरोदीदित्युत्तरम् । अत्र पादचतुष्टये क्रमेण हर्ष-भय-विस्मय-विषादयुक्ता वक्तारः । तत्राधिकपदस्य गुणत्वम् त्वरादिव्यक्त्या हर्षाद्यभिव्यञ्जकत्वात् तदाह—इत्येवमिति ।

विषादे विस्मये हर्षे दैन्ये कोपेऽवधारणे ।
प्रसाधनेऽनुकम्पायां द्विस्त्रिरुक्तं न दुष्यति ॥

इति सिद्धान्तात् ॥ ३१३ ॥

कथितपदस्यापि त्रिषु गुणत्वमाह—कथितपदमिति । उदाहरति—सितकरेति । हे विभाकराकार ! सूर्यसदृशप्रचण्डप्रताप ! हे धरणिधर ! राजन् ! सितकरस्य चन्द्रस्य करवत् किरणवत् रुचिरा आह्लादिका विभा कान्तिर्यस्यास्तादृशी कीर्तिः । तथा पौरुषकमला पराक्रमलक्ष्मीः सा प्रसिद्धा कमला लक्ष्मीश्च तवैवास्ति नान्यस्येत्यर्थः ।

तावा जाअंति गुणा जाला दे सहिअएहिं घेप्पन्ति।
रइकिरणाणुग्गाहिआइँ होन्ति कमलाइँ कमलाइँ॥ ३१५॥
जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते।
गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः॥ ३१६॥
पतत्प्रकर्षमपि क्वचिद्गुणः। यथा—
उदाहृते 'प्रागप्राप्तेत्यादौ' ॥ ३१७॥

समाप्तपुनरात्तं क्वचिन्न गुणो न दोषो यत्र न विशेषणमात्रदानार्थं पुनर्ग्रहणम्। अपि तु वाक्यान्तरमेव क्रियते यथा अत्रैव 'प्रागप्राप्तेत्यादौ' ॥ ३१८॥

---

अत्र कर करेति, विभा विभेति, कमला कमलेति, च लाटानुप्रासः तन्निर्वाहकत्वात्कथितपदस्य गुणत्वम्॥ ३१४॥

अर्थान्तरसंक्रमितवाच्ये ध्वनौ कथितपदस्य गुणत्वमुदाहरति—तालेति।

तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि॥

इति संस्कृतम्। अत्र द्वितीयकमलपदम् विकाश सौरभ-सौन्दर्यादिमत्कमलार्थतयाऽर्थान्तरसंक्रमितवाच्यं तेन कमलपदमुत्कर्षबोधकम्। रविकिरणानुग्रहेण कमलानि यथोत्कृष्टानि तथा सहृदयैर्गृह्यमाणा गुणा इत्यर्थान्तरसंक्रमितवाच्यलक्षणासाध्या विच्छित्तिः कमलान्युत्कृष्टानीति मुख्यप्रयोगात्तदप्रतीतेः॥ ३१५॥

विहितस्यानुवाद्यत्वे कथितपदस्य गुणत्वमुदाहरति—जितेन्द्रियेति। जितेन्द्रियत्वं विनयस्य नम्रतायाः कारणं भवति विनयात् गुणप्रकर्षो गुणोत्कर्ष अवाप्यते प्राप्यते गुणप्रकर्षेण जनोऽनुरज्यते अनुरक्तो भवति हि प्रसिद्धौ सम्पदः जनानुरागः प्रभवः कारणं यासां तथाभूता भवन्तीत्यर्थः। अत्र कारणमालाऽलङ्कारः। अत्र पूर्ववाक्ये जितेन्द्रियत्वेन विनयो विहितः स एव चोत्तरवाक्ये गुणप्रकर्षार्थं निमित्तत्वेनानूद्यते एवमुत्तरत्रापि विहितस्यानुवाद्यत्वम् विहितस्यानुवाद्यत्वे हि कारणमालालङ्कारनिर्वाहकतया कथितपदस्य गुणत्वम्॥ ३१६॥

उदाहृते इति। अत्रैवोल्लासे अत्र हि चतुर्थपादे गुरुस्मृत्या क्रोधाभावात्कोमलमेव पदं युक्तमिति दोषत्वाभावः। गुणत्वन्तु परशुत्कर्षस्य परशुस्वामिविषयकवक्तृनिष्ठविनयप्रकाशकतयेति बोध्यम्॥ ३१७॥

समाप्तपुनरात्तस्यापि प्रतिप्रसवमाह—समाप्तेति। यत्रेति प्रागप्राप्ते·

अपदस्थसमासं क्वचिद्गुणः यथा उदाहृते 'रक्ताशोकेत्यादौ' ॥३१९॥

गर्भितं तथैव यथा—

हुमि अवहत्थिअरेहो णिरङ्कुसो अह विवेअरहिओवि ।

सिविणे वि तुमम्मि पुणो पत्तिहि भत्तिं ण पुलासिम्मि ॥ ३२० ॥

अत्र प्रतीहीति मध्ये दृढप्रत्ययोत्पादनाय । एवमन्यदपि लक्ष्याल्लक्ष्यम् ।

**(८८) व्यभिचारिरसस्थायिभावानां शब्दवाच्यता ।**

**कष्टकल्पनया व्यक्तिरनुभावविभावयोः ॥ ६० ॥**

---

त्यादौ येनानेनेत्यादि न विशेषणदानमात्रार्थं किन्तु वाक्यान्तरमेवाव-धेयम् अतो बीजाभावान्न दोषः । न च गुणः विशेषबुद्धेरकरणा-दिति भावः ॥ ३१८ ॥

अपदस्थसमासस्य प्रतिप्रसवमाह-अपदेति । उदाहृते अस्मिन्नेवो-ल्लासे । अत्र हि शृंगारे दीर्घसमासस्यानौचित्यमित्यपदस्थसमासोऽपि उद्दीपकं रक्ताशोकं प्रति कोपमुत्कर्षयन् विप्रलम्भमेव पुष्णातीति गुणः

गर्भितं तथैवेति । गर्भितमपि दृढप्रत्ययहेतुत्वात् न च दोषः प्रतीतेरव्यवधानाद् उदाहरति-हुमीति । पञ्चबाणलीलायां स्मरं प्रति-यौवनोक्तिः ।

भवाम्यपहस्तितरेखो निरंकुशोऽथ विवेकरहितोऽपि ।

स्वप्नेऽपि त्वयि पुनः प्रतीहि भक्तिं न प्रस्मरामि ॥

इति संस्कृतम् । हे स्वामिन् ! अहम् अपहसिता त्यक्ता रेखा मर्यादा येन तथाभूतः निरंकुशः अनुरोधशून्यः उच्छृंखलो वा अथ विवेकरहितः धर्म्माधर्मशून्योऽपि भवामि स्वप्नेऽपि त्वयि पुनः प्रतीहि त्वं सत्यं जानीहि भक्तिं न प्रस्मरामि न विस्मा-रयिष्यामीत्यर्थः । वर्तमानसामीप्ये भविष्यति लट् । अत्र प्रती-हीति वाक्यगर्भितत्वं दृढप्रत्ययार्थकतया गुणस्तदेवाह—अत्रेति । प्रतीहीति सत्यप्रतीतिपरं तेन स्वोक्तेरमिथ्यात्वप्रतिपादकेन प्रती-हीत्यनेन शपथसमानशीलेन सौहार्दविषयदार्ढ्यावगम इति भावः । एवमन्यत् दोषान्तरमपि क्वचिद्गुणः क्वचिन्न गुणो न दोषश्चेति लक्ष्या-दुदाहरणाद् ऊहनीयम् यथा—

पंथिअ ण एत्थ सत्थरमत्थि इत्यादौ स्रस्तरव्याजेन स्रस्तरं संभोगं वा श्लिष्टशब्देन याचते इति पथिकाभिप्रायसन्देहान्नायिकया तथैवो-त्तरितामिति सन्देहस्य विवक्षायां सन्दिग्धस्यादोषत्वमित्याद्यूह्यम्३२०

अथ साक्षाद्रसविरोधिनो दोषानाह-व्यभिचारीति । रसविरोधिना-

प्रतिकूलविभावादिग्रहो दीप्तिः पुनः पुनः ।
अकाण्डे प्रथनच्छेदौ अङ्गस्याप्यतिविस्तृतिः ॥ ६१ ॥
अङ्गिनोऽननुसन्धानं प्रकृतीनां विपर्ययः ।
अनङ्गस्याभिधानं च रसे दोषाः स्युरीदृशाः ॥ ६२ ॥

स्वशब्दोपादानं व्यभिचारिणो यथा—

सव्रीडादयिताननेे सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ।
सेर्ष्या जन्हुसुतावलोकनविधौ दीना कपालोदरे
पार्वत्या नवसङ्गमप्रणयिनी दृष्टिः शिवायाऽस्तु वः ॥ ३२१ ॥

अत्र व्रीडादीनाम् ।

व्यानम्रा दयिताननेे मुकुलिता मातङ्गचर्माम्बरे
सोत्कम्पा भुजगे निमेषरहिता चन्द्रेऽमृतस्यन्दिनि ।
मीलद्भ्रूः सुरसिन्धुदर्शनविधौ म्लाना कपालोदरे, इत्यादि तु युक्तम् ।

रसस्य स्वशब्देन शृङ्गारादिशब्देन वा वाच्यत्वम् ।

---

मेतेषां त्रयोदशदोषाणां स्वरूपनिर्णयस्तदुदाहरणावसरे भविष्यति । तत्र सव्यभिचारिभावस्य स्वशब्दवाच्यत्वं दोषमुदाहरति–सव्रीडेति । पार्वत्या दृष्टिर्वो युष्माकं शिवाय कल्याणायास्तु । दृष्टिं विशिनष्टि सव्रीडेत्यादि । शिवस्य सम्मुखदर्शनाद्व्रीडा गजचर्माम्बरदर्शनेन कारुण्यं विभावाभावेन शोकोदयाद् भुजगदर्शनेन भयम् आकाशस्थायी कथमत्रेति चन्द्रदर्शनाद्विस्मयः । पत्युरन्यस्त्रीसंगदर्शनादीर्ष्या मणिस्थाने कपालदर्शनाद्दैन्यम् । नवसंगमे प्रणयिनी प्रीतियुक्ता चेत्यर्थः । अत्र व्रीडादीनां व्यभिचारिणाम् शब्दवाच्यत्वं दोषस्तदाह–अत्रेति । सति सम्भवेऽनुभावादिनाऽभिव्यक्तावेव चमत्कारास्वादयोरुत्कर्षः तत्र वाच्यत्वे तु अगूढत्वापत्तेस्तयोरपकर्ष इति दूषकताबीजम् । युक्तं पाठमुपदिशति–व्यानम्रेति । एवं च व्रीडादीनां व्यभिचारिणां न स्वशब्देनोपादानं किन्तु अनुभावैर्नम्रतादिभिरभिव्यक्तिरेवेति भावध्वनिर्भवतीति भावः ॥ ३२१ ॥

रसस्य सामान्यतो रसशब्देन वाच्यत्वं दोषमुदाहरति–तामिति ।

क्रमेणोदाहरणम्—

तामनङ्गजयमङ्गलश्रियं किञ्चिदुच्चभुजमूललोकिताम् ।
नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः ॥३२२॥

आलोक्य कोमलकपोलतलाभिषिक्तव्यक्तानुरागसुभगामभिराममूर्तिम् ।
पश्यैष बाल्यमतिवृत्य विवर्तमानः शृङ्गारसीमनि तरङ्गितमातनोति ॥३२३॥

स्थायिनो यथा—

सम्प्रहारे प्रहरणैः प्रहाराणाम्परस्परम् ।
ठणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत् ॥ ३२४ ॥

अत्रोत्साहस्य ।

---

तां नायिकां नेत्रयोर्गोचरे कृतवतोऽस्य नायकस्य निरन्तरोऽविच्छिन्नः कोऽपि अनिर्वचनीयः रसः शृङ्गारोऽजायत कीदृशीम् अनङ्गजयमङ्गलश्रियम् कामसम्बन्धिविजयमङ्गललक्ष्मीरूपाम् तथा किञ्चिदुच्चमीषदुन्नतं यद्भुजमूलं लोकितं दृष्टं यया तामित्यर्थः । नखक्षताद्यवलोकनाय भुजमूलस्य किंचिदौन्नत्यकारणम् । रथोद्धता छन्दः । अत्र रसस्य सामान्यतो रसवाच्यता दोषः । रसपदवाच्यत्वादास्वादापकर्ष इति भावः ॥ ३२२ ॥

रसस्य विशेषतः शृङ्गारपदेन वाच्यत्वं दोषमुदाहरति–आलोक्येति । कोमलयोः कपोलतलयोरभिषिक्तः प्रतिष्ठितः व्यक्तो रोमाञ्चादिना प्रकटीभूतो योऽनुरागो रिरंसारूपस्तेन सुभगां दर्शनीयरूपाम् अभिराममूर्त्तिम् रमणीयतरावयवसंस्थानां बालाम् आलोक्य एष बाल्यमतिवृत्यातिक्रम्य विवर्त्तमानः पुलककटाक्षादिभिश्चेष्टमानः सन् शृङ्गारसीमनि तरङ्गितमवच्छिन्नखेलनमातनोति करोतीति त्वं पश्येत्यर्थः । वसन्ततिलका छन्दः । अत्र रसस्य विशेषतः शृंगारपदवाच्यत्वं दोषः । शृङ्गारपदवाच्यत्वादास्वादापकर्ष इति भावः ॥३२३॥

स्थायिभावस्य विशेषत उत्साहपदेन वाच्यत्वं दोषमुदाहरति–सम्प्रहार इति । सम्प्रहारे युद्धे प्रहरणैः शस्त्रैः परस्परं क्रियमाणानां प्रहाराणां ताडनानां श्रुतिगतैः कर्णप्राप्तैः ठणत्कारैस्तादृशशब्दविशेषैस्तस्य प्रकृतवीरस्य, कोऽप्यनिर्वचनीय उत्साहो वीररसस्थायी अभूदित्यर्थः । अत्रोत्साहस्य स्थायिभावस्योत्साहशब्दवाच्यत्वं दोषस्तदाह–अत्रेति । अत्र प्रमोदस्तस्य कोऽप्यभूदिति पाठे न दोषः ॥३२४॥

(४)कर्पूरधूलिधवलद्युतिपूरधौतदिङ्मण्डले शिशिररोचिषि तस्य यूनः ।
लीलाशिरोंऽशुकनिवेशविशेषक्लृप्तिव्यक्तस्तनोन्नतिरभून्नवयौवना सा ॥

अत्रोद्दीपनालम्बनरूपाः शृङ्गारयोग्या विभावा अनुभावपर्यवसायिनः स्थिता इति कष्टकल्पना ।

(५)परिहरति रतिं मतिं लुनीते स्खलति भृशं परिवर्तते च भूयः ।
इति बत विषमा दशाऽस्य देहं परिभवति प्रसभं किमत्र कुर्मः ॥३२६॥

अत्र रतिपरिहारादीनामनुभावानां करुणादावपि सम्भवात्कामिनीरूपो विभावो यत्नतः प्रतिपाद्यः ।

---

(४)कष्टकल्पनया व्यक्तिरित्यादेरयमर्थः, अनुभाव-विभावयोः कष्टकल्पनया पृथक् श्लोकाद्यनुसंधेयप्रकरणादिपर्यालोचनया विलम्बेन व्यक्तिरभिव्यक्तिर्दोषः । तत्रानुभावस्य कष्टकल्पनया व्यक्तिमुदाहरति-कर्पूरेति । शिशिररोचिषि चन्द्रे कर्पूरधूलिवद्धवलो यो द्युतिपूरः कान्तिसमुदायस्तेन धौतं निर्मलीकृतं दिङ्मण्डलं येन तथाभूते सति लीलया शिरोंऽशुकनिवेशस्य शिरःसम्बन्धिवस्त्रनिवेशस्य या विशेषक्लृप्तिर्विशेषरचना तया व्यक्ता स्तनोन्नतिर्यस्याः तादृशी सा नायिका तस्य प्रसिद्धतारुण्यस्य यूनः नयनावनौ नयनप्रसारणभूमौ अभूत् दृष्टिपथमवतीर्णेत्यर्थः । वसन्ततिलका छन्दः । अत्र दम्भः स्वेदश्च रोमाञ्च इत्यादिना प्रागुक्तः स्तम्भादिरूपः कश्चन पुंनिष्ठस्य शृङ्गाररसस्यानुभावोऽभिमतः स च प्रकरणाद्यनुसंधानसापेक्षतया विलम्बेन प्रतीयत इति कष्टेन गम्यत्वाद्दोषस्तदाह-अत्रेति । उद्दीपनरूपो विभावश्चन्द्रः लीलाशिरोंऽशुकेति च । आलम्बनरूपो विभावो नायिका । अनुभावं पर्यवसाययन्ति प्रकरणाद्यनुसंधानसापेक्षतया विलम्बेनावगमयन्ति तेऽनुभावपर्यवसायिन इत्यर्थः ॥३२५॥

(५) विभावस्य कष्टकल्पनया व्यक्तिमुदाहरति-परिहरेति । बतेति खेदे विषमा कठिना दशा विरहावस्था अस्य नायकस्य देहं प्रसभं हठाद् इति एवंप्रकारेण परिभवति तिरस्करोति, अत्र अस्मिन्विषये वयं किं कुर्मः न कश्चिदुपायः प्रतिस्फुरति केनेत्याह-परिहरतीति । रतिं वस्तुनि स्पृहां परिहरति दूरीकरोति मतिमर्थावधारणं लुनीते छिनत्ति । भृशमत्यर्थं स्खलति विपर्येति परिवर्त्तते विशेषदर्शी च भवतीत्यर्थः । क्षणं क्षणविलक्षणाऽवस्थाऽस्य नायकस्य देहं प्रसभं परिभवतीति भावः । पुष्पिताग्रा छन्दः । अत्र कामिनीरूपो नायकनिष्ठस्य

(६)प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं
प्रिये ! शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः ।
निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे ! प्रत्येतुं प्रभवति गतः कालहरिणः ॥ ३२७ ॥

अत्र शृङ्गारे प्रतिकूलस्य शान्तस्यानित्यताप्रकाशनरूपो विभावस्तत्प्रकाशितो निर्वेदश्च व्यभिचारी उपात्तः ।

णिहुअरमणम्मि लोअणपहम्मि पडिए गुरुअणमज्झम्मि ।
सअलपरिहारहिअआ वणगमणं एव्व महइ वहू ॥३२८॥

---

विप्रलम्भशृङ्गारस्यालम्बनविभावोऽभिमतः । स च नोपात्तः । न च रतिपरिहारादिभिरनुभावैराक्षेप्तुमपि शक्यते, तेषां करुणभयानकबीभत्सेष्वपि सम्भवेन झटित्यनाक्षेपात्, किन्तु प्रकरणाद्यनुसंधानेन विलम्बेनेति कष्टेन कल्पनीयत्वाद्दोषस्तदाह-अत्रेति । विभावः आलम्बनात्मको विप्रलम्भशृङ्गारविभावः । बहूनां करुणादीनां सङ्क्रमेनैकतरविश्रान्त्यभावादास्वादविघ्नो दूषकताबीजम् ॥ ३२६ ॥

(६)प्रतिकूलविभावादिग्रहः प्रतिकूलः प्रकृतरसादेर्विरुद्धो यो रसादिस्तद्विभावानुभावव्यभिचारिणां ग्रहो ग्रहणमुपादानमित्यर्थः । तत्र तादृशविभावव्यभिचारिणोर्ग्रहमुदाहरति-प्रसाद इति । प्रणयकलहकुपितां प्रति नायकस्योक्तिः । हे प्रिये ! प्रसादे वर्त्तस्व प्रसन्ना भव मुदं हर्षं प्रकटय रुषं कोपं संत्यज अमृतमिव ते तव वचः कर्तृ शुष्यन्ति शुष्कीभवन्ति मे अङ्गानि सिञ्चतु सौख्यानां निधानमाकरं मुखं क्षणमभिमुखं सम्मुखं स्थापय । हे मुग्धे ! विवेकरहिते ! गतः कालरूपो हरिणः प्रत्येतुं परावर्तितुं न प्रभवति न शक्नोतीत्यर्थः । शिखरिणी छन्दः । अत्र प्रकृते शृङ्गारे प्रतिकूलस्य शान्तरसस्य प्रकाश्यमानकालानित्यतारूप उद्दीपनविभावः । एतत्प्रकाशितो निर्वेदरूपः शान्तस्थाय्याख्यो व्यभिचारी च, स्फुटमेव गृह्यते इति दोषस्तदाह-अत्रेति । अनित्यता कालानित्यता विभाव उद्दीपनविभावः तत्प्रकाशितः कालानित्यताप्रकाशनप्रकाशितत्वेन निर्वेदस्य प्रतिकूलता निर्वेदश्च निर्वेदरूपः शान्तस्थाय्याख्यो व्यभिचारी चेत्यन्वयः । उपात्त इति । एवञ्च विभावादिना प्रतिकूलरसस्याप्युपस्थित्या विरोधेन प्रकृतरसानास्वादप्रसङ्ग इति दूषकताबीजम् ॥ ३२७ ॥

प्रतिकूलानुभावग्रहमुदाहरति-णिहुअरेति ।

अत्र सकलपरिहार—वनगमने शान्तानुभावौ। इन्धनाद्यानयनव्याजेनोपभोगार्थं वनगमनं चेत् न दोषः॥

(७) दीप्तिः पुनः पुनर्यथा कुमारसम्भवे रतिविलापे॥

(८) अकाण्डे प्रथनं यथा—वेणीसंहारे द्वितीयेऽङ्केऽनेकवीरक्षये प्रवृत्ते भानुमत्या सह दुर्योधनस्य शृङ्गारवर्णनम्॥

(९) अकाण्डे छेदो यथा वीरचरिते द्वितीयेऽङ्के राघवभार्गवयोर्धाराधिरूढे वीररसे कङ्कणमोचनाय गच्छामि इति राघवस्योक्तौ॥

---

निभृतरमणे लोचनपथे पतिते गुरुजनमध्ये।
सकलपरिहारहृदया वनगमनमेवेच्छति वधूः॥

इति संस्कृतम्। निभृतरमणे गुप्तकामुके जारे। गुरुजनानां मध्ये लोचनपथे नेत्रमार्गे पतिते सति सकलस्य गृहकार्यस्य परिहारे त्यागे हृदयं यस्यास्तथाभूता वधूः तेन सह रन्तुं वनगमनमेवेच्छतीत्यर्थः। अत्र व्याजादिकं विनाऽवनगमनं सकलपरिहारश्च शान्तानुभावः न च व्याजः प्रतिपादित इति शृङ्गारस्य प्रकृतस्य विच्छेद इति प्रतिकूलानुभावग्रहो दोषः। इन्धनाद्यानयनव्याजेन संभोगार्थं वनगमनं यद्युच्यते तदा न शान्तानुभावग्रह इति न दोषस्तदाह—अत्रेति। शान्तेति। तेन प्रतिकूलानुभावग्रहेण प्रकृतविप्रलम्भशृङ्गाररसविच्छेद इति भावः। तयोरेव शृङ्गारानुभावत्वोपायतामाह—इन्धनेति। चेदिति निबध्यत इति शेषः। तथा सति शृङ्गारे एव पर्यवसानं न तु शान्त इति न दोषः॥ ३२८॥

(७)पुनः पुनर्दीप्तिः दीपितस्य स्वसामग्रीलब्धपरिपोषस्य अन्तरा विच्छिद्य विच्छिद्य ग्रहणम् इयं च प्रबन्धे एव सम्भवतीत्याह—कुमारेति। तत्र हि अथ मोहपरायणा सतीत्यादिना दीपितोऽपि करुणा अथ सा पुनरेव विह्वलेत्यादिना पुनर्दीपितः। अत्रैकस्यैव पुनः पुनरास्वादः सहृदयानां वैरस्यायेति दूषकताबीजम्।

(८)अकाण्डेऽनवसरे रसस्य प्रथनं वर्णनमित्यर्थः। तदुदाहरति—यथा वेणीति। नहि शोकोत्साहवासनानिरुद्धे प्रतिपत्तृचेतसि शृङ्गारादिः पदमपि लभते सुतरामास्वाद इति दोषः।

(९)अकाण्डे छेदो रसस्य विच्छेदस्तमुदाहरति—यथा वीरेति। धाराधिरूढे धारावाहिनि अविच्छिन्नप्रसरतया प्रवृत्ते वीररसे युद्धोत्साहे राघवस्योक्तौ अकाण्डे तथोक्तिव्याजेन निर्गमनं प्रतिपादयन्ती, श्री-

(१०)अङ्गस्याप्रधानस्यातिविस्तरेण वर्णनं यथा हयग्रीववधे हयग्रीवस्य॥

(११)अङ्गिनोऽननुसंधानम् यथा रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने सागरिकाया विस्मृतिः॥

(१२)प्रकृतयो दिव्या अदिव्या दिव्यादिव्याश्च, वीररौद्रशृङ्गारशान्तरसप्रधाना धीरोदात्त-धीरोद्धत-धीरललित-धीरप्रशान्ताः, उत्तमाधममध्यमाश्च। रतिहासशोकाद्भुतानि अदिव्योत्तमप्रकृतिवत् दिव्येष्वपि। किन्तु रतिः सम्भोगशृङ्गाररूपा उत्तमदेवता विषया न वर्णनीया। तद्वर्णनं हि पित्रोः सम्भोगवर्णनमिवात्यन्तमनुचितम्।

---

रामस्यावीरत्वे पर्यवस्यतीति नायके श्रीरामे वीररसो नास्वाद्येतेति दोषः।

(१०)अङ्गस्याप्यतिविस्तृतिरिति व्याचष्टे-अङ्गस्येति। अप्रधानस्य प्रतिनायकादेः हयग्रीववधनाटके विष्णुः प्रधानभूतो नायकः तद्वर्णनं परित्यज्याप्रधानस्य हयग्रीवनाम्नो दैत्यस्य जलकेलिवनविहारादेर्विस्तरेण वर्णनं हयग्रीवस्यैव नायकत्वं प्रत्याययति तथा च तद्गत एव रसः प्राधान्येनास्वाद्येतेति दोषः।

(११)अङ्गिनः प्रधानस्य नायकस्य नायिकाया वा अननुसंधानमपरामर्शो विस्मरणन्तदुदाहरति-यथेति। तत्र वाभ्रव्यनाम्नः सिंहेश्वरकञ्चुकिन आगमनकाले विजयवर्मवृत्तान्तश्रवणासक्तहृदयेन राज्ञा वत्सराजेन नायकेन सागरिकाया रत्नावल्याख्याया मुख्यनायिकायाः नाममात्रस्याप्यग्रहणाद्विस्मृतिस्तेन नाटिकाप्रतिपाद्यशृङ्गाररसो विच्छिन्नप्राय इति दोषः।

(१२)प्रकृतीनां विपर्ययः, यत्प्रकृतौ यद्वर्णनमनुचितं तत्र तद्वर्णनं प्रकृतिविपर्ययस्तद्व्याख्यातुं प्रकृतीराह-प्रकृतय इति। प्रकृतयो नायकाः। तल्लक्षणन्तु—

> नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः।
> रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा॥
> बुद्ध्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितः।
> शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः॥

इति। दिव्या दिवि स्वर्गे भवा देवतैकरूपा इन्द्रादयः। अदिव्या मानुषैकरूपा वत्सराजादयः। दिव्यादिव्या मानुषरूपेणाप्यवतीर्णा देवाः श्रीरामादयः। त्रिविधा अप्येते धीरोदात्तादिभेदेन चतुर्धा भवन्ति-

क्रोधं प्रभो ! संहर संहरेति यावद्गिरः खे मरुतां चरन्ति ।
तावत् स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥३२९॥

इत्युक्तवद् भ्रुकुट्यादिविकारवर्जितः क्रोधः सद्यः फलदः स्वर्गपातालगगनसमुद्रोल्लङ्घनाद्युत्साहश्च दिव्येष्वेव । अदिव्येषु तु यावदवदानं प्रसिद्धमुचितं वा तावदेवोपनिबद्धव्यम् । अधिकं तु निबध्यमानमसत्यप्रतिभासनं नायकवद्वर्तितव्यम् न प्रतिनायकवद् इत्युपदेशे

---

त्याह–वीरेत्यादि । इदं धीरोदात्तादिषु यथाक्रममन्वेति तथा च वीररसप्रधानो धीरोदात्तः । रौद्ररसप्रधानो धीरोद्धतः । शृङ्गाररसप्रधानो धीरललितः । शान्तरसप्रधानो धीरप्रशान्त इति पर्यवसितः । श्रीराम-भार्गव- श्रीकृष्ण-जीमूतवाहनाः क्रमेणोदाहरणानि । एतेषां क्रमेण लक्षणानि—

महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः ।
स्थिरो निगूढाहंकारो धीरोदात्तदृढव्रतः ॥ १ ॥
दर्पमात्सर्यभूयिष्ठो मायाछद्मपरायणः ।
धीरोद्धतस्त्वहंकारी चलश्चण्डो विकत्थनः ॥ २ ॥
निश्चिन्तो धीरललितः कलासक्तः सुखी मृदुः ।
सामान्यगुणयुक्तस्तु धीरशान्तो द्विजादिकः ॥ ३ ॥

द्वादशविधा अप्येते उत्तमादिभेदेन प्रत्येकं त्रिधा भवन्तीत्याह–उत्तमेति । गुणोत्कर्षापकर्षतदुभयैरेते त्रयो भेदा बोध्याः । तथा च दिव्यादिभेदेन त्रिविधा अपि पुनर्धीरोदात्तादिभेदेन प्रत्येकं चतुर्विधा भूत्वा पुनर्गुणोत्कर्षापकर्षतदुभयमूलकेनोत्तमादिभेदेन प्रत्येकं त्रिधा भूत्वा षट्त्रिंशद्विधाः प्रकृतयः सम्पद्यन्ते, साहित्यदर्पणादिरीत्या अनुकूलो दक्षिणो धृष्टः शठश्चेति चत्वारोऽपि प्रकृतिभेदेन गणनीयाः । उक्तासु प्रकृतिषु विपर्ययाभिधानाय तदौचित्यमनुवदति तत्रेति । उक्तासु प्रकृतिषु मध्ये । अदिव्याः या उत्तमप्रकृतयस्तास्विवेत्यर्थः । विपर्ययमनौचित्यं दर्शयति–किन्त्विति । अनुचितमिति यथा—

दष्टमुक्तमधरोष्ठमम्बिका वेदनाविधुतपाणिपल्लवा ।
शीतलेन निरवाप तत्क्षणं मौलिचन्द्रशकलेन शूलिनः ॥

इत्यनुचितम् । एवं भयं नोत्तमेषु जुगुप्सा दिव्येषु बोध्यम ।

क्रोधोत्साहविशेषावपि दिव्येष्वेव वर्णनीयावित्याह–क्रोधमिति । कुमारसम्भवे पद्यमिदम् हे प्रभो ! शङ्कर ! क्रोधं संहर संहर निवर्तय

न पर्यवस्येत् । दिव्यादिव्येषु उभयथाऽपि । एवमुक्तस्यौचित्यस्य दिव्यादीनामिव धीरोदात्तादीनामप्यन्यथावर्णनं विपर्ययः । तत्रभवन् भगवन्नित्युत्तमेन न अधमेन मुनिप्रभृतौ न राजादौ, भट्टारकेति नोत्तमेन राजादौ प्रकृतिविपर्ययापत्तेर्वाच्यम् । एवं देशकालवयोजात्यादीनां वेषव्यवहारादिकमुचितमेवोपनिबद्धव्यम् ॥

( १३ ) अनङ्गस्य रसानुपकारकस्य वर्णनम् । यथा—कर्पूरमञ्जर्यां नायिकया स्वात्मना च कृतं वसन्तवर्णनमनादृत्य बन्दिवर्णितस्य राज्ञा प्रशंसनम् ॥ ईदृशा इति । नायिकापादप्रहारादिना ना-

---

इत्येवं मरुतां देवानां गिरो वाचः खे यावच्चरन्ति प्रवर्त्तन्ते तावत्तत्कालमेव भवनेत्रजन्मा शिवनयनोत्थः स वह्निर्मदनं भस्मैवावशेषो यस्य तादृशं चकार ददाहेत्यर्थः । इन्द्रवज्रा छन्दः । इत्युक्तवद् ईदृशः । दिव्येष्वेव वर्णनीय इति शेषः । अदिव्येषु वर्णनीयमाह—अदिव्येष्विति । अवदानं वृत्तं कर्म भूतपूर्वचरित्रम् प्रसिद्धं लोकप्रसिद्धमुपनिबद्धव्यं वर्णनीयम् अधिकवर्णने दोषमाह अधिकन्त्विति । मनुष्येष्वधिकवर्णनेऽसत्यत्वेन रामादिवद्वर्त्तितव्यम् न रावणादिवदिति प्रागुक्तोपदेशे पर्यवसानं न स्यादिति भावः ।

दिव्यादिव्येष्वपि वर्णनीयमाह—दिव्यादिव्येष्विति । उभयेति । उभयोरप्युचितं वर्णनीयमित्यर्थः । एवमिति । एवं दिव्यादीनामुक्तस्यौचित्यस्यान्यथावर्णनमिव धीरोदात्तादीनामप्यौचित्यस्यान्यथावर्णनं प्रकृतिविपर्यय इत्यर्थः । इदानीं सम्बोधनौचित्यमाह—तत्रेति । तत्रभवन् भगवन्निति, उत्तमेनैव प्रयोक्तव्यं नाधमेन । मुनीति । उत्तमेनापि मुनिप्रभृतावेव वाच्यं न तु राजादौ । तथा भट्टारकेति पदं राजादावुत्तमेन न वाच्यम् किन्तु देवादावेव, अन्यथा प्रकृतिविपर्ययापत्तेरित्यर्थः । एवं देशादिष्वप्यनुचितवर्णने विपर्ययप्रसङ्गात्तदुचितमेव वर्णनीयमित्याह—एवमिति । यथा स्वर्गाङ्गनासु मानुषीवेषादिवर्णनम् । रसातलादौ मेघादिवर्णनम् । वसन्ते च मेघवर्णनम् । जरायां सम्भोगादिवर्णनम् । कुलवधूजातीयस्य साभिप्रायवचनादिवर्णनमनुचितमिति भावः ॥

(१३)अनङ्गस्याभिधानमिति कारिकांशं व्याचष्टे—अनङ्गस्येति । उदाहरति—यथेति । कर्पूरमञ्जरीसट्टके नायिकया विभ्रमलेखया स्वात्मना च स्वेन च राज्ञा चण्डपालेन बन्दिवर्णितस्य वसन्तस्य वर्णनं प्रकृतर-

यककोपादिवर्णनम् । उक्तं हि ध्वनिकृता—

अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
औचित्योपनिबन्धस्तु रसस्योपनिषत्परा ॥ इति ॥

इदानीं क्वचिद्दोषा अप्येते—इत्युच्यन्ते ।

(८३) न दोषः स्वपदेनोक्तावपि संचारिणः क्वचित् ।

---

रस्यानुपकारकमित्यनुचितमिति भावः। कारिकायामीदृशा इत्यनेनेद-मुक्तम्, यदनौचित्यहेतवः सर्वे एव दोषा भवन्ति परिगणितप्रकारस्तु प्रदर्शनार्थमुक्त इति, अतः परिगणितादन्यदुदाहरति—नायिकेति। नायि-कापादाघातादिना नायकस्य कोपादिवर्णनमनुचितमिति भावः । अ-नौचित्यं रसविच्छेदहेतुस्तत्र वृद्धसम्मतिमाह—उक्तं हीति, उपनिषत्परे-ति । नित्यादिस्वरूपब्रह्मोपस्थापकवेदभाग इव औचित्योपनिबन्धो रसोपस्थितिनिदानमित्यर्थः ।

पूर्वोक्तदोषाणां प्रतिप्रसवमाह—इदानीमिति । सञ्चारिणो व्यभिचा-रिणः क्वचित् यत्रेतरविलक्षणो नानुभावोऽर्थाद्यत्रासाधारणो नानुभा-वादिस्तत्र स्वपदेनोक्तावपि न दोष इत्यर्थः । यथेत्युदाहरति—औत्सु-क्येनेति । रत्नावलीनाटिकाया मङ्गलमिदम् । नवे सङ्गमे हसता हरेण श्लिष्टा अत एव संरोहत्पुलका उद्गतरोमांचा गौरी वः शिवाय अस्तु । कीदृशी औत्सुक्येन दयितसमीपगमने उत्कण्ठया कृता त्वरा सहसा गमनारम्भो यया तादृशी, तथा सहभुवा सहोत्पन्नया स्वाभावि-क्या ह्रिया लज्जया व्यावर्तमाना परावर्त्तमाना पुनस्तैस्तैस्तत्कालोचि-तैर्बन्धुवधूजनस्य भ्रातृजायादेर्वचनैराभिमुख्यं प्रियस्य संमुखत्वं नी-ता प्रापिता तथा अग्रे वरं श्रेष्ठं पतिञ्च दृष्ट्वा आत्तो गृहीतः सा-ध्वसरसो भयरसो यया तथाभूतेत्यर्थः । शार्दूलविक्रीडितं छ-न्दः । अत्रौत्सुक्यस्य नैकोऽपि तादृशोऽसाधारणोऽनुभावादिरस्ति । येनोपात्तेनौत्सुक्यमसंशयं प्रतीयते, येऽपि च त्वरादयस्तेऽपि नासा-धारणाः, गुरुजनगञ्जनभयादिनाऽपि तेषां सम्भवादित्यौत्सुक्यस्य सञ्चारिणः स्वशब्दवाच्यता न दोषस्तदाह—अत्रेति । औत्सुक्यशब्द इव औत्सुक्यशब्दवत् तदनुभावस्तस्यौत्सुक्यस्य त्वरारूपोऽनुभा-वः न तथेति नौत्सुक्यमसन्दिग्धं प्रतिपादयितुमीष्टे भयादिसाधारण-त्वात् । उक्तमर्थं कव्यन्तरप्रयोगेण दृढयति—अत एवेति। त्वरारूपानुभा-वस्यौत्सुक्यव्यञ्जनाक्षमत्वादेव । इत्यादाविति । प्रागुक्तेऽस्मिन्पद्येऽमरुक-विनौत्सुक्यमेव स्वशब्देनोपात्तमिति भावस्तदेवाह—व्रीडेति। व्रीडा प्र-

यथा —

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।
दृष्ट्वाऽग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ॥ ३३० ॥

अत्रौत्सुक्यशब्द इव तदनुभावो न तथा प्रतीतिकृत् । अत एव दूरादुत्सुकम् इत्यादौ व्रीडाप्रेमाद्यनुभावानां विवलितत्वादीनामिवोत्सुकत्वानुभावस्य सहसा प्रसरणादिरूपस्य तथाप्रतिपत्तिकारित्वाभावादुत्सुकमिति कृतम् ॥

( ८४ ) सञ्चार्यादेर्विरुद्धस्य बाध्यस्योक्तिर्गुणावहा ॥ ६३ ॥

बाध्यत्वेनोक्तिर्न परमदोषः, यावत्प्रकृतरसपरिपोषकृत् । यथा—

क्वाकार्यं शशलक्ष्मणः क्व च कुलम्—इत्यादौ ॥ ३३१ ॥

अत्र वितर्कादिषु उद्गतेष्वपि चिन्तायामेव विश्रान्तिरिति प्रकृतरसपरिपोषः ॥

---

मादिरूपाः संचारिणस्तेषां येऽनुभावास्तेषाम् उत्सुकत्वमौत्सुक्यरूपो व्यभिचारिभावस्तस्य योऽनुभावस्तस्य तथा प्रतीतिः असन्दिग्धप्रतिपत्तिरित्यर्थः । स्पष्टमन्यत् ॥ ३३० ॥

प्रतिकूलविभावादिग्रहस्यादोषत्वमाह—संचार्यादेरिति । आदिनाऽनुभावविभावयोः परिग्रहः । विरुद्धस्य प्रकृतरसाविरोधिरसाङ्गभूतस्य सञ्चार्यादेर्व्यभिचार्यादेः बाध्यस्योक्तिः बाध्यत्वेनोक्तिर्गुणावहा भवतीत्यर्थः । यदि स्वभावत एव बाध्यत्वं न तदा विरोध इत्यन्यथा व्याचष्टे—बाध्यत्वेनेति । तथा निर्देष्टव्यं यथा बाध्यतावगमः स्यादित्यर्थः । गुणपदं विवेचयति—न परमिति । परं केवलम् । यावदिति । प्रत्युत प्रकृतरसपरिपोषकतया गुण इत्यर्थः ॥ ६३ ॥

तत्र विरुद्धस्य व्यभिचारिणो बाध्यत्वेनोक्तौ, गुणावहत्वमुदाहरति—क्वाकार्यमिति । चतुर्थोल्लासे व्याख्यातम् अत्र चतुर्षु पादेषु पूर्वभागप्रतिपाद्यानां शमाङ्गानां शान्तसंचारिणां शृङ्गारविरोधिनां वितर्कशङ्काधृतीनामुत्तरभागप्रतिपाद्याभिरभिलाषाङ्गभूताभिरौत्सुक्यस्मृतिदैन्यचिन्ताभिस्तिरस्कारपुरःसरचिन्तायामेव पर्यवसानम् इति भावशबलतापरिपोषकत्वाद् गुणत्वन्तदाह—अत्रेति । विश्रान्तिः पर्यवसानम् । प्रकृतेति । भावशबलतापरिपोष इत्यर्थः ॥ ३३१ ॥

पाण्डुक्षामं वदनं हृदयं सरसं तवालसं च वपुः।
आवेदयति नितान्तं क्षेत्रियरोगं सखि! हृदन्तः॥ ३३२॥

इत्यादौ साधारणत्वं पाण्डुतादीनामिति न विरुद्धम्॥

सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः।
किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम्॥ ३३३॥

इत्यत्राद्यमर्धं बाध्यत्वेनैवोक्तम्। जीवितादपि अधिकमपाङ्गभङ्गस्या-स्थिरत्वमिति प्रसिद्धभङ्गुरोपमानतयोपात्तं शान्तमेव पुष्णाति न पुनः

---

**तृतीयोद्योते ध्वनिकारोक्तमन्यथा समर्थयितुमाह**–पाण्डि्वाति। **ना-यिकां प्रति** सख्या उक्तिः। **हे सखि! तव पाण्डु शुभ्रं क्षामं कृशं च वदनं सरसं सानुरागं अन्तरससहितं च हृदयमत एव अलसम् आलस्ययुक्तम् बाह्यक्रियायामक्षमम् वपुः शरीरं च वदनादित्रयं** कर्तृ **नितान्तं हृदन्तः हृदयमध्ये क्षेत्रियरोगं देहान्तरे चिकित्स्यरो-गमावेदयति ज्ञापयतीत्यर्थः।** तुल्ययोगिताऽत्रालङ्कारः। **अत्र पाण्डु-तादीनां राजयक्ष्मादिरोगानुभावकतया करुणरसोचिततया च विरुद्ध-त्वेऽपि विप्रलम्भशृङ्गारे समावेशादङ्गभावप्राप्त्या उत्कर्षकत्वलाभेन दोषत्वाभाव इति** ध्वनिकार, **तदयुक्तम् तेषामुभयसाधारण्याद्विरो-धस्यैवासिद्धेरित्याह**–इत्यादाविति। **साधारणत्वं करुणविप्रलम्भो-भयसाधारणत्वमित्यर्थः॥ ३३२॥**

**संचार्यादेरित्यादिपदग्राह्यस्य विरुद्धस्य विभावस्य बाध्यत्वेनो-क्तौ गुणावहत्वमुदाहरति**–सत्यमिति। **रामा रमण्यः मनोरमा रम्या इति सत्यम् विभूतय ऐश्वर्याण्यपि रम्या इति सत्यम् किन्तु जीवितं जीवनं हि मत्ताङ्गनायास्तरुण्या अपाङ्गभङ्गः कटाक्षस्तद्वल्लोलमस्थि-रमित्यर्थः। अत्र पूर्वार्धे रामा इति विभूतय इति च पुरुषनिष्ठशृङ्गा-रस्य विभावः अपरार्धे जीवितस्य लोल्यं शान्तस्य विभावः अनयो-र्विरुद्धत्वेऽपि पूर्वार्धस्य बाध्यत्वेनैवोक्तत्वान्न दोषत्वम् अपि तु गुण-त्वम् शान्तपरिपोषकत्वात्। सर्वा रामादयः सत्येव जीविते तत्सौक-र्यार्थमुपादेयाः जीवितं चातिभंगुरमिति किं कृतं तासामुपादेयत्वम् अतो रम्यत्वेऽपि निष्फला एवेति पर्यवसानादित्याह**–इत्यत्रेति। **नन्वे-वं पूर्वार्धप्रतिपाद्यस्य बाध्यत्वेऽपि मत्ताङ्गनापाङ्गभङ्गेत्यनुभावेन स्त्रीनि-ष्ठशृङ्गारस्य प्रतीत्या विरोधोऽस्त्येव न च तत्र न शृङ्गारप्रतीतिरिति वक्तुं शक्यम् तदुपादानवैयर्थ्यप्रसङ्गादित्याशंक्य ते विरोधं परिहर-ति**—जीवितादपीति। शान्तमेवेति। **यथाऽपांगभङ्गोऽस्थिरस्तथा जी-**

शृङ्गारस्यात्र प्रतीतिस्तदङ्गाप्रतिपत्तेः । न तु विनेयोन्मुखीकरणमत्र परिहासः, शान्त-शृङ्गारयोर्नैरन्तर्यस्याभावात् । नापि काव्यशोभाकरणम्, रसान्तरादनुप्रासमात्राद्वा तथाभावात् ॥

**(८५) आश्रयैक्ये विरुद्धो यः स कार्यो भिन्नसंश्रयः ।**
**रसान्तरेणान्तरितो नैरन्तर्येण यो रसः ॥ ६४ ॥**

वीर-भयानकयोरेकाश्रयत्वेन विरोध इति प्रतिपक्षगतत्वेन भयानको

---

वितमिति,जीविते क्षणस्थायित्वप्रत्ययः तत्प्रत्यये त्वपाङ्गभङ्गादीनां निष्फलत्वावगतिः शान्तमेव रसं पुष्णातीत्यर्थः । एवञ्च शान्तरसपरिपोषकत्वेन नापांगभङ्गोपादानस्य वैयर्थ्यमिति भावः । ननु शान्तशृङ्गारयोर्द्वयोरपि रसत्वेनात्रैकेनापरस्य बाधने किं विनिगमकमित्यपेक्षायामाह-न पुनरिति । अत्र हेतुमाह-तदङ्गेति । शृङ्गारयोग्यविभावाद्यकरणादित्यर्थः । शृङ्गाराङ्गविभावादिसत्त्वाद्भवत्येवात्र शृङ्गारप्रतीतिः । परन्तु तया गुडजिह्विकान्यायेन शिष्या अभिमुखीकृत्य शान्ते निवेश्यन्ते इत्यदोषता, यद्वा काव्यशोभानिमित्तमेव तदुपादानम् अतोऽदोषता, इति द्विविधं ध्वनिकारसमाधानम्, तत्राद्यं दूषयति-न त्विति । विनेयाः शिष्यास्तेषामुन्मुखीकरणमभिमुखीकरणमित्यर्थः । नैरन्तर्यस्य अव्यवधानस्य अभावादिति विरोधेनेति शेषः । एवञ्च शृङ्गारोद्बोधे शान्तोद्बोधो दुर्घट इति भावः । एवं प्रथमं दूषयित्वा द्वितीयमपि समाधानं दूषयति—नापीति । शोभाकरणमिति परिहार इति शेषः । काव्यशोभायामुपपादकमाह-रसान्तरादिति । शान्तरूपादित्यर्थः । अनुप्रासेति । मत्ताङ्गनापांगभङ्गेति कोमलानुप्रासमात्राद्वेत्यर्थः । अत एव चित्रकाव्येऽलङ्कारादेव चारुत्वप्रत्ययः । तथाभावात् काव्यशोभासत्त्वात् ॥ २३२ ॥

इदानीं रसविरोधं संक्षिप्य तत्परिहारोपायमाह-आश्रयैक्ये इति । रसानां विरोधो द्विधा दैशिकः कालिकश्च तत्राद्यं समाधत्ते—भिन्नसंश्रय इति । अत्राश्रय संश्रयशब्दौ आलम्बनाधाराभयपरौ तेनालम्बनैक्येन विरोधो भिन्नालम्बनतया निवेश्यः । आधारैक्येन च विरोधो भिन्नाधारतया निवेश्य इत्यर्थः । द्वितीयं समाधत्ते-रसान्तरेणेति । यो रस इत्यत्र विरुद्ध इत्यनुषज्यते नैरन्तर्येणाव्यवधानेन यो रसो विरुद्धः स रसान्तरेणान्तरितो व्यवहितः कार्य इत्यर्थः ॥ ६४ ॥

कारिकायाः प्रथमार्धं व्याचष्टे-वीरभयेति । प्रतिपक्षेति । वर्णनीयनायकादेर्यः प्रतिपक्षः शत्रुस्तद्गतत्वेन निवेशयितव्यो वर्णनीयः ।

निवेशयितव्यः । शान्तशृङ्गारयोस्तु नैरन्तर्येण विरोध इति रसान्तर-मन्तरे कार्यम् । यथा— नागानन्दे शान्तस्य जीमूतवाहनस्य "अहो गीतम् अहो वादित्रम्"-इत्यद्भुतमन्तर्निवेश्य मलयवतीं प्रति शृङ्गारो निबद्धः । न परं प्रबन्धे यावदेकस्मिन्नपि वाक्ये रसान्तरव्यवधिना विरोधो निवर्तते । यथा—

भूरेणुदिग्धान् नवपारिजातमालारजोवासितबाहुमध्याः ।
गाढं शिवाभिः परिरभ्यमाणान् सुराङ्गनाश्लिष्टभुजान्तरालाः ॥३३२॥

---

तथा सति दूरे तस्य दोषत्वं प्रत्युत वीररसपरिपोष इति शेषः । भया-नकस्य प्रतिपक्षगतत्वेनोपन्यासे नायकवीररसपरिपुष्टिरिति भावः ।

यथा—

आहूताऽपि पदं ददाति न पुरो न प्रार्थिताऽपीक्षते
साकूतं परिभाषिताऽपि बहुशः किं चिन्न चाभाषते ।
आश्लिष्टाऽपि न संमुखानि रचयत्यङ्गानि मूढाशया
कोपोद्रेकवशंवदेव तरुणी श्रेणी यदीयद्विषाम् ॥

इति कस्य चिद्राज्ञो वर्णनम् । यस्य प्रकृतस्य राज्ञो द्विषां श्रेणी पंक्तिः कोपोद्रेकस्य कोपातिशयस्य वशम्वदा अधीना कुपिता तरुणी-व मूढः भयात्तरुणीपक्षे कोपात् किं कर्त्तव्यतामूढः आशयोऽन्तःकरणं यस्यास्तादृशी सती आहूताऽपि पुरोऽग्रे पदं न ददाति नागच्छति प्रार्थिताऽपि नेक्षते साकूतं साभिप्रायं यथा तथा बहुशः परिभाषि-ताऽपि किञ्चिदपि नाभाषते आश्लिष्टापि सन्निधिं प्रापितापि तरुणी-पक्षे आलिङ्गितापि अङ्गानि हस्त्यश्वादीनि तत्पक्षे मुखादीनि सम्मु-खानि रचयतीत्यर्थः। अत्र भयानकस्य प्रतिपक्षगतत्वेनोपन्यासात् ना-यकवीररसपरिपुष्टिः । कारिकाया द्वितीयार्धं व्याचष्टे-शान्तेति । अन्त-रे मध्ये कार्यं निवेशनीयम् । तदुदाहरति-यथेति । नागानन्दे नायकस्य जीमूतवाहनस्य शान्तो रसः मलयवतीनायिकाविषयः शृङ्गारश्चेति विरोधशङ्का सा च अहो गीतमहो वादित्रमित्यनेनाद्भुतरसस्य द्वयोर्म-ध्ये निवेशनात्परिहृतेति । न चायमविरोधः प्रबन्धे एव किन्त्वेक स्मिन्वाक्येऽपीत्याह-न परमिति । व्यवधिना व्यवधानेन विरोधो रसयोरिति शेषः । निवर्त्तते परिहृतो भवति ।

तदुदाहरति । भूरेण्विति । ध्वन्यालोके उदाहृतानीमानि पद्यानि विशेषकमिदन्त्रिभिर्वाक्यार्थसमाप्तेः । विशेषेण शत्रून् ईर-यन्ति कम्पयन्तीति वीरा विमानमध्ये यः पर्यङ्कस्तत्तले निषण्णा उप-

सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान् ।
संवीजिताश्चन्दनवारिसेकैः सुगन्धिभिः कल्पलतादुकूलैः ॥ ३३४ ॥
विमानपर्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम् ।
निर्दिश्यमानान् ललनाङ्गुलीभिर्वीराः स्वदेहान् पतितानपश्यन् ॥ ३३५ ॥

अत्र बीभत्स-शृङ्गारयोरन्तर्वीररसो निवेशितः ॥

(८६) स्मर्यमाणो विरुद्धोऽपि साम्येनाथ विवक्षितः ।
अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम् ॥ ६५ ॥

---

विष्टाः सन्तः तदानीं ललनानां स्ववेश्यानामङ्गुलीभिर्निर्दिश्यमानान् प्रदर्श्यमानान् रणभूमौ पतितान् स्वदेहान् कुतूहलाविष्टतया आश्चर्ययुक्ततया अपश्यन् । कौतुकहेतुगर्भं यथाक्रममेकं देहविशेषणमपरं वीरविशेषणमाह-भूरेण्विति । भूसम्बन्धिरेणुना दिग्धान् व्याप्तान् नवानां पारिजातमालानां रजोभिः परागैर्वासितं सुरभीकृतं बाहुमध्यं वक्षो येषां तथाभूताः शिवाभिः शृगालीभिर्गाढं यथा तथा परिरभ्यमाणान् आलिङ्ग्यमानान् सुराङ्गनाभिरप्सरोभिराश्लिष्टम् भुजयोरन्तरालं येषां तथाभूताः सशोणितैः सरुधिरैः क्रव्यभुजां मांसाशिनां खगानां गृध्रादिपक्षिणां स्फुरद्भिश्चलद्भिः पक्षैरुपवीज्यमानान् चन्दनवारिणां सेका यत्र तादृशैः सुगन्धिभिः कल्पलता एव दुकूलानि पट्टवस्त्राणि तैः संवीजिता इत्यर्थः । उपजातिश्छन्दः । अत्र भूरेणुदिग्धेत्यादिकर्मविशेषणेन बीभत्सः । नवपारिजातेत्यादिकर्तृविशेषणेन शृङ्गारः । अनयोश्च निर्देशक्रमेण प्रतीतिः । एवंभूरेणुदिग्धत्वादेः नवपारिजातमालारजोवासितत्वादेश्च रणोत्साहमूलकतया रणोत्साहप्रतीत्या वीररसः । एवं च प्रथमतो बीभत्सः ततो वीरः ततश्च शृङ्गारः ततः पुनर्वीर इति व्यवधानम् तेनानन्तर्याभावाद्बीभत्सशृङ्गारयोरविरोधः । वीरस्यालम्बनमत्र प्रतियोद्धा शृङ्गारस्य तु स्वर्गाङ्गना इत्यालम्बनभेदादनयोरप्यविरोधः, तदेतत्सर्वमभिप्रेत्याह-अत्रेति । ३३३-३३५ ॥

अविरोधहेत्वन्तरमाह-स्मर्यमाण इति । दुष्टौ इत्यत्र दुष्ट इति विरुद्ध-इत्यत्र विरुद्धाविति च विपरिणस्यते तथा च विरुद्धोऽपि कश्चिद्रसः प्रधानरसेन सह स्मर्यमाणश्चेन्न दुष्ट इत्येकः प्रकारः। अथ विरुद्धोऽपि कश्चिद्रसः साम्येन विवक्षितश्चेन्न दुष्ट इति द्वितीयः प्रकारः, विरुद्धावपि यौ रसौ अङ्गिनि प्रधाने उत्कर्षाश्रये अङ्गत्वमुपकारकत्वम् उत्कर्षकारकत्वम् आप्तौ प्राप्तौ चेत्तावपि परस्परं न दुष्टाविति तृतीयः प्रकारः॥

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः॥ ३३६॥

एतद् भूरिश्रवसः समरभुवि पतितं हस्तमालोक्य तद्वधूरभिदधौ। अत्र पूर्वावस्थास्मरणं शृङ्गाराङ्गमपि करुणं परिपोषयति॥

दन्तक्षतानि करजैश्च विपाटितानि प्रोद्भिन्नसान्द्रपुलकैर्भवतः शरीरे।
दत्तानि रक्तमनसा मृगराजवध्वा जातस्पृहैर्मुनिभिरप्यवलोकितानि ३३७

अत्र कामुकस्य दन्तक्षतादीनि यथा चमत्कारकारीणि तथा जिनस्य। यथा वापरः शृङ्गारी तदवलोकनात्सस्पृहस्तद्वद् एतद्दृशो मुनय इति साम्यविवक्षा॥

---

तत्र स्मर्यमाणत्वेनाविरोधो यथेत्युदाहरति—अयमिति। व्याख्यातमिदं पञ्चमोल्लासे। अत्र करुणो रसः प्रधानमस्ति शृङ्गाराङ्गस्मृत्या शृङ्गारोऽपि स्मृतः। स्मृतस्य तस्य प्राधान्येनास्वाद्यत्वाभावादविरोधः। अत्र करुणः प्रकृतत्वात्प्रधानम् शृङ्गारस्याप्रकृततया हीनबलत्वेनाङ्गत्वम्। एतदेव कथयन् शृङ्गारस्य स्मर्य्यमाणत्वं दर्शयति—एतदिति। पोषयतीति। एवं चात्र स्मर्य्यमाणशृङ्गारस्य करुणोद्दीपकतया तदङ्गत्वान्न विरोध इति भावः॥ ३३६॥

साम्यविवक्षयाऽविरोधो यथेत्युदाहरति—दन्तक्षतेति। प्रसवजनितातिबुभुक्षावशेन निजापत्यमेव भोक्तुमारभमाणायै सिंह्यै तद्रक्षार्थं स्वशरीरदायकं परमदयालुं जिनं प्रतीयमुक्तिः। हे जिन! प्रोद्भिन्नाः प्रकटाः सान्द्राः निबिडाः पुत्रका यत्र तादृशे भवतः शरीरे रक्तमनसा रक्ते रुधिरे मनो यस्यास्तथाभूतया रक्तमनुरक्तं मनो यस्यास्तथाभूतया च मृगराजस्य सिंहस्य मृगाख्यपुंजातिविशेषनृपस्य च वध्वा सिंहिकया राज्ञ्या च कर्त्र्या दत्तानि यानि दन्तक्षतानि करजैर्नखैर्विपाटितानि विदारणानि च तानि जातस्पृहैः (वयमप्येवंविधा भूयास्मेति)जाताभिलाषैः मुनिभिरपि अवलोकितानि दृष्टानीत्यर्थः। अपिर्विरोधे गतस्पृहाणां मुनीनामपि तदुद्रेकादिति बोध्यम्। (वसन्ततिलका)छन्दः। अत्र यथा कामुकस्य कान्तादत्तदन्तक्षतादीन्यवलोक्य परः शृङ्गारी अहमप्येवं भूयासमिति जाताभिलाषो भवति तथा जिनस्य सिंहीदत्तदन्तक्षतादीन्यवलोक्य मुनयोऽपि वयमप्येवं दयालवो भूयास्मेति जाताभिलाषा भवन्तीत्यर्थबोधात्, दन्तक्षताद्यात्मकोद्दीपनविभावरूपयोरङ्गयोः साम्यविवक्षयाऽङ्गिनोरपि मुनिनिष्ठपरशृङ्गारिनिष्ठयो-

क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः पातितयावकैरिव गलद्बाष्पाम्बुधौताननाः ।
भीता भर्तृकरावलम्बितकरास्त्वच्छत्रुनार्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव ॥ ३३८ ॥

अत्र चाटुके राजविषया रतिः प्रतीयते। तत्र करुण इव शृङ्गारोऽप्यङ्गमिति तयोर्न विरोधः । यथा—

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥ ३३९ ॥

इत्यत्र एहीति क्रीडन्ति गच्छेति क्रीडन्तीति क्रीडनापेक्षयोरागमन–गमनयोर्न विरोधः ।

---

**दयावीरशृङ्गारयो रसयोः साम्यं विवक्षितमिति न तयो रसयोर्विरोधरूपो दोषस्तदाह–अत्रेति । एतदृशः सिंहीदत्तजिनशरीरस्थदन्तक्षतादिद्रष्टार इति दिक् ॥ ३३७ ॥**

**अङ्गिनीति तृतीयप्रकारे एकत्राङ्गिनि विरुद्धयोरङ्गत्वं द्विधा भवति राज्ञि सेनापतिद्वयवत्, तुल्यकक्षतया राज्ञि सेनापतितद्भृत्यवत् परस्याङ्गत्वमापाद्य वा, तत्राद्येनाविरोधो यथेत्युदाहरति–क्रामन्त्य इति। राजानं प्रति कवेरुक्तिः। हेराजन्! त्वद्वैरिनार्यः अधुना क्षता दर्भाङ्कुरैर्विद्धा याः कोमलाङ्गुलयस्ताभ्यो गलद्रक्तं येषु तादृशैः अत एव पातितयावकैरिव दत्तालक्तकैरिव पादैः सदर्भाः सकुशाङ्कुराः स्थलीः प्रदेशान् क्रामन्त्यः लङ्घयन्त्यः। गलता पतता बाष्पाम्बुना अश्रुजलेन धौतं प्रक्षालितमाननं यासान्ताः। बाष्पपतनं शोकेन होमधूमेन च । भीता भययुक्ताः । भर्तुः पत्युः वरस्य च करेणावलम्बिता गृहीताः । यद्वा करेऽवलम्बिताः स्थापिताः कराः स्वकराः यासां तथाभूताः। अत एव पुनरप्युद्यद्विवाहा इव जायमानपरिणया इव दावाग्निं वनवह्निं वैवाहिकाग्निं च परितः समन्ततो भ्रमन्ति पर्यटन्ति परिभ्रमणं च कुर्वन्तीत्यर्थः शार्दूलविक्रीडितं छन्दः। अत्र प्रधानभूते राजविषयकरतिभावे द्वावपि करुणशृङ्गारौ राज्ञि सेनापतिद्वयवत् साक्षादङ्ग इति न विरोधः। तदाह–अत्रेति। चाटुके प्रियवाक्ये तत्र रतौ तयोः करुणशृङ्गारयोः अत्र शोच्यावस्थातः करुणो विवाहावस्थातश्च शृङ्गारः ॥ ३३८ ॥**

**प्रधानस्य साक्षादङ्गभूतयोर्विरोधिनोरप्यविरोधं दृष्टान्तेन द्रढय-**

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण ।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शांभवो वः शराग्निः ॥३४०॥

इत्यत्र त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गम् तस्य तु शृङ्गारः तथापि न करुणे विश्रान्तिरिति तस्याङ्गतैव। अथवा प्राक् यथा कामुक आचरति स्म तथा शराग्निरिति शृङ्गारपोषितेन करुणेन मुख्य एवार्थ उपोद्बल्यते । उक्तं हि—

---

ति–यथेति । पञ्चतन्त्रे पद्यमिदम् । धनिनो धनिका नरा एहि आगच्छ गच्छ पत उत्तिष्ठ वद मौनमभाषणं समाचर धारय इत्येवंप्रकारेण अर्थिभिर्याचकैः सह क्रीडन्ति कीदृशैः आशा वाञ्छैव रव्यादिरूपो ग्रहस्तैरभिभूतैरित्यर्थः । अत्र गमनागमनयोः पतनोत्थानयोर्वचनमौनाचरणयोश्च स्वभावतो विरुद्धत्वेऽपि मिलित्वा क्रीडातिशयत्वाद्यथा न विरोधस्तथा प्रकृतेऽपि करुणाशृङ्गारयोः स्वभावतो विरुद्धत्वेऽपि राजविषयकरतिभावपोषकत्वान्न विरोध इत्याह–इत्यत्रेति ॥ ३३९ ॥

तृतीयप्रकारस्य द्वितीयभेदमुदाहरति–क्षिप्त इति । अमरुशतके पद्यमिदम् स त्रिपुरदाहकालिकः शाम्भवः शराग्निर्बाणाग्निः वो दुरितं, दहतु, स कः यः आर्द्रापराधः तत्कालकृतापराधः कामीव प्रणयीव हस्तावलग्नः हस्तस्पर्शङ्कुर्वन् सन् साश्रुनेत्रोत्पलाभिः अश्रुसहितं नेत्रे यासां तथाभूताभिः त्रिपुरयुवतिभिः क्षिप्तः प्रक्षिप्तः । तथा प्रसभं बलात् अंशुकान्तं वस्त्रप्रान्तमाददानो गृह्णन् सन्नपि अभिहतस्ताडितः । तथा केशेषु गृह्णन् सन् अपास्तो दूरीकृतः। कामिनाऽपि चुम्बनाय केशग्रहणम् । तथा चरणयोर्निपतितः सन् सम्भ्रमेण भयेन आदरेण च नेक्षितो नावलोकितः । तथा आलिङ्गन् सन् अवधूतो निराकृत इत्यर्थः। अत्र करुणशृङ्गाराङ्गिभावेन प्रधानाङ्गतया विरोधाभाव इत्याह–इत्यत्रेति । अङ्गमिति । करुणोद्दीपनविभावस्य त्रिपुरस्त्रीवैक्लव्यस्य त्रिपुररिपुप्रभावातिशयाधीनत्वादिति भावः। त्रिपुररिपुप्रभावातिशयस्य त्रिपुररिपुविषयकरतिभावे करुणोऽङ्गमिति पर्यवस्यति। तस्य तु करुणस्य शृङ्गारः अङ्गमिति शेषः । नन्वेवमपि शृङ्गारेण परिपुष्टः करुणः प्रधानमेव न त्वङ्गमत आह–तथापीति । विश्रान्तिः प्रकर्षपर्यवसानम् तस्य करुणस्य अङ्गतैव शृङ्गारापेक्षया प्रधानत्वेऽपि प्रभावा-

गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते
प्रधानस्योपकारे हि तथा भूयसि वर्तते ॥ इति ।

प्राक्प्रतिपादितस्य रसस्य रसान्तरेण न विरोधो नाप्यङ्गाङ्गिभावो भवति इति रसशब्देनात्र स्थायिभाव उपलक्ष्यते ॥

इति काव्यप्रकाशे दोषदर्शनो नाम सप्तमोल्लासः ॥ ७ ॥

---

**तिशयेऽङ्गत्वमेवेति भावः । उक्तार्थे हेतुं दर्शयति ।** अथ वेति । **अथवेति यत इत्यर्थे अव्ययानामनेकार्थत्वमिति न्यायात् प्राक् पूर्वम् कामुकः प्रणयी आचरति स्म, करावलम्बनादिकमकार्षीत् मुख्यः त्रिपुर-रिपुविषयकरतिभाव उपोद्बलयते उद्बलः क्रियते । अत्र करुणे न विश्रान्तिरिति भावः । प्रभावातिशयाङ्गकरुणाङ्गस्यापि शृङ्गारस्य प्रधानप्रभावातिशयाङ्गत्वमित्युक्तेऽर्थे न्यायानुग्रहं दर्शयति**—उक्तं ही-ति । **गुणः अप्रधानं कृतः आत्मनः स्वस्य संस्कारोऽन्येन परिपुष्टि-र्यस्य तादृशः सन् प्रधानमाङ्गिनं प्रतिपद्यते प्राप्नोति, तथा आत्मसं-स्कारेण प्रधानस्याङ्गिनः भूयसि महति उपकारे वर्तते इति न्यायार्थः। एवंचानेन न्यायेन शृङ्गारोपकृतस्य करुणस्योपकारविशेषाधायकतया शृङ्गारस्याप्युपकारकत्वेन प्रभावातिशयाङ्गत्वमुपपन्नमिति भावः । ननु विगलितवेद्यान्तरत्वं वेद्यान्तरसंपर्कशून्यत्वम् रसस्व-रूपम् , तथाच एकदा द्वितीयाभावात्कथं रसस्य रसान्तरेण विरोधः कथं वाऽङ्गाङ्गिभाव इत्यसम्बद्धमेवैतत्सर्वमित्याशङ्कायामाह**-प्रागित्यादि **चतुर्थोल्लासे ।** रसशब्देनेति । **रस्यते आस्वाद्यते इति व्युत्पत्त्या रस-शब्देन स्थायिभावोऽभिधीयते इत्यर्थ इति शिवम् ॥ ३४० ॥**

**इति काव्यप्रकाशे नागेश्वरीटीकायां सप्तमोल्लासः ।**

## अथाष्टमोल्लासः ॥

(८७) ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥ ६६ ॥

आत्मन एव हि यथा शौर्यादयो नाकारस्य तथा रसस्यैव माधुर्यादयो गुणा न वर्णानाम् । क्वचित्तु शौर्यादिसमुचितस्याकारमहत्त्वादेर्दर्शनात्, 'आकार एवास्य शूरः' इत्यादेर्व्यवहारादन्यत्राशूरेऽपि वित-

एवं दोषे निरूपिते गुणालंकारौ प्राप्तावसरौ तयोर्गुणस्यान्तरङ्गतया प्राथम्यम् । विप्रतिपद्यन्ते हि केचिद्गुणालङ्कारयोर्भेदे । किञ्च सामान्यतो लक्षिते विशेषलक्षणमुचितमिति कारिकाद्वयेन तयोः स्वरूपदर्शनमुखेन लक्षणं दर्शयन्नेव भेदकमाह–ये रसस्येति । रसस्याङ्गिन इत्यभेदान्वयः अङ्गिनः प्रधानस्य रसस्य धर्माः साक्षात्सम्बद्धाः ते गुणा इत्यर्थः । अत्र समुचितदृष्टान्तमाह–शौर्यादय इति । शौर्य्यं ज्ञानविशेषः स च यथा चेतनस्य जीवात्मन एव नाचेतनस्य शरीरस्य तथा काव्ये आत्मस्थानीयस्य रसस्य शृङ्गारादेर्ये धर्माः साक्षात्तदाश्रिताः ते गुणा इत्यर्थः । गुणानां रसधर्मत्वकथनेन नालङ्कारेष्वतिप्रसङ्गः तेषां रसधर्मत्वाभावात् । नन्वेवमपि रसत्वे स्थायित्वे रसदोषेषु चातिप्रसङ्गः तेषां रसधर्मत्वादित्यत आह—उत्कर्षहेतव इति । रसोत्कर्षस्य हेतुभूताः । रसस्योत्कर्षश्च अनुभवसिद्धश्चित्तद्रुत्यादिरूपकार्यविशेषप्रयोजकत्वरूपः । एवं च रसधर्मत्वं सति रसोत्कर्षकत्वं गुणलक्षणं फलितम् । अथवा रसधर्मत्वं नोपादेयमिति मनसि निधायाह–अचलेति । अचलाऽव्यभिचारिणी स्थितिर्येषां ते तथा च ये रसं विना नावतिष्ठन्ते, अवस्थिताश्चावश्य रसमुपकुर्वन्ति ते गुणा इत्यर्थः । एवं च रसोत्कर्षकत्वे सति रसाव्यभिचारिस्थितित्वमव्यभिचारेण रसोपकारकत्वं चेति लक्षणद्वयं फलितम्, अलङ्काराणान्तु रसव्यभिचारिस्थितित्वेन नियमेन रसोपकारकत्वाभावेन च तेषु नातिप्रसंग इति दिक् ॥ ६६ ॥

तदेतत्सर्वमभिप्रेत्य वृत्तिकारो दृष्टान्तमुखेन वर्णादीनामेव धर्मा गुणा इति वामनमतं निराकुर्वन् सूत्रं व्याचष्टे–आत्मन इति । आकारस्य शरीरस्य न वर्णानामिति शरीरस्य शौर्यादयो न धर्माः मृतशरीरे व्यभिचारादिति लोके यथा प्रसिद्धं तथा माधुर्यादयो रसस्यैव धर्मा न

ताकृतित्वमात्रेण 'शूर' इति क्वापि शूरेऽपि मूर्तिलाघवमात्रेण 'अशूरः' इति अविश्रान्तप्रतीतयो यथा व्यवहरन्ति तद्वन्मधुरादिव्यञ्जकसु-कुमारादिवर्णानां मधुरादिव्यवहारप्रवृत्तेरमधुरादिरसाङ्गानां वर्णानां सौकुमार्यादिमात्रेण माधुर्यादिमधुरादिरसोपकरणानां तेषामसौकुमार्यादे-रमाधुर्यादि रसपर्यन्तप्रतीतिवन्ध्या व्यवहरन्ति । अत एव माधुर्यादयो रसधर्माः समुचितैर्वर्णैर्व्यज्यन्ते न तु वर्णमात्राश्रयाः। यथैषां व्यञ्जकत्वं तथोदाहरिष्यते ॥

(८८) उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।
हारादिवदलंकारास्तेऽनुप्रासोपमादयः ॥ ६७ ॥

ये वाचक-वाच्य-लक्षणाङ्गातिशयमुखेन मुख्यरसं सम्भविनमुपकु-

---

वर्णानामिति भावः। ननु मधुरा वर्णा इति लोकव्यवहारात् गुणस्य वर्ण-धर्मत्वं स्यात् उक्तं च "गुणस्य वर्णधर्मत्वं वामनादिभिरपि" इत्याशं-क्य अभियुक्ता औपचारिकं वर्णधर्मत्वमादाय मधुरा वर्णा इति व्यवह-रन्ति। न वास्तविकी गुणस्य वर्णधर्मत्वसिद्धिरिति सदृष्टान्तं सिद्धान्त-यति—क्वचित्त्विति व्यवहरन्तीत्यन्तेन । समुचितस्य व्यञ्जकस्य म-हत्त्वमारोहपरिणाहवत्त्वम् । अस्य पुरुषस्य अविश्रान्तेति । न विश्रान्ता याथार्थ्ये पर्यवसन्ना प्रतीतिर्येषां ते अदूरदर्शिनो भ्रान्ता इत्यर्थः । एवं दृष्टान्ते भ्रमबीजं प्रदर्श्य दार्ष्टान्तिकेऽपि तद्दर्शयति तद्वदिति । व्यवहार-प्रवृत्तेः अभियुक्तानामौपचारिकस्य मधुरादिव्यवहारस्य प्रवृत्तेः । अमधुरादिरसो वीरादिरसस्तदङ्गानां तद्व्यञ्जकत्वेनोपात्तानाम् सौ-कुमार्यादिमात्रेण माधुर्यादिविरहेऽपि मृदुत्वादिना । माधुर्यादीति । माधुर्यादि अमाधुर्यादि च व्यवहरन्तीत्यन्वयः । मधुरादिरसोपेति, श्रृङ्गारादिरसव्यञ्जकत्वेनोपात्तानामित्यर्थः । तेषां वर्णानाम् । रस-पर्यन्तेति । रसस्य पर्य्यन्ते सीमायां विश्रान्ताः पर्यवसन्ना रसमर्यादा-ग्राहिणां या प्रतीतिस्तया वन्ध्या हीनाः माधुर्यादिन शब्दवृत्ति किन्तु रसवृत्तीत्यजानन्तो वामनादय इति यावत्। तदेतत्सर्वं सूचयन्नाह— अत एवेत्यादि । रसनैयत्यादेव समुचितैर्योग्यैर्वर्णैः वर्णादिभिः । उदा-हरिष्यते, अत्रैवोल्लासे अनंगरङ्गप्रतिममित्यादिना ॥

अलङ्कारेषु उक्तगुणधर्मराहित्यं दर्शयितुमलङ्कारस्वरूपमाह— उपकुर्वन्तीति । ये धर्माः अङ्गद्वारेण अङ्गिनो रसस्याङ्गभूतौ शब्दार्थौ तद्द्वा-रेण तदुत्कर्षजननमुखेन तमङ्गिनं रसं सन्तं संभविनं जातुचित्कदा-

र्वन्ति ते कण्ठाद्यङ्गानामुत्कर्षाधानद्वारेण शरीरिणोऽपि उपकारका हारादय इवालङ्काराः । यत्र तु नास्ति रसस्तत्रोक्तिवैचित्र्यमात्रपर्यवसायिनः क्वचित्तु सन्तमपि नोपकुर्वन्ति । यथाक्रममुदाहरणानि—

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।
अलमलमालिमृणालैरिति वदति दिवानिशं बाला ॥ ३४१ ॥

इत्यादौ वाचकमुखेन ।

---

चित् न तु नियमेन उपकुर्वन्ति उत्कर्षयन्ति ते धर्मा अनुप्रासोपमादयोऽलङ्कारा हारादिवत् यथा कण्ठाद्यङ्गोत्कर्षद्वारेण शरीरिणोऽप्युपकारका हारादयोऽलङ्कारा इति सूत्रार्थः । अमुमेव सूत्रार्थं दर्शयन्नादावङ्गद्वारेणेति व्याचष्टे—ये वाचकेति । वाचकः शब्दो वाच्योऽर्थस्तल्लक्षणं तद्रूपं यदङ्गं तदतिशयमुखेन तदतिशयाधानद्वारेणेत्यर्थः । तमिति तत्पदेनाङ्गिपरामर्शस्तदाह—मुख्यमिति । स तु प्रकृते रस इत्याह—रसमिति । सन्तमित्यस्यार्थमाह संभविनमिति । यत्र रसस्य सम्भवस्तत्र तमुपकुर्वन्ति यत्र तु तस्यासंभवस्तत्रोक्तिवैचित्र्यमात्रपर्यवसिता इति भावः । यथा हारादयोऽपि कामिनीसौन्दर्य्ये सति तदङ्गानामुत्कर्षकाः कुरूपाङ्गे तु दृष्टिवैचित्र्यमात्रहेतवस्तदेवाह—तत्र त्विति । उक्तिः काव्यम् वैचित्र्यं शब्दानां सुश्रवत्वं बन्धकौशलादि च । अर्थानान्तु ईषन्मनोहारितेति बोध्यम् । जातुचिदिति विवृणोति क्वचित्त्विति । सन्तमपि रसं क्वचिन्नोपकुर्वन्ति यथाऽतिसुकुमारनायिकाङ्गग्रामीणालङ्काराः ॥ ६७ ॥

तत्र शब्दद्वारेण रसोपकारकत्वमलङ्कारस्योदाहरति—अपसारयेति । दामोदरगुप्तकृते कुट्टनीमताख्ये काव्ये कस्याश्चिद्विरहिण्या वर्णनम्—हे आलि ! त्वं घनसारं कर्पूरमपसारय दूरीकुरु हारं मौक्तिकमालं दूरे एव कुरु, कमलैः पुष्पैः जलमलभूतैश्च किं न किमपि मृणालैर्बिसैः अलमलं न किमपि साध्यम् । इत्येवं प्रकारेण दिवानिशं सततं बाला तथाविधदुःखासहिष्णुः वदतीत्यर्थः । अत्र रेफानुप्रासः शब्दमलंकुर्वन् विप्रलम्भशृङ्गारमुपकरोति रेफस्य विप्रलम्भशृङ्गारगतमाधुर्य्यव्यञ्जकत्वादाह—इत्यादाविति । वाचकमुखेन शब्दद्वारेण अनुप्रासस्य शब्दालङ्कारत्वात् ॥ ३४१ ॥

मनोरागस्तीव्रं विषमिव विसर्पत्यविरतम्
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव ।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति न चाम्बा न भवती ॥ ३४२ ॥

इत्यादौ वाच्यमुखेनालङ्कारौ रसमुपकुरुतः ।

चित्ते विहट्टदि ण टुट्टदि सा गुणेसुं सेज्जासु लोट्टदि विसट्टदि दिम्मुहेसुं ।
बोलम्मि वट्टदि पवट्टदि कव्वबन्धे झाणेण टुट्टदि चिरं तरुणी तरट्टी ३४३

इत्यादौ वाचकमेव ।

---

अर्थद्वारेण रसोपकारकत्वमलङ्कारस्योदाहरति—मनोरागेति । मालतीमाधवे माधवानुरक्ताया मालत्या लवङ्गिकाम्प्रत्युक्तिः हे सखि! अद्य मम मनोरागो माधवविषयकचित्तानुरागोऽविरतं निरन्तरं तीव्रं विषमिव हलाहलमिव विसर्पति विविधप्रकारेण सर्वतः संचरति व्याप्नोति वा तत उत्कर्षं प्राप्तः प्रमाथी प्रकर्षेण मथनशीलः विधुतः वातेन प्रज्वालितः अत एव निर्धूमं यथा तथा पावक इव ज्वलति ततोऽप्युत्कर्षकाष्ठां गतः गरीयानतिशयेन गुरुः ज्वर इव सान्निपातिक इव प्रत्यङ्गं हिनस्ति पीडयति, इतः कारणात् इतो दुःसहानुरागात् मां त्रातुं तातः पिता न प्रभवति नन्दनरूपवरान्तरानुसरणात् राजानुवर्तनाच्च नचाम्बा माता प्रभवति । तथाऽपि तदप्रतिषेधात् । न भवती प्रभवति । पित्रोः सम्मते सख्याः प्रतिषेधासम्भवात् । मालोपमालङ्कारः । शिखरिणी छन्दः । अत्र विषमिवेत्यादिरुपमा, सा चार्थमलंकुर्वाणा रसमुत्कर्षयति विषमिवेत्युपमावशेन विसर्पणादेरतिशयप्राप्त्या विप्रलम्भोत्कर्षात्तदाह—इत्यादाविति ।। वाच्यमुखेन अर्थद्वारेण उपमाया अर्थालङ्कारत्वात् । अलंकाराविति-पूर्वोदाहरणे रेफानुप्रासः, अत्र तु मालोपमेत्यर्थः ॥ ३४२ ॥

स्वच्छन्दोच्छलदित्यादौ चित्रकाव्ये स्फुटरसं विनाऽप्यलङ्कारप्रदर्शनादत्र पुनर्नोदाहृतम् । सत्यपि रसे तदनुपकारकत्वं शब्दालंकारस्योदाहरति—चित्ते इति । कर्पूरमञ्जरीसट्टके कर्पूरमञ्जरीमुपक्रम्य सोत्साहमिव राजश्चण्डालपाकस्योक्तिः ।

चित्ते विघटते न त्रुट्यति सा गुणेषु
शय्यासु लुठति विसर्पति दिङ्मुखेषु ।
वचने वर्तते प्रवर्त्तते काव्यबन्धे
ध्यानेन त्रुट्यति चिरं तरुणी प्रगल्भा ॥

मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति
क्रन्दत्सु भ्रमरेषु वीक्ष्य दयितासन्नं पुरः सारसम् ।
चक्राह्वेन वियोगिना बिसलता नास्वादिता नोज्झिता
कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥ ३४४ ॥

इत्यादौ वाच्यमेव न तु रसम् अत्र बिसलता न जीवं रोद्धुं क्षमेति प्रकृताननुगुणोपमा ।

एष एव च गुणालङ्कारप्रविभागः । एवं च "समवायवृत्त्या शौर्यादयः संयोगवृत्त्या तु हारादय इत्यस्तु गुणालङ्काराणां भेदः, ओजः-प्रभृतीनामनुप्रासोपमादीनां चोभयेषामपि समवायवृत्त्या स्थितिरिति गड्डलिकाप्रवाहेणैवैषां भेदः" इत्यभिधानमसत् ।

---

**इति संस्कृतम् । तरङ्गी चलाक्षीति कश्चित् सा प्रगल्भा प्रतिभान्विता तरुणी चित्ते विघटते विशेषेण घटिता भवति गुणेषु न त्रुट्यति गुणविषये हीना न भवति शय्यासु लुठति मुहुर्मुहुः पार्श्व-परिवर्त्तनं करोति न तु स्वपिति दिङ्मुखेषु विसर्पति सर्वतः संचरति वचने वर्त्तते अविरतं प्रलपति काव्यबन्धे प्रवर्त्तते प्रवृत्ता भवति । चिरं चिरकालं ध्यानेन चिन्तया त्रुट्यति कृशा भवतीत्यर्थः । वसन्त-तिलका छन्दः । अत्र टवर्गानुप्रासः शब्दालंकारः स च शब्दमात्रं-मलंकरोति न तु सन्तमपि विप्रलम्भशृङ्गारं रसं टवर्गस्य शृङ्गारप्रतिकू-लत्वात् तदाह–**इत्यादाविति । **वाचकमेव शब्दमेवोपकरोतीत्यर्थः । न तु रसमित्यग्रिमेणान्वयः ॥ ३४३ ॥**

**सत्यपि रसे तदनुपकारकत्वमर्थालंकारस्योदाहरति–**मित्रे इति । **सन्ध्याकालिकचक्रवाकचेष्टावर्णनमिदम्–मित्रे सूर्ये सुहृदि च क्वापि अज्ञातदेशविशेषे गते सति सरोरुहवने कमलवने बद्धानने मुद्रिते मौनि-नि च ग्लायति शोकात्तप्यमाने च सति भ्रमरेषु भृंगेषु भ्रमं रान्तीति व्यु-त्पत्त्या पान्थेषु च क्रन्दत्सु शब्दायमानेषु रुदत्सु च सत्सु पुरः अग्रे दयितया कान्तया सारस्या आसन्नं युक्तं सारसं पक्षिविशेषं रसिकं च वीक्ष्य वियोगिना चक्रवाकीविच्छेदवता च चक्रवाकप-क्षिणा बिसलता मृणालवल्ली नास्वादिता न भुक्ता न वा उज्झिता त्यक्ता किन्तु केवलं निर्गच्छतो जिगमिषोर्जीवस्य अर्गलेव कण्ठे नि-हिता स्थापितेत्यर्थः । अत्रार्गलेवेत्युपमाऽर्थालंकारः स चार्थमेवोप-करोति । न तु सन्तमपि रसमित्याह–**इत्यादाविति । **वाच्यमेव जीव-**

यदप्युक्तम् "काव्यशोभायाः कर्त्तारो धर्मा गुणास्तदतिशयहेतवस्त्व-लङ्काराः" इति तदपि न युक्तम् यतः किं समस्तैर्गुणैः काव्यव्यवहार, उत कतिपयैः । यदि समस्तैः तत्कथमसमस्तगुणा गौडी पाञ्चाली च रीतिः काव्यस्यात्मा ।

---

निरोधरूपमर्थमेव न तु रसम् न तु सन्तमपि विप्रलम्भशृङ्गाररसम् न तु चक्रवाकगतविप्रलम्भाभासमिति यावत् । अत्र हेतुमाह—अत्रेति । अत्र एतादृशविप्रलम्भावस्थायाम् जीवं रोद्धुं जीवनिरोधाय न क्षमा नार्पयितुं योग्या । जीवनिरोधनिमित्तं कण्ठे बिसलताऽर्पणमनुचितमिति भावः । अत इयमुपमा प्रकृतं विप्रलम्भरसमपकर्षतीति तत्त्वम् ॥ ३४४ ॥

उक्तमुपसंहरति—एष एवेति । पूर्वोक्त एव । रसाधर्मत्व-चलस्थिति-त्वरूप एवेत्यर्थः । प्रविभागो भेदकः । भामहवृत्तौ भट्टोद्भटेनोक्तमुत्थाप्य दूषयति एव चेति । गुणालंकारयोरुक्तरीत्या भेदसत्त्वे चेत्यर्थः । अस्य असदित्यग्रिमेणान्वयः । दूषणीयं ग्रन्थमुपन्यस्यति—समवायवृत्त्येति । अयं भावः, लौकिका गुणालंकाराः शौर्यादिहारादयः समवेतत्व-संयुक्तत्वसम्बन्धेन तिष्ठन्तीति तेषां भेदोऽस्तु काव्ये पुनरलौकिकानां गुणालंकाराणां माधुर्याद्यनुप्रासोपमादीनामेकेनैव समवायसम्बन्धे नावस्थितिरिति भेदोऽनुपपन्नः तस्मात्तयोर्भेदाभिधानं गड्डलिकाप्रवाहन्यायेन यथा गड्डलिका मेषी काचिदेका केनचिद्धेतुना पुरो गच्छति इतरास्तु विनैव निमित्तविचारं तामनुगच्छन्ति, अग्रिमायाः कूपादिपाते इतरा अपि पतन्ति तथा केनापि प्राक्तनेन गुणालंकारौ कयाचिद्भ्रान्त्या भिन्नत्वेनोक्तौ इतरे आधुनिकास्तु विनैव हेतुविचारं तदनुसारेण तद्भेदं वदन्तीति तदसम्यग्वेदितव्यम् इति । इत्यभिधानमिति । इति एवंप्रकारेण कथनमित्यर्थः । असदिति । असम्यगित्यर्थः ।

अथ वामनोक्तं भेदलक्षणं दूषयितुमुपन्यस्यति—यदप्युक्तमिति । काव्यशोभायाः काव्यव्यवहारनिदानस्योत्कर्षस्य कर्तारो हेतवः । तदतिशयेति । तस्या गुणकृतशोभाया अतिशयस्याधिक्यस्य हेतवः । इति तयोर्भेद इत्यध्याहारः । दूषयितुं विकल्पयति—यत इत्यादि । काव्यशोभाहेतवो गुणा इत्युक्तं तत्र किं समस्तैर्गुणैः काव्यशोभोत्पत्तिः उत येन केनापीति । आद्येऽव्याप्तिमाह—यदीति । तत्कथमिति । गौडीपाञ्चाल्योर्वक्ष्यमाणयोर्माधुर्याद्यभावेन समस्तगुणाभावाच्छोभाया अनुत्पत्त्या शोभाहीनेन च काव्यत्वस्यैवाभावादिति भावः। एवमाद्येऽव्याप्तिमुक्त्वाऽन्त्येऽतिव्याप्तिमाह—अथेति । अथ शब्दः प्रश्नार्थकः।कतिपयै-

अथ कतिपयैः, ततः—

अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः ॥३४५॥

इत्यादावोजःप्रभृतिषु गुणेषु सत्सु काव्यव्यवहारप्राप्तिः ।

स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनी ।

अस्या रदच्छदरसो न्यक्करोतितरां सुधाम् ॥ ३४६ ॥

इत्यादौ विशेषोक्तिव्यतिरेकौ गुणनिरपेक्षौ काव्यव्यवहारस्य प्रवर्त्तकौ ।

इदानीं गुणानां भेदमाह—

**(८९) माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश ।**

एषां क्रमेण लक्षणमाह—

**(९०) आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम् ॥ ६८ ॥**

शृङ्गारे अर्थात् सम्भोगे द्रुतिर्गलितत्वमिव । श्रव्यत्वं पुनरोजः-प्रसादयोरपि ।

---

रसमस्तैर्येन केनापीति यावत् । तत इति । अस्य काव्यव्यवहारप्राप्तिरित्यत्रान्वयः । ओजःप्रभृतिषु वामनोक्तौजःप्रसादार्थव्यक्तिषु । काव्येति । वामनेन गुणमात्रेणैव काव्यव्यवहारस्वीकारात्तत्प्रसङ्गः । मन्मते तु तद्व्यवहारेऽलंकारापेक्षत्वान्नेति बोध्यम् ॥

एवं गुणलक्षणं दूषयित्वाऽलंकारलक्षणं दूषयति—स्वर्गेति । वरवर्णिनी उत्तमाङ्गना अनेन मानुषदेहेनैव स्वर्गप्राप्तिः स्वर्गसुखलाभः । तदेव व्यतिरेकेणोपपादयति—अस्या इति । अस्याः रदनच्छदस्याधरस्य रसः सुधाममृतं न्यक्करोतितरामतिशयेन तिरस्करोतीत्यर्थः । अत्र पूर्वार्धे विशेषोक्तिः उत्तरार्धे व्यतिरेकश्चालंकारः । एकगुणहानिकल्पनया शेषगुणदार्ढ्यकल्पना विशेषोक्तिः इति उपमेयस्य गुणातिरेकत्वव्यतिरेक इतिवामनोक्त्या प्रकृते दिव्यदेहरूपैकगुणहानिकल्पनायाः सुखदायकत्वादिरूपशेषगुणदार्ढ्यकल्पनायाः सत्त्वाद्विशेषोक्तिः अधररसस्योपमेयस्य सुधारसापेक्षयाऽऽधिक्येनोक्तेर्व्यतिरेकः ॥३४६॥

इदानीं गुणानामलंकारभेदे सिद्धे वामनोक्तदशविधत्वनिरासाय गुणभेदमाह—माधुर्येति । ते गुणा माधुर्यजौःप्रसादाख्यास्त्रय एव न पुनर्दशेत्यर्थः ।

श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोजः कान्तिसमाधयः ॥
इति वैदर्भमार्गस्य प्राणा दशगुणा मताः ।

(९१) करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम् ।

अत्यन्तद्रुतिहेतुत्वात् ।

(९२) दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति ॥ ६९ ॥

चित्तस्य विस्ताररूपदीप्तत्वजनकमोजः ।

(९३) बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण च ।

वीराद्बीभत्से, ततो रौद्रे सातिशयमोजः ।

(९४) शुष्केन्धनाग्निवत् स्वच्छजलवत्सहसैव यः ॥ ७० ॥

व्याप्नोत्यन्यत्प्रसादोऽसौ सर्वत्र विहितस्थितिः ।

अन्यदिति । व्याप्यमिह चित्तम् । सर्वत्रेति । सर्वेषु रसेषु सर्वासु रचनासु च ।

(९५) गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता ॥ ७१ ॥

गुणवृत्त्या उपचारेण । तेषां गुणानाम्—आकारे शौर्यस्येव ।

---

इति वामनोक्ता दश शब्दगुणा अर्थगुणाश्च नेत्यर्थः । तत्र माधुर्य्यस्य लक्षणमाह-आल्हादेति द्रुतिकारणमाल्हादकत्वमानन्दस्वरूपत्वं माधुर्यं न तु आनन्दजनकत्वम् शृङ्गारस्याह्लादस्वरूपत्वेनाह्लादहेतुत्वाभावात् । अत एव शृङ्गारे इति सार्थकम् । द्रुतिश्चेतसो गलितत्वमिव द्वेषादिजन्यकाठिन्याभावः । तथा च यद्दर्शेन श्रोतुर्निर्मनस्कतेव संपद्यते तत् आह्लादकत्वस्वरूपं माधुर्य्यं क्वासौ शृङ्गारे इति । भामहस्तु श्रव्यत्वं माधुर्यस्य लक्षणमाह तदयुक्तम् ओजःप्रसादयोरपि तत्सत्त्वेनातिव्याप्तेरित्याह—श्रव्यत्वमिति । श्रव्यत्वं श्रवणानुद्वेजकत्वम् ओजसि क्रोधादिकृतं दीप्तत्वमेवावगम्यते न माधुर्यं प्रसादे नियतवर्णाभावान्न माधुर्य्याभिव्यक्तिरिति भाव ॥ ६८ ॥

न केवलं सम्भोग एव माधुर्यं किन्तु करुणादावपीत्याह—करुणे इति । तत् माधुर्यं संभोगात्करुणे तस्मादपि विप्रलम्भे ततोऽपि शान्ते अतिशयान्वितमतिशयितमित्यर्थः । अतिशयान्वितत्वे हेतुमाह—अत्यन्तेति । हास्यादेरप्यपगामिनातिद्रुतिहेतुत्वादित्यर्थः । ओजो लक्षयति दीप्त्येति । दीप्तिर्दीप्तिरूपा ज्वलद्रूपा या आत्मनश्चित्तस्य विस्तृतिर्विस्तारस्तस्या हेतुः ओज इत्यर्थः । क्वेदमित्यत आह—वीरेत्यादि । वीरे रसे स्थितिरवस्थानं यस्य तदित्यर्थः । यद्वशाज्ज्वलितमिव मनो जायते तदोज इति फलितम् ॥ ६९ ॥

अस्यौजोगुणस्याधिकरणान्तरमाह—बीभत्सेति । वीराद्बीभत्से ततो-

कुतस्त्रय एव न दश इत्याह—

(९६) केचिदन्तर्भवन्त्येषु दोषत्यागात्परे श्रिताः ।
अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततो दश ॥ ७२ ॥

बहूनामपि पदानामेकपदवद्भासमानात्मा यः श्लेषः यश्चारोहावरोहक्रमरूपः समाधिः या च विकटत्वलक्षणा उदारता, यश्चौजोमिश्रितशैथिल्यात्मा प्रसादः । तेषामोजस्यन्तर्भावः । पृथक्पदत्वरूपं माधुर्यं भङ्ग्या साक्षादुपात्तम् प्रसादेनार्थव्यक्तिर्गृहीता । मार्गाभेदरूपा

---

ऽपि रौद्रे चित्तदीप्तेः सातिशयतया कारणमोजः क्रमेणोत्कर्षवदित्यर्थः । प्रसादं लक्षयति–शुष्केति । यथाग्निः शुष्कमिन्धनं सहसैव व्याप्नोति यथा वा जलं स्वच्छं पटं सहसैव व्याप्नोति तद्वद्यो गुणः अन्यद्व्याप्यं चित्तं सहसैव व्याप्नोति असौ सः प्रसादः विकासरूपो गुण इत्यर्थः । येन गुणेन रसाः सहसैव चित्तं व्याप्नुवान्त स प्रसाद इति यावत् । सर्वत्रेति । अयं प्रसादाख्यो गुणः सर्वेषु शृङ्गारादिरसेषु आधाराधेयत्वसंबन्धेन सर्वासु पदसंघटनरूपासु रचनासु व्यंग्यव्यंजकत्वसम्बन्धेन स्थित इत्यर्थः । ननु गुणानां रसधर्मत्वे कथं तत्त्ववेदिनां शब्दार्थयोर्माधुरादिव्यवहारः कथं वा काव्यलक्षणे शब्दार्थौ सगुणावित्युक्तमत आह–गुणवृत्त्येति । आत्मगुणानां शौर्यादीनां स्थूलशरीरे इव रसवृत्तीनां तेषां माधुर्यौजःप्रसादानां गुणानां व्यंजकेषु सुकुमरादिवर्णेषु अर्थेषु रचनासु च गौणप्रयोग इत्यर्थः । स्पष्टमन्यत् ॥

न पुनर्दश इत्युक्तन्तत्समर्थनार्थं कारिकामवतारयति–कुत इति । केचिदिति । ये दश गुणाः पूर्वनिर्दिष्टा वामनेनोक्तास्ते त्रिधा व्यवतिष्ठन्ते केचिद्गुणाः एषु मदुक्तलक्षणेषु माधुर्यादिषु अन्तर्भवन्ति परे इतरे दोषत्यागात् दोषाभावस्वरूपत्वात् दोषाभावव्यापकत्वाद्वा श्रिताः अङ्गीकृताः अन्ये कुत्रचिद्रसविशेषे उदाहरणविशेषे वा दोषत्वं भजन्ति दोषरूपत्वाद्गुणा एव न भवन्तीति हेतोः न दश गुणाः किन्तु त्रय एवेति सूत्रार्थः ।

अत्र पञ्चित्युत्तरलक्षणमलंकारध्वन्योरप्यन्तर्भावस्य दर्शयिष्यमाणत्वात् तदेतत्सर्वं प्रदर्शयन् वृत्तिकारः किं शब्दगुणान् दश ब्रूषे अर्थगुणान्वेति हृदि निधाय तत्राद्यं कल्पं निरस्यति— बहूनामित्यादि न दश शब्दगुणा इत्यन्तेन । तत्र श्लेष–समाधि–उदारता–प्रसादानामोजस्यन्तर्भावमाह–बहूनामिति । आरोहो गाढता अवरोहः शैथिल्यं तयोः क्रमः वैरस्याजनको विन्यासः यथा 'चंचद्भुजभ्रमित'

समता क्वचिद्दोषः । तथा हि 'मातङ्गाः किमु वल्गितैः' इत्यादौ सिंहाभिधाने मसृणमार्गत्यागो गुण कष्टत्वग्राम्यत्वयोर्दुष्टताभिधानात्तन्निराकरणेनापारुष्यरूपं सौकुमार्यम् औज्ज्वल्यरूपा कान्तिश्च स्वीकृता । एवं न दश शब्दगुणा' ।

---

त्यादिपद्ये । विकटत्वं विच्छेदात्पदानां नृत्यप्रायत्वम् । उदारता यथा 'स्वचरणविनिविष्टैर्नूपुरैर्नर्तकीनाम्' इत्यादौ । प्रसादो यथा 'यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः' इत्यादिवेणीसंहारपद्ये । अन्तर्भाव इति । चतुर्णामप्येषां गाढबन्धतया दीप्तिहेतुत्वादोजोव्यंजकरचनायामन्तर्भावः । गुम्फ-उद्धत-ओजसीति सूत्रे वक्ष्यमाणत्वात् ॥ पृथागति । पृथक्पदानि यस्य तस्य भावस्तत्त्वम् दीर्घसमासाभावरूपम् भंग्या माधुर्यव्यंजके अवृत्तिपदोपादानरूपया साक्षादुपात्तं कंठरवेणोक्तम् माधुर्य यथा 'स्थिताः क्षणं पक्ष्मसु ताडिताधरा' इत्यादिना कुमारसंभवे । प्रसादेन प्रसादाख्यगुणेन अर्थव्यक्तिः झटित्यर्थोपस्थापनसामर्थ्यम् सा यथा 'वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये' इति रघुवंशे । गृहीता उपात्ता तस्य गुणस्य प्रसादेऽन्तर्भाव इति भावः । मार्गाभेदेति । मार्गो वैदर्भ्यादिरीतिस्तस्याभेदोऽपरित्यागः । यया रीत्या उपक्रमस्तया रीत्या समापनं मार्गाभेदः तद्रूपा या समता सा क्वचिद्दोष एवेति तद्दर्शयति-मातङ्गा इति । व्याख्यातमिदं सप्तमोल्लासे । अत्र प्रारब्धस्य मसृणवर्णत्वस्य सिंहाभिधानेऽप्यत्यागो दोषायेति भावः । मार्गभेदे गुणत्वं दशयति-सिंहेति । गुण इति । सिंहापेक्षया मृदुत्वेन मातङ्गादीनां मृदुभिरेव वर्णैरुपक्रमः सिंहे तु कोपसम्बन्धात्तत्त्यागः समुचित इति भावः । समतोपयोगस्तु वृत्त्यनुप्रासालङ्कारे । दोषाभावत्वेन संग्रहणमाह-कष्टत्वेत्यादि । कष्टत्वं श्रुतिकटुत्वं ग्राम्यत्वं च पूर्वोक्तं अनयोर्दोषवत्त्वकथनात् तन्निराकरणेन तयोः परित्यागेन अपारुष्यं श्रुतिसुखावहत्वम् । औज्ज्वल्यं हालिकादिसाधारणपदविन्यासं वैपरीत्येनालौकिकशोभाशालित्वम् । स्वीकृतेति । अनिष्ठुराक्षरप्रायत्वं सुकुमारत्वं तच्च कष्टत्वरूपदोषाभावपर्यवसन्नम् ग्राम्यपदाद्यघटितत्वरूपोज्ज्वलत्वरूपा कान्तिः सापि ग्राम्यत्वरूपदोषाभावपर्यवसन्नेवेति सौकुमार्य्यं यथा-'अपसारय घनसारमि'त्यत्र । कान्तिर्यथा—

> निरानन्दः कौन्दे मधुनि विधुरो बालबकुले
> न साले सालम्बा लवमपि लवङ्गे न रमते ।
> प्रियङ्गौ नासङ्गं रचयति न चूते विचरति
> स्मरन् लक्ष्मीलीलाकमलमधुपानं मधुकरः ॥

पदार्थे वाक्यरचनं वाक्यार्थे च पदाभिधा
प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च ॥

इति या प्रौढिः ओज इत्युक्तं तद्वैचित्र्यमात्रं न गुण । तदभावेऽपि काव्यव्यवहारप्रवृत्तेः । अपुष्टार्थत्वाधिकपदत्वानवीकृतत्वामङ्गलरूपाश्लीलग्राम्याणां निराकरणेन च साभिप्रायत्वरूपमोजः, अर्थवैमल्यात्मा प्रसादः, उक्तिवैचित्र्यरूपं माधुर्यं, अपारुष्यरूपं सौकुमार्यम्,

इत्यत्र। एवं दशानां शब्दगुणानां त्रिष्वन्तर्भावमुपसंहरति—एवमिति ।

एवं दश शब्दगुणान्दूषयित्वा संप्रति उक्तश्लेषादिनामकान्दशार्थगुणान्दूषयति–पदार्थे इति तेन नार्थगुणा इत्यन्तेन । वामनादिमतेऽर्थगुणानां दशानां श्लेष इत्यादीन्येव नामानि लक्षणानि तु भिन्नानि । एकपदार्थस्य बहुभिः पदैरभिधानं पदार्थे वाक्यरचनम् बहूनां च पदार्थानामेकपदेनाभिधानं वाक्यार्थे पदाभिधा । एकवाक्यार्थस्यानेकवाक्येन प्रतिपादनं व्यासः अनेकवाक्यार्थस्यैकवाक्येन प्रत्यायनं समासः । अस्य विशेषणस्य साभिप्रायत्वं प्रकृतोपयुक्तत्वम् । एते पंच प्रकाराः प्रौढिरिति फलितोऽर्थः । तत्राद्या यथा चन्द्र इत्येकपदार्थे वक्तव्ये अत्रिलोचनसंभूतं ज्योतिरिति वाक्यकथनम् यथा वा चन्द्रपदार्थे 'अथनयनसमुत्थं ज्योतिरत्रेरि'ति वचनम्। द्वितीया यथा 'कान्तार्थिनी संकेतस्थानं गच्छती'ति वाक्यार्थे वक्तव्ये अभिसारिकेति पदाभिधानम्। यथा वा—

यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ॥

इति वाक्यार्थे स्वर्ग इति पदाभिधानम् । तृतीया यथा–परस्वं नापहर्त्तव्यमित्येकस्मिन्वाक्यार्थे वक्तव्ये परान्नं नापहर्तव्यं परवस्त्रापहारोऽनुचितः पराभरणाहरणमिहामुत्रानिष्टकरमित्यादिव्यासेन प्रतिपादनम्। चतुर्थी यथा 'ते हिमालयमामन्त्र्ये'त्यत्र एकेनैव वाक्येन नानावाक्यार्थीभूतस्यामन्त्रणादेरुक्तिः । एकवाक्ये बहुवाक्यार्थनिबन्धात्समास इति भावः। पंचमी यथा 'कुर्यां हरस्यापि पिनाकपाणेरि'त्यत्र पिनाकपाणेरिति साभिप्रायत्वमिति। इतीति इत्युक्तपंचप्रभेदा या प्रौढिः प्रतिपादनवैचित्र्यम् । ओज इति ।वामनादिभिरर्थगुणस्वरूपमोज इत्युक्तमित्यर्थः । तदिति वामनाद्युक्तमोजः । वैचित्र्यमात्रमिति । उक्ते वैचित्र्यं सौष्ठवं तन्मात्रमित्यर्थः । गुणत्वाभावे हेतुमाह ।

अग्राम्यत्वरूपा उदारता च स्वीकृतानि । अभिधास्यमानस्वभावो-क्त्यलङ्कारेण रसध्वनिगुणीभूतव्यङ्ग्याभ्यां च वस्तुस्वभावस्फुटत्वरूपा अर्थव्यक्तिः दीप्तरसत्वरूपा कान्तिश्च स्वीकृता । क्रमकौटिल्यानुल्बण-त्वोपपत्तियोगरूपघटनात्मा श्लेषोऽपि विचित्रत्वमात्रम् अवैषम्यस्वरूपा समता दोषाभावमात्रं न पुनर्गुणः । कः खल्वनुन्मत्तोऽन्यस्य प्रस्तावे-

---

तदभावेऽपीति । पदार्थे वाक्यरचनमित्यादिभिश्चतुर्भिर्विनापीत्यर्थः । इदानीं प्रौढेः पंचमप्रभेदं तथा प्रसादं माधुर्यं सौकुमार्यमुदारतां च दूषयति-अपुष्टार्थत्वेत्यादिना स्वीकृतानीत्यन्तेन । अर्थवैमल्यम् अपेक्षितार्थमात्रपरिग्रहः । उक्तिवैचित्र्यम् । एकस्यैवार्थस्य भंग्यन्तरेण पुनः कथनमुक्तिवैचित्र्यम् । अपारुष्येति । परुषेऽप्यर्थे वक्तव्येऽपरुषरूपेणाभिधानं यथा मृत इति वक्तव्ये कीर्तिशेषं गत इति । अग्राम्येति । ग्राम्येऽप्यर्थे वक्तव्ये विदग्धतयाऽभिधानम् यथा—

काम कन्दर्पचण्डालो मयि वामाक्षि ! निर्दयः ।
त्वयि निर्मत्सरो दिष्ट्या, इति ।

स्वीकृतानीति । तेषां तदनन्यत्वात् । अर्थव्यक्तिः स्वभावोक्त्यलंकारे कान्तिस्तु रसध्वनौ गुणीभूतव्यंग्ये वाऽन्तर्भवतीत्याह—अभिधास्यमानेति । दशमोल्लासे वक्ष्यमाणेत्यर्थः । वस्तुस्वभावेति । वस्तुनो वर्णनीयस्य डिम्भादेः स्वभावोऽसाधारणो रूपक्रियादिस्तस्य स्फुटत्वं स्फुटत्वेन वर्णनं तद्रूपेत्यर्थः । यथा—

कलक्वणनगर्भेण कंठेनाघूर्णितेक्षणः ।
पारावतः परिभ्रम्य रिरंसुश्चुम्बति प्रियामिति ॥

दीप्तरसेति । स्फुटप्रतीयमानरसत्वरूपेत्यर्थः । स्वीकृतेति । तयोस्तत्रैवान्तर्भाव इति भावः । श्लेषस्वरूपवर्णनपूर्वकं तस्य गुणत्वमेव नास्तीत्याह-क्रमेति । क्रमकौटिल्यमतिक्रमः तस्यानुल्बणत्वमस्फुटता तत्रोपपत्तिर्युक्तिस्तस्या योगः सम्बन्धस्तद्रूपा या घटना तदात्मा तद्रूपः श्लेषः । यथा 'दृष्ट्वैकासनसंस्थिते प्रियतमे' इत्यादौ । विचित्रत्वमात्रमिति । कवेर्वैदग्ध्यप्रतिपादनाद्वैचित्र्यमात्रं न गुणः रसोपकाराभावात् चुम्बनरूपसंभोगोपकारेऽपि छले एव चमत्कारातिशयात् । समताया दोषाभावेऽन्तर्भावमाह-अवैषम्येति । उपक्रान्तस्योपसंहारे परित्यागः प्रक्रमभंगदोषस्वरूपो वैषम्यं न वैषम्यमवैषम्यं तत्स्वरूपेत्यर्थः । यथा 'उदेति सविता ताम्र इत्यादौ' । प्रस्तावभंगे न केवलं रस एव हीयते किन्तु कविरप्यपराध्यतीत्याह-कः खल्विति । अभिदध्यात् कथयेत् न

ऽन्यदभिदध्यात्। अर्थस्यायोनेरन्यच्छायायोनेर्वा यदि न भवति दर्शनं तत् कथं काव्यम्–इत्यर्थदृष्टिरूप. समाधिरपि न गुणः।

(९७) तेन नार्थगुणा वाच्याः॥

वाच्याः वक्तव्याः।

(९८) प्रोक्ताः शब्दगुणाश्च ये॥

वर्णाः समासो रचना तेषां व्यञ्जकतामिताः॥ ७३॥

के कस्य इत्याह।—

(९९) मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू।

अवृत्तिर्मध्यवृत्ति र्वा माधुर्ये घटना तथा॥ ७४॥

---

कोऽप्यभिधत्ते इति भावः। अर्थदृष्टिरूपस्य समाधेः काव्यशरीरनिर्वाहकत्वमेव न गुणत्वमित्याह–अर्थस्येत्यादि। "अर्थदृष्टिः समाधिरि"ति वामनसूत्रम्। अयोन्यन्यच्छायायोनिरूपस्य द्विविधस्यार्थस्य दृष्टिर्दर्शनं समाधिः। समाधिनामको गुण इति तदर्थः। तत्रायोनिरर्थः कविसंप्रदायपरिशीलितपद्धतिमन्तरेण स्वबुद्धिविभवमात्रप्रादुर्भावितः उपमानोपमेयभावादिरूपः। यथा 'सद्योमुंडितमत्तहूणचिबुकप्रत्यर्थिनारङ्गकम्' इति। हूणः पाश्चात्यो यवनविशेषः चिबुकमोष्ठाधोभागः। अत्र नारङ्गकस्य हूणचिबुकेन सहोपमानोपमेयभावो न केनापि प्राक्तनकविना प्रदर्शितः केवलमेतत्कविनैव स्वबुद्ध्या प्रादुर्भावितः। अन्यच्छायायोन्यर्थस्तु प्राक्तनकविपरम्पराव्यवहृतः किंचिद्भंग्यन्तरेण वर्णितः यथा–

निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि।

नीलोत्पलेऽपि विमृशति करमर्पयितुं कुसुमलावी॥

इति अत्र नयननीलोत्पलयोः सादृश्यं कविसम्प्रदायप्रसिद्धं विच्छित्तिविशेषेणात्र निबद्धम्। न गुण इति। काव्यशरीरनिर्वाहकत्वादिति भावः॥

दशानां गुणत्वदूषणमुपसंहरति—तेनेति। वामनादिभिरङ्गीकृता अर्थगुणा उक्तयुक्त्या न पृथग्वक्तुमर्हा इत्यर्थः। ननु गुणवृत्त्या पुनस्तेषामित्यादिना शब्दगुणत्वेनोक्तानां माधुर्यादीनामभिव्यंजकाः के इत्याकांक्षायामाह-प्रोक्ता इति। गुणवृत्त्येति शेषः। वस्तुतो रसगुणा एवेति भावः। ये माधुर्यौजःप्रसादास्त्रयो गुणवृत्त्या उपचारेण शब्दगुणाश्च प्रोक्तास्तेषां गुणानां व्यञ्जकतां वर्णादय इताः प्राप्ता इत्यर्थः। वर्णा अक्षराणि समासो बहूनामेकपदता रचना पदसंघटना॥७३॥

के वर्णादयः कस्य गुणस्य व्यञ्जका इत्याकांक्षायामाह—मूर्ध्नीति।

ट-ठ-ड-ढ वर्जिताः कादयो मान्ताः शिरसि निजवर्गान्त्ययुक्ताः तथा रेफलकारौ ह्रस्वान्तरिताविति वर्णाः समासभावो मध्यमः समासो वेति समासः तथा माधुर्यवती पदान्तरयोगेन रचना माधुर्यस्य व्यञ्जिका । उदाहरणम्,—

अनङ्गरङ्गप्रतिमं तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः ।
कुर्वन्ति यूनां सहसा यथताः स्वान्तानि शान्तापरचिन्तनानि ॥३४७॥

**(१००) योग आद्यतृतीयाभ्यामन्त्ययो रेण तुल्ययोः ।**
**टादिः शषौ वृत्तिदैर्घ्यं गुम्फ उद्धत ओजसि ॥७५॥**

वर्गप्रथमतृतीयाभ्यामन्त्ययोः द्वितीय-चतुर्थयोः रेफेण अध उपरि

---

अटवर्गा इति व्याचष्टे-टठेति । स्पर्शा इति व्याचष्टे-कादय इति । मूर्ध्नि वर्गान्त्यगा इति व्याचष्टे-शिरसीति । स्वस्ववर्गान्त्यवर्णयुक्ता इत्यर्थः यथाऽनंगकुञ्ज इत्यादि रणाविति । व्याचष्टे-रेफणकाराविति ॥ लघू इति व्याचष्टे—समासेति । अत्राभावपदमीषदर्थकं तेनाल्पसमास इत्यर्थो बोध्यः । अनेन वैदर्भी रीतिरुक्ता । मध्यवृत्तिरिति व्याचष्टे-मध्यम इति । अस्य च मध्यमतो द्वित्रिचतुःपदकृता । एषा पाञ्चाली रीतिः शृंगारकरुणशान्तेषु । तथेत्यस्यार्थः—माधुर्यवतीति सौकुमार्यवतीत्यर्थः । शेषपूरणलब्धमाह—पदान्तरेति । पदान्तरयोगः सन्धिः यथा अलंकुर्विति पदयोः संधौ मधुरवर्णोत्पत्तिः ॥ ७४ ॥

वर्णादीनां माधुर्यव्यञ्जकत्वमुदाहरति—अनङ्गेति । अनङ्गस्य रङ्गो नृत्यस्थानं तत्प्रतिमं तत्सदृशं तत् अनुभवैकगोचरम् आनतस्तनभारेण ईषन्नतमङ्गं यस्यास्तादृश्याः रमण्याः अङ्गं भंगीभिः वशीकरणहेतुवदनगमनादिगतविशेषैः तथाङ्गीकृतं स्वयमादरेण गृहीतं यथा एता भंग्यो यूनां स्वान्तानि मनांसि शान्तानि अपरिचिन्तनानि येषान्तानि तथाभूतानि सहसा झटिति कुर्वन्तीत्यर्थः । अत्र गकारास्तकाराश्च स्वस्ववर्गान्त्यमूर्धानः ह्रस्वान्तरितो रेफश्चेति वर्णाः । अनङ्गरङ्गप्रतिममिति मध्यवृत्तिः प्रतिमं तदङ्गमिति अङ्गं भङ्गीभिरिति च माधुर्यवती रचना, तथा चात्र वर्णसमासरचनारूपं त्रयमपि विप्रलम्भशृङ्गारे माधुर्यस्य व्यंजकमिति ॥ ३४७ ॥

ओजोगुणव्यंजकान्याह—योग इति । वर्गाणामाद्यः प्रथमो वर्णस्तृतीयो वर्णस्ताभ्यां सह अन्त्ययोस्तदन्त्ययोः द्वितीयचतुर्थयोः योगः सम्बन्धः । तथा रेण रेफेण अधः उपरि उभयत्र वा यस्य कस्यापि

उभयत्र वा यस्य कस्य तुल्ययोस्तेन तस्यैव सम्बन्धः टवर्गोऽर्थात् णकारवर्जः शकारषकारौ दीर्घसमासः विकटा सङ्घटना ओजसः । उदाहरणं—

मूर्ध्नामुद्वृत्तकृत्तेत्यादि ॥ ३४८ ॥

(१०१) श्रुतिमात्रेण शब्दात्तु येनार्थप्रत्ययो भवेत् ।

साधारणः समग्राणां स प्रसादो गुणो मतः ॥ ७६ ॥

समग्राणां रसानां सङ्घटनानां च । उदाहरणम्—

परिम्लानं पीनस्तनजघनसङ्गादुभयतः

तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।

इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः

कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम् ॥ ३४९ ॥

---

योगः । यथा वक्त्रार्कनिह्लासादयः तथा तुल्ययोः सदृशयोः कयोश्चित् योगः यथा चित्तविच्चादौ तथा टादिः णकारवर्जं टादिचतुष्टयम् शषौ शकारषकारौ चेति वर्णाः । वृत्तिदैर्घ्यं दीर्घसमासः-उद्धतो विकटः गुम्फो रचना च ओजसि गुणे व्यंजकतामिता इति पूर्वेणान्वय इति कारिकार्थस्तदेव व्याचष्टे वर्गेति । स्पष्टमन्यत् ॥ ७५ ॥

मूर्ध्नामुद्वृत्तेति सप्तमोल्लासे व्याख्यानम् । अत्र मूर्ध्नामिति उत्सर्पिदर्पेति चोपरि रेफेण योगः, अङ्घ्रीत्यधो योगः, उद्वृत्तेति च तकारस्य तकारेणैव योगः, ईश-पिशुनशब्दयोः शकारः दोष्णामिति । षकारः समासदैर्घ्यं संघटनौद्धत्यं च स्पष्टमेव ॥ ३४८ ॥

प्रसादव्यंजकमाह—श्रुतिमात्रेणेति । येन शब्देन समासेन वा रचनया च श्रुतिमात्रेण शब्दादर्थप्रत्ययोऽभिधेयप्रतीतिर्भवेत्स प्रसादव्यञ्जक इत्यर्थः । समग्राणां समग्ररसवृत्तिरिति समग्राणां समासानां घटनानां चापेक्षित इति चार्थः । अत्र चाप्रसिद्धपदक्लिष्टत्वादिदोषाभावो निदानम् ॥ ७६ ॥

परिम्लानमिति । रत्नावल्यां सागरिकामुद्दिश्य वत्सराजस्योक्तिः । इदं बिसिनीपत्रशयनं कृशाङ्ग्याः संतापं विरहतापं वदति आवेदयति कथंभूतम् पीनयोः मांसलयोः स्तनजघनयोः संगात्संबन्धात् उभयतः पीनस्तनजघनस्थानयोः परिम्लानं शिथिलं शुष्कं वा तथा तनोः क्षीणस्य मध्यस्य मध्यभागस्य परिमिलनम् आमर्दनम्-अप्राप्य अन्तः मध्यभागे हरितं हरिद्वर्णम् तथा श्लथं शिथिलं यथा तथा भुजलतासम्बन्धी य आक्षेपोऽभिघातस्तस्य वलनैः सम्बन्धैः व्यस्तो विपरीतो न्यासो रचना यत्र तथाभूतम् । अत्र सङ्गात्कृशाङ्ग्या इत्यादौ

यद्यपि गुणपरतन्त्राः सङ्घटनादयस्तथापि,

(१०२) वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित्क्वचित् ।
रचनावृत्तिवर्णानामन्यथात्वमपीष्यते ॥ ७७ ॥

क्वचिद्वाच्यप्रबन्धानपेक्षया वक्त्रौचित्यादेव रचनादयः । यथा—

मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसङ्घट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽसौ ॥ ३५० ॥

अत्र हि न वाच्य क्रोधादिव्यञ्जकम् अभिनेयार्थं च काव्यमिति तत्प्रतिकूला उद्धता रचनादयः । वक्ता चात्र भीमसेनः ॥

---

माधुर्योचिता वर्णाः । मध्यमः समासः संघटना चानुद्धता । झटिति चान्वयबोधात्प्रसादः ॥ ३४९ ॥

नन्वेवं माधुर्यादावुद्धताद्यो रचनाद्याः सर्वत्र विरुद्धाः स्युरित्यतः प्रतिप्रसवमाह—यद्यपीति । गुणपरतन्त्रा गुणव्यंजकत्वनियताः संघटनादयः आदिना वर्णसमासौ । वक्तृवाच्येति । वक्ता कविर्वाच्यो वर्णनीयः प्रबन्धो महाकाव्यनाटकादिस्तेषामौचित्येन योग्यतावशात् क्वचित् कुत्रचित् रचना संघटना वृत्तिः समासः वर्णा अक्षराणि तेषामन्यथात्वं गुणपारतन्त्र्याभावोऽपि इष्यते । तथा चैषां गुणव्यञ्जकत्वनियम औत्सर्गिकः । वक्त्राद्यौचित्येन क्वचिद्बाधात् तद्भिन्नस्थल एव च गुणव्यञ्जकत्वनियम इति भावः ॥ ७७ ॥

तत्र क्वचिद्वाच्यप्रबन्धानपेक्षया वक्त्रौचित्यादेव रचनादीनामन्यथात्वं यथेत्युदाहरति—मन्थाय इति । वेणीसंहारे रणभूमौ दुन्दुभिध्वनिं श्रुत्वा भीमसेनस्योक्तिः । असौ दुन्दुभिर्दुन्दुभिशब्दः केनाति बलवता ताडितस्ताडनेनोत्पादितः कथंभूतः मन्थो मन्थनदण्डस्तेनायस्तं दूरमुत्क्षिप्तं यदर्णवाम्भस्तेन प्लुतं व्याप्तं यत्कुहरं गुहा तत्र चलतो मन्दरगिरेर्यो ध्वानो ध्वनिस्तद्वद्धीरो गम्भीरः । तथा कोणस्य वादनदण्डस्य आघातेषु ताडनेषु सत्सु । यद्वा—

भेरीशतसहस्राणि ढक्काशतशतानि च ।
एकदा यत्र हन्यन्ते कोणाघातः स उच्यते

इति परिभाषितेषु शब्देषु सत्सु गर्जन्तो ये प्रलयकालीनाः घनास्तेषां घटाः समूहास्तासामन्योन्यं परस्परं यः संघट्टः संहर्षः स इव

क्वचिद्वक्तृप्रबन्धानपेक्षया वाच्यौचित्यादेव रचनादय. । यथा—

प्रौढच्छेदानुरूपोच्छलनरयभवत्सैंहिकेयोपघात
त्रासाकृष्टाश्वतिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम् ।
कुर्वत्काकुत्स्थवीर्यस्तुतिमिव मरुता कन्धरारन्ध्रभाजाम्
भाङ्कारैर्भीममेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गम् ॥ ३५१ ॥

---

चण्डः प्रचण्डो दुःसहः । तथा कृष्णाया द्रौपद्याः क्रोधस्य अग्रदूतः भविष्यदर्थस्य प्रथमावेदकः । तथा कुरुकुलस्य दुर्योधनादेर्निधनार्थं मृत्यवे उत्पातरूपो निर्घातयुक्तो वातः । मेघवातयोः संघट्टजो ध्वनि- रशुभसूचको निर्घात उच्यते तथा योऽस्मत्सिंहनादस्तस्य च यत्प्रति रसितं प्रतिध्वनिस्तत्सखः तन्मित्रं तत्सदृश इत्यर्थः । अत्र वाच्यं न क्रोधादिदीप्तरसव्यंजकं प्रश्नरूपत्वात् प्रबन्धश्च नाटकात्माऽभिनयबो- धनीयार्थक इति दीर्घसमासत्वं प्रतिकूलम् दीर्घसमासेन अर्थप्रतिपत्तौ विलम्बाद् अभिनयेन झटिति प्रत्यायनासंभवाच्च क्रोधाभावेन तद्य- ञ्जकदीर्घसमासादेरनौचित्याच्च तथापि वक्ता भीमसेन इति वक्तुरौचि- त्यात् वक्तुरौद्धत्यव्यंजनाय उद्धता रचना च । तदेवाह—अत्र हीति । न क्रेवेति प्रश्नरूपत्वादिति शेष । नच प्रश्नविषयो दुन्दुभिशब्दस्तथा केनेत्यस्य केन कारणेनेत्यर्थात् युद्धेच्छया प्रवृत्तत्वसंदेहात् अत्रादि- नोत्साहस्य संग्रहः । अभिनेयः अंगादिक्रियया नायकाद्यवस्थानुकरण- रूपोऽर्थो यस्य तत् नाटकमित्यर्थः । तत्प्रतिकूलेति अभिनयस्थले हि झटित्यर्थप्रत्यायनमेवोचितं दीर्घसमासादिना तु तद्विलम्बादिति भावः । रचनादयः । आदिना दीर्घसमासवर्णयो संग्रह. । वक्तेति रौद्ररसप्रधाने वीरोद्धतो भीमसेनो ह्यत्र वक्ता स च समुद्धताभिधानस्वभावः एवं चेत्रं कृते सति तदालम्बनकं रसादिकमभिव्यक्तं भवतीति भावः ॥ ३५० ॥

क्वचित्तु वाच्यौचित्यादेव रचनादीनामन्यथात्वं यथेत्युदाहरति- प्रौढेति । छलितरामनाम्नि नाटके पद्यमिदम् । भीमं भयजनकमेतत्कु- म्भकर्णस्योत्तमांगं शिरः वियतः आकाशान्निपतति कीदृशं प्रौढेन बलवता प्रयुक्तो यश्छेदः करणव्युत्पत्त्या छेदजनकः खड्गाभिघातः त- दनुरूपं यदुच्छलनमूर्ध्वगमनन्तेन जनितो यो रयो वेगस्तेन भवन् जा- यमानो यः सैंहिकेयोपघातत्रासः राहूपनिपातभयं तेनाकृष्टा गमना- त्प्रतिषिद्धा ये अश्वास्तैस्तिर्यग्वलितस्तिर्यक्कृतः वक्रतया स्थापितः रविरथो येन तथाभूतेन अरुणेन अनूरुणा ईक्ष्यमाणं तथा कन्धरायाः ग्रीवाया यानि रन्ध्राणि तद्भाजां तत्प्रविष्टानां मरुतां वायूनां भांकारैः

क्वचिद्वक्तृवाच्यानपेक्षाः प्रबन्धोचिता एव ते । तथा हि-आख्यायिकायां शृङ्गारेऽपि न मसृणवर्णादयः, कथायां रौद्रेऽपि नात्यन्तमुद्धताः, नाटकादौ रौद्रेऽपि न दीर्घसमासादयः । एवमन्यदप्यौचित्यमनुसर्तव्यम् ।

इति काव्यप्रकाशे गुणालङ्कारभेदनियतगुणनिर्णयो नाम अष्टमोल्लासः॥८॥

---

भामितिशब्दै. काकुत्स्थवीर्यस्य रामपराक्रमस्य स्तुतिमिव कुर्वदित्यर्थः । अत्र वक्ता वैतालिकः प्रबन्धश्चाभिनेयात्मक इति दीर्घसमासोद्धतरचनादयो यद्यपि नोचितास्तथापि वाच्यस्य कुम्भकर्णोत्तमाङ्गस्य भीमत्वेनौजस्वितया औद्धत्यात्तदौद्धत्यव्यंजनायोद्धता रचनादयः॥ ३५१॥

प्रबन्धौचित्यादेव रचनादीनामन्यथात्वमुदाहर्तुमाह-क्वचिदिति । ते रचनादयः । आख्यायिका च प्रबन्धविशेष. । यथा बाणभट्टादिकृतो हर्षचरितादिः । तत्र हि शृंगारेऽपि व्यंग्येऽनुद्धतेऽपि वक्तरि नातिमसृणा वर्णादयः प्रत्युत विकटबन्धवत्त्वेनैव शोभावत्त्वम्-आख्यायिकायां गद्यप्राधान्यात् । गद्ये च विकटवर्णस्यैवाभ्यर्हितत्वात्-विप्रलम्भकरुणयोस्तु तस्यामपि न दीर्घसमासादि तयोरतिसौकुमार्यात् । कथायामिति । कथालक्षणं साहित्यदर्पणे—

कथायां सरसं वस्तु पद्यैरेव विनिर्मितम् ।
क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके ॥
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम् ।

यथा कादम्बर्यादि कथायान्तु रौद्रेऽपि व्यंग्ये नात्यन्तमुद्धता वर्णादयः । वर्णनीयस्य सुखप्रतिपत्तेरेवोद्देश्यत्वात् । नाटकादाविति । आदिशब्देन प्रकरणादिपरिग्रहः । नाटकादावभिनेये तु रौद्रेऽपि व्यंग्येन दीर्घसमासादयः विच्छेदेनाभिनयसौकुमार्यात् । एवं मुक्तकाद्यौचित्यमनुसरणीयमित्याह-एवमिति । एकैकच्छन्दसि वाक्यसमाप्तिर्मुक्तकम् । द्वयोः सन्दानितकं त्रिषु विशेषकम् चतुर्षु कलापकम् । पंचादिचतुर्दशान्तेषु कुलकम् द्वयोर्युग्ममिति तत्र मुक्तकेषु कवेः रसवत्त्वाभिनिवेशित्वे रसाश्रयमौचित्यम् । यथा शून्यं वासगृहमित्यादौ रसाभिनिवेशित्वाभावे तु कामचारः । संदानितकादिषु काव्यपरिसमाप्तेः यतो नैकस्याभावः अतो दीर्घमध्यमसमासतापि तत्र कार्या प्रबन्धगतेषु पुनस्तेषु प्रबन्धोचिता एव रचनादय इति दिक् ॥

इति काव्यप्रकाशे नागेश्वरीटीकायामष्टमोल्लासः ॥ ८ ॥

## ॥ अथ नवमोल्लासः ॥

गुणविवेचने कृतेऽलङ्काराः प्राप्तावसरा इति सम्प्रति शब्दालङ्कारानाह—

(१०३) यदुक्तमन्यथावाक्यमन्यथाऽन्येन योज्यते ।
श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा ॥७८॥

तथेति श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च । तत्र पदभङ्गश्लेषेण यथा—

नारीणामनुकूलमाचरसि चेज्जानासि कश्चेतनो
वामानां प्रियमादधाति हितकृन्नैवाबलानां भवान् ।
युक्तं किं हितकर्तनं ननु बलाभावप्रसिद्धात्मनः
सामर्थ्यं भवतः पुरन्दरमतच्छेदं विधातुं कुतः ॥ ३५२ ॥

---

एवं गुणे विवेचितेऽलङ्कारा विवेचनीयाः तत्रानलङ्कृती पुनः क्वापीति काव्यलक्षणेऽलंकारस्योक्तत्वाच्च काव्यलक्षणेऽर्थापेक्षया शब्दस्य प्राथम्येन तदलंकारस्यावसरसंगतया प्रथमं वक्तुमुचितत्वम् ते च शब्दालङ्काराः—

वक्रोक्तिरप्यनुप्रासो यमकं श्लेषचित्रके ।
पुनरुक्तवदाभासः शब्दालंकृतयस्तु षड् ॥

इति प्राचां संमत्या प्रथमं वक्रोक्तिं लक्षयति—यदुक्तमिति । एकेन वक्त्रा, अन्यथा अन्याभिप्रायेण उक्तं यद्वाक्यं अन्येन श्रोत्रा श्लेषेण शब्दबोध्यान्तरेण काक्वा ध्वनिविकारेण वा अन्यथा अन्यार्थकतया योज्यते संगम्यते सा वक्रोक्तिः सा च तथा द्विधा श्लेषवक्रोक्तिः काकुवक्रोक्तिश्चेति द्विविधेत्यर्थः । अपह्नुतौ स्वोक्तेः स्वयमेवान्यथाकरणान्नातिव्याप्तिः ॥ ७८ ॥

तत्र श्लेषो द्विविधः सभंगपदोऽभङ्गपदश्चेति तत्र सभङ्गपदश्लेषेण या वक्रोक्तिस्तामुदाहरति—नारीणामिति । चेद्यदि नारीणामनुकूलमाचरसि तदा जानासि अभिज्ञोऽसि इति वक्त्रभिप्रायकं वाक्यं अरीणां अनुकूलं नाचरसि चेत्तदा जानासीत्यर्थपरत्वेन योजयित्वा श्रोता आह कश्चेतनो ज्ञानवान् वामानां प्रतिकूलानां प्रियं हितमादधाति आतनोति काक्वा कोऽपि नादधातीत्यर्थः । वामानामित्यस्य नारीणामित्यर्थपरतया योजयित्वा प्रथमः पुनराह भवान् अबलानां स्त्रीणां

अभङ्गश्लेषेण यथा—

अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता ।
त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित् ॥ ३५३ ॥

काक्वा यथा—

गुरुजनपरतन्त्रतया दूरतरं देशमुद्यतो गन्तुम् ।
अलिकुलकोकिलललिते नैष्यति सखि ! सुरभिसमयेऽसौ ॥३५४॥

---

हितकृत् प्रियकारको नैव भवतीत्यर्थः । अथापरः अबलानां दुर्बलानां हितं कृन्तति छिनत्तीति व्युत्पत्त्या हितकर्त्तनार्थकतया योजयित्वा आह बलाभावेन शक्त्यभावेन प्रसिद्ध आत्मा स्वरूपं यस्य तादृश-जनस्य हितकर्तनं किं युक्तम् अपितु नेत्यर्थः प्रथमस्तु बलस्य ब-लनाम्नोऽसुरविशेषस्याभावेन नाशेन प्रसिद्धस्वरूपस्य इन्द्रस्य हित कर्तनं किं युक्तमपि तु नेत्यर्थपरतया योजयित्वा पुनराह पुरन्दरस्ये-न्द्रस्य यन्मतमिष्टन्तस्य छेदो नाशस्तं विधातुं कर्त्तुं भवतस्तव कुतः सामर्थ्यं सामर्थ्ये सति युक्तायुक्तविचारस्तदेव भवतो नास्तीति भावः । अत्र वक्त्राऽन्याभिप्रायेणोक्तस्य वाक्यस्य श्रोत्रान्यार्थकतया योजित-त्वाद्वक्रोक्तिरलंकारः । अस्मिन्नलंकारे तत्तच्छब्दानां परिवृत्त्यसहत्वेन शब्दस्यैव चमत्काराधायकतया चास्य शब्दालङ्कारत्वम्—एवमग्रि-माणामपि बोध्यम् ॥ ३५२ ॥

अभंगमात्रपदेन श्लेषेण या वक्रोक्तिस्तामुदाहरति—अहो इति । अत्र दारुणेति क्रूरेत्यर्थकत्वेन वक्तुरभिप्रेतम् प्रकृत्यादित्वादभेदार्थक-तृतीयया केन दारुणा काष्ठेनेत्यर्थपरतयाऽन्यो योजितवान् । त्रिगुणेति । प्रकृतिपरिणामतया बुद्धेः सत्त्वरजस्तमोरूपत्रिगुणात्मकत्वमिति सां-ख्यसिद्धान्तः स्पष्टमन्यत् ॥ ३५३ ॥

काकुवक्रोक्तिमुदाहरति—गुरुजनेति । प्रवासं जिगमिषौ नायके ना-यिकायाः सख्याश्च उक्तिप्रत्युक्ती । हे सखि ! गुरुजनपरतन्त्रतया पि-त्रादिपराधीनतया दूरतरं देशं गन्तुमुद्यत उद्युक्तोऽसौ कान्तः अलि-कुलैर्भ्रमरसमूहैः कोकिलैश्च ललिते रमणीये सुरभिसमये वसन्तकाले नैष्यति नागमिष्यतीति वक्त्रभिप्रायः । सख्या तु न एष्यति अपि तु एष्यत्येवेत्यर्थतया योजयित्वा तदेव वाक्यं श्रावितमिति काकुवक्रो-क्तिः काकोश्च शब्दधर्मतया शब्दालंकारत्वम् ॥ ३५४ ॥

(१०४) वर्णसाम्यमनुप्रासः।

स्वरवैसादृश्येऽपि व्यञ्जनसदृशत्वं वर्णसाम्यम्। रसाद्यनुगतः प्रकृष्टो न्यासोऽनुप्रासः।

(१०५) छेकवृत्तिगतो द्विधा।

छेका विदग्धाः वृत्तिर्नियतवर्णगतो रसविषयो व्यापारः। गत इति छेकानुप्रासो वृत्त्यनुप्रासश्च।

किन्तयोः स्वरूपमित्याह—

(१०६) सोऽनेकस्य सकृत्पूर्वः।

---

अथावृत्तिनिबन्धनेष्वलंकारेषु लक्षणीयेषु रसोनुगुणतयाऽनुप्रासः प्रथमं लक्षणीयः स द्विविधः वर्णानुप्रासः पदानुप्रासश्च तत्राद्योऽवाचकवर्णमात्रावृत्तौ द्वितीयस्तु वाचकपदावृत्ताविति वस्तुस्थितिः तत्राद्यं लक्षयति वर्णेति। अव्यवधानेन वर्णमात्रविन्यासो वर्णानुप्रास इत्यर्थः। शब्दसाम्यत्वमनुप्राससामान्यलक्षणम्। वर्णपदं व्यंजनपरम् अतो व्यंजनवैसादृश्ये विरिंचिपदादौ नातिव्याप्तिः। सूत्रं व्याष्टे-स्वरेति। वैसादृश्येऽपि वैलक्षण्येऽपि। अनुप्रासपदस्य योगार्थमाह-रसाद्यनुगत इति। रसाद्यनुगतः प्रकृतरसव्यञ्जकवर्णसम्बन्धित्वेन प्रकृतरसानुकूलः प्रकृष्टः अनतिव्यवहिततया चमत्कृत्याधायकः न्यासः आवृत्तिः तथा चानतिव्यवहितत्वेन चमत्कृत्याधायिका प्रकृतरसव्यञ्जकसदृशवृत्तिरनुप्रास इति फलितम्॥

अनुप्रासो हि द्विविधः वर्णानुप्रासः शब्दानुप्रासश्चेति तत्र निरर्थकवर्णानुप्रासः प्रथमः सार्थकवर्णानुप्रासो द्वितीयः तत्र प्रथमं विभजति—छेकवृत्तीति। गतपदस्य द्वन्द्वान्ते श्रूयमाणत्वादुभयत्रान्वयः छेकगतो वृत्तिगतश्चेति द्विविधः छेकानां विदग्धानां प्रचुरप्रयोज्यः। वृत्तिगतो वृत्त्याश्रितः वृत्तिश्च मधुरादिरसानुगुणनियतमसृणादिवर्णगतो रसविषयो व्यापारो व्यंजनाख्यः।

सूत्रद्वयमेकदैवावतारयति-किन्तयोरिति। तयोः छेकानुप्रास-वृत्त्यनुप्रासयोः स्वरूपं स्वे लक्ष्यपदार्थे रूप्यते लक्ष्यतेऽनेनेति व्युत्पत्त्या स्वरूपं लक्षणमित्यर्थः। सोऽनेकस्येति। अनेकस्य व्यञ्जनस्य सकृदेकवारं साम्यं पूर्वः छेकानुप्रास इत्यर्थः तदेव व्याचष्टे-अनेकस्येति। उदाहरति ततोऽरुणेति भारते रात्रियुद्धान्ते प्रभातवर्णनम्। अरुणस्य अनूरोः परिस्पन्देन किंचिच्चलनेन मन्दीकृतं निष्प्रभीकृतं वपुर्यस्य तादृशः

अनेकस्य अर्थाद् व्यञ्जनस्य सकृदेकवारं सादृश्यं छेकानुप्रासः।

उदाहरणम्—

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम्॥ ३५५॥

(१०७) एकस्याप्यसकृत्परः॥७९॥

एकस्य अपिशब्दादनेकस्य व्यंजनस्य द्विर्बहुकृत्वो वा सादृश्यं वृत्त्यनुप्रासः। तत्र-

(१०८) माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते

(१०९] ओजःप्रकाशकैस्तैस्तु परुषा

उभयत्रापि प्रागुदाहृतम्।

(११०) कोमला परैः॥ ८०॥

परैः शेषैः। तामेव केचिद् ग्राम्येति वदन्ति। उदाहरणम्—

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः।
अलमलमालि! मृणालैरिति वदति दिवानिशं बाला॥३५६॥

---

शशी चन्द्रः कामेन स्मरेण परिक्षामा क्षीणा या कामिनी तस्याः गंडवत्कपोलवत् पांडुतां शुभ्रतां दध्रे धारयामासेत्यर्थः। अत्र स्पन्द-मन्दीत्यत्र नकार-दकारयोः गण्डपाण्डु इत्यत्र णकार-डकारयोः का-मकामीत्यत्र ककारमकारयोरित्यनेकव्यञ्जनस्य सकृत्साम्येन छेका-नुप्रासः॥ ३५५॥

वृत्त्यनुप्रासं लक्षयति—एकस्यापीति। एकस्यानेकस्य वा व्यञ्जनस्या-सकृदनेकवारं साम्यं परो वृत्त्यनुप्रास इत्यर्थः। तमेवाह—एकस्येत्यादि। वृत्त्यनुप्रासघटकतयोद्दङ्किता वृत्तिं प्रसङ्गाद्विभजति तत्रेति। वृत्त्यनु-प्रासे। माधुर्येति। माधुर्यव्यंजकैः मूर्ध्नि वर्गान्त्यगाः स्पर्शा इत्यादि-प्रतिपादितैः वर्णैः युक्ता वृत्तिः उपनागरिका नागरिकया चतुरया स्त्रिया उपमिता उपनागरिकेत्युच्यते॥ ओजःप्रकाशकैः ओजोव्यञ्ज-कैः योग आद्यतृतीयाभ्यामित्याद्युक्तैः वर्णैर्युक्ता वृत्तिः परुषा परुष-वर्णघटितत्वात् परुषेत्युच्यते इत्यर्थः। एषैव केषांचिन्मते गौडी रीतिः उभयत्रापि उपनागरिकायां परुषायां च प्रागुदाहृतमिति। अष्टमोल्लासे अनंगरंगेत्यादि मूर्ध्नामुद्वृत्तकृत्तेत्यादि चोदाहृतमिति भावः॥

तृतीयां वृत्तिमाह—कोमलेति। परैः शेषैः ओजोमाधुर्यव्यञ्जकाति-रिक्तैः प्रसादवद्भिर्वर्णैर्युक्ता वृत्तिः कोमलेत्युच्यत इत्यर्थः। एषैव के-

(१११) केषांचिदेता वैदर्भीप्रमुखा रीतयो मताः ।

एतास्तिस्रो वृत्तयः वामनादीनां मते वैदर्भी गौडी पाञ्चाल्याख्या रीतयो मताः ।

(११२) शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः ॥ ८१ ॥

शब्दगतोऽनुप्रासः शब्दार्थयोरभेदेऽप्यन्वयमात्रभेदात् लाटजन-वल्लभत्वाच्च लाटानुप्रासः एष पदानुप्रास इत्यन्ये ।

(११३) पदानां सः ।

स इति लाटानुप्रासः । उदाहरणम्—

---

षांचिन्मते पांचाली रीतिरिति वक्ष्यते अस्या एव संज्ञान्तरमाह—तामेवेति । कोमलामेव केचिदुद्भटादयः । ग्राम्येति अतिशयितकान्ति-राहित्येन ग्राम्यस्त्रीसाम्यात् ग्राम्येति वदन्तीति भावः । कोमलां वृत्तिमुदाहरति—अपसारयेति। व्याख्यातमिदमष्टमोल्लासे अत्र मूर्ध्नि वर्गा-न्त्यगाभावात् आद्यतृतीयाद्वियोगाभावाच्च कोमला वृत्तिः ॥ ३५६ ॥

एतासां वृत्तीनामन्यमते नामान्तराण्याह—केषांचिदिति । मूले व्या-ख्याता लाटी अल्पान्तरत्वात्पांचाल्यन्तर्गतैवेति न पृथगुक्ता ॥

एवं वर्णानुप्रासं निरूप्य शब्दानुप्रासं लक्षयति—शाब्दस्त्विति । शब्द्यते प्रकाश्यतेऽनेनेति शब्दः शब्दनारूपव्यापारवान् स च प्रातिप-दिकसंज्ञको विभक्त्यन्तश्चेति द्विविधः तद्गतः शाब्दः शक्त्या-दिः तात्पर्यमन्वयभेदः स च तात्पर्यविषयसंसर्गस्तन्मात्रतस्तन्मा-त्रात् भेदे सति तथा च भिन्नतात्पर्यक-तुल्यार्थक-शब्दसादृश्यं शब्दानुप्रासः स तु लाटानुप्रास इत्युच्यत इत्यर्थः। सूत्रं व्याचष्टे-शब्द-गत इति । लाटेति लाटो देशविशेषः तत्स्थो यो जनः कविस्तद्वल्लभत्वात्त-त्प्रियत्वात् अस्यैव संज्ञान्तरमाह—एष इति । अन्ये इत्युक्त्याऽरुचिः सूचिता पदेत्युक्तौ विभक्त्यन्तस्यैव ग्रहणं स्यान्न तु प्रातिपदिक-स्येति ॥ ८१ ॥

शब्दानुप्रासस्तु प्रथमतो द्विविधः पदगतो नामगतश्चेति तत्राद्यो ऽपि अनेकपदैकपदगतत्वेन द्विविधः । अन्त्यश्च समासासमासगतत्वेन एकसमासगतत्वेन विभिन्नसमासगतत्वेन च त्रिविध इति मिलित्वा शब्दानुप्रासः पंचविधः तदेव पदानां स इत्यादिना पंचधा मत इत्यन्तेन दर्शयिष्यन् आद्यभेदमाह—पदानामिति। पदानामिति बहुवचन-मनेकोपलक्षणम् अन्यथा द्वयोः पदयोरावृत्तौ षष्ठभेदापत्तिः ॥

यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ।
यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ॥२५७॥

(११४) पदस्यापि ।

अपिशब्देन स इति समुच्चीयते । उदाहरणम्—

वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः ।
सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत् ॥ ३५८ ॥

(११५) वृत्तावन्यत्र तत्र वा ।
नाम्नः स वृत्त्यवृत्त्योश्च ।

एकस्मिन् समासे भिन्ने वा समासे समासासमासयोर्वा नाम्नः

---

यस्येति । यस्य पुंसः सविधे समीपे दयिता कान्ता नास्ति तस्य तुहिनदीधितिः चन्द्रः दवदहनः विरहोद्दीपकतया दावाग्निर्भवति यस्य तु सविधे दयिता अस्ति तस्य दवदहनः तुहिनदीधितिर्भवतीत्यर्थः । अत्र सविधे दयितेत्यादि बहूनां पदानां तात्पर्यमात्रभेदेनावृत्तिरिति अनेकपदगतो लाटानुप्रासः । अत्र च पूर्वार्धे तुहिनदीधितौ दवदहनत्वं विधेयम् उत्तरार्धे तु दवदहने तुहिनदीधितित्वं विधेयमित्युद्देश्यविधेयभावविपर्यासेन शाब्दबोधरूपान्वयभेदात्तात्पर्यभेदो बोध्यः ॥ ३५७ ॥

एकपदगतं द्वितीयभेदमाह–पदस्यापीति–अत्रापिशब्देन लाटानुप्रासपरामर्शकः स इति समुच्चीयते । वदनमिति तस्याः वरवर्णिन्या उत्तमस्त्रियाः वदनं सुधाकरश्चन्द्रः सत्यन्निश्चितं यद्वा सत्यमित्यर्द्धाङ्गीकारे । उक्तरूपकं निषेधति सुधाकरः पुनः कलङ्केन विकलो रहितः क्व नु भवेन्न क्वापीत्यर्थः। एवं चास्य मुखरूपणायोग्यत्वमिति भावः । अत्रैकस्यैव सुधाकरपदस्य तात्पर्यमात्रभेदेनावृत्तिरिति एकपदगतो लाटानुप्रासः । प्रथमस्य विधेयपरत्वं द्वितीयस्योद्देश्यपरत्वमिति तात्पर्यभेदः ॥ ३५८ ॥

नामगतस्य प्रकारत्रयमाह—वृत्ताविति । तत्र वृत्तौ एकस्मिन्समासे अन्यत्र वृत्तौ भिन्ने समासे वा वृत्त्यवृत्त्योः समासासमासयोर्वा नाम्नः प्रातिपदिकस्यैव स लाटानुप्रासो भवतीत्यर्थः । तदेव व्याचष्टे–एकस्मिन्निति । यद्यपि भेदेन प्रातिपदिकस्य प्रयोगाभावान्न तस्यावृत्तिः तथापि लुप्तविभक्तिकस्यैव प्रयोगेण तावन्मात्रपुरस्कारेण प्रातिपदिकस्येत्युक्तम् । सारूप्यम् समानरूपता साम्यमिति यावत् । अत्र स-

प्रातिपदिकस्य न तु पदस्य सारूप्यम् । उदाहरणम्—

सितकरकररुचिरविभा विभाकराकार! धरणिधर! कीर्तिः।

पौरुषकमला कमला साऽपि तवैवास्ति नान्यस्य ॥ ३५९ ॥

(११६) तदेवं पञ्चधा मतः ॥ ८२ ॥

(११७) अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः ॥

यमकम्

समरसमरसोयमित्यादावेकेषामर्थवत्त्वेऽन्येषामनर्थकत्वे भिन्नार्थाना-मिति न युज्यते वक्तुम् इति अर्थे सतीत्युक्तम् । सेति सरो रस इत्या-दिवैलक्ष्यण्येन तेनैव क्रमेण स्थिता ।

---

मास इति पंचवृत्तेरुपलक्षणम् तेन—

हंसायते चारुगतेन कान्ता कान्तायते स्पर्शसुखेन वायुः ।

इत्यादेः संग्रहः । भेदत्रयमप्येकेनैव पद्येनोदाहरति—सितेति । सप्त-मोल्लासे व्याख्यातम् । अत्र करकरेत्येकसमासः । विभा विभेति भिन्नौ समासौ कमला कमलेति पूर्वस्य समासः उत्तरस्यासमासः इति त्र-याणामुदाहरणम् । यद्यपि कमला कमलेत्यत्र विभक्त्यन्तस्याप्यावृत्ति-रस्ति तथापि प्रकृतिभागस्यापि साऽस्तीत्यदोषः ॥ ३५९ ॥

लाटानुप्रासस्य पंचविधत्वमुपसंहरति—तदेवमिति ॥ ८२ ॥

अथ यमकं लक्षयति–अर्थे सतीति । भिन्ना अर्था येषान्ते अर्थेऽभिधेये सति अर्थभिन्नानां भिन्नार्थकानां वर्णानां सा पूर्वेणैव क्रमेण स्थिता पुनः श्रुतिरावृत्तिर्यमकमित्युच्यते इत्यर्थः । यमौ द्वौ समजातौ तत्प्रति-कृतियमकम् इवे प्रकृतान्विति कन् । वर्णानामिति बहुवचनम् सूत्रे लिङ्ग-वचनमतन्त्रमिति न्यायादविवक्षितम् अन्यथा द्वयोर्यमकव्यवहारो न स्यात् । यमकं हि एकस्मिन्द्वयोश्चतुर्षु वा पादेषु प्रयोक्तव्यन्नतु पादत्रये—

यमकन्तु विधातव्यं न कदाचिदपि त्रिपात् ।

इति निषेधात् । अत एव दशमोल्लासे यमकस्य पादत्रयगतत्वेन यमनप्रयुक्तत्वं दोष इति मूले वक्ष्यति ।

यमकादौ भवेदैक्यं डलयोः रलयोर्बवोः ।

शषयोर्नणयोश्चान्ते सविसर्गाविसर्गयोः ।

सबिन्दुकाबिन्दुकयोः स्यादभेदप्रकल्पनम् ॥

इति कविरहस्यं बोध्यम् । एकार्थके लाटानुप्रासेऽतिव्याप्तिवार-णाय अर्थभिन्नानामिति समरसमरसोऽयमित्यादौ द्वितीयावृत्तेरर्था-भावात् समरतेऽमरतेजसीत्यादावुभयोरप्यनर्थकत्वाच्चाव्याप्तिः स्या-

(११८) पादतद्भागवृत्ति तद्यात्यनेकताम् ॥ ८३ ॥

प्रथमो द्वितीयादौ, द्वितीयस्तृतीयादौ, तृतीयश्चतुर्थे, प्रथमस्त्रिष्वपीति सप्त । प्रथमो द्वितीये तृतीयश्चतुर्थे प्रथमश्चतुर्थे द्वितीयस्तृतीये इति द्वे तदेवं पादजं नवभेदम् । अर्धावृत्ति श्लोकावृत्तिश्चेति द्वे । द्विधा विभक्ते पादे प्रथमादिपादादिभागः पूर्ववत् द्वितीयादिपादादिभागेषु, अन्तभागोऽन्तभागेष्विति विंशतिर्भेदाः श्लोकान्तरे हि नासौ भागावृत्तिः । त्रिखण्डे त्रिंशत् चतुःखण्डे चत्वारिंशत् ।

---

दत उक्तमर्थे सतीति यद्यर्थस्तदा भिन्न इत्यर्थः । सरो रस इत्यादावतिव्याप्तिवारणाय सतीति तेनात्राक्षरसाम्येऽपि क्रमभेदान्नातिव्याप्तिः ॥ तथा च समानार्थकत्वाभाववत्समानानुपूर्वीकानेकवर्णावृत्तिर्यमकमिति लक्षणं सिद्धम् । तदाह समरसेति अयं राजा समरे सम एकरूपः रसः प्रीतिर्यस्य तादृश इत्यर्थे प्रथमसमरशब्दस्यैवार्थवत्त्वन्न द्वितीयस्येति भावः । वक्तुमित्युक्तस्थलेऽव्याप्तेरिति शेषः ॥

यमकं विभजते—पादेति । पादः पद्यचतुर्थांशः । यमकं तावत् पादवृत्ति तद्भागवृत्ति चेति द्विविधम् तच्च प्रत्येकमनेकतामनेकरूपत्वं याति प्राप्नोतीत्यर्थः ॥

तत्र पादवृत्तियमकस्यैकादश भेदा भवन्तीत्याह—प्रथम इत्यादिना । तत्र यदि प्रथमः पादो द्वितीये पादे यम्यते रच्यते तदा (१) मुखं नाम यमकम् । यदि तृतीये यम्यते तदा (२) संदंशो नाम यमकम् । यदि चतुर्थे यम्यते तदा (३) आवृत्तिर्नामयमकम् । द्वितीय इत्यादि यदि द्वितीयः पादस्तृतीये पादे यम्यते तदा (४) गर्भो नाम यमकम् । चतुर्थे चेत्तदा (५) संदष्टकं नाम यमकम् । तृतीय इत्यादि । तृतीयः पादश्चतुर्थे यम्यते चेत्तदा (६) पुच्छं नाम यमकम् । प्रथमास्त्रिष्वपीति । प्रथमः पादः त्रिष्वपि द्वितीये तृतीये चतुर्थेऽपि पादे यम्यते चेत्तदा (७) पंक्तिर्नाम यमकम् । सप्तेति पूर्वोक्तैर्मिलित्वा पादगतं यमकं सप्तविधमेवेत्यर्थः ।

यमकन्तु विधातव्यं न कदाचिदपि त्रिपात् ।

इति नियमात् एकस्यापरपादद्वयगतत्वेन भेदो न कृत इत्येकैकपादवृत्तावसंकीर्णाः शुद्धा एते सप्त भेदाः । संकीर्णन्तु पादगतं चतुर्विधमित्याह—प्रथमो द्वितीय इत्यादि । प्रथमः पादो द्वितीये पादे तृतीयश्चतुर्थे यम्यते चेत्तदा मुखपुच्छयोः संयोगात् (८) युग्मकं नाम यमकम् । प्रथमश्चतुर्थे द्वितीयस्तृतीये यम्यते चेत्तदा आवृ-

प्रथमपादादिगतान्त्यार्धादिभागो द्वितीयपादादिगते आद्यार्धादि-भागे यम्यते इत्याद्यन्वर्थतानुसरणेनानेकभेदम्, अन्तादिकम् आद्यन्तिकम् तत्समुच्चयः, मध्यादिकम् आदिमध्यम् अन्तमध्यम् मध्यान्तिके तेषां समुच्चयः । तथा तस्मिन्नेव पादे आद्यादिभागानां मध्या-

---

न्तिगर्भयोर्योगात् (९) परिवृत्तिर्नाम यमकम् । पादजम् एकदैकपादमात्रावृत्तिरूपम् । एकदाऽनेकपादावृत्तिरूपं पादजन्तु द्विविधमित्याह–अर्धेति । अर्धावृत्तिः समुद्गो नाम यमकम् अत्र च संदंश–संदष्टकयोः संकरः । श्लोकावृत्तिर्महायमकम् । अर्धस्य पादद्वयात्मकतया श्लोकस्य पादचतुष्टयात्मकतया च एते अपि पादगते पादभागवृत्तियमकस्य बहवो भेदा भवन्तीत्याह–द्विधेति । द्विधाविभक्तेषु पादेषु प्रथमादिपादानामाद्यभागाः पूर्ववत् पादावृत्तिरीत्या द्वितीयादिपादेषु आद्यभागेष्वेव यदि मन्यन्ते तदा पूर्ववन्मुखादयो दश भेदा इत्यर्थः । अन्तभाग इति । यदि प्रथमादिपादानामन्त्यभागो द्वितीयादिपादान्त्यभागेष्वेव यम्यते तदा पूर्ववत् पादावृत्तिरीत्या दश भेदा इत्यर्थः इत्थं द्विखण्डीकृतेषु पादेषु विंशतिर्भेदाः । ननु श्लोकावृत्त्या सह द्वाविंशतिसंख्याकैर्भेदैर्भवितव्यमत आह—श्लोकान्तरेति । श्लोकान्तरे भागवृत्तिर्न्न स्वदते इति भावः । त्रिखण्डे चतुःखंडे च पादे भेदानाह त्रिखंडे इत्यादि प्रतिभागावृत्तेर्दशविधत्वात् त्रिचत्वारिंशद्भेदाः भवन्तीति भावः ॥

· इत्थमाद्यभागोऽपरस्याद्ये एव भागे अन्तभागोऽन्ते एव भागे इति सजातीयभागावृत्तिमुक्त्वा विजातीयभागावृत्तिमाह—प्रथमपादादिगतेत्यादि ।

अयम्भावः, प्रथमादिपदानामन्तादिभागाः द्वितीयादिपदानामाद्यादिभागेषु यम्यन्ते इत्याद्यन्वर्थतानुसारेण अन्ताद्यादियमकादयः प्रभेदाः भवन्ति तथाहि यथा द्विखंडे प्रथमपादस्यान्तमर्धन्द्वितीयपादस्याद्यर्धे चेद्यम्यते तदाऽन्तादिकं नाम यमकम् प्रथमपादस्याद्यमर्धं द्वितीयपादस्यान्त्यभागे चेद्यम्यते तदा आद्यन्तिकं नाम यमकम् एवं प्रथमपादस्याद्यन्तभागौ द्वितीयपादस्यान्तादिभागयोर्यदि यम्येते तदा आद्यन्तिकान्तादिकयोर्यमकयोः समुच्चयः । अत्र त्रिखंडचतुःखंडयोः पूर्वपादमध्यभागः उत्तरपादस्यादिभागे यदि यम्यते तदा मध्यादिकं नाम यमकम् पूर्वस्यादिभागश्चेदुत्तरपादस्य मध्यभागे यम्यते तदा आदिमध्यं नाम यमकम् पूर्वस्य मध्यादिभागौ चेदुत्तर-

दिभागेषु अनियते च स्थाने आवृत्तिरिति प्रभूततमभेदम् । तदेतत्का-
व्यान्तर्गडुभूतम् इति नास्य भेदलक्षणं कृतम् । दिङ्मात्रमुदाह्रियते—

सन्नारीभरणामायमाराध्य विधुशेखरम् ॥
सन्नारीभरणोऽमायस्ततस्त्वं पृथिवीं जय ॥ ३६० ॥

विनायमेनो नयताऽसुखादिना विना यमेनोनयता सुखादिना ॥
महाजनोऽदीयत मानसादरं महाजनो दीयतमानसादरम् ॥ ३६१ ॥

---

स्याद्यमध्ययोस्तदा मध्यादिकादिमध्ययोर्यमकयोः समुच्चयः । एवं प्रथमस्यान्त्यभागो द्वितीयस्य मध्यभागे चेत्तदा अन्त्यमध्यम् । पूर्वस्य मध्यभागश्चेद् द्वितीयस्यान्तभागे तथा मध्यान्तिकम् पूर्वस्यान्त्यभागौ द्वितीयस्य मध्यान्तभागयोश्चेत्तदा अन्त्यमध्यमध्यान्तयोः समुच्चय इति । इत्थं पादान्तरभागापेक्षया पादभागभेदाः प्रदर्शिताः । इदानीमेकस्मिन्नेव पादे भागभेदानाह–तथेति । एवं तस्मिन्नेव पादे आद्यादिभागानां मध्यादिभागेष्वावृत्तौ भेदा द्रष्टव्या इत्यर्थः । सर्वे चैते नियतभागस्थानविवक्षया भागस्थानयमकभेदाः । अनियतस्थानयमकभेदा अपि बहवो भवन्तीत्याह–अनियते चेति । पादादिव्यवस्थाशून्यमद्यादावेते द्रष्टव्याः । अस्य भेदः किमिति न लक्ष्यत इत्यत आह तदेतदिति । यथेक्षुदंडे ग्रन्थिश्चर्वणेन रसनिःसारणे व्यवधायकस्तथा काव्येऽपि यमकं गूढार्थानुसंधानविलम्बेनास्वादविच्छेदादिति भावः॥

तत्र प्रथमपादस्य तृतीयपादे यमने संदंशनामकं यमकमुदाहरति—सन्नारीति । हे राजन् ! सतीर्नारीर्बिभर्त्ति पुष्णातीति सन्नारीभरणा अथवा सतीनां नारीणां भरणमाभरणस्वरूपा या उमा गौरी तां याति शरीरार्धरूपेण प्राप्नोति यस्तं विधुशेखरमाराध्य ततः तदाराधनात् त्वं सन्नाः मृताः अरीणाम् इभाः गजा यत्र तादृशो रणो युद्धं यस्य तथाभूतः सन् पृथिवीं जय सार्वभौमो भवेत्यर्थः कीदृशस्त्वम् अमायः अकपटः । अत्र प्रथमपादस्य तृतीये यमनात्संदंशो नाम यमकम् ॥ ३६० ॥

प्रथमपादस्य द्वितीये तृतीयस्य चतुर्थे च यमने युग्मकं नामयमकमुदाहरति–विनेति । अयं विश्वासौ ना च विना पक्षिस्वरूपः पुरुषः हंसरूपः क्रमं यमेन कृतान्तेन मानसं चिरं तदेव मानससरस्तस्मादरं शीघ्रं यतमानानां रक्षितुं प्रयत्नवतां सार्द्रं विषादं राति ददातीति तद्यथा स्यात्तथा अदीयत अखंड्यत आत्ममनसोः संयोगध्वंसो मरणं तत्कृतमित्यर्थः अयं किंभूतः महाजनः महात्मा पुनः किंभूतः महाजनोदी महा-

स त्वारम्भरतोऽवश्यमबलं विततारवम्।
सर्वदा रणमानैषीदवानलसमस्थितः॥ ३६२॥

सत्त्वारम्भरतोऽवश्यमवलम्बिततारवम्।
सर्वदारणमानैषी दवानलसमस्थितः॥ ३६३॥

अनन्तमहिमव्याप्तविश्वां वेधा न वेदयाम्।
या च मातेव भजते प्रणते मानवे दयाम्॥ ३६४॥

यदानतोऽयदानतो न यात्ययं न यात्ययम्।
शिवेहितां शिव हितां स्मरामि तां स्मरामि ताम्॥ ३६५॥

नुत्सवानजन्ति क्षिपन्ति ये दुर्जनास्तन्नोदितुं दूरीकर्तुं शीलमस्य तथाभूतः दुर्जनापसारकः किंभूतेन यमेन एनाविना अपराधमन्तरेण नयता स्वस्थानं प्रापयता असुखादिना प्राणभक्षकेण सुखादिना विषयभोगमसहिष्णुना चेत्यर्थः। वंशस्थं वृत्तम्॥ ३६१॥

श्लोकाभ्यासे महायमकमुदाहरति–सत्वेति। स तु प्रक्रान्तो राजा आरं शत्रुसमूहं सर्वदा अवश्यं निश्चयेन भरतः अतिशयेन 'अतिशयो भरः' इत्यमरः। रणं युद्धमानैषीत्प्रापयामास कीदृशमारम् अबलं बलरहितम् विततारवम् अतिशयकृतहाहाशब्दम् किंभूतो राजा अलसं मन्दं यथास्यात्तथा अवान् अगच्छन् शीघ्रं गच्छन्नित्यर्थः। पुनः अस्थितः प विष्णौ स्थितः विष्णुपरायण इत्यर्थः॥ ३६२॥

अथावृत्तपदानामर्थः। किंभूतो राजा सत्त्वेनारम्भः सात्त्विकं कर्म तत्र रतः सक्तः। पुनः किंभूतः सर्वेषां दारणे।विदारणे यो मानस्तदैषी तदिच्छाशीलः। तथा दवानलेन दावाग्निना समं तुल्यम् स्थितं स्थितिर्यस्य तथाभूतः। अहितानां सन्तापकारित्वेन दावानलसाम्यम्। किंभूतमारम् अवश्यं वश्यतामनापन्नम् अत एव अवलम्बितमाश्रितं तारवं तरुसमूहो वनं येन तथाभूतमित्यर्थः। अत्र बहुधायोजनं ग्रन्थगौरवान्न दर्शितम्॥ ३६३॥

द्विखंडेषु भिन्नपादे पादभागाभ्यासेषु द्वितीयपादान्तभागस्य चतुर्थपादान्तभागे यमने संदष्टकं नाम यमकमुदाहरति–अनन्तेति। देवीशतके पद्यमिदम् अनन्तेन महिम्ना व्याप्तं विश्वं यया तादृशीं यां देवीं वेधाः न वेद तत्त्वतो न जानाति यां च प्रणते नम्रे मानवे मातेव दयां भजते इत्यर्थः। नमांसि ध्वंसमायान्तीत्यन्तिमश्लोकेनान्वयः॥३६४॥

एकस्मिन्नेव पादे भागावृत्तौ आदिभागस्यान्तभागे यमने आक्षिप्तकं यमकमुदाहरति–यदानत इति। देवीशतकस्य पद्यम्। यस्यां

सरस्वति! प्रसादं मे स्थितिं चित्तसरस्वति!
सरस्वति! कुरुक्षेत्र-कुरुक्षेत्र-सरस्वति! ॥ ३६६ ॥
ससार साकं दर्पेण कन्दर्पेण ससारसा।
शरन्नवाना बिभ्राणा नाविभ्राणा शरन्नवा ॥ ३६७ ॥

मधुपराजि पराजित-मानिनीजनमनः सुमनः सुरभि श्रियम्।
अभृत वारितवारिजविप्लवं स्फुटितताम्र तताम्रवणं जगत् ॥३६८॥

पार्वत्यां आनतः प्रणतः अयं जनः नयात्ययं नयस्य नीतेः अत्ययं नाशं न याति नाधिगच्छति कुतः अयदानतः अयस्य शुभावहविधेर्दानात् अर्थात्तयैव देव्याऽस्य शुभावहविधिदानात् शिवेन शङ्करेण ईहितां प्रार्थितां शिवे कल्याणे हितां कल्याणदात्रीम् स्मरेण कन्दर्पेण अमितां मातुमयोग्यामनभिभूतमिति यावत् तां देवीं स्मरामीत्यर्थः। प्रमाणिका छन्दः। प्रमाणिका जरौ लगाविति लक्षणात्। अत्रैकस्मिन्नेव पादे आद्यन्तिकं भागावृत्तियमकम् ॥ ३६५ ॥

प्रथमपादाद्यभागस्य द्वितीयादिपादानामन्ताद्यभागेषु यमने पूर्वार्धे आद्यन्तिकम् उत्तरार्धे आद्यन्तिकमन्तादिकं चेति तेषां समुच्चयमुदाहरति—सरस्वतीति। देवीशतके पद्यम् हे सरस्वति! प्रसादं सर गच्छ प्रसन्ना भव मे मम चित्तसरस्वति चित्तरूपसमुद्रे स्थितिमवस्थानं स्वति सुष्ठु अतिशयेन कुरु। सम्बोधनस्य विशेषणमाह क्षेत्रकुरुक्षेत्र-सरस्वतीति क्षेत्रं शरीरं तदेव कुरुक्षेत्रं क्षेत्रविशेषस्तत्र सरस्वति सरस्वत्याख्यनदीरूपेत्यर्थः ॥ ३६६ ॥

द्वयोरप्यर्धयोराद्यन्तिकान्तादिकयोः समुच्चयमुदाहरति ससारेति। शरत् ऋतुः कन्दर्पेण दर्पेण मदनरूपेण गर्वेण साकं ससार आजगाम गतवती वा कीदृशी शरत् ससारसा सारसैः पक्षिविशेषैः पद्मैर्वा सहिता पुनः नवानं नवं नूतनम् अनः शकटम् पथि कर्दमाभावेन यस्यां सा। पुनः शरं काशाख्यं तृणं बिभ्राणा पोषयन्ती पुनः नाविभ्राणा वीनां पक्षिणां भ्राणः शब्दो यत्र सा विभ्राणा न विभ्राणा अविभ्राणा न अविभ्राणा नाविभ्राणा पक्षिशब्दसहिता पुनः नवा प्रशस्तेत्यर्थः। अत्र प्रथमपादस्यान्त्यार्धभागो द्वितीयपादस्यार्धभागे आद्यभागोऽन्त्यभागे यस्यते एवं तृतीयपादस्यान्त्यादिभागौ, चतुर्थपादस्याद्यन्त्यभागयोर्यस्येते ॥ ३६७ ॥

अनियतस्थानावृत्तिरूपयमकसमुच्चयमुदाहरति—मधुपेति। वसन्त-

एवं वैचित्र्यसहस्रैः स्थितमन्यदुन्नेयम् ।

(११९) वाच्यभेदेन भिन्ना यद् युगपद्भाषणस्पृशः ।
श्लिष्यन्ति शब्दाः श्लेषोऽसावक्षरादिभिरष्टधा ॥ ८४ ॥

अर्थभेदेन शब्दभेदः इति दर्शने काव्यमार्गे स्वरो न गण्यते इति च नये वाच्यभेदेन भिन्ना अपि शब्दा यद् युगपदुच्चारणेन श्लिष्यन्ति भिन्नं स्वरूपमपह्नुवते स श्लेषः । स च वर्ण-पद-लिङ्ग-भाषा-प्रकृति-प्रत्यय-विभक्ति-वचनानां भेदादष्टधा ।

---

वर्णनमिदम् । जगत् कर्तृ श्रियं शोभाम् अभूत दधार कीदृशं जगत् मधुपराज्या भ्रमरपंक्त्या पराजितानि धैर्यच्युतानि मानिनीजनानां मनांसि याभिरेवंभूतायाः सुमनसः पुष्पाणि ताभिः सुरभि सुगन्धि । वारितः तुषारापगमेन निवारितो वारिजानां कमलानां विप्लवो नाशो यत्र तत् पुनः स्फुटितानि विकसितानि ताम्राणि पल्लवोद्भवैः आरक्तानि ततानि विस्तीर्णानि च आम्राणां वनानि यत्र तथाभूतमित्यर्थः । द्रुतविलम्बितं वृत्तम् । एवमिति यथा ।

तन्व्यां तन्व्यां न सम्माति तस्या लावण्यसंचयः ।

इत्यादि 'नवपलाशपलाशवनं पुर इत्यादि' च बोध्यम् ॥ ३६८ ॥

श्लेषं लक्षयति—वाच्येति । वाच्यभेदेन अर्थभेदेन भिन्नाः शब्दा युगपद्भाषणमेकोच्चारणं तत्स्पृशन्तीति युगपद्भाषणस्पृशः एकोच्चारणविषयाः सन्तः यत् श्लिष्यन्ति एकरूपतयेव भासन्ते स श्लेषः-श्लेषनामा शब्दालङ्कारः असौ अक्षरादिभिर्वर्णपदादिभिः अष्टधा इति सूत्रार्थः ।

सूत्रं व्याचष्टे—अर्थभेदेनेत्यादिना । एकानुपूर्वीकत्वेऽपि तत्तदर्थनिरूपितभेद इति नयेन भिन्नाः शब्दाः । ननु इन्द्रशत्रुप्रभृतीनां भिन्नसमासानां स्वर उदात्तानुदात्तादिस्वरभेदे भेदग्रहो दुरपन्हव इत्यत आह—काव्यमार्गे इति । न गण्यते स्वरमनादृत्यैव विचार्यते अन्यथा श्लेषोच्छेदापत्तिः स्यादिति भावः । भिन्नमिति । एकरूपतयेव भासन्त इत्यर्थः । सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति नियमानङ्गीकर्तृणां मते एकदा गृहीततात्पर्यकः शब्द एव श्लेषः । तदङ्गीकर्तृणां मते तु अर्थद्वयप्रतीत्यर्थं श्लेषस्थले एकाकारौ द्वौ शब्दौ स्तः । इत्यवश्यमङ्गीकार्यम् तौ चैकेन प्रयत्नेनैकदोच्चार्य्यतया पृथक्तया नानुभूयेते तथा च एकप्रयत्नोच्चार्यतया भिन्नत्वेनानुभूयमानत्वमेव श्लेष इति फलितम्॥ श्लेषो द्विधा सभंगोऽभंगश्चेति तत्राद्यं विभजन्नक्षरादिभिरिति व्याचष्टे—स चेति ॥ ८४ ॥

क्रमेणोदाहरणम्—

अलङ्कारः शङ्काकरनरकपालं परिजनो
विशीर्णाङ्गो भृङ्गी वसु च वृष एको बहुवयाः ।
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरो-
र्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥ ३६९ ॥

पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ! ।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥ ३७० ॥

भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये ।
लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥ ३७१ ॥

एष वचनश्लेषोऽपि ।

---

वर्णश्लेषमुदाहरति-अलङ्कार इति । विधौ चन्द्रे दैवे च वक्रे कुटिलाकारे प्रतिकूले च मूर्ध्नि मस्तके स्थितवति सति सर्वामरगुरोः सकलदेवश्रेष्ठस्य स्थाणोर्महेश्वरस्यापि इयं वक्ष्यमाणरूपा अवस्था दशा भवति अमी कीटकल्पाः वयं पुनः केऽपीत्यर्थः । अवस्थां दर्शयति-अलंकार इत्यादि । शंकाकरं भयजनकं यत् नरकपालं मनुष्यशिरोऽस्थि अलङ्कारः भूषणम् विशीर्णानि गलितानि अङ्गानि अवयवा यस्य यद्वा विशीर्णानि बुभुक्षावशात्स्वयमेव भक्षितानि अङ्गानि येन तथाभूतो भृंगी गणविशेषः परिजनः सेवकलोकः । च परं वृषः वृषभः वसु धनं सोऽपि एकः सोऽपि बहुवयाः जरत्तर इत्यर्थः । अत्र विधावित्यत्र विधि-विधुशब्दयोरिकारोकारयोरौकारतां प्राप्तयोर्भेदाद्वर्णश्लेषः । विधावित्यादेशिनि भेदेऽपि आदेशमादाय सादृश्यं बोध्यम् ३६९

पदश्लेषमुदाहरति-पृथुकेति । सप्तमोल्लासे व्याख्यातम् । अत्र पृथुकानां बालकानाम् आर्तस्वरस्य क्षुद्बाधाकृतकातरध्वनेः पात्रमधिकरणम् पक्षे पृथूनि विपुलानि कार्तस्वरस्य सुवर्णस्य पात्राणि भाजनानि यत्र तदित्यादि क्रमेण पदभेदात्पदश्लेषः । ३७० ॥

लिंगश्लेषं वचनश्लेषं चोदाहरति—भक्तीति । हरेर्विष्णोः नेत्रे तनुर्मूर्तिश्च युष्माकं भवस्य संसारस्य आर्तेः पीडायाः शमनं शान्तिं कुरुताम् कुरुतामिति परस्मैपदद्विवचनमात्मनेपदैकवचनं च, किं भूते नेत्रे भक्त्या परानुरक्त्या ये प्रह्वाः नम्रास्तेषां विलोकने सदयावलो-

महदे सुरसन्धम्मे तमवसमासङ्गमागमाहरणे ।
हरवहुसरणं तं चित्तमोहमवसर उमे सहसा ॥ ३७२ ॥
अयं सर्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति ।
सामर्थ्यकृदमित्राणां मित्राणां च नृपात्मजः ॥ ३७३ ॥
रजनिरमणमौलेः पादपद्मावलोक-
क्षणसमयपराप्तापूर्वसम्पत्सहस्रम् ।
प्रमथनिवहमध्ये जातु चित्त्वत्प्रसादा-
दहमुचित रुचिः स्यान्नन्दिता सा तथा मे ॥ ३७४ ॥

---

कने प्रणयोऽनुरागो ययोस्ते । तनुपक्षे भक्तिप्रह्वानां विलोकनप्रणययो-र्दर्शनानुरागो यस्यां सा भक्तावलोकनकर्मभूता प्रणयिनीति नपुंसके द्विवचनं स्त्रियामेकवचनं च । एवं सर्वत्र । पुनः नीलोत्पलं स्पर्धितुं शीलं ययोस्ते नीलोत्पलस्पर्धिनी । तनुपक्षे यस्याः सेत्यर्थः । पक्षद्वये-ऽपि ताच्छील्ये णिनिः । पुनः समाधिनिरतैर्योगिभिः हितप्राप्तये शुभा-वाप्तये ध्यानालम्बनतां ध्यानविषयतां नीते प्रापिते । तनुपक्षे ईहितप्रा-प्तये सरणं प्रसरणं यस्य तथाभूतम् यद्वा बहु वारम्वारं संसारो य-स्मात्तथाभूतमित्यर्थः । प्राकृतपक्षे तु—

मम देहि रसं धर्मे तमोवशामाशां गमागमाद्धर नः ।
हरवधु शरणं त्वं चित्तमोहोऽपसरतु मे सहसा ॥

इति संस्कृतम् । हे हरवधु ! त्वं मे शरणं भवसीति शेषः। मम धर्मे पुण्ये कर्मणि रसं प्रीतिं देहि । नः अस्मत्संबन्धिनीं तमोवशां तमोगु-णयुक्ताम् आशां गमो गमनं मरणं आगम आगमनं पुनर्जन्म यस्मि-स्तादृशात्संसारात् हर मे चित्तमोहः सहसा शीघ्रम् अपसरतु दूरी-भवत्वित्यर्थः। जघनविपुला छन्दः । अत्र सहसेतिपदादन्यत्र सर्व-त्रैव संस्कृतप्राकृतयोर्भाषयोः श्लेषः ॥ ३७२ ॥

प्रकृतिश्लेषमुदाहरति—अयमिति । हृदि स्वहृदये ज्ञेषु विद्वत्सु च व-क्ष्यति धारयिष्यति कथयिष्यति च । सामर्थ्यं कृन्तत्तीति करोतीति च सामर्थ्यकृत् इति क्रमेणार्थः । अत्र वक्ष्यतीति वहिवच्योर्लृटि रूपम् तु-ल्यम् कृदिति कृन्तति-करोत्योः क्विपि रूपं तुल्यमिति प्रकृत्योरेव भिन्न-स्वरूपतया न तु प्रत्ययस्यापीति प्रकृतिश्लेषो ॥ ३७३ ॥

प्रत्ययश्लेषमुदाहरति-रजनीति । रजनिरमणश्चन्द्रो मौलौ किरीटे यस्य तस्य हरस्य पादपद्मयोरवलोकनमेव क्षण उत्सवस्तत्समये परा

सर्वस्वं हर सर्वस्य त्वं भवच्छेदतत्परः ।
नयोपकारसाम्मुख्यमायासि तनुवर्तनम् ॥ ३७५ ॥

(१२०) भेदाभावात्प्रकृत्यादेर्भेदोऽपि नवमो भवेत् ।

नवमोऽपीत्यपिर्भिन्नक्रमः ।

उदाहरणम्—

योऽसकृत्परगोत्राणां पक्षच्छेदक्षणक्षमः ॥
शतकोटिदतां बिभ्रद्विबुधेन्द्रः स राजते ॥ ३७६ ॥

अत्र प्रकरणादिनियमाभावात् द्वावप्यर्थौ वाच्यौ ।

---

परासं सत्पदासम् अपूर्वायाः संपदः सहस्रं यस्मिन्कर्मणि तद्यथा भवति तथा प्रमथानां निवहमध्ये समूहमध्ये जातु चित्कदाचित् त्वत्प्रसादात् अहम् उचिता रुचिः प्रीतिर्यस्य तथाभूतः सन् नन्दिता आनन्दकः स्यामित्याशंसा तथा एवं सति सा गणमध्यगणनैव मे मम नन्दिता नन्दिनस्तन्नामकगणाधिपस्य भावः नान्दित्वं स्यात् भवेदित्यर्थः । अत्र स्यान्नन्दितेति स्याम् स्यात् इति उत्तमपुरुष-प्रथमपुरुषयोस्तुल्यं रूपमिति तयोः श्लेषः । तथा नन्दितेति तृच्तलोस्तुल्यं रूपमिति तयोः श्लेषः ॥ ३७४ ॥

सुप्तिङोः श्लेषमुदाहरति–सर्वस्वमिति । शिवं प्रति भक्तस्य पुत्रं प्रति दस्योश्चोक्तिः । हे हर ! शंभो ! त्वं सर्वस्य सर्वस्वं यतो भवस्य संसारस्य छेदे विनाशे तत्पर आसक्तः अतो नयो नीतिः उपकारश्च दुःखात्त्राणं तयोः साम्मुख्यम् आनुकूल्यं यस्मात्तादृशं तनुवर्तनं शरीरावस्थितिम् आयासि प्राप्नोषीत्यर्थः । पक्षान्तरे हेपुत्र ! त्व सर्वस्य सर्वस्व हर चोरय त्वं छेदः भित्तेर्ग्रन्थेश्च छेदने तत्परो भव उपकारसाम्मुख्यं प्रत्युपकारकरणं नय दूरीकुरु आयासि परेषामायासदायकं वर्तनं जीविकां विस्तारयेत्यर्थः । अत्र हर इत्यादिपदमेकत्र सुबन्तमन्यत्र तिङन्तम् एवमायासि तनु इत्यादावपि विभक्तिश्लेषः ३७५

एवमष्टविधं सभङ्गश्लेषं निरूप्य संप्रत्यभङ्गश्लेषमाह–भेदाभावादिति । पूर्वोक्तप्रकृत्यादिरूपभेदकाभावे यत्रार्थद्वये युगपत्तात्पर्यमवगम्यते स नवमोऽपि प्रकारः श्लेषस्येत्यर्थः । अभङ्गश्लेष इति यावत् ॥

अभङ्गश्लेषमुदाहरति–योऽसकृदिति । यः असकृदनेकवारं परगोत्राणां शत्रुवंशानां पक्षस्य सहायस्य छेदे खंडने क्षणेन क्षणमात्रेणैव क्षमः समर्थः शतकोटिना वज्रतुल्येन अस्त्रेण घाति शत्रून् खंडयती·

नन्नु स्वरितादिगुणभेदात् भिन्नप्रयत्नोच्चार्य्याणां तदभावादभिन्नप्रयत्नोच्चार्याणां च शब्दानां बन्धेऽलङ्कारान्तरप्रतिभोत्पत्तिहेतुः शब्दश्लेषोऽर्थश्लेषश्चेति द्विविधोऽप्यर्थालङ्कारमध्ये परिगणितोऽन्यैरिति कथमयं शब्दाऽलङ्कारः । उच्यते इह दोषगुणालङ्काराणां शब्दार्थगतत्वेन यो विभागः सः अन्वयव्यतिरेकाभ्यामेव व्यवतिष्ठते । तथाहि—कष्टत्वा-

---

ति शतकोटिदस्तस्य भावस्तत्ता तां छेदकतां बिभ्रत् दधानः । यद्वा शतकोटेर्दातृतां बिभ्रत् स विबुधेन्द्रः पण्डितश्रेष्ठो राजा राजते शोभते इति राजपक्षेऽर्थः । इन्द्रपक्षे तु यः परगोत्राणां श्रेष्ठपर्वतानां पक्षस्य पतत्रस्य छेदे क्षणक्षम इति पूर्ववत् शतकोटिना वज्रेण द्यति असुरान् खंडयतीति तस्य भावस्तत्ता तां बिभ्रत् । स विबुधेन्द्रो देवराजः राजते इत्यर्थः । अत्रार्थान्तरस्य व्यङ्गताशंकां निराकरोति—अत्रेति । अत्रैकार्थमात्रनियतप्रकरणाद्यभावात् राजेन्द्ररूपौ द्वावप्यर्थौ वाच्यावेवेति भावः ॥ ३७६ ॥

अभङ्गश्लेषस्यार्थाऽलङ्कारेऽन्तर्भावात् कथं शब्दश्लेषत्वमिति शङ्कते—नन्वित्यादिना । कथमयं शब्दालङ्कार इत्यन्तेन । स्वरितादीति । आदिना उदात्तानुदात्तौ गुणत्वं चैषां सजातीयेभ्यो भेदकत्वात् तथा च स्वरितादयो ये गुणास्तेषां भेदात् भिन्नो यः प्रयत्नः कण्ठताल्वाद्यभिघातानुकूलस्तेनोच्चार्य्याणामुच्चारणयोग्यानां तदभावादित्यादि स्वरितादिगुणभेदाभावात् अभिन्नः एको यः प्रयत्नस्तेनोच्चार्याणां च बन्धे रचनायामलङ्कारान्तरस्य उपमादेः प्रतिभा आभानमात्रं तस्या उत्पत्तौ हेतुर्हेतुभूतः अलङ्कारान्तराणां प्रतिभामात्रमुत्पादयति । नत्वलङ्कारान्तरकृतश्चमत्कार इति भावः । अर्थालङ्कारमध्ये अर्थद्वयप्रतीतावेवालङ्कारत्वोपगमादर्थाश्रितत्वेन द्वयोरप्यर्थालङ्कारतयाऽर्थालङ्कारमध्ये अन्यैः अलङ्कारसर्वस्वकारादिभिः परिगणितः पठितः । इतीति । इति हेतोः अयम् अभङ्गश्लेष इति सन्दर्भार्थः। समाधत्ते उच्यते इत्यादि, दोषगुणेति । गुणग्रहणं वामनादिपरमतेन, स्वमते तु गुणानां रसैकगतत्वेन शब्दार्थगतत्वाभावात् । अन्वयेति । तत्सत्त्वे तत्सत्त्वमन्वयस्तद्भावे तदभावो व्यतिरेकस्ताभ्यामेवेत्यर्थः । योऽलङ्कारो यदीयान्वयव्यतिरेकावनुविधत्ते स तदलङ्कारो व्यवस्थाप्यते इति यावत् । व्यवतिष्ठते व्यवस्थितो भवति यत्र हि पर्यायान्तरपरिवृत्तिसहत्वं नास्ति, तस्य शब्दगतत्वम् यत्र तु तत्सहत्वं तस्यार्थगतत्वमिति बोध्यम् । कष्टत्वेत्यादि । कष्टत्वादयो दोषाः गाढत्वादयो वामनो-

दिगाढत्वाद्यनुप्रासादयः व्यर्थत्वादिप्रौढ्याद्युपमादयस्तद्भाव-तदभावा-नुविधायित्वादेव शब्दार्थगतत्वेन व्यवस्थाप्यन्ते ।

स्वयं च पल्लवाताम्रभास्वत्करविराजिता ।

प्रभातसन्ध्येवास्वापफललुब्धेहितप्रदा ॥३७७॥ इति सभङ्गः,

इति द्वावपि शब्दैकसमाश्रयाविति द्वयोरपि शब्दश्लेषत्वमुपपन्नम् न त्वाद्यस्यार्थश्लेषत्वम् । अर्थश्लेषस्य तु स विषयः यत्र शब्दपरिवर्त्तने-ऽपि न श्लेषत्वखण्डना यथा—

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् ॥

अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च ॥ ३७८ ॥

---

का दश गुणाः, अनुप्रासादयोऽलङ्काराः, एते शब्दगता इत्यर्थः । पर्य्यायान्तरेणापि तदर्थोपस्थापने तेषां संभवात् । व्यर्थत्वादीति । व्यर्थत्वादयो दोषाः, प्रौढ्यादयो वामनोक्ता दश गुणा, उपमादयो-ऽलङ्काराः, एतेऽर्थगता इत्यर्थः पर्यायान्तरेणापि तदर्थोपस्थापने तेषां संभवात् । उक्तानां शब्दार्थगतत्वे हेतुमाह—तद्भावेति । अनुवि-धायित्वमनुसारित्वम् तथा च ये दोषगुणालङ्काराः यदीयभावाभा-वावनुसरन्ति ते तदीयत्वेन व्यवस्थाप्यन्ते इत्यर्थः ॥

श्लेषस्य क शब्दान्वयव्यतिरेकानुसारित्वं दृष्टमित्याह—स्वयं चेति । पार्वतीवर्णनम् । पार्वती स्वयं च न केवलं महत्सम्बन्धित्वेनैव स्वामि-सम्बन्धेनैव श्लाघनीया किन्तु स्वयमप्येवभूता किंभूता पल्लववत् आताम्रौ अरुणौ भास्वन्तौ दीप्तिमन्तौ च यौ करौ ताभ्यां विराजिता शोभिता पुनः सुखेन आप्यते इति स्वापं सुलभं न स्वापमस्वापन्दु-र्लभं यत्फलं मोक्षादिकन्तत्र ये लुब्धाः अभिलाषशीलास्तेषामी-हितप्रदा वाञ्छितदात्री केव प्रभातसन्ध्येवेत्यर्थः । प्रभातसन्ध्यापक्षे पल्लववत् आताम्रैः भास्वत्करैः सूर्य्यकिरणैः विराजिता, अस्वापो निद्राभावस्तद्रूपं यत्फलं स्नानसन्ध्यादिकं तत्र लुब्धे जने हितप्रदा, इष्टदात्रीत्यर्थः । अत्र पूर्वार्धे भास्वत्करेत्यत्राभङ्गश्लेषः । द्वितीयार्धे-ऽस्वापेत्यत्र सभङ्गश्लेषस्तदाह—इति द्वावपीति, शब्दैकेति । अन्वयव्यतिरे-काभ्यामिति शेषः । तथा चोभयश्लेषोदाहरणतया निर्णीतेऽप्यत्र पद्ये परार्ध इव पूर्वार्धेऽपि तत्तच्छब्दे सति असति च श्लेषस्य सत्त्वमस-त्त्वमिति शब्दाधीनस्वरूपा विशेषेण शब्दालङ्कारत्वमवश्यं वक्तव्यन्त-देवाह—नत्वित्यादि । आद्यस्य मयमप्रोक्तरूपस्याभङ्गश्लेषस्य । ननु भ-

न चायमुपमाप्रतिभोत्पत्तिहेतुः श्लेषः, अपि तु श्लेषप्रतिभोत्पत्तिहेतुरुपमा। तथा हि—यथा 'कमलमिव मुखं मनोज्ञमेतत्कचतितराम्' इत्यादौ गुणसाम्ये क्रियासाम्ये उभयसाम्ये वा उपमा। यथा—

'सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिव,

इत्यादौ शब्दमात्रसाम्येऽपि सा युक्तैव। तथाह्युक्तं रुद्रटेन—

स्फुटमर्थालङ्कारावेतावुपमासमुच्चयौ किन्तु।
आश्रित्य शब्दमात्रं सामान्यमिहापि सम्भवतः॥ इति।

न च 'कमलमिव मुखम्' इत्यादिः साधारणधर्मप्रयोगशून्य उपमाविषय इति वक्तुं युक्तम् पूर्णोपमाया निर्विषयत्वापत्तेः।

---

वन्मतेऽर्थश्लेषो निर्विषयः स्यादित्यत आह—अर्थश्लेषस्येति। श्लेषत्वखण्डना श्लेषभङ्गः। अर्थश्लेषमुदाहरति—स्तोकेनेति। स्तोकमल्पमुन्नतिमूर्ध्वगमनमहङ्कारञ्च अधोगतिम् अधोगमनम् दर्पभ्रंशं च सुवर्णादिगुरुत्वनिरूपको घटापरपर्यायो द्रव्यविशेषस्तुला तस्याः कोटिः अग्रम्। अत्र स्तोकादिपदपरिवर्त्तनेन अल्पेनोद्रेकमायातीत्यादिरीत्याऽल्पादिपदोपादानेऽपि न श्लेषत्वभङ्ग इत्यर्थश्लेषोऽयम्। एवमिवादिपदादेरिव यथादिपदादपि साम्याद्यवगते पर्यायपरिवृत्तिसहत्वादुपमादेरप्यर्थालङ्कारता॥ ३७८॥

पूर्वपक्षस्य द्वितीयमंशं निराकरोति—नचेति। अयं स्वयं चेत्याद्युदाहृतः। उपमाया या प्रतिभा आभासत्वेन प्रतीतिस्तस्या उत्पत्तिहेतुः संपादकः। एवमेवार्थः सर्वत्र परत्रापि। ननु गुणक्रियासाम्यस्यैवोपमाप्रयोजकत्वेन शब्दसाम्यमकिंचित्करमिति अत्रोपमैव नास्तीत्याशङ्कां निराकरोति—तथाहीत्यादिना सम्भवत इत्यन्तेन। कचतितराम् दीप्यतेतराम्, गुणसाम्ये मनोज्ञत्वरूपगुणस्य साम्ये, क्रियासाम्ये दीप्तिरूपक्रियायाः साम्ये, उभयसाम्ये उभयोर्गुणक्रिययोः साम्ये। सकलकलमिति। सुधांशुबिम्बपक्षे सकलाः कला यस्य तत् पुरपक्षे कलकलेतिशब्देन सहितं यत्तदिति चार्थः। शब्दमात्रेति। गुणक्रिययोरेवोपमाप्रयोजकत्वे मानाभावात्। सा उपमा। उक्तेऽर्थे वृद्धसम्मतिमाह तथाह्युक्तमिति। स्फुटं निश्चितं सामान्यं साधारणं धर्मम्। इहापीति। शब्दालङ्कारमध्येऽपीत्यर्थः। एवं च रुद्रटमते उपमासमुच्चययोरुभयालङ्कारत्वम्। प्रकृते तु शब्दस्यापि साधारणधर्मत्वमित्येतावन्मात्रे सम्वादः।

देव ! त्वमेव पातालमाशानां त्वं निबन्धनम् ।
त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः ॥ ३७९ ॥

इत्यादिः श्लेषस्य चोपमाद्यलङ्कारविविक्तोऽस्ति विषय इति । द्वयोर्योगे सङ्कर एव उपपत्तिपर्यालोचने तु उपमाया एवायं युक्तो विषयः अन्यथा विषयापहार एव पूर्णोपमायाः स्यात् ।

न च

अबिन्दुसुन्दरी नित्यं गलल्लावण्यबिन्दुका ।

इत्यादौ विरोधप्रतिभोत्पत्तिहेतुः श्लेषः अपि तु श्लेषप्रतिभोत्पत्ति-

---

ननूपमाद्यसङ्कीर्णस्य श्लेषस्यासम्भवात् उपमादीनां च श्लेषं विनाऽपि सम्भवात् सामान्यविशेषन्यायेन श्लेषस्यैवोपमादिबाधकत्वमिति, 'कमलमिव मुखमि'त्यादावपि अर्थश्लेष एवालङ्कारः मनोज्ञत्वस्य उपमानोपमेययोः कमलमुखयोर्भेदेन भिन्नतया श्लिष्टत्वात्, यत्र तु न साधारणधर्मोपादानं तत्र श्लेषाभावादुपमैवालङ्कार इत्याक्षेपे समादधाति—न चेति । साधारणेति । मनोज्ञत्वादिरूपस्य साधारणधर्मस्य यः प्रयोग उपादानं तच्छून्यस्तद्रहित इत्यर्थः । तथा च कमलमिव मुखमित्यादौ मनोज्ञत्वादिरूपस्य साधारणधर्मस्यानुपात्तस्य कल्पितत्वेऽपि न क्षतिरिति भावः । युक्तमिति । न च युक्तमिति पूर्वेणान्वयः । तत्र हेतुमाह—पूर्णोपमेति । पूर्णोपमायाः साधारणधर्माद्युपादाननियतत्वादिति भावः ॥

उपमाद्यलङ्काराणां श्लेषस्य च सामान्यविशेषभावं, श्लेषस्य निर्विषयत्वशङ्कां चापनेतुं श्लेषस्यासङ्कीर्णोदाहरणं दर्शयति—देव त्वमेवेति । हे देव ! हे विष्णो ! त्वमेव पातालमधोभुवनं त्वमाशानां दिशां निबन्धनम् नियमस्थानम् भूलोकः भूलोके एव सूर्यगत्या दिङ्नियमात् त्वममरमरुद्भूमिश्च अमराणां देवानां मरुतां मरुद्गणानां च भूमिः स्वर्गलोक इति यावत् । एवमेकोऽपि लोकत्रयात्मक इति विष्णुपक्षेऽर्थः । राजपक्षे तु देव ! हे राजन् ! त्वमेव अलमत्यर्थं पाता रक्षिता, त्वमाशानामभिलाषाणां याचकवाञ्छानां निबन्धनम् कारणम् निर्वाहको वा, त्वं चामराणां रोमगुच्छकानां ये मरुतो वातास्तेषां भूमिः पात्रम् । एवमेकोऽपि लोकत्रयात्मको जनत्रयात्मक इत्यर्थः । राजा हि कश्चन रक्षिता कश्चन दाता कश्चन सुखी । अयं तु त्रिरूपतया जनत्रयात्मक इति भावः । अत्र प्रकरणादिनियामकाभावात् द्वयोरप्यर्थयोर्वाच्यत्वेन श्लेष एवालङ्कार इत्याह—इत्यादिरिति ।

हेतुर्विरोधः। नह्यत्रार्थद्वयप्रतिपादकः शब्दश्लेषः द्वितीयार्थस्य प्रतिभात-मात्रस्य प्ररोहाभावात्। न च विरोधाभास इव विरोधः श्लेषाभासःश्लेषः। तदेवमादिषु वाक्येषु श्लेषप्रतिभोत्पत्तिहेतुरलङ्कारान्तरमेव। तथा च

सद्वंशमुक्तामणिः॥ ३८०॥

---

उपमेति। अत्र इवाद्यप्रयोगादुपमान-प्रकरणादिनियामकाभावात् तुल्य-योगितादीपकं नेति भावः। एवं च देव त्वमेवेत्यादौ येन ध्वस्तमनोभ-वेनेत्यादौ वा नास्त्येव किञ्चिदलङ्कारान्तरम् इत्युपमाश्लेषयोर्विभ-क्तोदाहरणसंभवाद्बाध्यबाधकभावानुपगमेऽलङ्कारान्तरयोरिव उपमा-श्लेषयोरप्येकत्रोपनिपाते सङ्करालङ्कार एव युक्त इत्याह—द्वयोर्योग इति। ननु साधारणधर्मानुपादाने एव तथा, तदुपादाने तु उपात्त-धर्मेणैव सादृश्यमिवादिना बोध्यते, अन्यथा हंसीव धवल इत्यादौ दुष्टोपमात्वं न स्यादिति न श्लेषनिरपेक्षाऽत्रोपमेत्याशयेनाह-उपपत्तीति। उपपत्तिश्चेयम्—व्यपदेशाः प्राधान्येन भवन्तीति वस्तुस्थितिः। प्रधानं चात्रोपमा श्लेषस्य तन्निर्वाहकस्य तदङ्गत्वात्, नहि श्लेषं विना समानशब्दवाच्यत्वलक्षणं साधर्म्यमुपमानिर्वाहकं निर्वहति, उपमा तु न श्लेषाङ्गं श्लेषप्रतीतिम्विना तत्प्रतीत्यभावेन तदनुपकार-कत्वादिति। अन्यथेति। यदि च उपमाव्यवहारवारणाय साधारणधर्म-प्रयोगशून्य उपमाविषय इति स्वीकर्तव्यं तदा पूर्णोपमाया निर्विषय-त्वमेव स्यादिति भावः॥ ३७९॥

न केवलमुपमाया एव श्लेषबाधकत्वं किन्त्वलङ्कारान्तरस्यापी-त्याह-नचेत्यादिना प्ररोहाभावादित्यन्तेन। अबिन्द्विति। इयं स्त्री अप्सु प्रति-बिम्बित इन्दुरबिन्दुस्तद्वत्सुन्दरी तथा नित्यं गलन्तः स्तुवन्तो ला-वण्यस्य बिन्दवो यस्यास्तादृशीवेत्युत्प्रेक्षागर्भम्। अत्र अबिन्दुर्बि-न्दुशून्याऽपि लावण्यबिन्दुमतीति विरोधः। परिहारस्तु उक्तार्थे-नोक्त एव। अत्र श्लेषस्य प्रतिभामात्रम्। विरोध एव चालङ्कारः। तथाचात्र विरोधालङ्कारेण श्लेषो बाध्यत इति भावः। विनिगमक-माह-नहीत्यादि। अर्थद्वयप्रतिपादकः उभयविधार्थस्यान्वयबोधकत-याऽभिप्रेतः। यत्र हि अर्थद्वयस्य समकक्षत्वं स श्लेषस्य विषय इति भावः। द्वितीयार्थस्य बिन्दुरहितबिन्दुसहितरूपार्थस्य प्रति-भातमात्रस्य शब्दशक्तिमहिम्ना, आपातत उपस्थितस्य प्ररोहा-भावात् शाब्दबोधाविषयत्वात्। द्वितीयार्थस्यापि शाब्दे प्रवेशे वास्तविकविरोधप्रसङ्गादिति तात्त्विकः श्लेष एव नास्ति, क्वचि

नाल्पः कविरिव स्वल्पश्लोको देव ! महान् भवान् ॥३८१॥

अनुरागवतीसन्ध्या दिवसस्तत्पुरः सरः ।
अहो दैवगतिश्चित्रा तथाऽपि न समागमः ॥ ३८२ ॥

आदाय चापमचलं कृत्वाऽहीनं गुणं विषमदृष्टिः ।
यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षीन्नमस्तस्मै ॥ ३८३ ॥

---

चास्तामस्य विरोधितेति । ननु विरोधाभासस्य विरोधालङ्कारत्वमिव श्लेषाभासस्यापि श्लेषालङ्कारत्वमस्तु इत्याशंक्य समादधाति—नचेति । वास्तविकविरोधस्य दोषतया विरोधाभासस्यैव विरोधालङ्कारत्वं स्वीक्रियते श्लेषस्य तु वास्तविकस्य सम्भवेन तस्यैवालङ्कारत्वं युक्तमिति भावः । एवमेव रूपकालङ्कारादिनाऽपि श्लेषो बाध्यते इत्युपसंहारव्याजेनाह—तदिति । तस्मादित्यर्थः । श्लेषेति । अत्र षष्ठीतत्पुरुष एव न बहुव्रीहिः । अलङ्कारान्तरविशेषणत्वेन नपुंसकत्वापत्तेः । अलङ्कारान्तरमेवेति । साधीय इति शेषः । चमत्कारित्वेन प्राधान्यादिति भावः । एवमादिष्विति यदुक्तं तद्दर्शयति—तथा चेत्यादिना न तु श्लेषत्वमित्यन्तेन । सद्वंशेति । अयं राजा सद्वंशः सत्कुलमेव सद्वेणुस्तत्र मुक्तामणिः । वेणोर्मुक्तोत्पत्तिस्थानत्वन्तु प्रसिद्धमेव अत्र वंशशब्दश्लेषप्रयुक्तं वेणुकुलयोः रूपकमेव मुक्तामणित्वारोपे हेतुरिति श्लिष्टपरम्परितरूपकम् श्लेषस्तु तन्निर्वाहकतया तदङ्गत्वेनाप्रधानमेवेति ॥ ३८० ॥

नाल्प इति । देव ! हे राजन् ! महान् भवान् अल्पः क्षुद्रः कविरिव न स्वल्पश्लोकः श्लोको यशः पद्यं च । अत्रान्यकवितो व्यतिरेकः श्लोकशब्दश्लेषप्रयुक्त इति श्लेषमूलकव्यतिरेकालङ्कारोऽयं श्लेषस्तु तदङ्गत्वेनाप्रधानमेवेति ॥ ३८१ ॥

अनुरागवतीति । अनुरागः प्रेमविशेषो रक्तिमा च, पुरःसरोऽग्रगामी सम्मुखश्च, समागमो मिलनं स्त्रीपुरुषसङ्गमश्च, अहो आश्चर्यम्, चित्रा विचित्रा, अत्राभिधाया नियमनेनार्थद्वयान्वयबोधस्याभावान्न श्लेषः किन्तु श्लिष्टविशेषणमहिम्ना नायकवृत्तान्तप्रतीतिमात्रमिति समासोक्तिरेवालङ्कारः ॥ ३८२ ॥

आदायेति । यः विषमाऽयुग्मा दृष्टिर्यस्य स त्रिलोचनः अचलं पर्वतं मन्दराख्यं चापं धनुः आदाय गृहीत्वा अहीनां सर्पाणामीनं प्रभुं वासुकिं गुणं मौर्वीं कृत्वा चित्रमाश्चर्यम्, अच्युतो विष्णुः शरो बाणो यस्य तथाभूतः सन्, लक्ष्यं त्रिपुरासुररूपं शरव्यमभां-

इत्यादावेकदेशविवर्तिरूपक-श्लेष-व्यतिरेक-समासोक्ति-विरोधत्वमुचितम् न तु श्लेषत्वम्। शब्दश्लेष इति चोच्यते अर्थालङ्कारमध्ये च लक्ष्यते इति कोऽयं नयः। किं च वैचित्र्यमलङ्कार इति य एव कविप्रतिभासंरम्भगोचरस्तत्रैव विचित्रता इति सैवाऽलङ्कारभूमिः। अर्थमुखप्रेक्षित्वमेतेषां शब्दानामिति चेत्, अनुप्रासादीनामपि तथैवेति तेऽप्यर्थालङ्काराः किं नोच्यन्ते। रसादिव्यञ्जक-स्वरूपवाच्य-विशेषसव्यपेक्षत्वेऽपि ह्यनुप्रासादीनामलङ्कारता। शब्दगुणदोषाणामप्यर्थापेक्षयैव गुणदोषता अर्थगुणदोषालङ्काराणां शब्दापेक्षयैव व्यवस्थितिरिति तेऽपि शब्दगतत्वेनोच्यन्ताम्। 'विधौ वक्रे मूर्ध्नि' इत्यादौ च वर्णादिश्लेषे एकप्रयत्नोच्चार्यत्वेऽर्थश्लेषत्वं शब्दभेदेऽपि प्रसज्यतामित्येवमादि स्वयं विचार्यम्॥

---

क्षीत् जघान तस्मै महाधानुष्काय नम इति प्रकृतोऽर्थः। अत्र विषमा लक्ष्यादन्यत्र निहिता दृष्टिर्येन तादृशो यो धन्वी अचलं चलनशून्यं निष्क्रियं चापमादाय हीनं जीर्णम् निष्कृष्टं वा अथवा अहीनं धनुर्दण्डादन्यूनपरिमाणं गुणं कृत्वा अच्युतो गुणादनिर्गतः शरो यस्य तथाभूतः सन्नपि लक्ष्यं शतसहस्रीरूपं शरव्यमभांक्षीदिति विरोधाभासः। अत्र विरोधाभास एव प्रधानभूतोऽलङ्कारः श्लेषस्तु तदङ्गमात्रं तस्य प्ररोहाभावात्॥ ३८३॥

तदेतत्सर्वमभिप्रेत्य चतुर्षूदाहरणेषु यथाक्रममलङ्कारं दर्शयति—इत्यादावित्यादि। श्लेषव्यतिरेकेति। श्लेषमूलकव्यतिरेकेत्यर्थः। विरोधत्वमिति। त्वशब्दस्य द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकमन्वयः। न तु श्लेषत्वमिति। श्लेषेणैव तेषां निर्वाहो न तु तैः श्लेषस्येति भावः। पूर्वपक्षस्य तृतीयमंशं दूषयति—शब्दश्लेष इतीति। कोऽयं नयो न्यायः। प्रभातसंध्येवेत्यादौ शब्दश्लेषस्यार्थालंकारत्वमिति भवतां वचनं विरुद्धम्। शब्दानाश्रितत्वे तेन व्यपदेशस्य न्याय्यत्वादिति भावः। ननु शब्दालङ्कारतया न शब्दश्लेषव्यपदेशः किन्तु विजातीययोः शब्दयोः श्लेषरूपतया तथा व्यपदेशः अर्थालङ्काररूपतया चार्थालङ्कारमध्ये गण्यते इति को दोष इत्यत आह—किंचेति। य एव शब्दो वाऽर्थो वा कविप्रतिभायाः कविबुद्धिकौशलस्य संरम्भः पर्यवसानं तस्य गोचरो विषयस्तत्रैव शब्दे वाऽर्थे वा विचित्रता इति हेतोः सैव अलङ्कारस्य भूमिः आश्रयः। विचित्रताया एवालङ्कारतया यत्र विचित्रता तत्रैव सुतरामलङ्कार इति फलितोऽर्थः। एवं चोक्तो-

(१२१) तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता ॥ ८५ ॥

सन्निवेशविशेषेण यत्र न्यस्ता वर्णाः खड्ग-मुरज-पद्माद्याकार-मुल्लासयन्ति तच्चित्रं काव्यम् । कष्टं काव्यमेतदिति दिङ्मात्रं प्रदर्श्यते ।

---

भयाविश्लेषस्थले कविप्रतिभासंरम्भाविषयतया शब्दस्यैव वैचित्र्यम् इति तद्गत एव तत्र श्लेष इति भावः । ननु निरर्थकशब्दानां श्लेषासम्भवेन श्लेषस्यार्थसापेक्षतया अर्थालङ्कारत्वमिति युक्तमेवेति पूर्वपक्षयति-अर्थमुखेति । अर्थमुखप्रेक्षित्वमर्थसापेक्षत्वम् , न हि अर्थद्वयप्रतीतिं विना श्लेषस्य चमत्कारित्वं सम्भवो वेत्यर्थालङ्कारत्वं श्लेषस्येति भावः । एतेषां श्लेषगोचराणाम् । एवन्तर्हि अनुप्रासादीनामप्यर्थापेक्षित्वादर्थालङ्कारत्वापत्तिरिति दूषयति-अनुप्रासादीनामिति । आदिना वक्रोक्त्यादयः । तथैवेति । अर्थमुखप्रेक्षित्वमेवेति । कथमनुप्रासादीनामर्थापेक्षित्वन्तदाह-रसादीति । आदिना भावादिः । रसादिव्यञ्जकं यत्स्वरूपं यश्च वाच्यविशेषोऽर्थविशेषस्तयोः सदपेक्षत्वे अधीनत्वे सति हि अनुप्रासादीनामपि अलङ्कारता । ननु श्रुतिवैचित्र्यादेवानुप्रासादीनामलङ्कारतेति शाब्दत्वं स्यादित्यतो दोषान्तरमाह-शब्दगुणेति । शब्दस्य ये गुणा दोषाश्च तेषामपि । अर्थापेक्षयैवेति । ततश्च आर्थत्वं स्यादिति भावः । आर्थेषु वैपरीत्यमपि स्यादित्याह-अर्थगुणेति । अर्थस्य ये गुणा दोषा अलङ्काराश्च तेषां शब्देनार्थबोधं विनाऽसम्भवात् शब्दापेक्षयैव व्यवस्थितिरिति तेऽपि शब्दगतत्वेनोच्यन्तामिति भावः । यच्चोक्तम् एकप्रयत्नोच्चार्यत्वमेवार्थश्लेषत्वे नियामकमिति तदप्ययुक्तमिति दूषयति-विधाविति । शब्दभेदे विधि-विधुरूपे, प्रसज्यतामिति । उक्तस्यैवार्थश्लेषे नियामकत्वे विधौ वक्रे इत्यादौ वर्णादिशब्दभेदेऽपि अर्थश्लेषत्वापत्तेरिति भावः । स्वयं विचार्यमिति स्वयमपि विचार्य्यम् न तु परोक्तत्वेनैव द्वेषः कार्य इति भावः । इति श्लेषविचारः ॥

चित्रमलङ्कारं लक्षयति-तच्चित्रमिति । यत्र अलङ्कारे । नन्वमूर्तानां वर्णानां कथं खड्गाद्याकारतेत्यत आह-सन्निवेशेति । रचनाविशेषेण । हेतुशब्दं विवृणोति-उल्लासयन्तीति । सम्पादयन्तीत्यर्थः । दिङ्मात्रम्-अल्पम् । अस्यानन्त्यमग्निपुराणे उक्तम्—

> वाणबाणासनव्योमखड्गमुद्गरशक्तयः ।
> मृदङ्गपद्मशृङ्गाटदम्भोलिमुसलाङ्कुशाः ॥
> पदं रथस्य नागस्य पुष्करिण्यसि पत्रिका ।
> एते बन्धास्तथा चान्येऽप्येवं ज्ञेयाः स्वयं बुधैः॥८५॥ इति ।

तत्र खड्गबन्धं श्लोकाभ्यामुदाहरति-मारारीति । उमा- पार्वती मे मम

उदाहरणम् —

मारारिशक्ररामेभमुखैरासाररंहसा ।
साराब्धस्तवा नित्यं तदार्तिहरणक्षमा ॥ ३८४ ॥

माता नतानां सङ्घट्टः श्रियां बाधितसंभ्रमा ।
मान्याऽथ सीमा रामाणां शं मे दिश्यादुमादिमा ॥ ३८५ ॥

( खड्गबन्धः )

सरला बहुलारम्भतरलालिबलारवा ।
वारलाबहुलामन्दकरलाबहुलामला ॥ ३८६ ॥

( मुरजबन्धः )

भासते प्रतिभासार ! रसाभाताहताविभा ।
भावितात्मा शुभा वादे देवाभा बत ते सभा ॥ ३८७ ॥

( पद्मबन्धः )

---

शं सुखं दिश्याद्दद्यात् । किंभूता मारस्य कंदर्पस्यारिः शंभुः, शक्र इन्द्रः, रामो रघुनन्दनः परशुरामो वा, इभमुखो गणेशः, एतैः आसाररंहसा आसारस्य वर्णधारासम्पातस्य रंहेन अविच्छेदेन सारः उत्कृष्टः आरब्धः स्तवः स्तोत्रं यस्यास्तथाभूता पुनः नित्यमनवरतं तेषामारारिशक्रादीनां या आर्त्तिः पीडा तस्या हरणे दूरीकरणे क्षमा समर्था पुनः नतानां नम्राणां माता वत्सला श्रियां संघट्टः सम्मेलनस्थानम् सर्वासां सहवासात्सङ्कीर्णस्थानम् बाधितो निरस्तः संभ्रम उद्वेगो यस्याः सा । पुनर्मान्या सर्वैर्माननीया रामाणां नारीणां सीमा पराकाष्ठा आदिमा सर्वादिभूतेत्यर्थः ॥ ३८४ ॥ ३८५ ॥

मुरजबन्धमुदाहरति—सरलेति । अत्र प्रकरणगम्या शरद्विशेष्या । शरत् जयतीति शेषः । किंभूता सरला मेघादिकौटिल्यरहिता, बहुलारम्भाणां नानाकुसुमलंपटानां अत एव तरलानां चञ्चलानामालिबलानां भ्रमरसैन्यानां मारवः कोलाहलो यस्यां सा वरला एव वारला हंस्यः बहुला यस्यां सा अमन्दा उद्योगिनः करला राजधनग्राहिणो यस्यां सा बहुले कृष्णपक्षेऽपि अमला निर्म्मला ॥ ३८६ ॥

पद्मबन्धमुदाहरति—भासत इति । हे प्रतिभासार ! प्रज्ञाश्रेष्ठ ! राजन् ! ते सभा भासते, किंभूता रसैः प्रीतिरूपैः शृङ्गारादिभिर्वा आभाता शोभिता, रसिका वा, अहता अप्रतिहता, आविभा सम्यग्दीप्तिर्यस्याः सा भावितो निर्णीतः आत्मा परमात्मा यस्यां सा तत्त्वज्ञवि शिष्टा । भावितो वशीकृत आत्मा ययेति वाऽर्थः । वादे तत्त्व-

रसासार ! रसा सारसायताक्ष ! क्षतायसा ।
सातावात ! तवातासा रक्षतस्त्वस्त्वतक्षर ! ॥ ३८८ ॥
( सर्वतोभद्रम् )

सम्भविनोऽप्यन्ये प्रभेदाः शक्तिमात्रप्रकाशका न तु काव्यरूपतां दधतीति न प्रदर्श्यन्ते ।

(१२२) पुनरुक्तवदाभासो विभिन्नाकारशब्दगा ।
एकार्थतेव

भिन्नरूपसार्थकानर्थकशब्दनिष्ठमेकार्थत्वेन मुखे भासनं पुनरुक्तवदाभासः । स च—

(१२३) शब्दस्य

सभङ्गाभङ्गरूपकेवलशब्दनिष्ठः ।

---

कथायां शुभा निपुणा देवाभा देवतुल्येत्यर्थः ॥ ३८७ ॥

सर्वतोभद्रमुदाहरति-रसेति । हे रसासार ! रसायां पृथिव्यां श्रेष्ठ ! राजन् ! रक्षतः रक्षणं कुर्वतस्तव रसा पृथ्वी क्षतायसा क्षतो नाशितः अयः शुभावहविधिर्येषां ते दुर्जनाः तान् स्यति अस्तं प्रापयति तादृशी तु शब्दश्चार्थे न विद्यते तास उपक्षयो यस्याः सा अतासा अनुपक्षया च अस्तु निरुपद्रवा स्थिरा च भवत्विति भावः । अथ सम्बोधनविशेषणानि सारसवत्पद्मवत् आयते विशाले अक्षिणी यस्य तादृश ! सातं नाशितम् अवातमज्ञानं येन तादृश ! अथ वा साते सुखे अवात ! अचंचल ! अतक्षम् अनल्पं राति ददाति तादृशेत्यर्थः । अन्ये प्रभेदा इति । ते चोक्ताः । आतनीरसत्वात्क्लिष्टत्वाच्च न ते काव्यरूपतां दधतीति भाव इति चित्रम् ॥ ३८८ ॥

शब्दार्थोभयवृत्तित्वेन शब्दार्थालङ्कारयोर्मध्ये पुनरुक्तवदाभासं लक्षयति–पुनरुक्तवदिति । विभिन्नाकारो विजातीयानुपूर्वीको यः शब्दः तद्गता या एकार्थतेव एकार्थकत्वेनापाततो भासनं पुनरुक्तवदाभास इति सूत्रार्थः । यमकलाटानुप्रासयोरतिप्रसक्तिवारणाय विभिन्नाकारेत्यादि । तदेतदाह वृत्तिकारः भिन्नरूपेत्यादि । मुखे आपाततः भासनं प्रतीतिः । तथा च विभिन्नरूपयोर्वस्तुतो भिन्नार्थकयोरपि शब्दयोरापातत एकार्थकतया प्रतीतिः पुनरुक्तवदाभास इति वृत्त्याशयः । पुनरुक्तस्येव पुनरुक्तवत् आभासो ज्ञानमित्यर्थः स चायं द्विविधः शब्दमात्रस्य शब्दार्थयोश्चेति । तयोराद्यमाह–शब्दस्येति । शब्द-

उदाहरणम्—

अरिवधदेहशरीरः सहसा रथिसूततुरगपादातः।
भाति सदानत्यागः स्थिरतायामवनितलतिलकः॥ ३८९॥
चकासत्यङ्गनारामाः कौतुकानन्दहेतवः।
तस्य राज्ञः सुमनसो विबुधाः पार्श्ववर्तिनः॥ ३९०॥

मात्रस्येत्यर्थः। अयमपि द्विधा सभङ्गशब्दनिष्ठोऽभङ्गशब्दनिष्ठश्चेति। तदाह–सभङ्गाभङ्गेति। शब्दनिष्ठ इति। शब्दस्यैवान्वयव्यतिरेकानुविधायित्वात् पर्यायपरिवृत्त्यसहत्वादिति भावः।

तत्र सभङ्गशब्दनिष्ठमुदाहरति–अरिवधेति। अवनितलतिलको भूतलभूषणभूतो राजा भाति कया सदा सर्वकाले नत्या नम्रभावेन कीदृशः अरिवधदा शत्रुविनाशिनी ईहा चेष्टा येषां तादृशा ये शरिणः शरयुक्ता योधास्तानीरयति प्रेरयतीत्यरिवधदेहशरीरः। सहसा शीघ्रं हठेन वा रथिभिः सुष्ठु उताः सम्बद्धाः तुरगा अश्वाः पादाताः पदातिकाश्च यस्य सः स्थिरतायामगः पर्वततुल्य इत्यर्थः। अत्र देह–शरीरशब्दयोः सारथि-सूतशब्दयोः दान-त्यागशब्दयोश्चापाततः पौनरुक्त्यम् सभंगाश्चैते शब्दा इति सभंगशब्दनिष्ठः पुनरुक्तवदाभासः। उभयोरपि शब्दयोः पर्यायपरिवृत्त्यसहत्वेन शब्दमात्रालङ्कारत्वम्। अत्र देह–शरीर इति द्वावपि शब्दौ सार्थकौ सभंगौ च। सारथि–सूत इति द्वयोराद्यो निरर्थकोऽन्त्यः सार्थकः उभावपि सभंगौ, दान–त्याग इत्युभावपि निरर्थकौ सभंगौ चेति तत्त्वम् ३८९

अभंगशब्दनिष्ठन्तमुदाहरति–चकासतीति। तस्य राज्ञः पार्श्ववर्तिनः सेवकाः चकासति शोभन्ते। किंभूता अङ्गनारामाः कल्याणानि अङ्गानि अवयवा यासां ता अङ्गनाः तासु रमन्ते क्रीडन्तीति तथाभूताः (विरहशून्याः) पुनः कौतुकेन नृत्यगीतादिना य आनन्दस्तस्य हेतवः। पुनः सुष्ठु विषये मनांसि येषां शोभनानि वा मनांसि येषां ते सुमनसः। पुनः विबुधाः पण्डिता इत्यर्थः। अत्रांगना–रामाशब्दयोः स्त्र्यर्थकतया कौतुकानन्दशब्दयोः सन्तोषार्थकतया सुमनसो विबुधा इत्यनयोर्देवार्थकतया चापाततः पौनरुक्त्यम्। अत्राङ्गनादिपदान्यखण्डान्येव सर्वेषां चैतेषां शब्दानां पर्यायपरिवृत्त्यसहत्वाच्छब्दालङ्कारत्वम्। न च अङ्गनारामा इत्यत्राङ्गनाशब्दस्य महिलारूपपर्यायपरिवृत्तिसहत्वेनोभयालङ्कारत्वसम्भवे कथं शब्दमात्रालङ्कारत्वमिति वाच्यम्।

(१२४) तथा शब्दार्थयोरयम् ॥ ८६ ॥

उदाहरणम्—

तनुवपुरजघन्योऽसौ करिकुञ्जररुधिररक्तखरनखरः ।
तेजो धाम महः पृथुमनसामिन्द्रो हरिर्जिष्णुः ॥ ३९१ ॥

अत्रैकस्मिन् पदे परिवर्तिते नालंकार इति शब्दाश्रयः अपरस्मिंस्तु परिवर्तितेऽपि स न हीयते इत्यर्थनिष्ठ इत्युभयालङ्कारोऽयम् ॥

इति काव्यप्रकाशे शब्दालंकारनिर्णयो नाम नवमोल्लासः ॥ ९ ॥

---

विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना ।

इत्यमरात् अङ्गनाशब्दस्य स्त्रीविशेषवाचकत्वेन,

प्रतीपदर्शिनी वामा वनिता महिला तथा ।

इत्यमरान्महिलाशब्दस्य स्त्रीसामान्यवाचकत्वेन तयोर्मिथः पर्यायत्वाभावात् । नन्वानन्दस्यामोदहर्षसन्तोषादिशब्दैः परिवृत्तिसहत्वेन कौतुकानन्देत्यस्य शब्दमात्रालङ्कारोदाहरणत्वमसंगतमिति चेन्न । आपाततः पर्यायत्वेन भानेऽपि आनन्दशब्दस्य सुखविशेषार्थकत्वेनामोदहर्षादिशब्दानां तत्पर्यायत्वाभावात् । अत एव 'यत्रानन्दाश्च मोदाश्चे'त्युत्तररामचरिते,

अप्रहर्षमनानन्दमशोकं विगतक्लमम् ।

इति महाभारते च पृथङ्निर्देशः संगच्छते इति दिक् ॥ ३९० ॥

उभयालंकारं द्वितीयमाह—तथाशब्दार्थेति । तथेति समुच्चये । अयम् पुनरुक्तवदाभासः । उदाहरति—तनुवपुरिति । सिंहवर्णनमिदम् । असौ हरिः सिंहः तनुवपुरपि कृशशरीरोऽपि अजघन्यः श्रेष्ठः प्रसिद्धसिंहेभ्यो विलक्षणः किंभूतः करिकुञ्जराणां गजश्रेष्ठानां रुधिरेण रक्ता लोहितवर्णाः खरास्तीक्ष्णाश्च नखरा नखा यस्य तथाभूतः । तेजसां धाम आश्रयः । महसा तेजसा पृथुमनसां विपुलान्तःकरणानामिन्द्रः प्रभुः । जिष्णुर्जयनशीलश्चेत्यर्थः । आर्या छन्दः । अत्र तनु-वपुश्शब्दयोः शरीरार्थकतया करि-कुंजरशब्दयोर्गजार्थकतया रुधिर-रक्तशब्दयोः शोणितार्थकतया तेजो-धाम-महःशब्दानां तेजोऽर्थकतया इन्द्रहरिजिष्णुशब्दानां देवेन्द्रार्थकतया चापाततः पौनरुक्त्यम् । अत्र तनु, कुंजर, रक्त, धाम, हरि, जिष्णुशब्दाः परिवृत्तिं न सहन्ते । वपुः, करि, रुधिर, इन्द्रशब्दास्तु, तां सहन्ते, इत्युभयालंकारत्वम् । तदाह—अत्रेत्यादि । नालंकारः नायमलंकारः । अन्यत्सुगमम् ॥ ३९१ ॥

इति काव्यप्रकाशे नागेश्वरीटीकायां नवमोल्लासः ।

श्रीशिवो जयति

# अथ दशमोल्लासः ।



अर्थालंकारानाह—

**(१२५) साधर्म्यमुपमा भेदे**

उपमानोपमेययोरेव न तु कार्यकारणादिकयोः साधर्म्यं भवतीति तयोरेव समानेन धर्मेण सम्बन्ध उपमा ।

भेदग्रहणमनन्वयव्यवच्छेदाय ॥

---

यद्यपि साधर्म्यपदेऽनुस्यूतः समानधर्मरूपः प्रतियोगी प्रतीयते तथापि उपमानोपमेयरूपावनुयोगिनौ नोपात्ताविति न्यूनत्वं मनसि कृत्वा आक्षेपादेव तयोर्लाभान्न न्यूनत्वमिति समाधत्ते—उपमानोपमेययोरिति । समानधर्मरूपस्य प्रतियोगिन उपमानोपमेयरूपयोरनुयोगिनोरेव साधर्म्यं साधर्म्यात्मकः सम्बन्धो भवति न तु कार्यकारणादिकयोरित्यर्थः । तयोरेव उपमानोपमेययोरेव । साधर्म्यपदार्थमाह—समानेनेति । एकत्वबुद्धिविषयेणेत्यर्थः । उपमेति । उपमानेन कर्त्रा उपमेयं कर्म उप समीपे मीयते परिच्छिद्यते अनयेत्युपमा आतश्चोपसर्गे इति करणेऽङ् । पंकजादिवद्योगरुढमुपमापदम् । उपमास्थले च उपमानमुपमेयं साधारणो धर्मः साधर्म्यं चेति चतुष्टयमपेक्षते । साधारणधर्मवत्त्वेन प्रसिद्धः पदार्थ उपमानम्, तद्धर्मवत्तया वर्णनीयः पदार्थ उपमेयम्, अधिकगुणवत्तया सम्भाव्यमानमुपमानम्, निकृष्टगुणवत्तया सम्भाव्यमानमुपमेयमिति तत्त्वम् । उपमाने उपमेये च संगतो धर्मः साधारणो धर्मः। यथा कमलमिव मनोज्ञं मुखमित्यत्र मनोज्ञत्वधर्मसम्बन्धात्तद्वत्तया प्रसिद्धेन कमलेन सह मुखमुपमीयते इति मनोज्ञत्वं साधारणो धर्मः कमलमुपमानं मुखमुपमेयमित्युपमालंकारोऽयम् । अत्र सर्वत्र इवादिपदादेरिव यथादिपदादपि साधर्म्याद्यवगतेः पर्यायपरिवृत्तिसहत्वादुपमादेरर्थालंकारतेति दिक् ॥

नन्वेकधर्मवत्त्वमिति व्यवहारस्य भेदे एव सम्भवेन भेदस्याप्याक्षेपादेव लाभसम्भवाद्भेदग्रहणमनर्थकमित्यत आह—भेदग्रहणमिति । अनन्वयेति । नितम्बिनी सैव नितम्बिनीवेति वक्ष्यमाणेऽनन्वयालंकारे एकस्यैवोपमानत्वमुपमेयत्वं चेति तयोः पारमार्थिकभेदविरहात्तद्व्यावृत्तये इत्यर्थः । न च तत्राप्युपमैवेति वाच्यम् । तत्र साधर्म्यस्य चमत्कारि-

(१२६) पूर्णा लुप्ता च ।

उपमानोपमेयसाधारणधर्मोपमाप्रतिपादकानामुपादाने पूर्णा एकस्य द्वयोस्त्रयाणाम्वा लोपे लुप्ता ।

(१२७) साऽग्रिमा ।

श्रौत्यार्थी च भवेद्वाक्ये समासे तद्धिते तथा ॥ ८७ ॥

अग्रिमा पूर्णा ।

यथेववादिशब्दा यत्परास्तस्यैवोपमानताप्रतीतिरिति यद्यप्युपमानविशेषणान्येते तथापि शब्दशक्तिमहिम्ना श्रुत्यैव षष्ठीवत् सम्बन्धं प्रतिपादयन्तीति तत्सद्भावे श्रौती उपमा । तथैव "तत्र तस्येव" इत्यनेनेवार्थे विहितस्य वतेरुपादाने ।

---

त्वाभावात् उपमानान्तरव्यवच्छेदस्यैव चमत्कारित्वात् । न च तत्र धर्मस्यैकत्वे सजातीयताविरहेण नोपमाप्रसंग इति वाच्यम् । धर्मिभेदस्येव धर्मभेदस्यापि काल्पनिकत्वेन सजातीयताऽनपायात् तस्मात्साधर्म्यशब्दस्यारोपितानारोपितसाधारणसमानधर्मसम्बन्धमात्रपरत्वेऽपि अनारोपितसाधर्म्यनिबन्धन एवोपमाऽलंकार इति तत्त्वम् ।

अथोपमां विभजते-पूर्णा लुप्ता चेति । उपमा द्विधा पूर्णा सांगा सकलांगबोधकशब्दोपादानसहिता लुप्ता निरङ्गा यत्किंचिदंगबोधकशब्दोपादानरहिता चेति, तत्राद्यामाह-उपमानेत्यादि । उपादाने निर्देशे पूर्णा पूर्णोपमेत्यर्थः । द्वितीयामाह-एकस्येत्यादि । एतेषां चतुर्णाम्मध्ये एकस्य द्वयोस्त्रयाणां वा लोपेऽनुपादाने लुप्तोपमेत्यर्थः । लुप्तावयवा उपमा लुप्तोपमेति यावत् ।

तयोः पूर्णां षड्विधतया विभजते-साऽग्रिमेति । सा अग्रे भवाऽग्रिमा प्रागुद्दिष्टा पूर्णोपमेत्यर्थः । पूर्णैव तावद्द्विविधेत्याह-श्रौत्यार्थी चेति । श्रौती शब्दगम्या वाच्येति यावत् यथेववादिशब्दसद्भावे श्रवणमात्रेणैव साधर्म्यस्योपस्थितिः । आर्थी अर्थवशलभ्या अर्थापत्तिगम्येति यावत् । इयं च तुल्यसदृशादिशब्दानां तुल्यार्थविहितप्रत्ययस्य चोपादाने भवति इत्थं द्विविधाऽपि पूर्णा वाक्य-समास-तद्धितगामित्वभेदात्षोढेत्याह—भवेद्वाक्ये इति । ऐकपद्यानापन्नमाकांक्षादिमदनेकं पदं वाक्यं संकेतविशेषसम्बन्धेन समासपदवत्त्वं समासः तद्धितसंज्ञको वतिप्रत्ययादिस्तद्धितः । तथा च श्रौती आर्थी च प्रत्येकं वाक्ये समासे तद्धिते च भवेदित्यर्थः । एवं च द्विविधापि पूर्णोपमा

'तेन तुल्यं मुखमि'त्यादावुपमेये एव 'तत्तुल्यमस्ये'त्यादौ चोपमाने एव 'इदं च तच्च तुल्यमि'त्युभयत्रापि तुल्यादिशब्दानां विश्रान्तिरि-

---

वाक्यादिगतत्वेन प्रत्येकं त्रिधा भूत्वा षोढेति भावः। यथेववादिशब्दानां साधारणधर्मसम्बन्धरूपसाधर्म्यवाचकत्वं यथेववादिसद्भावे उपमायाः श्रौतत्वं च व्युत्पादयन् शङ्कते—यथेववादिशब्दा इत्यादिना। यत्परा यदनन्तरमुपात्ताः तस्यैव तदर्थस्यैव उपमानता सादृश्यप्रतियोगित्वरूपा एते यथेववादिशब्दाः। अयंभावः, यद्धि यदर्थे धर्मविशेषं प्रतिपादयति तत्तद्विशेषणमिति एकविशेषणं नापरत्र स्वार्थं प्रत्याययतीति च नियमः। यथा नीलमुत्पलमित्यत्र नीलपदमुत्पलपदार्थे स्वार्थं प्रत्याययत् उत्पलपदस्य विशेषणं भवति ततश्च नान्यत्र स्वार्थं प्रत्याययति तथा 'मुखं मनोज्ञं कमलं यथैतदि' त्यादौ यथाशब्दः कमलपदोत्तरमुपात्तत्वेन कमलपदार्थे उपमानतां प्रत्याययतीति कमलपदस्य विशेषणमिति उपमानभूते कमले एव साधारणधर्मसम्बन्धं बोधयतु तदन्यस्मिन्नुपमेये मुखे कथं साधारणधर्मसम्बन्धमवगमयेदिति उपमानोपमेययोः साधारणधर्मसम्बन्धरूपस्य साधर्म्यस्य शब्दागम्यत्वात्कथमुपमायाः श्रौतत्वमिति। समाधत्ते—तथापीति। शब्दशक्तीति। विचित्राः शब्दशक्तय इति न्यायात् शब्दशक्तिवैचित्र्येणेत्यर्थः। श्रुत्यैवेति। श्रवणमात्रेणेत्यर्थः न तु तुल्यसदृशादिशब्दा इव आक्षेपेणेति भावः। अत्र दृष्टान्तमाह—षष्ठीवदिति। सम्बन्धं प्रकृते साधारणधर्मसम्बन्धरूपं साधर्म्याख्यं सम्बन्धम्। तत्सद्भावे यथेववादिशब्दोपादाने। श्रौती उपमेति। वाक्यगा श्रौती उपमेति भावः। अयमाशयः, "यथा राज्ञो राज्यमि"त्यादौ प्रकृत्यनन्तरमुपात्ता षष्ठी प्रकृत्यर्थे राजनि स्वामित्वं प्रतिपादयन्ती तद्विशेषणं भवन्त्यपि राजराज्ययोः स्वस्वामिभावं सम्बन्धं प्रत्याययति तथा उपमाने उपमानतां प्रत्याययन्तोऽपि यथेववादिशब्दा उपमानोपमेययोः साधर्म्याख्यसम्बन्धं श्रवणमात्रेणोपस्थापयन्त्येव शब्दशक्तिस्वाभाव्यात् तथा च यथेववादिशब्दानां साधर्म्यसम्बन्धवाचकत्वं तत्सद्भावे उपमायाः श्रौतत्वं चोपपन्नमिति। तद्धितमात्रे उपमाया न श्रौतत्वं किन्तु इवार्थविहितवतेरेवेत्याह—तथैवेति। तत्र तद्धितगा श्रौती उपमा सादृश्यप्रतीतिस्त्वार्थिकीति बोध्यम्।

उपमाया आर्थत्वं व्युत्पादयति—तेन तुल्यमिति। अत्र सर्वत्र तत्पदार्थः कमलम् इदम्पदार्थश्च मुखम्। उपमेये एवेति। अस्य तुल्यादि-

ति साम्यपर्यालोचनया तुल्यताप्रतीतिरिति साधर्म्यस्यार्थत्वात्तुल्यादिश-ब्दोपादाने आर्थी तद्वत् "तेन तुल्यं क्रिया चेद्वतिरि"त्यनेन विहितस्य वतेः स्थितौ ।

"इवेन नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं चे"ति नित्यसमासे इवशब्दयोगे समासगा । क्रमेणोदाहरणम् ।

स्वप्नेऽपि समरेषु त्वां विजयश्रीर्न मुञ्चति ।
प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा ॥ ३९२ ॥

---

शब्दानां विश्रान्तिरित्यग्रिमेणैवान्वयः । एवकारेणोपमानव्यवच्छेदः । समानविभक्त्यन्तपदोपस्थाप्यत्वादिति भावः । उपमाने एवेति । समानविभक्त्यन्तपदोपस्थाप्यत्वादेवेति भावः । अन्यत्सर्वं पूर्ववत् । उभयत्रापीति । उपमेये उपमाने चेत्यर्थः । तुल्यादिशब्दानामिति । तुल्यसदृशादिशब्दानां सादृश्यवद्वाचकानामित्यर्थः । विश्रान्तिरिति । तुल्यादिशब्दाः सामान्यतः सादृश्यं बोधयित्वा विश्राम्यन्तीति अर्थान्तरबोधने विरतव्यापारा भवन्तीति भावः । साम्येति । साधर्म्यस्य साधारणधर्मसम्बन्धरूपसाधर्म्यस्य पर्यालोचनयाऽनुसन्धानेत्यर्थः । तुल्यताप्रतीतिरिति । तुल्ययोः सदृशयोर्भावस्तुल्यता सादृश्यं तस्याः प्रतीतिर्निराकांक्षप्रतीतिरित्यर्थः । साधर्म्यस्य साधारणधर्मसम्बन्धरूपस्य आर्थत्वात् अर्थवशलभ्यत्वात् आर्थी वाक्यगा आर्थी उपमेति भावः । अयं भावः, 'कमलेन तुल्यं मुखमि'त्यत्रोपमेये 'कमलं तुल्यं मुखस्ये'त्यत्रोपमाने 'मुखं च कमलं च तुल्यमि'त्यत्रोभयत्रापि सामान्यतः सादृश्यं बोधयित्वा विरतव्यापारेषु तुल्यसदृशादिशब्देषु धर्मविशेषं विना कथमनयोः सादृश्यमिति सादृश्यस्य अनुपपत्त्या धर्मविशेषसम्बन्धप्रतीतिरिति साधर्म्यस्य आर्थत्वादुपमाया आर्थत्वमिति । तद्धितगामार्थीमाह- तद्वदित्यादि । तुल्यादिपदोपादानवत् विहितस्य तुल्यार्थे इति शेषः । स्थितौ प्रयोगे तद्धितगा आर्थी उपमेति भावः ।

समासगां श्रौतीमाह-इवेनेत्यादि । एवं षड्विधां पूर्णामुपपाद्य तां क्रमेणोदाहरन् आदौ वाक्यगां श्रौतीमुदाहरति-स्वप्नेऽपीति। हे राजन्! स्वाधीनः आकूताज्ञाकारी पतिर्यस्यास्तादृशी नायिका यथा प्रभावस्य प्रकृष्टानुरागस्य प्रभवमुत्पत्तिहेतुं कान्तं कमनीयं नायकं न मुंचति, तथा विजयश्रीः जयलक्ष्मीः प्रभावस्य प्रभुत्वस्य प्रभवमुत्पत्तिहेतुम् । अथ वा प्रभावात्तपोविशेषात्प्रभव उत्पत्तिर्यस्य तादृशं त्वां

चकितहरिणलोललोचनायाः क्रुधि तरुणारुणतारहारिकान्ति ।
सरसिजमिदमाननं च तस्याः सममिति चेतसि सम्मदं विधत्ते ॥३९३॥
अत्यायतैर्नियमकारिभिरुद्धतानां दिव्यैः प्रभाभिरनपायमयैरुपायैः ।
शौरिर्भुजैरिव चतुर्भिरदः सदा यो लक्ष्मीविलासभवनैर्भुवनं बभार ॥३९४॥

---

समरेषु न त्वेकस्मिन्संग्रामे स्वप्नेऽपि स्वप्नावस्थायामपि न मुंचतीत्यर्थः ।

सुरतातिरसैर्बद्धो यस्याः पार्श्वगतः प्रियः ।
सामोदगुणसंयुक्ता भवेत्स्वाधीनभर्तृका ॥

अत्र स्वाधीनपतिका उपमानं विजयश्रीरुपमेया न मुञ्चतीत्यपरित्यागः साधारणो धर्मः यथेत्युपमाप्रतिपादकम् । नचैतेषां कयोरपि समास इति वाक्यगा श्रौती । पूर्णोपमेयमिति बोध्यम् । अत्र यथाशब्दयोगे यद्धर्मवती स्वाधीनपतिका तद्धर्मवती विजयश्रीरित्युभयविशेष्यको बोधः । धर्मस्यैक्यबोधात्स दृश्यं फलतीति भावः ॥३९२॥

वाक्यगामार्थीमुदाहरति–चकितेति । कस्याश्चिन्नायिकायाः सखीं प्रति कयाचिन्निवेद्यते । चकितस्त्रस्तो यो हरिणस्तस्य लोले चञ्चले लोचने इव लोचने यस्यास्तथाभूतायास्तस्याः प्रक्रान्तनायिकायाः क्रुधि क्रोधे सति तरुणो योऽरुणः सूर्यसारथिस्तद्वत्तारा उत्कटा हारिणी मनोहरा कान्तिः शोभा यस्य तादृशमाननम् इदं हस्तस्थं सरसिजं रक्तोत्पलं च समं समानमिति हेतोः चेतसि नायकचित्ते सम्मदं हर्षं विधत्ते कुरुत इत्यर्थः । पुष्पिताग्रा छन्दः । अत्र सरसिजमुपमानं आननमुपमेयम् अरुणसदृशकान्तिमत्त्वं साधारणो धर्मः समशब्दः उपमाप्रतिपादकः समशब्देन सह समासाभावाद्वाक्यमितिवाक्यगाऽऽर्थी पूर्णोपमेयमिति बोध्यम् ॥३९३॥

समासगां श्रौतीमुदाहरति–अत्यायतैरिति । शौरिः श्रीकृष्णः चतुर्भिर्भुजैरिव यः प्रकृतो राजा चतुर्भिरुपायैः सामादिभिः सदा अदः एतत् भुवनं लोकं बभार पालयामास भुजोपाययोः श्लिष्टविशेषणान्याह अत्यायतैः अत्यन्तदीर्घैः अत्यन्तमायतैः आयातिविशिष्टैश्च उद्धतानां दानवानां नियमकारिभिः शिक्षकैः । उद्धतानां गर्ववतां नियमकारिभिः दंडप्रदैश्च दिव्यैरलौकिकैः उत्कृष्टैश्च प्रभाभिः कान्तिभिः प्रभावैश्च उपलक्षितैरिति शेषः । अनपायमयैः अपायाभावप्रचुरैः सदातनैः सदा सफलैश्च लक्ष्म्याः कमलायाः संपत्तेश्च विलासस्य भवनैः आधारभूतैरित्यर्थः । वसन्ततिलका छन्दः । अत्र भुजैरित्यु-

अवितथमनोरथपथप्रथनेषु प्रगुणगरिमगीतश्रीः ।
सुरतरुसदृशः स भवानभिलषणीयः क्षितीश्वर ! न कस्य ॥३९५॥

गाम्भीर्यगरिमा तस्य सत्यं गङ्गा भुजङ्गवत्
दुरालोकः स समरे निदाघाम्बररत्नवत् ॥ ३९६ ॥

स्वाधीनपतिका कान्तं भजमाना यथा लोकोत्तरचमत्कारभूः तथा जयश्रीस्त्वदासेवनेनेत्यादिना प्रतीयमानेन विना यद्यपि नोक्तैर्वैचित्र्यम्

---

पमानं उपायैरित्युपमेयं अत्यायतत्वादिः साधारणो धर्मः इवशब्दः उपमाप्रतिपादकः । भुजैरिवेत्यत्र ( इवेन सहे)ति वार्तिकेन समासात्समासगा श्रौती पूर्णोपमेयामिति ॥३९४॥

समासगामार्थीमुदाहरति-अवितथेति । हे क्षितीश्वर ! राजन् ! अवितथाः सफला ये मनोरथपथाः जनानां मनोरथमार्गास्तेषां प्रथनेषु विस्तारेषु विस्तारविषये प्रगुणानां प्रकृष्टगुणानां गरिम्णा अतिगुरुत्वेन हेतुना गीता लोकैः स्तुता श्रीः संपत्तिर्यस्य तथाभूतः अत एव सुरतरुसदृशः कल्पवृक्षतुल्यः स प्रसिद्धो भवान् कस्य पुरुषस्य न अभिलषणीयः स्पृहणीयः अपि तु सर्वस्याप्यभिलषणीय एवेत्यर्थः । गीतिश्छन्दः । अत्र सुरतरुरुपमानम् भवानित्युपमेयम् प्रगुणगरिमगीतश्रीत्वं अभिलषणीयत्वं वा साधारणो धर्मः सदृशशब्द उपमाप्रतिपादकः । सुरतरुसदृश इति उपमानोपमाप्रतिपादकयोः समास इति समासगाऽऽर्थी पूर्णोपमेयमिति ॥ ३९५ ॥

प्रथमार्धेन तद्धितगां श्रौतीम् अपरार्धेन तद्धितगामार्थीं चोदाहरति-गाम्भीर्येति । तस्य प्रकृतस्य राज्ञः गंगाभुजंगवत् गङ्गाया भुजगः उपपतिः समुद्रः तस्येव तद्वत् गाम्भीर्यगरिमा गाम्भीर्यं दुर्ज्ञेयान्तःकरणत्वं अतलस्पर्शित्वं च तस्य गरिमा गुरुत्वं सत्यमित्यर्थः । स राजा समरे निदाघो ग्रीष्मकालस्तत्र यदम्बररत्नं सूर्यस्तेन तुल्यस्तद्वत् दुरालोकः दुःखेनालोकयितुं शक्यः । अत्र पूर्वार्धे गङ्गाभुजङ्ग उपमानं तस्येत्युपमेयं गाम्भीर्यगरिमा साधारणो धर्मः । अत्रेवार्थे वतिर्विहितस्तेन तद्धितगा श्रौती पूर्णोपमा उत्तरार्धे निदाघाम्बररत्नमुपमानं स इत्युपमेयं दुरालोकत्वं साधारणो धर्मः । तुल्यार्थे वतिर्विहितस्तेन तद्धितगाऽऽर्थी पूर्णोपमेयमिति ॥३९६॥

ननु गुणालङ्कारयुक्तमव्यङ्ग्यं चित्रमिति प्रथमोल्लासे उक्तम् अलंकारस्थले च सत्यपि तद्वैचित्र्ये व्यङ्ग्यस्यानुभवसिद्धतया ध्वनिगु

वैचित्र्यं चालङ्कारः तथापि न ध्वनिगुणीभूतव्यङ्ग्यव्यवहारः न खलु व्यङ्ग्यसंस्पर्शपरामर्शादत्र चारुताप्रतीतिः अपि तु वाच्यवैचित्र्यप्रतिभासादेव। रसादिस्तु व्यङ्ग्योऽर्थोऽलङ्कारान्तरं च सर्वत्राव्यभिचारीत्यगणयित्वैव तदलङ्कारा उदाहृताः। तद्रहितत्वेन तु उदाह्रियमाणा विरसतामावहन्तीति पूर्वापरविरुद्धाभिधानमिति न चोदनीयम्।

---

णीभूतव्यङ्ग्यान्यतरत्वसम्भवे कथं चित्रत्वमित्याशङ्कते–स्वाधीनेत्यादि। नाऽलङ्कार इत्यन्तेन। लोकोत्तरेति। अलौकिकचमत्कारविषयः। प्रतीयमानेन व्यङ्ग्येन जयश्रियस्त्वदासेवनेन चमत्कारित्वमित्यर्थरूपेण उक्तेः काव्यवाच्यार्थस्य वैचित्र्यं चमत्कारित्वम्। परिहरति–तथाऽपीति। न ध्वनीति। नोत्तमकाव्य–मध्यमकाव्यव्यवहार इत्यर्थः। तत्र हेतुमाह–न खल्विति। व्यङ्ग्यसंस्पर्शेति। व्यङ्ग्यस्य स्वाधीनपतिकेत्याद्युक्तस्य संस्पर्शः सम्बन्धस्तस्य परामर्शात् अनुसन्धानात् अत्र उपमाद्यलंकारस्थले अलङ्कारवति काव्ये चारुताप्रतीतिः उत्कर्षप्रतिपत्तिः अपि तु किन्तु वाच्यमिवादिशब्दवाच्यं यद्वैचित्र्यं उपमावैचित्र्यं तस्य प्रतिभासादेव परामर्शादेव। अयंभावः, अत्र वाच्यस्यैवोपमावैचित्र्यस्य सत्त्वेन वैचित्र्यान्तरस्यासत्त्वमेवासत् तच्च श्रुतिमात्रेण प्रतीतं सत् वक्तव्यमर्थं सातिशयमुत्कर्षयत् प्रथमत एवालंकारपदवीमधिकरोति उक्तव्यङ्ग्यरूपं वैचित्र्यं अनुसन्धानसाधितं भवदपि पश्चात्प्रतीततया अलङ्कारवैचित्र्यप्रतीतिव्यवहितप्रतीतिकत्वेनास्फुटतया च सदप्यकिंचित्करमेवेति न ध्वनिगुणीभूतव्यङ्ग्यव्यवहारप्रयोजकम् एवं चोपमाद्यलङ्काराणां वाच्यस्वरूपतया तत्सद्भावे चित्रकाव्यत्वं नासंभवीति न पूर्वाभिधानेनात्रोपमालङ्काराभिधानं विरुद्धमिति॥

ननु षष्ठोल्लासे ते चालङ्कारनिर्णये निर्णेष्यन्ते इत्युक्त्वा यान्येवालंकारोदाहरणतया उपन्यस्तानि तान्येव चित्रकाव्यस्योदाहरणतयाऽवगन्तव्यानीत्याभिहितं अत्र तु स्वप्नेऽपीत्यादीनि यान्युपमोदाहरणतयाऽभिहितानि तान्येतानि चित्रकाव्योदाहरणानि भवितुमर्हन्ति एषु राजविषयकभावादिरूपस्य व्यङ्ग्यस्य सत्त्वेनाव्यंग्यत्वलक्षणस्य चित्रकाव्यत्वस्यासम्भवादिति पूर्वापरविरुद्धाभिधानमेवमलङ्कारान्तरस्य च सत्त्वेन उपमोदाहरणत्वाभिधानं विरुद्धमित्याशङ्क्य समाधत्ते–रसादिरिति। आदिना भावादिपरिग्रहः। अव्यभिचारि नियतावस्थितिकम् इति हेतोः अगणयित्वा अनावश्यकतयाऽनालोच्य औदासीन्यमवलम्ब्य तदलङ्कारा उपमादय उदाहृता इत्यर्थः।

(१२८) तद्वद्धर्मस्य लोपे स्यान्न श्रौती तद्धिते पुनः ।

धर्मः साधारणः । तद्धिते कल्पबादौ त्वार्थ्येव तेन पञ्च । उदाहरणम्—

धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः ।

करणीयं वचश्चेतः सत्यन्तस्यामृतं यथा ॥ ३९७ ॥

---

ननु चित्रकाव्योदाहरणयोग्यतया रसादिरहितान्येव चन्द्रधवलः पट इत्यादीनि उपमोदाहरणानि किमिति नोपन्यस्तानीत्यत आह-तद्रहितत्वेनेति । रसादिरहितत्वेन उदाह्रियमाणाः उदाहरणत्वेन प्रदर्श्यमानाः विरसतां निरास्वाद्यतां आवहन्ति । अयंभावः, चन्द्रधवलः पट इत्यादिवाक्यस्याकाव्यत्वेन तस्या अपि उपमालङ्कारत्वाभावो वाचक-वाच्योपस्कारद्वारा रसाद्युपकारकस्यैवालङ्कारत्वात् नीरसे हि स्ववैचित्र्येणापाततश्चमत्कारमात्रन्नत्वलंकारत्वमिति पूर्वापरेति पूर्वं अव्यंग्यं चित्रमित्युक्तं इदानीन्तु सव्यंग्यमुदाहृतमित्येवमादि परस्परविरुद्धाभिधानमित्यर्थः । न चोदनीयं न शङ्कनीयम् ॥

एवं षड्विधां पूर्णां निरूप्य इदानीमेकोनविंशतिविधां लुप्तां निरूपयन् आदौ पञ्चविधां धर्मलुप्तामाह-तद्वदिति । धर्मस्य साधारणधर्मस्य लोपेऽनुपादाने सति तद्वत् पूर्णावत् वाक्ये समासे तद्धिते च श्रौत्यार्थी च स्यादित्यर्थः । षड्विधत्वं वारयति-न श्रौतीति । पुनः शब्दस्त्वर्थे तद्धिते तु श्रौती नेत्यर्थः इवार्थविहितवतिरूप एव हि तद्धिते श्रौती भवेत् स च वतिः तत्र तस्येवेत्यनेन षष्ठीसप्तम्यन्तादेवोपमानपदाद्विहिततया साधारणधर्मे एव स्वार्थान्वयबोधं जनयन् नियतमेव साधारणधर्मसाकांक्ष इति साधारणधर्मोपादानं विना तादृशस्य तद्धितस्यासम्भवान्न तत्कृत उपमाभेद इति भावः । ननु चन्द्रत्व-मुखत्वादिधर्मप्रतीतेर्न्न धर्मलोप इत्यतो धर्मपदार्थमाह-धर्म इति । साधारणधर्मोपादानं विना नैव तुल्यार्थवतेः सम्भव इत्यतस्तद्धितान्तरं दर्शयति-कल्पबादाविति । आदिना देश्य-देशीयर्-बहुचो ग्राह्याः । आर्थ्येवेति । न श्रौतीति भावः । पञ्चेति । वाक्यगा समासगेति द्विविधा श्रौती वाक्य-समास-तद्धितगेतित्रिविधा आर्थीति मिलित्वा धर्मलोपे लुप्तोपमा पञ्चविधेत्यर्थः ।

तत्र वाक्यगां धर्मलुप्तां श्रौतीमुदाहरति-धन्यस्येति । हे चेतः! अमृतं यथा पीयूषमिव तस्य साधोर्वचःसत्यं निश्चयेन करणीयं कर्त्तु

आकृष्टकरवालोऽसौ संपराये परिभ्रमन् ।
प्रत्यर्थिसेनया दृष्टः कृतान्तेन समः प्रभुः ॥ ३९८ ॥
करवाल इवाचारस्तस्य वागमृतोपमा ।
विषकल्पं मनो वेत्सि यदि जीवसि तत्सखे ! ॥ ३९९ ॥

(१२९) उपमानानुपादाने वाक्यगाऽथ समासगा ॥ ८८ ॥

योग्यम् ( कीदृशस्य तस्य ) समानमेव सामान्यं साधारणं अन्यसामान्यं यत्र भवति तदनन्यसामान्यं तादृशं यत्सौजन्यं सुजनत्वं तस्योत्कर्षेण आधिक्येन शालते शोभते इति तच्छाली तस्य अत एव धन्यस्य सर्वोत्कृष्टस्येत्यर्थः। अत्रामृतवचसोरुपमानोपमेययोः परिणामसुरसत्वादिः साधारणो धर्मोऽतिप्रसिद्धत्वादनुपात्तः करणीयत्वं त्वमृते बाधितमिति न साधारणम् यथाशब्देन सह समासाभावाद्वाक्यगा धर्मलुप्ता श्रौती उपमेति बोध्यम् ॥ ३९७ ॥

वाक्यगां धर्मलुप्तामार्थीमुदाहरति-आकृष्टेति । आकृष्टखड्गः असौ प्रभू राजा सम्पराये युद्धे परिभ्रमन् प्रत्यर्थिसेनया शत्रुसेनया कर्त्र्या कृतान्तेन यमेन समस्तुल्यो दृष्ट इत्यर्थः। अत्र राज-कृतान्तयोरुपमेयोपमानयोः क्रूरत्वं साधारणो धर्मः स चातिप्रसिद्धत्वादनुपात्तः। आकृष्टकरवालत्वं च न साधारणो धर्मः यमस्य दण्डायुधत्वेनैव प्रसिद्धेः। सदृशवाचकसमशब्देन सह समासाभावाद्वाक्यगा धर्मलुप्ताऽऽर्थीयमुपमेति बोध्यम् ॥ ३९८ ॥

समासगां श्रौतीमार्थीं तद्धितगामार्थीं च धर्मलुप्तामुदाहरति करवाल इवेति । हे सखे ! तस्य दुष्टस्य आचार आचरणं करवाल इव अस्ति अत्रोपमानोपमेययोर्घातुकत्वं साधारणो धर्मः स च लुप्तः इवेन सह समासात्समासगा श्रौती धर्मलुप्ता तस्य वाग्वाणी अमृतेनोपमीयते या यद्वा अमृतं उपमा उपमानं यस्याः सा। अत्रोपमानोपमेययोर्माधुर्यं साधारणो धर्मः स च लुप्तः सदृशवाचकेनोपमाशब्देन सह समास इति समासगाऽऽर्थी धर्मलुप्ता। तस्य मनः विषादीषन्न्यूनं विषसदृशम् अत्रोपमानोपमेययोर्नाशकत्वं साधारणो धर्मः स च लुप्तः। ईषदसमाप्तौ विधीयमानस्य कल्पपः सादृश्ये पर्यवसानाद्विषकल्पमिति तद्धितगाऽऽर्थी तदेतत्सर्वं यदि वेत्सि ज्ञास्यसि तर्हि जीवसि जीविष्यसीत्यर्थः। तत्समीपावस्थाने तव जीवनमेव दुर्लभमिति भावः ॥ ३९९ ॥

वाक्यसमासगामित्वेन द्विविधामुपमानलुप्तामाह-उपमानेति । उप-

सअलकरणपरवीसामसिरिविअरणं ण सरसकव्वस्स ।
दीसइ अहव णिसम्मइ सरिसं अंसंसमेत्तेण ॥ ४०० ॥

कव्वस्सेत्यत्र कव्वसममिति सरिसमित्यत्र च णूणमिति पाठे एषैव समासगा ॥

(१३०) वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि ।
कर्मकर्त्रोर्णमुलि

वाशब्दः उपमाद्योतक इति वादेरुपमाप्रतिपादकस्य लोपे षट् स-

---

मानस्यानुपादाने लोपे सति वाक्यगा समासगा चेति द्विविधैवोपमा भवतीति सूत्रार्थः । उपमानवाचकपदादेव उपमाप्रतिपादकस्य वतिप्रभृतितद्धितस्य विधानादुपमानानुपादाने तद्धितस्यासम्भवेनात्र न तद्धितगा सम्भवति नापि श्रौती इवादीनामुपमानान्विततयैव स्वार्थबोधकत्वनियमेन उपमानानुपादाने तेषामप्युपादानासम्भवादतो वाक्यसमासयोरेव तयोरप्यार्थ्यैवेति द्विविधैवोपमानलुप्तोपमेति भावः ।

अथ वाक्यगामुपमानलुप्तामार्थीमुदाहरति-सअलेति ।

सकल करणपरविश्रामश्रीवितरणं न सरसकाव्यस्य ।
दृश्यतेऽथवा निशम्यते सदृशमंशांशमात्रेण ॥

इति संस्कृतम् । सरसकाव्यस्य अंशांशमात्रेण लेशतोऽपि किञ्चिदंशेनापि सदृशं तुल्यं न दृश्यते अथ वा न निशम्यते न श्रूयत इत्यर्थः । कीदृशम् सकलकरणानां सर्वेन्द्रियाणां यः परः परमो विश्रामो विषयान्तरवैमुख्यन्तज्जन्या या श्रीः सम्पत्तिस्तद्वितरणन्तद्दात्रित्यर्थः । तथा च सरसकाव्यमेवैवंविधं नान्यदिति भावः । मुखविपुलागाथेयम् । अत्र वर्णनीयतया काव्यमुपमेयं उपमानन्तु नोपात्तम् सकलेत्यादिकं साधारणो धर्मः । सदृशपदेन काव्यशब्दस्य समासो न कृत इति वाक्यगा उपमानलुप्ता आर्थी उपमेति बोध्यम् । अस्यामेव गाथायां कव्वसममिति पाठे समासगा उपमानलुप्ता सम्भवतीत्याह-कव्वस्सेत्यत्रेति । काव्यस्य काव्येन वा सममिति विग्रहः । कव्वसममिति पाठे समशब्दस्य सरिसमित्यनेन पौनरुक्त्यं स्यादत आह—सरिसमित्यत्र चेति । णूणमिति नूनमिति संस्कृतम् । एव पाठे न पौनरुक्त्यमिति भावः ॥ ४०० ॥

षड्विधां वादिलुप्तामाह-वादेरिति । आदिना इवादयस्तुल्यसदृशादयश्च ग्राह्याः । वादेरुपमाप्रतिपादकस्य लोपे सति सा उपमा

मासेन कर्मणोऽधिकरणाच्चोत्पन्नेन क्यचा कर्तुः क्यङा कर्मकर्त्रोरुपपद-योर्णमुला च भवेत् ॥ उदाहरणम्—

ततः कुमुदनाथेन कामिनीगंडपांडुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलंकृता ॥ ४०१ ॥

तथा—

असितभुजगभीषणासिपत्रोरुहरुहिकाहितचित्ततूर्णचारः ।
पुलकिततनुरुत्कपोलकान्तिः प्रतिभटविक्रमदर्शनेऽयमासीत् ४०२॥

---

समासे कर्मक्यचि आधारक्यचि क्यङि कर्मण्युपपदे सति णमुलि कर्त्र्युपपदे सति णमुलि च भवतीति सूत्रार्थः । वादिलोपे वाक्यगा उपमा न सम्भवति 'मुखं चन्द्रः काशते' इत्येतावन्मात्रेणोपमाया अप्रतीतेः । नापि तद्धितगा श्रौती वा सम्भवति वत्यादीनां तद्धितानां इवादीनां च औपम्यप्रतिपादकतया तत्प्रयोगे औपम्यप्रतिपादकलोपासम्भवात् अत उपमाबोधकवादिलोपे उपमा समासादिगामित्वेन षड्विधैवेति भावः । मूलं स्पष्टम् ॥

समासगा द्विविधा द्विपदसमासगा बहुपदसमासगा च तत्र द्विपदसमासगां वादिलुप्तामुदाहरति–तत इति । महाभारते द्रोणपर्वणि रात्रियुद्धे चन्द्रोदयवर्णनामिदम् ततस्तदनन्तरं कुमुदानां नाथेन स्वामिना कामिन्या विरहिण्या गण्डः कपोलः स इव पाण्डुः पाण्डुवर्णस्तादृशेन नेत्रयोरानन्दन आनन्दजनकेन चन्द्रेण कर्त्रा माहेन्द्री प्राची दिक् अलंकृतेत्यर्थः । अत्र कामिनीगण्ड इव कामिनीगण्डवद्वा पाण्डुरिति विग्रहे उपमानानि सामान्यवचनैरित्युपमानसाधारणधर्मवाचकयोः समासे समासविधायकसूत्रे उपमानानीत्याद्युक्तेः समासेनोपमाप्रतिपत्तौ उक्तार्थानामप्रयोग इति न्यायेन इवाद्यप्रयोग इति द्विपदसमासगा वादिलुप्तेयमुपमा ॥ ४०१ ॥

बहुपदसमासगां वादिलुप्तामुदाहरति–असितेति । अयं वीरः प्रतिकूला भटा योद्धारः प्रतिभटाः शत्रवस्तेषां विक्रमस्य पराक्रमस्य दर्शने अवलोकने सति असितभुजगः कृष्णसर्पः स इव तद्वत् भीषणः असिः खड्ग एव पत्रं यस्य तादृशः रुहरुहिका रभसोत्कण्ठा तया आहितं व्याप्तं यच्चित्तं मनस्तेन तूर्णस्त्वरितः चारः सञ्चारो यस्य तादृशः पुलकिता रोमाञ्चिता तनुः शरीरं यस्य सः उद्गता उल्लसिता कपोलयोः कान्तिः शोभा यस्य तादृश आसीदित्यर्थः । अत्रासित-

पौरं सुतीयति जनं समरान्तरेऽसावन्तःपुरीयति विचित्रचरित्रचुंचुः ।
नारीयते समरसीम्नि कृपाणपाणेरालोक्य तस्य चरितानि सपत्नसेना ४०३।

मृधे निदाघघर्मांशुदर्शं पश्यन्ति तं परे ।
स पुनः पार्थसंचारं संचरत्यवनीपतिः ॥ ४०४ ॥

---

भुजग उपमानं भीषणत्व साधारणो धर्मः असिपत्रमुपमेयम् । असि-तभुजगेत्यादावुपमान-साधारणधर्म-उपमेयपदानां त्रयाणामपि समास इति बहुपदसमासगा वादिलुप्तेयमुपमा ॥ ४०२ ॥

कर्माधिकरणयोः क्यचि क्यङि च वादिलुप्तामुदाहरति-पौरमिति । असौ राजा पौरं नागरं जनं सुतीयति पुत्रवत्पालयति अत्रोपमानवाचकात्सुतमिति कर्मपदाद् "उपमानादाचारे" इत्यनेन आचारेऽर्थे क्यच् आचारोऽत्र स्नेहपालनादिरूपः स एवात्र साधारणो धर्मः । इवार्थस्य वृत्तौ प्रवेशः । तथा चात्रोपमाप्रतिपादकस्येवादेस्तुल्यादेर्वा प्रयोगाभावेन उपमाप्रतिपादकस्य लोप इति कर्मक्यचि वादिलुप्तेयमुपमा । विचित्रैरद्भुतैश्चरित्रैराचरणैर्वित्तः प्रसिद्धः तादृशोऽसौ राजा समरस्यान्तरे अन्तः पुरे इवाचरति अन्तःपुरीयति तत्रैव स्वच्छन्दं गच्छतीति भावः । अत्रोपमानवाचकादन्तःपुरे इत्यधिकरणसप्तम्यन्तादधिकरणाच्चेति वार्त्तिकेन आचारेऽर्थे क्यच् आचारोऽत्र स्वच्छन्दगमनादिः स एवात्र साधारणो धर्मः । इवार्थस्य वृत्तौ प्रवेशः । अत्रोपमाप्रतिपादकस्येवादेस्तुल्यादेर्वा प्रयोगाभावेनोपमाप्रतिपादकस्य लोप इत्यधिकरणक्यचि वादिलुप्तेयमुपमा । सपत्नसेना शत्रुसेना कृपाणपाणेः खड्गहस्तस्य तस्य राज्ञः चरितानि चरित्राणि समरसीम्नि युद्धभूमौ आलोक्य नारीवाचरति नारीयते स्त्रीवद्बिभेतीत्यर्थः । अत्रोपमानवाचकान्नारीति कर्तृपदादाचारेऽर्थे "कर्तुः क्यङ्सलोपश्चे"ति क्यङ् । आचारोऽत्र सकातर्यविनयादिः स एव साधारणो धर्मः इवार्थस्य वृत्तौ प्रवेशः । अत्रोपमाप्रतिपादकस्य लोप इति क्यङि वादिलुप्तेयमुपमा ॥ ४०३ ॥

कर्मणि कर्तरि चोपपदे यो णमुल् तस्मिन्वादिलुप्तामुदाहरति-मृधे इति । परे शत्रवः मृधे युद्धे तं राजानं निदाघस्य ग्रीष्मस्य यो घर्मांशुः सूर्यस्तमिव दर्शनमिति निदाघघर्मांशुदर्शं निदाघघर्मांशुमिव पश्यन्तीत्यर्थः । अत्रोपमानवाचके कर्मण्युपपदे दृशधातोर्भावे णमुल् निदाघघर्मांशुरुपमानं राजा उपमेयः दर्शनमिति साधारणो धर्मः इवार्थस्य वृत्तौ प्रवेशः अत्रोपमाप्रतिपादकस्येवादे-

(१३१) एतद्विलोपे क्विप्समासगा ॥ ८९ ॥

एतयोर्द्धर्म्मवाद्योः । उदाहरणम्—

सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः ।
यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि ॥४०५॥

परिपन्थिमनोराज्यशतैरपि दुराक्रमः ।
संपरायप्रवृत्तोऽसौ राजते राजकुंजरः ॥ ४०६ ॥

---

लोप इति कर्मण्युपपदे णमुलि वादिलुप्तेयमुपमा। पुनरिति त्वर्थे स अवनीपतिस्तु मृधे पार्थोऽर्जुनः स इव सञ्चरणमिति पार्थसञ्चारं पार्थ इव सञ्चरतीत्यर्थः। अत्र उपमानवाचके पार्थ इतिकर्त्तर्युपपदे उपमाने कर्मणि चेति भावे णमुल् सञ्चारोऽसाधारणो धर्मः इवार्थस्य वृत्तौ प्रवेशः। अत्रोपमाप्रतिपादकस्य लोप इति कर्त्तर्युपपदे णमुलि वादिलुप्तेयमुपमेति वादिलुप्ताः षट् ॥४०४॥

त्रयोदशविधामेकलुप्तां निरूप्य पञ्चविधां द्विलुप्तां विवक्षुरादौ धर्मवादिलुप्तां द्विविधामाह–एतदिति। एतयोर्द्धर्मवाद्योर्लोपे अनुपादाने सति क्विप्गा समासगा चोपमा भवतीत्यर्थः। धर्मवाद्योर्लोपे वाक्यगा न सम्भवति शिष्टयोरुपमानोपमेययोरुपादाने 'मुखं चन्द्र' इत्यादावुपमाया अनवगमात् नापि तद्धितगा तद्धितस्यैवोपमाप्रतिपादकत्वेन तत्सत्त्वे द्विलोपासम्भवात् नापि श्रौती इवाद्यभावात् ॥८९॥

क्विप्गामुदाहरति–सवितेति। मनसि चित्ते सुखदुःखाभ्यां वशीकृते आक्रान्ते सति यथाक्रमं सवित्रादिकं विध्वादिरिवाचरतीत्यर्थः तथाहि सुखिते मनसि सविता विधुरिवाचरति आल्हादकत्वाच्चन्द्रसदृशो भवति दुःखिते मनसि विधुरपि सवितेवाचरति दुःखदत्वात्सूर्यसदृशो भवति यामिन्यो रात्र्यः दिनानीवाचरन्ति दिनानि च यामिन्य इवाचरन्ति। अत्रोपमानवाचकाद्विध्वादिकर्तृवाचिप्रातिपदिकात् (सर्वप्रातिपदिकेभ्यः क्विप् वा वक्तव्य) इतिवार्तिकेन सर्वत्र आचारेऽर्थे क्विप्। यद्यप्याचारे क्विब्विधानस्यैव च समानधर्मरूपत्वेन क्विपि धर्मलोपो नास्ति तथापि क्विप एव लोपाद्धर्मलोपव्यवहारः। अत एव समानार्थकक्यङ् नोपात्तः तस्यालुप्तत्वेन धर्मलोपाभावात्। इवार्थस्य वृत्तौ प्रवेशः। अतो धर्मवाद्योर्लोपे क्विप्गेयमुपमेति बोध्यम् ॥ ४०५ ॥

(१३२) धर्मोपमानयोर्लोपे वृत्तौ वाक्ये च दृश्यते ।

ढुण्ढुणण्णन्तो मरिहिसि कण्टअकलिआइँ केअइवणाइं ।

मालइकुसुमसरिच्छं भमर ! भमन्तो ण पाविसिहि ॥ ४०७ ॥

कुसुमेण समामिति पाठे वाक्यगा ।

(१३३) क्यचि वाद्युपमेयासे ।

आसे निरासे—

आरातिविक्रमालोकविकस्वरविलोचनः ।

कृपाणोदग्रदोर्दंडः स सहस्रायुधीयति ॥ ४०८ ॥

अत्रात्मा उपमेयः ।

---

समासगामुदाहरति-परिपन्थीति । संपराये रणे प्रवृत्तः परिपन्थिनां शत्रूणां यानि मनोराज्यानि मनोरथास्तेषां शतैरपि दुराक्रमः दुष्प्रापः शत्रूणां मनोरथैरप्यजेयः साक्षाद् दुराक्रम एवेति किम्वक्तव्यमित्यपेरर्थः असौ राजा कुंजर इव राजकुंजरो राजते शोभत इत्यर्थः । अत्र दुराधर्षत्वस्य परसेनाविद्रावकत्वादेर्वा साधारणधर्मस्य प्रसिद्धत्वान्न न्यूनपदत्वं दोषः। औपम्यस्य समासगम्यत्वेन नोपमाप्रतीतिव्याहतिः । अतो धर्मवाद्योर्लोपे समासगेयमुपमेति बोध्यम् ॥४०६॥

धर्मोपमानरूपद्विकलोपे समासगा वाक्यगा चेति द्विविधामाह-धर्मेति । वृत्तौ समासे वाक्ये च दृश्यते आर्थीति शेषः । तद्धिते तु नेयम् उपमानलोपे तद्धितस्यैवाभावात् नापि श्रौती उपमानाप्रयोगे इवादेरप्रयोगात् । तत्र समासगामुदाहरति-ढुण्ढुण्ण्न्त इति ।

ढुंढुणायमानो मरिष्यसि कंटककलितानि केतकीवनानि ।

मालतीकुसुमसदृक्षं भ्रमर ! भ्रमन् न प्राप्स्यसि ॥

इति संस्कृतम्। आत्मनः सौभाग्यं प्रियाय सूचयन्त्याः कस्याश्चिन्नायिकायाः प्रियसन्निधौ भ्रमरं प्रत्युक्तिः। हे भ्रमर ! त्वं ढुण्ढुणायमानः ढुण्ढुणितिशब्दं कुर्वाणः कंटकैः द्रुमावयवविशेषैः कलितानि युक्तानि केतकीवनानि भ्रमन् पर्यटन् सन् मरिष्यसि अपि तु मालतीकुसुमसदृक्षं जातिपुष्पसदृशं न प्राप्स्यसीत्यर्थः । अत्र वर्णनीयत्वेन मालती उपमेया। मालतीकुसुमस्य सदृक्षमिति समासः सौरभादिधर्मस्योपमानस्य च लोप इति धर्मोपमानयोर्लोपे समासगेयमुपमा ॥ ४०७ ॥

वाद्युपमेययोर्लोपे एकविधामाह-क्यचीति । वादेरुपमाबोधकस्य उपमेयस्य च आसे निरासे लोपे सति क्यचि- क्यच्प्रत्ययविषये

(१३४) त्रिलोपे च समासगा ॥ ९० ॥

त्रयाणां वादिधर्मोपमानानाम् । उदाहरणम्—

तरुणिमनि कृतावलोकना ललितविलासवितीर्णविग्रहा ।

स्मरशरविसराचितान्तरा मृगनयना हरते मुनेर्मनः ॥ ४०९ ॥

अत्र सप्तम्युपमानेत्यादिना यदा समासलोपौ भवतस्तदेदमुदाहरणम् ।

---

लुप्तोपमा भवतीत्यर्थः । तामुदाहरति-अरातीति । अरातीनां शत्रूणां विक्रमस्य पराक्रमस्य आलोकनेन दर्शनेन विकस्वरे विकशनशील विलोचने नयने यस्य तादृशः । कृपाणेन खड्गेन उदग्रः उद्भटः दोर्दण्डो दण्डसदृशो बाहुर्यस्य तादृशः स वीरः सहस्रायुधीयति सहस्रमायुधानि यस्य स सहस्रायुधः कार्त्तवीर्यार्जुनस्तमिवात्मानमाचरतीत्यर्थः यथा तं दुर्जयं मन्यते तथा आत्मानमपीति भावः । आयुधसहस्रनिर्वाह्यस्य-प्रतिपक्षोत्सारणस्यैकेन कृपाणेन निर्वाहान्नृपतौ वीररसप्रकर्षः । अत्रोपमानवाचकात्सहस्रायुधमिति कर्मपदादाचारेऽर्थे 'उपमानादाचारे' इत्यनेन क्यच् आचारोऽत्र दुर्जयमानिता स एव साधारणो धर्मः वृत्तौ इवार्थस्य प्रवेशः सहस्रायुधमिवात्मानमाचरतीत्यर्थादात्माऽत्रोपमेयः । एवं च वाद्युपमेययोर्लोप इति क्यचि वाद्युपमेयलुप्तेयमुपमेति द्विलुप्ताः पञ्च ॥ ४०८ ॥

त्रिलोपे एकविधामाह-त्रिलोपे चेति । त्रिलोपे तु उपमेयातिरिक्तत्रितयलोपे एवोपमा सम्भवति सापि समासमात्रे अन्यत्र बोधकाभावात् तत्राप्यार्थ्येव इवादेर्लोपात् । त्रिलोपे समासगामुदाहरति-तरुणिमनीति । तरुणिमनि यौवनविषये कृतमवलोकनं यया सा किशोरी ललिताय विलासाय च वितीर्णः समर्पितः विग्रहो देहो यया सा स्मरशराणां कामबाणानां विसरः समूहस्तेन आचितं व्याप्तं आन्तरं मनो यस्याः सा मृगनयना हरिणाक्षी मुनेरपि मनः हरते तपस्विनोऽपि चित्तमाकर्षतीत्यर्थः । अत्र मृगलोचने इव चञ्चले नयने यस्या इत्यर्थे (सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्चे) ति वार्तिकेन नयनशब्देन सह बहुव्रीहौ उपमानवाचिमृगलोचन इति पूर्वपदे उत्तरपदभूतस्य लोचनशब्दस्य लोपे उपमेयभूतस्य नयनमात्रस्योपादानात् इवार्थस्य वृत्तौ प्रवेशः । एवं च लोचनेत्युपमानस्य इवशब्दस्य चञ्चलरूपसाधारणधर्मस्य चानुपादानमिति त्रिलोपे समासगेयमुपमेति बोध्यम् । यत्तु उपमेयमात्रोपादानवत् उपमान-

क्रूरस्याचारस्यायःशूलतयाऽध्यवसायात् अयःशूलेनान्विच्छति आयः शूलिक इत्यतिशयोक्तिर्न तु क्रूराचारोपमेय-तैक्ष्ण्यधर्म-वादीनां लोपे त्रिलोपेयमुपमा ॥

एवमेकोनविंशतिर्लुप्ताः पूर्णाभिः सह पञ्चविंशतिः ।

अनयेनेव राज्यश्रीर्दैन्येनेव मनस्विता ।
मम्लौ साऽथ विषादेन पद्मिनीव हिमाम्भसा ॥ ४१० ॥

इत्यभिन्ने साधारणे धर्मे ।

---

मात्रोपादानेऽपि त्रिलोपा उपमा सम्भवति यथाऽयमायःशूलिक इति अयःशूलपदेन स्वार्थसदृशः क्रूराचारो लक्ष्यते तथा च अयःशूलमिव क्रूराचारस्तेनान्विच्छतीत्यर्थे (अयःशूलदण्डाजिनाभ्यां ठक्ठञौ) इति ठक् । अत्र क्रूराचार उपमेयः तीक्ष्णत्वादिरूपः साधारणो धर्मः इवादिश्च नोपात्तः केवलमुपमानभूतमयःशूलमेवोपात्तम् अतः त्रिलोपेयमुपमेति तन्मतं निराकरोति-क्रूरस्येति । निगीर्णस्वरूपस्येति शेषः । अयःशूलतया अयःशूलतादात्म्येन अध्यवसायात् आरोपपूर्वकनिश्चयात् अतिशयोक्तिः निगीर्याध्यवसायरूपाऽतिशयोक्तिरेवाऽलङ्कारो न तूपमेति भावः । क्रूराचार एव निगीर्णस्वरूपः अयःशूलतादात्म्येन निर्दिष्टः एवंस्थले चोपमास्वीकारेऽतिशयोक्तेर्निर्विषयत्वापत्तेरिति भावः ॥ ४०९ ॥

फलितां पूर्वसंख्यामाह-एवमिति । उक्तप्रकारेण । एकोनेति । धर्मलोपे पञ्च (५) उपमानलोपे द्वौ (२) इवादिलोपे षट् (६) धर्मवादिलोपे द्वौ (२) धर्मोपमानयोर्लोपे द्वौ (२) इवोपमानयोर्लोपे एकः (१) त्रिलोपे चैकः (१) इति मिलित्वैकोनविंशतिः लुप्तोपमाप्रभेदा इत्यर्थः । नन्वेकस्योपमेयस्य बहूपमानसम्बन्धे मालोपमा (१)पूर्वपूर्वस्योपमेयस्योत्तरोत्तरमुपमानत्वे रशनोपमा(२)चेति द्वौ भेदौ तयोरपि यथाक्रमं बहूपमानानां उत्तरोत्तरोपमानानां च साधारणधर्मस्य एकत्वेन भिन्नत्वेन च प्रत्येकं द्वैविध्यमिति मिलित्वा चत्वारो भेदा इत्येवं प्राचीनदर्शितबहुभेदसत्त्वे कथं पंचविंशतिविधत्वमित्याशङ्कामनूद्य आनन्त्यदोषप्रसङ्गेन उक्तप्रभेदेषु एतेषामन्तर्भावेण च निराकरोति-अनयेनेति । अनयेन अनीत्या राज्यश्रीरिव दैन्येन दारिद्र्येण मनस्वितेव पाण्डित्यमिव, शीतेन वा हिमाम्भसा पद्मिनीव सा प्रकृतनायिका विषादेन दुःखेन मम्लौ म्लानिं प्रापेत्यर्थः । अत्र राज्यश्रीप्रभृतीनां बहूनामु-

ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम्।
प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥ ४११ ॥

इति भिन्ने च तस्मिन् एकस्यैव बहूपमानोपादाने **मालोपमा**।

यथोत्तरमुपमेयस्योपमानत्वे पूर्ववदभिन्नभिन्नधर्मत्वे—

अनवरतकनकवितरणजललवभृतकरतरङ्गितार्थिततेः।
भणितिरिव मतिर्मतिरिव चेष्टा चेष्टेव कीर्तिरतिविमला ॥४१२॥
मतिरिव मूर्त्तिर्मधुरा मूर्त्तिरिव सभा प्रभावचिता।
तस्य सभेव जयश्रीः शक्या जेतुं नृपस्य न परेषाम् ॥ ४१३ ॥

इत्यादिका **रशनोपमा** च न लक्षिता एवंविधवैचित्र्यसहस्रसंभवात् उक्तभेदानतिक्रमाच्च।

---

पमानानां म्लानिरेव साधारणो धर्मः इत्येकस्य नायिकारूपोपमेयस्य बहूपमानसम्बन्ध इति च अभिन्ने साधारणे धर्मे मालोपमेयम् ॥ ४१० ॥

भिन्ने साधारणे धर्मे मालोपमामुदाहरति-ज्योत्स्नेवेति। ज्योत्स्नेव चंद्रिकेव नयनयोरानन्दः आनन्दजनिका सुरेव मदिरेव मदकारणरूपा प्रभुतेव समाकृष्टाः वशीकृताः सर्वलोका यया सा प्रशस्तो नितम्बः कटिपश्चाद्भागोऽस्या अस्तीति नितम्बिनी कान्ता अस्तीत्यर्थः। अत्र ज्योत्स्नादीनां बहूपमानानां नयनानन्दहेतुत्वादयः साधारणधर्मा भिन्ना इत्येकस्यैव नितम्बिनीरूपोपमेयस्य ज्योत्स्नाप्रभृतिबहूपमानसम्बन्ध इति च भिन्ने साधारणे धर्मे मालोपमेयम् यथा काचिन्माला एकजातीयैः काचिद्विजातीयैश्च कुसुमैर्ग्रथिता तथा इयमपि सजातीयैर्विजातीयैर्वा बहुभिरुपमानैर्घटितेति द्विधा मालोपमेति भावः॥४११॥

रशनोपमामाह-यथोत्तरमिति। उत्तरमुत्तरमित्यर्थः। पूर्ववत् मालोपमावत् अभिन्ने साधारणे धर्मे रशनोपमामुदाहरति-अनवरतेति। हे राजन्! अनवरतं निरन्तरं कनकवितरणाय स्वर्णदानाय जललवभृते जलबिन्दुपूर्णे करे हस्ते तरङ्गिता पूर्वपश्चाद्भावेन श्रेणीभूय मिलिता अर्थिततिर्याचकसमूहो यस्य तादृशस्य तव भणितिरिव उक्तिरिव मतिर्बुद्धिः मतिरिव चेष्टा आचारः चेष्टेव कीर्तिः अतिविमला अतिस्वच्छेत्यर्थः। अत्र विमलत्वमेव सर्वासूपमासु साधारणो धर्म इति पूर्वपूर्वस्योपमेयस्योत्तरोत्तरमुपमानत्वमिति च अभिन्ने साधारणे धर्मे रशनोपमेयम्। भिन्ने साधारणे धर्मे रशनोपमा-

(१३५) उपमानोपमेयत्वे एकस्यैवैकवाक्यगे।
अनन्वयः।

उपमानान्तरसम्बन्धाभावोऽनन्वयः। उदाहरणम्—

न केवलं भाति नितान्तकान्तिर्नितम्बिनी सैव नितम्बिनीव।
यावद्विलासायुधलास्यवासास्ते तद्विलासा इव तद्विलासाः ॥४१४॥

---

मुदाहरति-मतिरिवेति। तस्य नृपस्य मतिरिव मूर्तिस्तनूर्मधुरा मूर्त्ति-रिव सभा प्रभावेन चिता व्याप्ता सभेव जयश्रीर्जयलक्ष्मीः परेषां विपक्षाणां जेतुं न शक्येत्यर्थः। अत्र मूर्त्यादीनां मधुरत्वादयः साधारणधर्मा भिन्ना इति पूर्वपूर्वस्योपमेयस्योत्तरोत्तरमुपमानत्वमिति च भिन्ने साधारणे धर्मे रशनोपमेयम् यथा रशनायां पुंसः कटिभूषणे पूर्वत्वं प्राप्तायाः क्षुद्रघटिकायाः परग्रथनायां परत्वं तद्वदत्र पूर्वपूर्वस्योपमेयस्योपमानत्वाय परपरप्राप्तिरिति रशनात्वम्। न लक्षिता अस्माभिर्लक्षणेन न निर्दिष्टा। अत्र हेतुमाह-एवंविधेति। बिम्बप्रतिबिम्बभावादिभेदेन लोकसिद्धकविकल्पितादिभेदेन उपस्कार्यभेदेन निरवयवादिभेदेन च तेषां परस्परगुणने इयत्ताया वक्तुमशक्यत्वादिति भावः। ननु वैचित्र्यसहस्रसम्भवे ते सर्वेऽपि भेदा अवश्यं वक्तव्याः अन्यथा न्यूनत्वं दोष इत्यत आह-उक्तभेदेति। पूर्वोक्तोपमाप्रभेदेषु यथासम्भवमेतेषामन्तर्भावान्न न्यूनतेति भाव इत्युपमाविचारः ॥ ४१२-४१३ ॥

अनन्वयनामानमलंकारं लक्षयति-उपमानेति। उपमानं च उपमेयं च तयोर्भावावुपमानोपमेयत्वे तथा च एकस्यैव वस्तुनः एकवाक्यगे एकौपम्यप्रतिपादकशब्दप्रतिपाद्ये उपमानोपमेयत्वे दृष्टान्तदार्ष्टान्तिकत्वे उपनिबध्येते सोऽनन्वयः न विद्यतेऽन्वयः सम्बन्धोऽर्थादुपमानान्तरेण यत्र सोऽनन्वय इत्यन्वर्थकमलङ्कारनामेदम् यदेकस्यैव तत्सदृशवस्त्वन्तरासत्त्वप्रतिपादनाय उपमानोपमेयभावो भेदेऽसत्यपि भेदघटितसादृश्योपचारेणैवोपनिबध्यते सोऽनन्वय इति स्वेन स्वस्योपमाऽनन्वय इति तत्त्वम् ॥

अनन्वयमुदाहरति—न केवलमिति। केवलं नितान्तकान्तिः अतिशयितकान्तिः साऽनुभूतप्रकर्षा नितम्बिन्येव नितम्बिनीव न भाति न शोभते किन्तु विलासायुधस्य कामस्य लास्यवासाः नृत्यस्थानानि ते अनुभवैकगोचराः तस्या नायिकाया विलासः हावभावा अपि तद्विलासा इव भान्ति। यावदिति समुच्चयार्थकमव्ययम् तद्विलासा इत्यनेनान्वेति एवकारो भिन्नक्रमः स च नितम्बिनीशब्दे-

(१३६) विपर्यास उपमेयोपमा तयोः ।

तयोरुपमानोपमेययोः परिवृत्तिः अर्थाद्वाक्यद्वये इतरोपमानव्य-वच्छेदपरा उपमेयेनोपमा इति उपमेयोपमा । उदाहरणम्—

कमलेव मतिर्मतिरिव कमला तनुरिव विभा विभेव तनुः ।
धरणीव धृतिर्धृतिरिव धरणी सततं विभाति बत यस्य ॥४१५॥

---

नान्वेति । अत्र स्वेनैव नितम्बिन्यादिरूपवस्तुना स्वस्योपमेति अन-न्वयालङ्कारः । यदि देशान्तरीयस्य कालान्तरीयस्य वा तस्यैव वास्तविकं भेदमादाय प्रयोगस्तदोपमैव एवं च—

गगनं गगनाकारं सागरः सागरोपमः ।
रामरावणयोर्युद्धं रामरावणयोरिव ॥

इत्यादौ देशकालादिभेदेन भेदे उपमैव तद्युगे तद्देशे वा यथा-गगनं तथा एतद्युगे एतद्देशेऽपीति बोधात् अन्यथा त्वनन्वय एवेति दिक् ॥४१४॥

उपमेयोपमानामानमलङ्कारं लक्षयति—विपर्यास इति । तयोरुप-मानोपमेययोः विपर्यासः परिवृत्तिः उपमेयोपमानभावः उपमेयोपमा तन्नामाऽलङ्कार इत्यर्थः। एकवाक्ये परिवर्त्तनासम्भवादाह-अर्थादिति । वाक्यद्वयमत्र शाब्दमार्थं वा तेन रामरावणौ मिथस्तुल्यावित्यादौ रामो रावणतुल्यो रावणो रामतुल्य इति वाक्यार्थभेदप्रतीत्या ना-व्याप्तिः । उपमातो भेदबीजमाह—इतरोपमेति । प्रकृताभ्यामितरदन्य-द्यदुपमानं तस्य यो व्यवच्छेदो व्यावृत्तिस्तत्परेत्यर्थः । इतरोपमान-व्यवच्छेदेनैव चमत्कारिकेति यावत् ॥

उपमेयोपमामुदाहरति—कमलेवेति । बतेति हर्षे यस्य नृपतेः कम-लेव लक्ष्मीरिव मतिर्बुद्धिः मतिरिव कमला तनुरिव शरीरमिव विभा कान्तिः विभेव तनुः धरणीव पृथ्वीव धृतिः धैर्यं धृतिरिव ध-रणी सततं निरन्तरं विभाति शोभते इत्यर्थः । गीतिश्छन्दः । अत्र स्पृहणीयत्व-प्रचितत्व-विस्तृतत्वानि त्रिषु साधारणधर्माः । अत्रैकेन धर्मेण तस्यापरत्र साम्ये वर्णिते तेन धर्मेणापरस्य तत्र साम्यमर्थ-प्राप्तमपि पुनःशब्देनोच्यमानं तेन धर्मेण तयोः सदृशं तृतीयं वस्तु व्यवच्छिनत्तीति अत एव सविता विधवतीत्यादौ साधारणधर्मस्य भिन्नतया नोपमेयोपमेति उपमेयोपमा ॥४१५॥

(१३७) संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् ।

समेन उपमानेन । उदाहरणम्—

उन्मेषं यो मम न सहते जातिवैरी निशाया-
मिन्दोरिन्दीवरदलदृशा तस्य सौन्दर्यदर्पः ।
नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षा-
ल्लग्ना मन्ये ललिततनु ! ते पादयोः पद्मलक्ष्मीः ॥४१६॥

---

वाच्यसाधर्म्यालङ्कारान्निरूप्य संप्रति व्यंग्यसाधर्म्येषु निरूपणीयेषु चमत्कारातिशयेन प्राधान्यात्प्रथममुत्प्रेक्षां निरूपयति—संभावनमिति । प्रकृतस्योपमेयस्य समेन उपमानेन सह एकरूपतया तादात्म्येन यत्संभावनमुत्कटकोटिकः सन्देहः सा उत्प्रेक्षानामकोऽलङ्कारः । उपमेयस्योपमानत्वेन सम्भावना उत्प्रेक्षेति फलितम् इयं हि उत्प्रेक्षा इव ध्रुवं प्रायो नूनं मन्ये शङ्के अवैमि ऊहे तर्कयामि जाने उत्प्रेक्ष्ये इत्यादिभिः प्रतिपादकैः सहिता यत्रोत्प्रेक्षासामग्री तत्र वाच्या यत्र प्रतिपादकशब्दरहितं उत्प्रेक्षासामग्रीमात्रं तत्र व्यंग्या यत्र तु उत्प्रेक्षासामग्रीरहितं प्रतिपादकशब्दमात्रं तत्र सम्भावनमात्रमेव नोत्प्रेक्षालंकारः । सा चेयमुत्प्रेक्षा हेतु-फल-स्वरूप-सम्भावनभेदाद्बहुप्रकारा । जातिगुणक्रियाद्रव्याणामभावस्य च सम्भावितत्वेन स्वरूपोत्प्रेक्षा पञ्चधा एवं हेतुफलयोरपि जात्यादिरूपत्वेन तयोरपि प्रत्येकं पञ्चविधत्वम् एवमुत्प्रेक्षानिमित्तस्य धर्मस्योपादानानुपादानाभ्यां बहुभेदाः परमेतत्सर्वं न चमत्कारातिशयायेति नादृतमिति दिक् ।

तत्र हेतूत्प्रेक्षामुदाहरति-उन्मेषमिति । नायकस्य नायिकां प्रति चाटूक्तिः । हे ललिततनु ! सुन्दरशरीरे ! प्रेयसि ! पद्मलक्ष्मीः कमलशोभा इतिहर्षात् एवंविधानन्दात् ते तव पादयोर्लग्ना सक्ता इत्यहं मन्ये तर्कयामि इति किमित्याह—उन्मेषमिति । यो जातिवैरी सहजशत्रुः निशायां रात्रौ मम पद्मलक्ष्म्या उन्मेषं विकासं न सहते तस्येन्दोश्चन्द्रस्य सौन्दर्यदर्पो लावण्यगर्वः इन्दीवरदले इव दृशौ यस्यास्तथाभूतयाऽनया सुन्दर्या कर्त्र्या वक्त्रकान्त्या वदनदीप्त्या करणभूतया प्रसभं बलात्करणं यथा तथा शान्तिं नीतः दूरीकृत इत्यर्थः । मन्दाक्रान्ता छन्दः । अत्रोपमेयभूता स्वाभाविकी पादशोभा उपमानभूतयथोक्तहर्षहेतुकपादपतनविषयीभूतपद्मशोभात्वेन सम्भावितेति हेतूत्प्रेक्षा ॥४१६॥

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता॥ ४१७॥

इत्यादौ व्यापनादिलेपनादिरूपतया संभावितम्॥

**(१३८) ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः॥ ९२॥**

भेदोक्तौ यथा —

---

लिम्पतीवेत्यादाविवश्रुत्योपमां मन्यमानमतं निराकुर्वन् क्रियास्वरूपोत्प्रेक्षामुदाहरति–लिम्पतीवेति। मृच्छकटिके गाढान्धकारवर्णनम् यतः तमोऽन्धकारः अङ्गानि अवयवान् लिम्पतीव नभः आकाशः अञ्जनं कज्जलं वर्षतीव अतो दृष्टिर्नेत्रं असत्पुरुषस्य दुर्जनस्य सेवेव विफलतां प्रसाराभावात् व्यर्थतां गता प्राप्तेत्यर्थः। अत्र पूर्वार्धे क्रियास्वरूपोत्प्रेक्षैव न तूपमा तिङन्तसमभिव्याहृतेवशब्दस्य सम्भावनाबोधकत्वात् उत्तरार्धे उपमालंकारः। अत्राचेतनस्य तमसो व्यापनरूपो विषयो लेपनत्वेन सम्भावितः निरालोकप्रवृत्तस्तमसः सम्पातो नभःकर्तृकाञ्जनवर्षणत्वेन सम्भावितः उभयत्र विषयस्यानुपादानम् अत्र लिंपतीति पदेन साध्यवसानलक्षणया उपमेयभूतं व्यापनमुपस्थितम् वर्षतीति पदेनापि उपमेयभूतमधःप्रसरणमुपस्थितम् एवं च तमःकर्तृकाङ्गकर्मकव्यापनं भ्रमातिशयकारकत्व–सकलवस्तुमालिनीकरत्वादिनिमित्तेन लेपनरूपतया सम्भावितम् नभःकर्तृकाञ्जनकर्मकाधःप्रसरणं पूर्वोक्तेनैव निमित्तेन वर्षणरूपतया सम्भावितम् तत्र तमःकर्तृकाङ्गकर्मकव्यापनं लोकप्रसिद्धतया स्वतःसम्भवि नभःकर्तृकाञ्जनकर्मकाधःप्रसरणन्तु कविकल्पितमिति विशेष इत्युत्प्रेक्षा।

ससन्देहनामानमलङ्कारं लक्षयति–ससन्देह इति। प्रकृतस्योपमेयस्य समेनोपमानेन सादृश्यज्ञानप्रयोज्यो यस्तु संशयः संशयात्मकं ज्ञानं ससन्देहनामाऽलङ्कारः स च भेदोक्तौ भेदानुक्तौ चेति द्विविध इति सूत्रार्थः। अयं च निश्चयगर्भो निश्चयान्तः केवलसंशयरूपः शुद्धश्चेति त्रिविधोऽग्रे स्फुटीभविष्यति भेदो वैधर्म्यम् तच्चोपमानोपमेययोरेकस्मिन्नवर्तमानमपरस्मिन्वर्तमानं धर्मविशेषरूपं ग्राह्यम्। यथोदाहरणद्वये सप्ताश्वसम्बन्धः उपमेये राजन्यवर्तमानः सूर्ये एव वर्तते एवं ललितविलासवचनं चन्द्रादाववर्त्तमानं उपमेये मुखे एव वर्तते॥

अयं मार्तण्डः किं? स खलु तुरगैः सप्तभिरितः
कृशानुः किं? सर्वाः प्रसरति दिशो नैष नियतम् ।
कृतान्तः किं? साक्षान्महिषवहनोऽसाविति चिरं
समालोक्याजौ त्वां विदधति विकल्पान्प्रतिभटाः ॥ ४१८ ॥

भेदोक्तावित्यनेन न केवलमयं निश्चयगर्भो यावन्निश्चयान्तोऽपि सन्देहः स्वीकृतः । यथा—

इन्दुः किं क कलङ्कः सरसिजमेतत्किमम्बु कुत्र गतम् ।
ललितसविलासवचनैर्मुखमिति हरिणाक्षि ! निश्चितं परतः ॥४१९॥

---

भेदोक्तौ ससन्देहमुदाहरति-अयमिति । हेराजन् ! प्रतिभटाः शत्रवः त्वामाजौ सङ्ग्रामे समालोक्य एवंविधान्विकल्पान्संशयान् चिरं बहुकालं यथा तथा विदधति कुर्वन्ति किंविधान् अयं भूलोकगतः मार्तण्डः सूर्यः किम् स प्रसिद्धः सूर्यः खलु सप्तभिरेव तुरगैरश्वैः इतो युक्तः अयमसंख्यतुरगयुक्तत्वान्न सूर्यः । तर्हि कृशानुः अग्निः किं एषः स प्रसिद्धः कृशानुः सर्वा दिशो नियतं यथा तथा न प्रसरति किन्तु वाय्वभिमुखामेव दिशं प्रसरति अयन्तु सर्वदिक्प्रसरणान्नाग्निरिति तर्हि साक्षाद्दृग्गोचरतां प्राप्तः कृतान्तो यमः किम् असौ स कृतान्तः महिषवाहनो महिषारूढः अयन्तु कदाचिदपि महिषं नारोहतीत्यर्थः । अत्र अयं किं मार्त्तण्डः तदन्यो वेति संशयाकारः । सप्ताश्वसम्बन्धादिकं उपमेये राज्ञि न वर्त्तत इति भेदोक्तौ ससन्दहालङ्कारः । प्रतापेन दुर्निरीक्ष्यत्वसाम्यान्मार्त्तण्डत्वसंशयः दुराधर्षत्वसाम्यात्कृशानुत्वसंशयः क्षणेन सकलहन्तृत्वसाम्यात्कृतान्तत्वासंशयः । अयं च निश्चयगर्भः । यादृशसंशयोत्तरं निश्चये जातेऽपि पुनः संशयः स निश्चयगर्भः । अत्र उपमानभिन्नत्वेन उपमेयावधारणरूपो निश्चयो ग्राह्यः । यथा सप्ताश्वसम्बन्धरूपवैधर्म्यदर्शनेन राज्ञः सूर्यभिन्नत्वावधारणेऽपि कृशानुत्वरूपेण पुनः संशयः । भेदोक्ताविति वदता सूत्रकारेण रुद्रटोक्तं भेदद्वयं स्वीकृतमेवेति न स्वग्रन्थस्य न्यूनतेत्याह-भेदोक्तावित्यनेनेति । यावत् किन्तु निश्चयान्तः निश्चयोऽन्ते समाप्तौ यस्य सः । यादृशसंशयानन्तरं निश्चये जाते पुनः संशयानुदयः स निश्चयान्तः । यथा इन्दुः किमित्युदाहरणे ललितसविलासवचनैर्मुखत्वेन रूपेण मुखस्य निश्चये केनापि रूपेण संशयाभावान्निश्चयान्तेति सन्देहः ससन्देहालंकारः । स्वीकृतः सूत्रकृता मयेति शेषः ॥ ४१८ ॥

तमेव निश्चयान्तमुदाहरति-इन्दुरिति । नायिकां प्रत्युक्तिः । हे ह-

किन्तु निश्चयगर्भ इव नात्र निश्चयः प्रतीयमान इति उपेक्षितो भट्टोद्भटेन । तदनुक्तौ यथा—

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथन्नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ ४२० ॥

---

रिणाक्षि ! एतन्मुखं इन्दुः किम् तर्हि कलङ्कः क तेन चन्द्रो नेति भावः । सरसिजं पद्मं किं तर्हि अम्बु जलं कुत्र गतं जलाभावान्न पद्ममिति ललितैः रम्यैः सविलासैः विलाससहितैश्च वचनैर्भाषणैः परतः पश्चान्मुखमिति निश्चितमित्यर्थः । अत्र ललित–सविलासवचनरूपवैधर्म्यदर्शनान्मुखत्वेन रूपेण मुखस्य निश्चये पुनः केनापि रूपेण न संशय इति निश्चयान्तोऽयं ससन्देहालङ्कारः । ननु तर्हि काव्यालङ्कारसारसङ्ग्रहे भट्टोद्भटेन कथमुपेक्षितो निश्चयान्तप्रभेद इत्याह– किन्त्विति । न प्रतीयमानः । व्यङ्ग्यो नेत्यर्थः । अयंभावः, निश्चयगर्भे वैधर्म्योक्त्या निश्चयस्य व्यङ्ग्यत्वं अत्र तु निश्चितमितिशब्देन निश्चयस्य कथनाद्वाच्यत्वं वाच्यत्वे च न तादृशचमत्कारित्वमिति मन्यमानेन भट्टोद्भटेनायं निश्चयान्तप्रभेद उपेक्षितः निश्चयस्य व्यङ्ग्यत्वे एव चमत्कारित्वात् । सूत्रकृता तु निश्चयस्य वाच्यत्वेऽपि चमत्कारानुभवात्स्वीकर्त्तव्य एवेति स्वीकृत इति गूढाशयः ॥ ४१९ ॥

भेदानुक्तौ ससन्देहमुदाहरति–अस्या इति । उर्वशीं प्रकृत्य पुरूरवस उक्तिः । अस्याः सर्गविधौ सृष्टिविधाने यः प्रजापतिर्निर्माणकर्ताऽभूत् स कान्तिप्रदः कान्तिदायकः चन्द्रो नु चन्द्रः किं किम्वा शृङ्गारः एकः प्रधानो रसो यस्य तादृशो मदनः स्वयं किं शृङ्गारोद्दीपकरूपलावण्यादेर्मदनत एव सम्भवात् अथ वा पुष्पाकरो मासो मधुमासः वसन्तः किं अधरदशनादिरूपपुष्पाणां वसन्तत एव संभवात् । ननु प्रसिद्धो ब्रह्मा कुतो न प्रजापतिरित्यत आह वेदाभ्यासेन जडः कुंठितधीः विषयेभ्यो वनितादिभ्यो व्यावृत्तं निवृत्तं कौतूहलं कौतुकं यस्य तादृशः पुराणो वृद्धः मुनिर्मननशीलः ब्रह्मा इदं मनोहरं रूपं निर्मातुं कथं नु प्रभवेत् नैव समर्थो भवेदित्यर्थः । अत्रोपमेयभूतस्य प्रजापतेरुपमानभूतस्य चन्द्रादेर्वा कस्यापि वैधर्म्यं नोक्तमिति भेदानुक्तौ ससन्देहालङ्कारोऽयमिति ससन्देहः ॥ ४२० ॥

(१३९) तद्रूपकमभेदाय उपमानोपमेययोः ।
अतिसाम्यादनपह्नुतभेदयोरभेदः ।
(१४०) समस्तवस्तुविषयं श्रौता आरोपिता यदा ॥ ९३ ॥

आरोपविषया इव आरोप्यमाणा यदा शब्दोपात्तास्तदा समस्तानि वस्तूनि विषयोऽस्येति समस्तवस्तुविषयम् । आरोपिता इति बहुवचनमविवक्षितम् । यथा—

ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी-
न्यन्तर्द्धानव्यसनरसिका रात्रिकापालिकीयम् ।
द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन ॥ ४२१ ॥

---

रूपकनामानमलङ्कारं लक्षयति—तद्रूपकमिति । रूपयति एकतां नयतीति रूपकम् उपमानोपमेययोर्योऽभेदोऽभेदारोपस्तत् रूपकमित्यर्थः । अभेदारोपे हेतुमाह—अतिसाम्यादिति । धर्मबाहुल्यादित्यर्थः । अनपह्नुतभेदयोरिति । भेदो वैधर्म्यम् अभेदः अभेदारोपः तथा च परस्परविरुद्धधर्मवत्त्वेन उपस्थिततया प्रकाशिताभिन्नस्वरूपयोरप्युपमानोपमेययोरतिसाम्यप्रदर्शनाय काल्पनिकोऽभेदारोपो रूपकनामाऽलङ्कार इति भावः । यथा मुखं चन्द्र इत्यादौ मुखत्वचन्द्रत्वरूपपरस्परविरुद्धधर्मवत्तया उपस्थितयोर्मुखचन्द्रयोरभेदारोपः । निगीर्याध्यवसानरूपायामतिशयोक्तावुपमेयस्य नोपमेयगतधर्मवत्तया उपस्थितिरिति ततो भेदः । अपह्नुतौ तु उपमेयगोपनेन भेदस्याप्यपह्नवः अत्र तु न स इति ततोऽपि भेदः । रूपकं तावत्त्रिविधं साङ्गं निरङ्गं परंपरितं चेति तत्रापि साङ्गं समस्तवस्तुविषयं एकदेशविवर्त्ति चेति द्विविधम् निरङ्गं च शुद्धं मालारूपं चेति द्विविधम् । परंपरितन्तु श्लिष्टाश्लिष्टशब्दनिबन्धनतया द्विविधं सत् प्रत्येकं केवलं मालारूपं चेति चतुर्विधमिति मिलित्वा रूपकस्याष्टौ भेदाः । तत्र साङ्गस्य प्रभेदद्वयं क्रमेण दर्शयन् आदौ समस्तवस्तुविषयं लक्षयति—समस्तेति । यस्मिन् रूपके आरोपिता आरोप्यमाणा यदा श्रौताः शब्दोपात्ताः तदा तद्रूपकं समस्तवस्तुविषयमित्युच्यत इत्यर्थः । रूपके आरोपविषयस्योपादानं नियतमेवेति दृष्टान्ततया उपादत्ते आरोपविषया इवेति । आरोपविषया उपमेया आरोप्यमाणा उपमानानि वस्तूनि आरोप्यमाणानि विषयः शब्दप्रतिपाद्यः । अविवक्षितमिति । अन्यथा आरोप्यमाणस्य द्विमात्रत्वेऽस्यासम्भवः स्यात् ॥ ९३ ॥

समस्तवस्तुविषयं रूपकमुदाहरति—ज्योत्स्नेति । कविः रूपक-

अत्र पादत्रये अन्तर्द्धानव्यसनरसिकत्वमारोपितधर्म एवेति रूपकपरिग्रहे साधकमस्तीति तत्संकराशंका न कार्या ॥

(१४१) श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्ति तत् ।

---

मुखेन ज्यौत्स्नीं योगिनीत्वेन वर्णयति इयमनुभवारूढा रात्रिरेव कापालिकी योगिनी द्वीपाद्द्वीपं भ्रमति विद्यावशाद्यथेच्छं सर्वद्वीपेषु गच्छति कीदृशी ज्योत्स्ना चन्द्रिकैव भस्म तस्य छुरणमङ्गलेपनं तेन धवला शुभ्रा तारका नक्षत्राण्येव अस्थीनि कीकसानि बिभ्रती अन्तर्द्धानं तिरोभाव एव व्यसनं कौतुकं क्रीडा वा तत्र रसिका तत्परा चन्द्र एव मुद्राकपालं दीक्षाकालगृहीतोपकरणं कापालिकानामञ्जनादिधारणकपालं तत्र लाञ्छनस्य कलङ्कस्य छलेन न्यस्तं स्थापितं सिद्धाञ्जनस्य परिमलं चूर्णं आविर्भावतिरोभावसाधनं वस्तु दधती आददानेत्यर्थः । रात्रिरुपमेया कापालिकी उपमानम् रात्रिरेव कापालिकीत्यादौ सर्वत्र मयूरव्यंसकादित्वात्समासः । ज्योत्स्नादिकमुपमेयम् भस्मादिकमुपमानम् अत्रोपमेयभूतेषु रात्रिज्योत्स्नादिषु आरोप्यमाणानां कापालिकीभस्मादीनां सर्वेषां शब्दोपात्तत्वात्समस्तवस्तुविषयं रूपकमिदम् एवं कापालिक्या आरोप इव तदङ्गानां भस्मादीनामप्यारोपाद्रूपकस्य साङ्गत्वम् चतुर्थपादे तु अपह्नुतिरेव छलशब्दप्रयोगादिति दिक् ॥ ४२१ ॥

ननु रात्रिः कापालिकीव ज्योत्स्ना भस्मेवेत्यादिरीत्या उपमितसमासस्यापि सम्भवेनात्रोपमा वा स्यात् मयूरव्यंसकादिसमासेन रूपकं वेति संशयोदयेन उपमया सह रूपकस्य सन्देहसङ्कर एव स्यान्न रूपकमित्याशङ्कां निराकरोति—अत्रेति । अन्तर्धानव्यसनरसिकत्वं आरोपितस्य कापालिकीपदार्थस्य धर्म एव न तु आरोपविषयभूताया रात्रेरिति हेतोः पादत्रये यद्रूपकं तत्परिग्रहे तद्ग्रहणविषये साधकमस्तीत्यतस्तत्सङ्करः तस्य रूपकस्य यः सङ्करः उपमया सह सन्देहसङ्करस्तस्य आशङ्का न कार्येत्यर्थः । अन्तर्धानव्यसनरसिकत्वं हि चेतनधर्मः स च कापालिक्या एव सम्भवति न तु रात्रेः उपमापरिकल्पने तु उपमेयभूताया रात्रेरेव प्राधान्येन तत्र नान्तर्धानादेर्मुख्यतयाऽन्वयः स्यादिति रूपकमेवास्थीयत इति भावः ।

एकदेशविवर्त्तिरूपकं लक्षयति—श्रौता इति । यस्मिन् रूपके ते

केचिदारोप्यमाणाः शब्दोपात्ताः केचिदर्थसामर्थ्यादवसेयाः इत्येकदेशविवर्त्तनात् एकदेशविवर्त्ति । तथा—

जस्स रणन्तेउरए करे कुणन्तस्स मण्डलग्गलअम् ।

रससंमुहीवि सहसा परंमुही होइ रिउसेणा ॥ ४२२ ॥

अत्र रणस्यान्तःपुरत्वमारोप्यमाणं शब्दोपात्तम् मण्डलाग्रलतायाः नायिकात्वम् रिपुसेनायाश्च प्रतिनायिकात्वम् अर्थसामर्थ्यादवसीयते इत्येकदेशे विशेषेण वर्त्तनादेकदेशविवर्ति ॥

---

आरोपिताः आरोप्यमाणाः श्रौताः शाब्दाः आर्थाः अर्थगम्याश्च स्युः तत् रूपकमेकदेशाविवर्त्ति इत्युच्यते इत्यर्थः । ते इति व्याकरोति—केचिदिति । श्रौता इति व्याकरोति—शब्दोपात्ता इति । आर्था इति व्याकरोति केचिदिति । अवसेया निश्चेयाः । एकदेशविवर्त्तिपदस्य व्युत्पत्तिमाह—एकदेशेति । एकस्मिन्देशे अंशे विशेषेण वर्त्तनात् अर्थादारोप्यमाणस्य सर्वत्र वाच्यत्वे एकांशे प्रतीयमानत्वरूपस्य विशेषस्य सत्त्वात्, एकदेशविवर्त्ति अथवा एकदेशे रूपकसङ्घातस्यावयवे कस्मिंश्चिद्रूपके विशेषेण शब्दमुखेन स्फुटतया वर्त्तनात् प्रकाशनादित्यर्थः । उदाहरति—जस्सेति ।

यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम् ।
रससम्मुख्यपि सहसा पराङ्मुखी भवति रिपुसेना ॥

इति संस्कृतम् । यस्य राज्ञो रण एवान्तःपुरं स्त्र्यगारं तत्र मंडलाग्रः खड्ग एव लता तदाकारत्वात् तां नायिकां च करे पाणौ कुर्वतो गृहीतवतः युद्धार्थं रतार्थं चेति रिपुसेना प्रतिनायिका च रससम्मुखी युयुत्सया वीररसाविष्टाऽपि पक्षे रिरंसया शृङ्गाररसाविष्टापि सहसा झटिति पराङ्मुखी भवति भयेन युद्धात् कोपेन प्रियसङ्गमाच्च निवर्त्तत इत्यर्थः । अत्र रणेऽन्तःपुरत्वमारोप्यमाणं शब्दोपात्तम् मण्डलाग्रलतायाः नायिकात्वं रिपुसेनायाश्च प्रतिनायिकात्वं चारोप्यमाणं न शब्दोपात्तम् किन्तु अन्तःपुरत्वारोपादिसामर्थ्यादवसीयते अन्तःपुरे तासामेवौचित्यात् । अत्रैकदेशे रणान्तःपुरे विशेषेण शब्दमुखेन स्फुटतया वर्त्तनादेकदेशविवर्त्तिरूपकम् तदाह अत्रेति ।

(१४२) साङ्गमेतत्

उक्तद्विभेदं सावयवम् ।

(१४३) निरङ्गन्तु शुद्धम्

यथा—

कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्
सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत् ।
अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां
प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ॥ ४२३ ॥

(१४४) माला तु पूर्ववत् ॥ ९४ ॥

मालोपमायामिवैकस्मिन्बहव आरोपिताः । यथा—

सौन्दर्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः
कान्तेः कार्मणकर्म नर्मरहसामुल्लासनावासभूः ।
विद्या वक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया
बाणाः पंचशिलीमुखस्य ललनाचूडामणिः सा प्रिया ॥ ४२४ ॥

---

उक्तभेदद्वयमुपसंहरति—साङ्गमिति । एतत् उक्तद्विभेदं समस्तवस्तुविषयं एकदेशविवर्त्ति चेति भेदद्वयं यदुक्तं तत् साङ्गं सावयवकं रूपकमित्यर्थः । निरंगं दर्शयति—निरङ्गमिति । अङ्गानामारोपरहितं केवलस्याङ्गिनो यत् रूपणन्तदेव रूपकान्तरामिश्रणात् शुद्धं केवलमित्युच्यत इत्यर्थः । निरङ्गमुदाहरति-कुरङ्गीवेति । किशोर्याः वृत्तान्तं धात्री कांचिन्निवेदयति—अहो इति । सम्बोधने हर्षे वा । हे सखि ! इयं बाला यत् यस्मात्कारणात् गीतध्वनिषु कुरङ्गीव मृगीव अङ्गानि अवयवान् स्तिमितयति निश्चलानि करोति यत् यस्मात् श्रुतमपि कान्तस्य प्रियस्योदन्तं वृत्तान्तं सखीं प्रति पुनः भूयोऽपि प्रश्नवन्तं करोति प्रश्नयति यत् यस्माच्च अनिद्रं निद्रारहितं यथा तथा अन्तः गृहमध्ये स्वपिति शेते यद्वा नयनामुद्रणेऽपि कान्तैकतानान्तःकरणतया विषयं न गृह्णाति तत् तस्मात्कारणात् अहं वेद्मि जाने किमिति मनसिजः कामः अस्या बालायाः हृदि अभिनवामङ्कुरितां प्रेमैव लतिका अनुकल्पितलता तां सेक्तुं रसार्द्रां कर्त्तुं प्रवृत्त इतीत्यर्थः । शिखरिणी छन्दः। अत्र प्रेममात्रे लतिकात्वमात्रारोपः न तु तत्परिपोषकत्वेन क्वचिदप्यन्यारोप इति निरङ्गं रूपकमिदम् ॥४२३॥

मालारूपं निरङ्गन्दर्शयति—माला त्विति । यथैकस्योपमेयस्य बहु-

(१४९) नियतारोपणोपायः स्यादारोपः परस्य यः ।
तत्परंपरितं श्लिष्टे वाचके भेदभाजि वा ॥ ९५ ॥

---

पमानसम्बन्धः मालोपमा तथैकस्मिन्नुपमेये बहूनामुपमानानामारोपे मालारूपकमित्यर्थः । तदेवाह—मालोपमायामिवेति । एकस्मिन् उपमेये उदाहरति—सौन्दर्यस्येति । कश्चिद्विरही प्रेयसीं परामृशति । सौन्दर्यस्य लावण्यस्य तरंगिणी नदी अपरिमितसौन्दर्यपूरिता जलस्थानीयमत्र-लावण्यम् । तरुणिमोत्कर्षस्य तारुण्यातिशयस्य हर्षोद्गमः आनन्दाविर्भावः कान्तेरवयवशोभायाः कार्मणकर्म कार्मणस्य वशीकरणमन्त्रस्य कर्म सम्यक्प्रयोगः वशीकरणक्रिया नर्मरहसां क्रीडारहस्यानां उल्लासनायाः विजृम्भणस्य आवासभूः वसतिस्थानम् वक्रगिरां साकूतवचसां विद्या उपदेशिका विधेर्ब्रह्मणोऽनवधि निःसीमं यत् प्रावीण्यं निर्माणकौशलं तस्य साक्षात्क्रिया प्रत्यक्षहेतुः पञ्चशिलीमुखस्य कामस्य बाणाः ।

उन्मादनस्तापनश्च शोषणः स्तम्भनस्तथा ।
सम्मोहनश्च कामस्य पञ्च बाणाः प्रकीर्त्तिताः ॥

तरुणानां हर्षण-रोचन-मोहन-शोषण-मारणजनकत्वेन स्मरशरसमष्टिरूपेति भावः ।

अरविन्दमशोकं च चूतं च नवमल्लिका ।
नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ॥

ललनानां स्त्रीणां चूडामणिः शिरोमणिः । एतादृशी सा मदनुभूता प्रिया प्रेयसीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् । अत्रैकस्योपमेयभूतायां प्रियायां तरङ्गिण्यादीनां बहूनामुपमानानामारोपान्मालात्वम् प्रियामात्रे नद्यादिमात्रारोपो न तु तत्परिपोषकं रूपकान्तरमिति निरङ्गत्वम् ॥ ४२४ ॥

परम्परितं रूपकं लक्षयति—नियतेति । नियतं वर्णनीयतया अवश्यापेक्षणीयं यदारोपणं तस्योपायः साधारणधर्मसम्पादकतया निमित्तं यः परस्यान्यस्य आरोपस्तत्परंपरितम् कार्यकारणभावरूपा आरोपपरंपरा सञ्जाताऽस्येति व्युत्पत्तेस्तारकादित्वादितच् । यत्र वर्णनीयारोपणं प्रति अन्यारोपणमेव केवलं कारणतया विवक्षितं तत्परंपरितमिति तत्त्वम् तद्भेदावाह—श्लिष्टे इत्यादि । परस्येत्यनुषज्यते परस्यान्यस्य वाचके शब्दे श्लिष्टे श्लेषयुक्ते सति भेदभाजि भिन्नरूपे सतीत्यर्थः । परम्परितं द्विविधं उपायभूते रूपके आरोप्यमाणारोप-

यथा—

विद्वन्मानसहंस ! वैरिकमलासंकोचदीप्तद्युते !
दुर्गामार्गणनीललोहित ! समित्स्वीकारवैश्वानर !
सत्यप्रीतिविधानदक्ष ! विजयप्राग्भावभीम ! प्रभो !
साम्राज्यं वरवीर ! वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥ ४२५ ॥

अत्र मानसमेव मानसम् कमलायाः संकोच एव कमलानामसंकोचः दुर्गाणाममार्गणमेव दुर्गायाः मार्गणम् समितां स्वीकार एव समिधां स्वीकारः सत्ये प्रीतिरेव सत्यामप्रीतिः विजयः पराभव एव विजयोऽर्जुनः एवमारोपणनिमित्तो हंसादेरारोपः ।

---

विषययोर्वाचकस्य श्लिष्टत्वाद्भिन्नरूपत्वाच्चेति श्लिष्टाश्लिष्टशब्दनिबन्धनतया द्विविधं सत् प्रत्येकं केवलं मालारूपं चेति चतुर्विधमिति बोध्यम् ॥ ९५ ॥

तत्र श्लिष्टं मालारूपं परम्परितरूपकमुदाहरति—विद्वदिति । राजानं प्रति कवेरुक्तिः । हे वरवीर ! श्रेष्ठशूर ! हे प्रभो ! राजन् ! त्वं वैरिञ्चं ब्राह्मं वत्सरशतं व्याप्य उच्चैर्महत् साम्राज्यं चक्रवर्त्तित्वं क्रियाः कुर्याः इत्याशीः । शेषं सम्बोधनविशेषणतया योज्यम् । तथा हि विदुषां पण्डितानां मानसं चित्तमेव मानसं मानससरस्तत्र हंस ! हंसपक्षिरूप ! वैरिणां शत्रूणां कमलाया लक्ष्म्याः सङ्कोच एव कमलानां पद्मानामसङ्कोचो विकासस्तत्र दीप्तद्युते ! सूर्यरूप ! दुर्गाणां कोट्टानां अमार्गणं अनन्वेषणमेव दुर्गायाः पार्वत्या मार्गणमन्वेषणन्तत्र नीललोहित ! शिव ! समितां संग्रामाणां स्वीकारोऽनुप्रेक्षणमेव समिधामिन्धनानां स्वीकारः कवलनं तत्र वैश्वानर ! बह्निरूप ! सत्ये तथ्ये प्रीतिरेव सत्यां दक्षकन्यायां अप्रीतिस्तद्विधाने दक्ष ! दक्षप्रजापतिरूप ! विजयः परपराभव एव विजयोऽर्जुनस्तस्य प्राग्भावः प्रथमोत्पत्तिस्तत्र भीमः भीमसेन ! चेत्यर्थः । अत्र मानसादिपदं श्लिष्टं राज्ञि हंसत्वाद्यारोपे श्लेषबलात् मन प्रभृतिषु सरोविशेषत्वाद्यारोपो निमित्तमिति श्लिष्टं परम्परितं रूपकम् एकस्मिन्सूत्रे बहूनां पुष्पाणामिव एकस्मिन्राजरूपे उपमेये हंसादीनां बहूनामारोपाद्रूपकस्य मालात्वमिति तदेतत्सर्वं वृत्तिकार आह—अत्रेत्यादि । एवं उक्तरीत्या । आरोपणेति । आरोपणं मनःप्रभृतिषु सरःप्रभृतितादात्म्यारोपणं तदेव निमित्तं तादृशो हंसादेरारोप इत्यर्थः ॥४२५॥

यद्यपि शब्दार्थालंकारोऽयमित्युक्तं वक्ष्यते च तथापि प्रसिद्ध्यनुरोधादत्रोक्तः एकदेशविवर्त्ति हीदमन्यैरभिधीयते भेदभाजि यथा-

आलानं जयकुंजरस्य दृषदां सेतुर्विपद्वारिधेः
पूर्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः।
संग्रामामृतसागरप्रमथनक्रीडाविधौ मन्दरो
राजन्! राजति वीरवैरिवनितावैधव्यदस्ते भुजः॥ ४२६॥

अत्र जयादेर्भिन्नशब्दवाच्यस्य कुंजरत्वाद्यारोपे भुजस्य आलानत्वाद्यारोपो युज्यते।

---

ननु मानसादिपदस्य परिवृत्त्यसहत्वाच्छब्दालङ्कारत्वं हंसादिपदस्य च परिवृत्तिसहत्वादर्थालंकारत्वमिति श्लिष्टपरम्परितस्योभयालंकारतया पुनरुक्तवदाभासवत् उभयालंकारप्रस्तावेऽभिधानं युक्तं न त्वर्थालंकारप्रस्तावे इति शंकते यद्यपीति। उक्तमिति। प्राचीनैरिति शेषः। वक्ष्यते चेति। संकरालंकारनिरूपणप्रस्तावे अस्माभिर्व्यवस्थाप्यते इत्यर्थः। समाधत्ते—तथापीति। प्रसिद्ध्यनुरोधादिति भामहादिपूर्वाचार्यप्रसिद्ध्यनुरोधादर्थालंकारमध्ये उक्तः। प्रसिद्धौ बीजमाह—एकदेशेति। हि यतः इदं श्लिष्टपरम्परितरूपकं एकदेशविवर्त्तिरूपकमिति अन्यैर्भामहादिभिरभिधीयत इत्यर्थः। तथा चैकदेशविवर्त्तिरूपकस्यार्थालंकारत्वं सर्वसम्मतमेवेति दिक्।

अश्लिष्टं मालारूपं परम्परितं रूपकमुदाहरति—आलानमिति। हे राजन्! ते तव भुजो राजति शोभते किम्भूतः जय एव कुञ्जरो गजस्तस्यालानं बन्धनस्तम्भः विपत् विपत्तिरेव वारिधिः समुद्रस्तस्य दृषदां सेतुः शिलामयस्तरणमार्गः करवालः खड्ग एव चण्डमहाः सूर्यस्तस्य पूर्वाद्रिरुदयाचलः श्रीः सम्पत्तिरेव श्रीर्लक्ष्मीस्तस्या लीला सुखस्वापस्तस्या उपधानं शिरोनिधानतूलपटः संग्राम एवामृतसागरस्तस्य प्रकृष्टमथनमेव क्रीडा तस्या विधौ सम्पादने मन्दरो मन्थाचलः वीरा अपलायिनो ये वैरिणस्तेषां या वनितास्ताभ्यो वैधव्यं विधवात्वं ददातीति तादृश इत्यर्थः। शार्दूलविक्रीडितं छन्दः। अत्र जयादिकुञ्जराद्योः पदयोर्भिन्नत्वान्न मानसादिपदवत् श्लिष्टत्वम् भुजे आलानत्वाद्यारोपे जयादौ कुञ्जरत्वाद्यारोपो निमित्तमित्यश्लिष्टपरम्परितं रूपकम् एकस्मिन्भुजरूपे उपमेये आलानादीनां बहूनामारोपान्मालात्वमिति स्पष्टयति—अत्रेति। भिन्नशब्दवाच्यस्य जयादेः

अलौकिकमहालोकप्रकाशितजगत्त्रयः ।
स्तूयते देव ! सद्वंशमुक्तारत्नं न कैर्भवान् ॥ ४२७ ॥
निरवधि च निराश्रयं च यस्य स्थितमनिवर्त्तितकौतुकप्रपञ्चम् ।
प्रथम इह भवान् स कूर्ममूर्त्तिर्जयति चतुर्दशलोकवल्लिकन्दः ॥४२८॥
इति च अमालारूपकमपि परम्परितं द्रष्टव्यम् ॥

---

कुञ्जरत्वाद्यारोपे सतीति शेषः । युज्यते उपपद्यते । कुञ्जराभिन्नजयाधारत्वसाधर्म्येण । जये कुञ्जरत्वारोपे भुजरूपालानसम्बन्धित्वं साधारणो धर्मः ॥ ४२६ ॥

श्लिष्टममालारूपं परम्परितं रूपकमुदाहरति—अलौकिकेति । हे देव ! राजन् ! अलौकिको लोकोत्तरो यो महालोक उत्कृष्टदीप्तिस्तेन प्रकाशितं जगत्त्रयं येन तादृशः यद्वा अलौकिको लोकेऽन्यत्रादृष्टो यो मह उत्सवस्तस्य आलोकः प्रदर्शनमेव अलौकिको महानालोकः द्योतस्तेन प्रकाशितं जगत्त्रयं येन तादृशः सद्वंशो महत्कुलं तदेव सद्वंश उत्कृष्टवेणुः मुक्तोत्पत्तिस्थानं तत्रत्यं मुक्तारत्नं मौक्तिकश्रेष्ठः भवान् कैर्न स्तूयते अपि तु सर्वैः स्तूयते इत्यर्थः । अत्रारोपणीययोः सत्कुलसद्वेण्वोः श्लिष्टसद्वंशेनाभिधानम् राज्ञि मुक्तात्वारोपे कुलगतो वेणुत्वारोपो निमित्तमिति श्लिष्टं परम्परितं रूपकम् राजरूपे उपमेये मुक्तारत्नत्वारोपं विना अन्यारोपाभावाद्रूपकस्यामालात्वम् ॥ ४२७ ॥

अश्लिष्टममालारूपं परम्परितं रूपकमुदाहरति-निरवधीति । निरवधि कालपरिच्छेदशून्यं निराश्रयं च अत एव अनिवर्तितः कौतुकस्य आश्चर्यस्य प्रपंचो विस्तारो येन तादृशं यस्य स्थितं अवस्थानं स इह अस्मिन् जगति प्रथमः आद्यः कूर्ममूर्त्तिः कमठाकृतिः भवान् जयति कीदृशः कूर्ममूर्तिः चतुर्दशलोकाः भूर्भुवरादयः ते एव वल्लिर्लता तस्याः कन्दो मूलमित्यर्थः । अत्र लोकवल्लिपदयोर्भिन्नत्वादश्लिष्टत्वम् लोके वल्लित्वारोपो विष्णौ कन्दत्वारोपे निमित्तमिति अश्लिष्टं परम्परितं रूपकम् विष्णुरूपे उपमेये कन्दत्वारोपं विनाऽन्यारोपाभावाद्रूपकस्यामालात्वमिति च ।

इति चेति । चकारेण पूर्वोक्तं अलौकिकेति समुच्चीयते अपिना पूर्वोक्तं मालारूपं भेदद्वयं समुच्चीयते विद्वन्मानसेत्यादि पद्यद्वयेनोदाहृतं मालारूपकमपि परम्परितं भवतीति द्रष्टव्यमित्यर्थः ॥४२८ ॥

किसलयकरैर्लतानां करकमलैः कामिनां मनो जयति ।
नलिनीनां कमलमुखैर्मुखेन्दुभिर्योषितां मदनः ॥ ४२९ ॥

इत्यादिरशनारूपकं न वैचित्र्यवदिति न लक्षितम् ॥

(१५६) प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः ।

उपमेयमसत्यं कृत्वा उपमानं सत्यतया यत्स्थाप्यते सा त्वपह्नुतिः । उदाहरणम्—

अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये !
कलंको नैवायं विलसति शशांकस्य वपुषि ।
अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे
इति श्रान्ता शेते रजनिरमणी गाढमुरसि ॥ ४३० ॥

---

यद्यपि रशनारूपमपि रूपकं सम्भवति तच्च पूर्वपूर्वमारोप्यमाणानामुत्तरत्रारोपविषयत्वरूपम् तद्यथेत्याह—किसलयेति । मदनः कामः कामिनां रागिणां मनश्चित्तं जयति अभिभवति वशीकरोति । कैर्जयति लतानां वल्लीनां किसलयानि नूतनपत्राण्येव करास्तैः योषितां कामिनीनां करा हस्ता एव कमलानि तैः नलिनीनां कमलिनीनां कमलान्येव मुखानि तैः योषितां मुखान्येव इन्दवस्तैश्चेत्यर्थः । अत्र किसलये करत्वं करे कमलत्वं कमले मुखत्वं मुखे चेन्दुत्वमारोप्यत इति रशनोपमायामिव पूर्वपूर्वेषामारोप्यमाणानां परपरत्र आरोपविषयत्वात्पश्चाद्वलनया रशनारूपकमिदन्तदेवाह—इत्यादीति । तर्हि कुतो न लक्षितमित्याह—न वैचित्र्येति । भणितिरिव मतिरित्याद्युपमायामिव नात्र वैचित्र्यवदिति न लक्षितम् न पृथक्लक्षितमस्माभिरित्यर्थः । परिणामालङ्कारस्तु रूपके एवान्तर्भवतीति दिक् । इति रूपकम् ॥४२९॥

अपह्नुतिनामानमलंकारं लक्षयति—प्रकृतमिति । प्रकृतमुपमेयं निषिध्य सत्यं कृत्वा अन्यदप्रकृतमुपमानं यत्साध्यते सत्यतया व्यवस्थाप्यते आहार्यनिश्चयविषयीक्रियते सा अपह्नुतिरित्यर्थः । प्रकृतमिति व्याचष्टे—उपमेयमिति । अपह्नुतिश्च द्विविधा शाब्दी आर्थी चेति शाब्दीत्यस्य शब्देन यत्रासत्यत्वमाह सेत्यर्थः । आर्थीत्यस्य आक्षेपलभ्येत्यर्थः । आर्थी तु बहुभिर्भङ्गीभिर्निबध्यते । कचित्कपटार्थकशब्दोपादानात् कचित्परिणामार्थकशब्दोपादानात् कचिच्चान्यथेति उदाहरणे स्फुटीभविष्यति तत्र शाब्दीमपह्नुतिमुदाहरति—अवाप्त इति । पूर्णचन्द्रे कलंकं दृष्ट्वा पार्वतीं प्रति हरस्योक्तिः । हे शैलतनये ! परिणत-

इत्थं वा—

बत सखि ! कियदेतत् पश्य वैरं स्मरस्य
प्रियविरहकृशेऽस्मिन् रागिलोके तथा हि ।
उपवनसहकारोद्भासिभृंगच्छलेन
प्रतिविशिखमनेनोट्टंकितं कालकूटम् ॥ ४३१ ॥

अत्र हि न सभृङ्गाणि सहकाराणि अपि तु सकालकूटाः शरा इति प्रतीतिः।
एवं वा—

अमुष्मिँल्लावण्यामृतसरसि नूनं मृगदृशः
स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः ।
यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे
शिखाधूमस्येयं परिणमति रोमावलिवपुः ॥ ४३२ ॥

अत्र न रोमावलिः धूमशिखेयमिति प्रतिपत्तिः एवमियं भङ्ग्यन्तरैरप्यूह्या।

---

रुचः पूर्णकान्तेः शशांकस्य वपुषि वक्षसि प्रागल्भ्यं प्रकटत्वमवाप्तः प्राप्तः प्रकटीभूतः अयं पदार्थः कलंको नैव विलसति शोभते कलंको नैव भवति किन्तु इयं रजनिरमणी निशाभिधा चन्द्रकामिनी अमुष्य चन्द्रस्य विगलत् द्रवीभूतं यदमृतं तस्य स्यन्दः प्रस्रवणं तेन शिशिरे शीतले उरसि वक्षःस्थले रतिश्रान्ता विपरीतसुरतखिन्ना सती गाढं निश्श्लेषं यथा तथा शेते इत्यहं मन्ये इत्यर्थः । अत्रोपमेयभूतं कलंकं निषिध्य उपमानभूता रात्रिः सत्यतया व्यवस्थापितेत्यपह्नुतिः। नैवायमिति नञ्शब्देन निषेधस्य प्रतिपादनाच्छाब्दी ॥ ४३० ॥

निषेधबोधकप्रकारभेदेन लक्ष्यभेदं दर्शयति—इत्थं वेति । सखीं प्रति विरहिण्या उक्तिः । बतेति खेदे हे सखि ! प्रियविरहेण कृशे अस्थिचर्मविशेषे अस्मिन्मादृशे रागिलोके कामिजने स्मरस्य कियत् अपरिमितं वैरं विद्वेषः अस्ति एतत्पश्य तथा हि तदेव कथयामि अनेन स्मरेण कर्त्रा उपवनेषु यानि सहकाराणि तेषु उद्भासिनः शोभमानाः ये भृङ्गास्तेषां छलेन प्रतिविशिखं प्रतिबाणं सहकारपुष्परूपे बाणे बाणे कालकूटं उत्कटविषं उट्टंकितं उपरि निहितमित्यर्थः। अत्रोपमेयभूतान् भृङ्गान्निषिध्य उपमानभूतं कालकूटं सत्यतया व्यवस्थापितमित्यपह्नुतिः । कपटार्थकशब्दोपादानादार्थीयमपह्नुतिस्तदेवाह—अत्र हीति। प्रतीतिरिति नतु नञादिवदभिधया प्रतिपादनमित्यर्थः॥४३१॥

परिणामार्थकशब्दोपादानादार्थीमुदाहरति—एवंवेति । वेश्याः

(१४७) श्लेषः स वाक्ये एकस्मिन् यत्रानेकार्थता भवेत् ॥९६॥

एकार्थप्रतिपादकानामेव शब्दानां यत्रानेकोऽर्थः स श्लेषः ।

उदाहरणम्——

उदयमयते दिङ्मालिन्यं निराकुरुतेतरां
नयति निधनं निद्रामुद्रां प्रवर्त्तयति क्रियाः ।
रचयतितरां स्वैराचारप्रवर्त्तनकर्त्तनं
बत बत लसत्तेजःपुंजो विभाति विभाकरः ॥ ४२३ ॥

---

दासी कांचित्समृद्धलपटं कामिनं प्रति वेश्यां वर्णयति ! भो रसिक ! शर्वेण हरेण प्लुष्टो दग्धः स्मरः अस्या मृगदृशः पृथुजघनभागे अमुष्मिन् दृश्यमानप्रकर्षे लावण्यमेवामृतं तस्य सरसि वराङ्गरूपतडागे नूनं निपतितः तापशान्त्यै निश्चयेन निमग्नः । यस्य स्मरस्य अङ्गान्येव अङ्गारास्तेषां प्रशमस्य शान्तेः पिशुना सूचिका इयं धूमस्य शिखा नाभिकुहरे नाभिबिले रोमावलिवपुः रोमावल्याकारा परिणमति प्रादुर्भवतीत्यर्थः । शिखरिणी छन्दः । अत्र धूमशिखा रोमावलिरूपेण परिणमतीति परिणामशब्दार्थवशान्नेयं रोमावलिः किन्तु धूमशिखेति प्रतीयत इति आर्थी अपह्नुतिरियम् तदेवाह—अत्रेति । क्वचित्प्रकारान्तरेणाप्यपह्नुतिर्भवतीत्याह-एवमिययमिति । इयमार्थी अपह्नुतिः । भङ्ग्यन्तरैः प्रकारान्तरैः । यथा सतमोल्लासे इदन्ते केनोक्तमित्यादि (२६४) पद्ये । तत्र इदन्ते केनोक्तमिति शब्देन निषेधस्य प्रतिपादनादार्थी अपह्नुतिः । क्वचिद्व्यञ्जनया निषेधबोधनम् यथा अं कं केऽपि च शांकिरे इत्यादौ एवं बहुप्रकारेण द्रष्टव्यमित्यपह्नुतिः ॥४२२॥

अर्थश्लेषमलंकारं लक्षयति—श्लेष इति । परिवृत्तिसहानामेव शब्दानामेकवृन्तगतफलद्वयन्यायेन यत्रानेकार्थप्रतिपादकता सोऽर्थश्लेष इत्यर्थः । अध्याहारलभ्यमाह-एकार्थेति । अर्थभेदेन शब्दभेद इति नियमेन एकार्थस्यैवान्वयबोधसमर्थानां शब्दानां यत्र यस्मिन्नलङ्कारे विद्यमाने अनेकोऽर्थः प्रकरणादेरनियमेन बुध्यते स श्लेषः सोऽर्थश्लेष इत्यर्थः । न चैकार्थप्रतिपादकानां कथमनेकार्थो वाच्य इति वाच्यम् । तथाविधाकारैरपरैः शब्दैः सह श्लिष्टत्वात् ॥ ९६ ॥

उदाहरति—उदयमिति । विभाकरः सूर्यः एतन्नामकराजविशेषश्च उदयं पूर्वाचलं समृद्धिं च अयते प्राप्नोति दिशां दिश्यजनानां च अन्धकारवशान्मालिन्यं स्वरूपावरणं दारिद्र्यवशात्कुवेषत्वं च निराकुरुततराम् अतिशयेन दूरीकरोति निद्रामुद्रां नेत्रनिमीलनं नि-

अत्राभिधाया अनियन्त्रणात् द्वावप्यर्कभूपौ वाच्यौ ।

(१४८) परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः

प्रकृतार्थप्रतिपादकवाक्येन श्लिष्टविशेषणमाहात्म्यात् न तु विशेष्यस्य सामर्थ्यादपि यत् अप्रकृतस्यार्थस्याभिधानं सा समासेन संक्षेपेणार्थद्वयकथनात्समासोक्तिः ।

---

रुत्साहतां च निधनं नाशं नयति प्रापयति क्रियाः गमनागमनादिकाः विहितक्रियाश्च प्रवर्त्तयति स्वैराचारोऽभिसारादिः स्वेच्छया वेदनिषिद्धाचरणं च तत्र यत्प्रवर्त्तनं तस्य कर्त्तनमुच्छेदं रचयतितरां अतिशयेन सम्पादयति बत बतेति हर्षातिशये लसत्तेजसां शोभमानरश्मीनां शोभमानकान्तीनां च पुञ्जः समूहरूपः विभाति विशेषेण दीप्यत इत्यर्थः । हरिणी छन्दः । अत्रोदयमयते इत्यादिषु वाक्येषु उदयमित्यादीनां शब्दानामभिधायाः संयोगाद्यैः प्रकरणादिकैः नियन्त्रणाभावादनेकार्थस्य वाच्यतया पर्यायपरिवृत्तिसहतया चार्थश्लेषोऽयम् तदेतत्सर्वं वृत्तिकार आह—अत्रेति । संयोगादीनामभावेनाभिधाया अनियन्त्रणाद्द्वयोरपि वाच्यतैवेति भाव इति श्लेषः॥८॥

समासोक्तिं लक्षयति परोक्तिरिति । श्लिष्टैः प्रकृताप्रकृतार्थोभयसङ्गतैः भेदकैर्विशेषणवाचकमात्रशब्दैर्या परस्याप्रकृतार्थस्य उक्तिः प्रकृतवृत्तान्ते आरोपो व्यञ्जनया प्रतिपादनं सा समासोक्तिः । सूत्रं व्याकुर्वन्नाकाङ्क्षितैकदेशं पूरयति—प्रकृतार्थेति । प्रस्तुतार्थबोधकवाक्येन परशब्दप्रतिपाद्यस्याप्रकृतार्थस्य नित्यं प्रकृतार्थसाकाङ्क्षत्वेनेदं लब्धम् । श्लिष्टैर्भेदकैरित्यस्य पर्यवसितार्थमाह– श्लिष्टेति । श्लिष्टं यद्विशेषणबोधकमात्रं पदन्तस्य माहात्म्यात् बोधकत्वरूपसामर्थ्यात् न तु विशेष्यबोधकस्यापि पदस्य सामर्थ्यादित्यर्थः । परोक्तिरित्यस्यार्थमाह अप्रकृतस्येति । प्रकृतगतव्यवहाररूपस्यार्थस्याभिधानं व्यञ्जनया बोधनम् समासोक्तौ अप्रकृतवृत्तान्तोऽभिधया प्रतीयते अप्रकृतवृत्तान्तस्तु व्यञ्जनयैव प्रकरणेनाभिधाया नियमनात् । अत्र प्रकृतव्यवहारेऽप्रकृतव्यवहारारोपः रूपके तु विशेष्ये प्रकृतेऽप्रकृतरूपारोपः । अत्र विशेषणस्य श्लिष्टत्वमुपलक्षणम् प्रकृताप्रकृतसाधारणत्वस्य औपम्यगर्भत्वस्य सारूप्यस्य च सम्भवात् । तत्र साधारणविशेषणवशाद्यथा "विलिखति कुचावुच्चैर्गाढं करोति कचग्रहमि"त्यादिपद्ये कुचाविलेखनकचग्रहणादिविशेषणानां शब्दश्लेषं विना स्वत एव साधारण्या-नायकवृत्तान्तपरिस्फूर्त्तिरिति समासोक्तिः । औपम्यगर्भविशेषणवशा-

उदाहरणम्—

लहिऊण तुज्झ बाहुप्फंसं जीए स कोवि उल्लासो ।
जअलच्छी तुह विरहे ण हूज्जला दुव्वला णं सा ॥ ४३४ ॥

अत्र जयलक्ष्मीशब्दस्य केवलं कान्तावाचकत्वं नास्ति ।

**(१४९) निदर्शना ।**

**अभवन् वस्तुसम्बन्ध उपमापरिकल्पकः ॥ ९७ ॥**

निदर्शनं दृष्टान्तकरणम् उदाहरणम्—

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ ४३५ ॥

अत्रोडुपेन सागरतरणमिव मन्मत्या सूर्यवंशवर्णनमित्युपमायां पर्यवस्यति ।

---

यथा "दन्तप्रभापुष्पचिता मणिपल्लवशोभिनी" इत्यादिपद्ये नायिकाविशेषणत्वस्योपमितसमासेनैव सिद्धौ दन्तप्रभासदृशैः पुष्पैः पाणिसदृशैः पल्लवैः केशपाशसदृशेनालिवृन्देनेति समासाश्रयणेन लतावृत्तान्तस्य परिस्फूर्त्तिरिति समासोक्तिः। सारूप्यवशाद्यथा "पुरा यत्र स्रोत" इत्यादिपद्ये वनसारूप्यात् कुटुम्बिषु धनसन्तानादिसमृध्यसमृद्धिविपर्यासं प्राप्तस्य ग्रामनगरादेर्वृत्तान्तस्य प्रतीतेः समासोक्तिरिति दिक् ।

उदाहरति—लहिऊणेति ।

लब्ध्वा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः ।
जयलक्ष्मीस्तव विरहे न खलूज्ज्वला दुर्बला ननु सा ॥

इति संस्कृतम् । समरपतितं स्वामिनमवेक्ष्य वीरपत्न्या। उक्तिः । हे वीर! तव बाहुस्पर्शं लब्ध्वा यस्याः स कोऽपि अनिर्वचनीय उल्लासः हर्षोत्फुल्लताऽभूत् सा जयलक्ष्मीस्तव विरहे वियोगे सति न खलु उज्ज्वला ननु प्रत्युत दुर्बला जातेत्यर्थः । अत्र समासोक्तिं दर्शयति—अत्रेति । अत्र केवलं विशेष्यवाचिनो जयलक्ष्मीशब्दस्य कान्तावाचकत्वं अप्रकृतकान्ताबोधकत्वं नास्ति तस्य जयलक्ष्मीमात्रबोधनसामर्थ्यात् विशेषणानान्तु लहिऊणेत्यादिपदानां उभयगतबाहुस्पर्शप्राप्त्यादिबोधकत्वमस्त्येवेति समासोक्तिरलङ्कार इत्यर्थः । बाहुस्पर्शलाभप्रयुक्तोल्लासादिसाधारणविशेषणबलाज्जयलक्ष्मीवृत्तान्तो नायिकावृत्तान्तरूपतया गम्यत इति समासोक्तिरिति भाव इति समासोक्तिः ॥४३४॥९॥

निदर्शनां लक्षयति—निदर्शनेति । न भवतीत्यभवन् प्रतीतिविषय-

यथा वा—

उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम्।

वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ॥ ४३६ ॥

अत्र कथमन्यस्य लीलामन्यो वहतीति तत्सदृशीमित्युपमायां पर्यवसानम्।

दोर्भ्यां तितीर्षति तरङ्गवतीभुजङ्गमादातुमिच्छति करे हरिणाङ्कबिम्बम्।

मेरुं लिलङ्घयिषति ध्रुवमेष देव! यस्ते गुणान् गदितुमुद्यममादधाति॥४३७॥

इत्यादौ मालारूपाऽप्येषा द्रष्टव्या।

---

तामलभमानस्तात्पर्याविषयः तादृशः वस्तुनोर्वाक्यार्थयोः पदार्थयोर्वा सम्बन्धोऽन्वयः उपमापरिकल्पकः औपम्यमाक्षिप्य पर्यवस्यति सा निदर्शनाऽलङ्कारः। इयं च वाक्यार्थनिदर्शना पदार्थनिदर्शना चेति द्विविधा ॥ तत्र वाक्यार्थनिदर्शनामुदाहरति—क्व सूर्येति। सूर्यः प्रभवः कारणं यस्य स वंशः रघुवंशः क्व अल्पो विषयो ज्ञेयोऽर्थो यस्यास्तादृशी मे मतिः क्व। सूर्यवंशमाकलयितुं न शक्नोमीत्यर्थः। तथा हि दुस्तरं तरितुमशक्यं सागरं मोहादज्ञानात् उडुपेन चर्मावनद्धवंशपात्रेण तितीर्षुः तरितुमिच्छुः अस्मीत्यर्थः। अल्पसाधनैरधिकारम्भो न सुकर इति भावः। अत्र सूर्यवंशवर्णनेऽहं सागरं तितीर्षुरस्मीति सम्बन्धोऽनुपपन्नः उडुपेन सागरतरणवन्मन्मत्या सूर्यवंशवर्णनमसम्भावितमित्युपमां कल्पयतीत्युपमायां पर्यवसानात् वाक्यार्थनिदर्शनेयम् ॥ ४३५ ॥

पदार्थनिदर्शनामुदाहरति-उदयतीति। माघे रैवतकवर्णनम्। वितता विस्तीर्णा ऊर्ध्वा ऊर्ध्वदेश्या रश्मयः किरणा एव रज्जवो यस्य तादृशे अहिमरुचौ सूर्ये उदयति उदयमाने सति विततोर्ध्वरश्मिरज्जौ हिमधाम्नि चन्द्रे अस्तं याति सति च पूर्णिमायामुभयोरुदयास्तयोरेककालिकत्वात् अयं गिरिः रैवतकः विलम्बि विशेषं यथा स्यात्तथा लम्बमानं यद् घंटाद्वयं तेन परिवारितः उभयतः सम्बन्धितो यो वारणेन्द्रो गजश्रेष्ठस्तस्य लीलां शोभां वहतीत्यर्थः। पुष्पिताग्रा छन्दः। अत्र समस्तैकपदबोध्येन वारणेन्द्रलीलापदार्थेन गिरिपदार्थस्याऽन्वयोऽनुपपन्नः अन्यलीलाद्वहनस्यान्येनासम्भवात् अन्यलीलातादात्म्यस्यान्यलीलायामसम्भवाच्च अतो वारणेन्द्रलीलासदृशीं लीलामित्युपमायां पर्यवस्यतीति पदार्थनिदर्शनेयम्। श्लेषेण लीलापदेन लीलाद्वयोपस्थितौ बीजन्दर्शयति-अत्रेति ॥ ४३६ ॥

निदर्शना च मालारूपाऽपि सम्भवतीति तामुदाहरति—दोर्

(१५०) स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव च साऽपरा ।

क्रिययैव स्वस्वरूप-स्वकारणयोः सम्बन्धो यदवगम्यते साऽपरा निदर्शना, यथा--

उन्नतं पदमवाप्य यो लघुर्हेलयैव स पतेदिति ब्रुवन् ।
शैलशेखरगतो दृषत्कणश्चारुमारुतधुतः पतत्यधः ॥ ४३८ ॥

अत्र पातक्रियया पतनस्य लाघवे सति उन्नतपदप्राप्तिरूपस्य च सम्बन्धः ख्याप्यते ।

---

भ्यामिति । हे देव ! राजन् ! यस्ते तव गुणान् शौर्यादीन् गदितुं वक्तुं उद्यममुद्योगमादधाति करोति एष स पुरुषः ध्रुवं दोर्भ्यां भुजाभ्यां तरङ्गवतीनां नदीनां भुजङ्गं विटं भर्तारं समुद्रं तितीर्षति करे पाणौ हरिणाङ्कबिम्बं चन्द्रमण्डलं आदातुं ग्रहीतुमिच्छति मेरुं लिलंघयिषति अनन्तगुणस्त्वमसीति भावः । अत्र तव गुणान्गदितुमित्याद्येको वाक्यार्थः एषस्तरङ्गवती भुजङ्गमित्याद्यपरो वाक्यार्थः तयोश्च सम्बन्धोऽनुपपन्नः सन् सागरतरणादिसदृशं त्वद्गुणगणभाषणमित्युपमायां पर्यवस्यतीति वाक्यार्थस्योपमाक्षेपकत्वाद्वाक्यार्थनिदर्शनेयम् एकस्य गुणगणनोद्यमस्योपमेयस्य समुद्रतितीर्षादीनि बहून्युपमानानीति मालारूपयम् ॥ ४३७ ॥

अन्यविधां निदर्शनां लक्षयति–स्वस्वेति । यत्र क्रिययैव स्वस्य कार्यस्य स्वहेतोश्च अन्वयो हेतुहेतुमद्भावरूपः सम्बन्धः तस्य या उक्तिः प्रतिपादनं सा अपरा अन्या निदर्शनेत्यर्थः । तमेवार्थमाह–क्रिययैवेति । प्रथमस्वपदार्थमाह=स्वस्वरूपेति । स्वहेतुशब्दार्थमाह–स्वकारणेति । अन्वयशब्दार्थमाह–सम्बन्ध इति । अवगम्यते णिजन्तमेतत् ख्याप्यते इत्यर्थः । तामुदाहरति–उन्नतमिति । दृषत्कणः पाषाणकणः शैलशेखरगतः पर्वतशिखरारूढः सन् चारुमारुतो मन्दवातः तेन धुतः चालितः अधः पतति किं कुर्वन् यो लघुरल्पमतिः अपकृष्टगुरुत्ववाँश्च स उन्नतं पदं उत्कृष्टस्थानं ऊर्ध्वस्थानं च अवाप्य हेलयैव पतेत् पदभ्रंशं अधःसंयोगहेतुक्रियां च प्राप्नुयादिति ब्रुवन् स्वदृष्टान्तेन प्रतिपादयन्नित्यर्थः । अत्र पततीति पतनक्रियारूपेण कार्येण स्वेनैव पतेत्पदप्रतिपाद्यस्य स्वस्य पतनरूपकार्यस्य स्वकारणस्य च लघीयसः उन्नतपदप्राप्तिरूपस्य सम्बन्धः कार्यकारणभावात्मकः प्रतिपाद्यते तथा च लाघवे सति उन्नतपदप्राप्तिः पाते हेतुः यथा दृष-

(१५१) अप्रस्तुतप्रशंसा या सा सैव प्रस्तुताश्रया ॥ ९८ ॥

अप्राकरणिकस्याभिधानेन प्राकरणिकस्याक्षेपोऽप्रस्तुतप्रशंसा।

(१५२) कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति।
तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा ॥ ९९ ॥

तदन्यस्य कारणादेः। क्रमेणोदाहरणम्।

याताः किन्न मिलन्ति सुन्दरि! पुनश्चिन्ता त्वया मत्कृते
नो कार्या नितरां कृशाऽसि कथयत्येवं सबाष्पे मयि।
लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः ॥ ४३९ ॥

अत्र प्रस्थानात्किमिति निवृत्तोऽसीति कार्ये पृष्टे कारणमभिहितम्।

---

त्कणस्येति दृष्टान्तपर्यवसानादियमपि निदर्शना तदेवाह—अत्रेति। पात-क्रियया पततीतिपदप्रतिपाद्यया पतनस्य पतेत्पदप्रतिपाद्यस्य का-र्यस्य रूपस्य चेति तद्रूपस्य कारणस्य चेत्यर्थः। सम्बन्धः कार्यकार-णभावरूपः ख्याप्यते प्रतिपाद्यते ॥ इति निदर्शना ॥ ४३८ ॥ १० ॥

अप्रस्तुतप्रशंसां लक्षयति—अप्रस्तुतेति। याऽप्रस्तुतस्याप्रकृतस्य प्रशंसा वर्णना सा प्रस्तुताश्रया प्रकृतार्थप्रतिपत्तिपरा चेत्तदा सैव अप्रस्तुतप्रशंसैव नामालङ्कार इत्यर्थः। तदेवोपपादयन् सूत्रं व्याचष्टे अप्राकरणिकेति। प्राकरणिकस्य बुद्धिसन्निहितस्य आक्षेपो व्यञ्जनम् अप्राकरणिकेन प्राकरणिकस्याक्षेपोऽप्रस्तुतप्रशंसा प्राकरणिकेनाप्रा-करणिकस्याक्षेपः समासोक्तिरिति भेदः। प्रस्तुतव्यञ्जनं प्रस्तुताप्रस्तु-तयोरसम्बन्धो न सम्भवतीति तत्सम्बन्धप्रदर्शनमुखेन तामप्रस्तु-तप्रशंसां पञ्चधा विभजते—कार्ये इत्यादि। कार्ये प्रस्तुते वर्णनीयत्वेन प्र-कृते सति तदन्यस्य अप्रस्तुतस्य कारणस्य वचो वर्णनमित्येकः प्र-कारः। निमित्ते कारणे प्रस्तुते सति तदन्यस्य अप्रस्तुतस्य कार्यस्य वच इति द्वितीयः। सामान्ये प्रस्तुते सति तदन्यस्य अप्रस्तुतस्य वि-शेषस्य वच इति तृतीयः। विशेषे प्रस्तुते सति तदन्यस्य अप्रस्तु-तस्य सामान्यस्य वच इति चतुर्थः। तुल्ये प्रस्तुते सति तदन्यस्य अप्रस्तुतस्य तुल्यस्य वच इति पञ्चमः प्रकारः ॥ ९८ ॥ ९९ ॥

तत्र कार्ये प्रस्तुते कारणस्य वर्णनमुदाहरति—याता इति। अमरुकशतके प्रस्थानान्निवृत्तोऽसि किमिति मित्रेण पृष्टो निवृत्ति-

राजन् ! राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे ! भोजय मां कुमार ! सचिवैर्नाद्यापि किं भुज्यते ।
इत्थं नाथ ! शुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरात्
चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते ॥ ४४० ॥

अत्रप्रस्थानोद्यतं भवन्तं ज्ञात्वा सहसैव त्वदरयः पलाय्य गता इति कारणे प्रस्तुते कार्यमुक्तम् ।

---

हेतुं स्वप्रियावृत्तान्त वर्णयति । हेसुन्दरि ! याता देशान्तरं गताः किन्न मिलन्ति नायान्ति अपि तु मिलन्त्येवेति काकुः । या चिन्ता कृता सा कृतैव पुनर्न कार्येत्याह—पुनरित्यादि । नैव चिन्ता कृतेत्यपलापे चिन्ताकार्यमाह—नितरामिति । स्वभावत एव त्वं कृशा चिन्तया तु अत्यन्तं कृशाऽसीति भावः एवमुक्तप्रकारेण हे मित्र ! सबाष्पे साश्रुणि मयि कथयति सति तया प्रेयस्या कर्त्र्या लज्जया मंथरा निष्क्रिया तारका कनीनिका यस्य तादृशेन निपतत् विगलदेव पीतं संवृतं अश्रु येन तादृशेन चक्षुषा करणेन मां दृष्ट्वा हसितेन हास्येन भाविनि आवश्यके मरणे उत्साहः सूचित इत्यर्थः । शार्दूलविक्रीडितं छन्दः । अत्र प्रस्थानान्निवृत्तोऽसि किमिति प्रस्थाननिवृत्तिरूपे कार्ये पृष्टे कारणस्य प्रियाभाविमरणोत्साहस्य वर्णनम् एवं च प्रस्थाननिवृत्तिरूपे कार्ये प्रस्तुते सति अप्रस्तुतस्य प्रियाभाविमरणोत्साहरूपकारणस्याभिधानमित्यप्रस्तुतप्रशंसा तदेवाह-अत्रेति ॥ ४३९ ॥

कारणे प्रस्तुते कार्यस्य वर्णनमुदाहरति—राजन्निति । राजानं प्रति कवेरुक्तिः । हेराजन् ! तव अरिभवने त्वदागमनभिया शून्यीकृते प्रतिनृपतिमन्दिरे अध्वगैः पांथैः पञ्जरात् मुक्तो त्यक्तः शुकः प्रतिनृपतिशुकः शून्यायां निर्जनायां वलभौ उपरिगृहे चित्रस्थान् आलेख्यगतान् राजादीनवलोक्य एकैकमेकमेकं प्रति इत्थमाभाषते (कथम्) हे राजन् ! राजसुता मां न पाठयति देव्यो राज्योपि तूष्णीं स्थिताः न किमपि वदन्ति हे कुब्जे ! मां भोजय हेकुमार ! सचिवैः भवद्वयस्यैः अद्यापि किं न भुज्यते इतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् । अत्र शत्रुपलायनरूपे कारणे प्रस्तुते पथिकमुक्तशुकाभाषणरूपाप्रस्तुतकार्याभिधानामित्यप्रस्तुतप्रशंसा तदेवाह—अत्रेत्यादि । कारणे शत्रुपलायनरूपे कार्यं पथिकमुक्तशुकाभाषणरूपम् उक्तम् तेन च कारणं व्यज्यते इत्यर्थः ॥ ४४० ॥

एतत्तस्य मुखात्कियत् कमलिनीपत्रे कणं वारिणो
यन्मुक्तामणिरित्यमंस्त स जडः शृण्वन् यदस्मादपि ।
अगुंल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनैः
कुत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तः शुचा ॥ ४४१ ॥

अत्रास्थाने जडानां ममत्वसंभावना भवतीति सामान्ये प्रस्तुते विशेषः कथितः ।

सुहृद्वधूबाष्पजलप्रमार्जनं करोति वैरप्रतियातनेन यः ।
स एव पूज्यः स पुमान् स नीतिमान् सुजीवितं तस्य स भाजनं श्रियः॥४४२॥

अत्र कृष्णं निहत्य नरकासुरवधूनां यदि दुःखं प्रशमयसि तत् त्वमेव श्लाध्य इति विशेषे प्रकृते सामान्यमभिहितम् ।

---

सामान्ये प्रस्तुते विशेषस्य वर्णनमुदाहरति-एतदिति । भल्लटशतके कस्यचिन्मूर्खस्य वृत्तान्तं कुतश्चिदाकर्ण्य विस्मयेन भाषमाणं कंचित्प्रति कस्यचिदुक्तिः। तस्य मुखात् श्रुतं एतत् कियत् अत्यल्पम् किन्तत् यत् स जडः मूर्खः कमलिनीपत्रे स्थितं वारिणः कणं जलबिन्दुं मुक्तामणिः मौक्तिकमिति अमंस्त ज्ञातवानिति अस्मादपि अन्यत् अधिकजडत्वबोधकं शृणु शनैरादीयमाने मौक्तिकबुध्या यत्नेन मन्दं गृह्यमाणे वारिकणे अङ्गुल्यग्रयोः लघ्वी या क्रिया स्पर्शरूपा तया प्रविलयिनि अङ्गुलावेव लीयमाने लग्ने सति मम मुक्तामणिः कुत्र उड्डीय गत इति शुचा दुखेन अन्तः न निद्राति नेत्रनिमीलनेऽपि चिन्तां न त्यजतीत्यर्थः। अत्र जडानामस्थाने अयोग्यस्थाने एव ममत्वसम्भावना भवतीति सामान्ये प्रस्तुते जडविशेषस्य वारिकणे मुक्ताधीत्वरूपाप्रस्तुतममत्वविशेषस्याभिधानमित्यप्रस्तुतप्रशंसेयन्तदाह-अत्रेति। जडानां मूर्खाणाम् ममत्वेति आत्मीयत्वेत्यर्थः विशेषः भ्रमविशेषः ॥ ४४१ ॥

विशेषे प्रस्तुते सामान्यस्याभिधानमुदाहरति-सुहृदिति। श्रीकृष्णेन नरकासुरहते तत्सुहृदं शाल्वं प्रति मन्त्रिण उक्तिः। यः पुरुषः वैरप्रतियातनेन कृतपीडेषु पीडादानेन सुहृद्वधूनां बाष्पजलप्रमार्जनं अश्रुप्रोञ्छनं करोति स एव पूज्यः स एव पुमान् स एव नीतिमान् तस्यैव सुष्ठु जीवितं स एव श्रियः लक्ष्म्याः भाजनं पात्रमित्यर्थः। वंशस्थवृत्तम्। अत्राप्रस्तुतप्रशंसां दर्शयति-अत्रेति। तत् तदा ॥४४२॥

तुल्ये प्रस्तुते तुल्याभिधाने त्रयः प्रकाराः श्लेषः समासोक्तिः सादृश्यमात्रं वा तुल्यात्तुल्यस्य हि आक्षेपे हेतुः । क्रमेणोदाहरणम्—

पुंस्त्वादपि प्रविचलेद्यदि यद्यधोऽपि यायाद्यदि प्रणयने न महानपि स्यात् ।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं केनापि दिक् प्रकटिता पुरुषोत्तमेन॥४४३॥

येनास्यभ्युदितेन चन्द्र ! गमितः क्लान्तिं रवौ तत्र ते
युज्येत प्रतिकर्त्तुमेव न पुनस्तस्यैव पादग्रहः ।
क्षीणेनैतदनुष्ठितं यदि ततः किं लज्जसे नो मना-
गस्त्येवं जडधामता तु भवतो यद्व्योम्नि विस्फूर्जसे ॥४४४॥

---

पञ्चमभेदे त्रैविध्यमाह—तुल्ये इति । अत्र श्लेषपदं विशेषणविशेष्यवाचिशब्दानां सर्वेषामेवोभयार्थबोधकपरम् । समासोक्तिपदं च विशेषणमात्रस्योभयार्थबोधकपरमिति ज्ञेयम् । आक्षेपे व्यञ्जने । तत्र श्लेषहेतुकामुदाहरति-पुंस्त्वादिति । सपत्नापहृतं राज्यमुद्धर्तुं कश्चिन्नृपमुद्व्रेजयतस्तन्मन्त्रिण उक्तिः । भल्लटशतके पद्यमिदम् पुंस्त्वात्पुरुषचिह्नादपि यदि प्रविचलेत् चलनं प्राप्नुयात् मोहिनीरूपमङ्गीकृत्य दैत्यगणादमृतहरणेन विश्वस्य रक्षणात् अथ पातालमपि यायाद्गच्छेत् पृथ्वीरक्षणाय कूर्ममूर्त्या पातालगमनं प्रणयने याचने यदि न महान् महत्वरहितोऽपि अल्पोऽपि स्यात् बलेः प्रार्थनसमये वामनत्वमङ्गीकृतं तदपि तथापि विश्वं सर्वजनं अभ्युद्धरेत् विपद्विनाशनेन रक्षेदिति ईदृशी इयं दिक् मार्गः रीतिः केनापि अनिर्वचनीयेन पुरुषोत्तमेन विष्णुना प्रकटिता इत्यप्रस्तुतविष्णुपक्षेऽर्थः । प्रस्तुतराजपक्षे तु पुंस्त्वात् शौर्यादेरपि यदि प्रविचलेत् अधः संपद्भ्रंशमपि यदि यायात् याचने यदि न महान् महत्वशून्योऽपि स्यात् तथापि सपत्नापहृतं विश्वमभ्युद्धरेदितीदृशी इयं दिक् केनापि अन्येन पुरुषोत्तमेन सत्पुरुषेण प्रकटितेत्यर्थः । भवताऽपि तादृशभावेन स्वराज्यमुद्ध्रियतामिति भावः । अत्र वर्णनीयतया सत्पुरुषे प्रस्तुते तत्तुल्यस्य अप्रस्तुतस्य विष्णोरभिधानम् तत्र पुंस्त्वादित्यादिविशेषणानां पुरुषोत्तमेनेति विशेष्यस्य च श्लेषेण प्रस्तुतस्य विष्णुतुल्यस्य सत्पुरुषस्याक्षेप इति श्लेषहेतुकाऽप्रस्तुतप्रशंसेयम् ॥ ४४३ ॥

समासोक्तिहेतुकामुदाहरति-येनेति । क्षीणधनः कश्चिदुपजीवनार्थमपकारिणं सधनमनुसरन् केनचिदुपालभ्यते हे चन्द्र ! अभ्युदितेन उदयं प्राप्तेन समृद्धेन च येन रविणा त्वं क्लान्तिं तेजोही-

आदाय वारि परितः सरितां मुखेभ्यः किन्तावदर्जितमनेन दुरर्णवेन ।
क्षारीकृतं च वडवादहने हुतं च पातालकुक्षिकुहरे विनिवेशितं च ॥४४५॥

इयं च काचित् वाच्ये प्रतीयमानार्थाऽनध्यारोपेणैव भवति यथा—

अब्धेरम्भः स्थगितभुवनाभोगपातालकुक्षेः
पोतोपाया इह हि बहवो लंघनेऽपि क्षमन्ते ।
आहो रिक्तः कथमपि भवेदेष दैवात्तदानीं
को नाम स्यादवटकुहरालोकनेऽप्यस्य कल्पः ॥ ४४६ ॥

---

नतां ग्लानिं च गमितः प्रापितोऽसि अभ्युदितेनैव न त्वपकृतेनेति भावः तत्र तस्मिन्नवौ ते तव प्रतिकर्तुं प्रत्यपकर्तुमेव युज्येत पुनः प्रत्युत तस्यैव रवेरेव पादग्रहः किरणग्रहणं पादपतनं च न युज्यते अमायां सूर्येण सङ्गत्य ततस्तेजोग्रहणमिति प्रसिद्धिः यदि क्षीणेन कलाहीनेन धनहीनेन च त्वया एतत् पादग्रहणमनुष्ठितं तर्हि ततः पादग्रहणाद्धेतोः मनागीषदपि किं नो लज्जसे कुतः स्वल्पामपि लज्जां न प्रयासीत्यर्थः । अस्त्वेवं लज्जाशून्यत्वमप्यस्तु यत् व्योम्नि आकाशे विस्फूर्जसे सगर्वमुदेषि तत् भवतस्तव जडधामतैव जडं जलं डलयोरभेदात् शीतलप्रभतैव । अत्र विशेष्यवाचिचन्द्रपदं न श्लिष्टं श्लिष्टविशेषणमात्रमाहात्म्येन प्रस्तुतसधननिर्धनवृत्तान्ताक्षेप इति समासोक्तिहेतुकाऽप्रस्तुतप्रशंसेयम् ॥ ४४४ ॥

सादृश्यमात्रहेतुकामुदाहरति–आदायेति । अनेन दुरर्णवेन दुष्टसागरेण लवणसमुद्रेण परितः सर्वतः सरितां नदीनां मुखेभ्यः सङ्गमस्थानेभ्यः वदनेभ्यश्च वारिजलमादाय तावदिति वाक्यालङ्कारे किमर्जितं संपादितम् न किमपीत्यर्थः । तथा हि क्षारीकृतं मिष्टमपि कटुकृतं वडवादहने वाडवाग्नौ हुतं च पातालमेव कुक्षि कुहरं तस्मिन्विनिवेशितं विक्षिप्तं चेत्यर्थः । मिष्टं जलं वृथा नाशितमिति भावः । अत्र सर्वतः परेभ्यो धनमाकृष्य असद्व्ययं कुर्वाणे पुंसि प्रकृते अप्रकृतस्याब्धेः कथनं तत्र श्लेषाभावेऽपि सादृश्यमात्रेणासत्पुरुषाक्षेप इति सादृश्यमात्रेणासत्पुरुषाक्षेप इति सादृश्यमात्रहेतुकाऽप्रस्तुतप्रशंसेयम् ॥४४५॥

तुल्ये प्रस्तुते तुल्याभिधानरूपाऽप्रस्तुतप्रशंसा त्रिविधा क्वचिद्वाच्यार्थे प्रतीयमानार्थानध्यारोपमात्रेण क्वचित्प्रतीयमानार्थाध्यारोपेण क्वचित्त्वंशभेदेन तदध्यारोपानारोपाभ्याम् तत्राद्यामाह इयं चेति । प्रतीयमानो व्यङ्ग्यः । अतस्मिंस्तत्त्वारोपोऽध्यारोपः । उदाहरति–अ-

क्वचिदध्यारोपेणैव यथा—

कस्त्वं भोः ? कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते ।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायाऽपि परोपकारकरणे मार्गस्थितस्यापि मे ॥ ४४७ ॥

---

ब्धेरिति । इह अस्मिँल्लोके बहवो भूयांसः पोतोऽब्धियानं उपायः साधनं येषान्ते सांयात्रिकाः समुद्रवणिजः अम्भो जलन्तेन स्थगित आच्छादितस्तिरस्कृतो वा भुवनस्य भूमेराभोगो विस्तारः पातालस्य कुक्षिर्मध्यं च येन तादृशस्य अब्धेः समुद्रस्य लङ्घने उल्लंघनेऽपि क्षमन्ते शक्ता भवन्ति आहो यदि दैवात् एषः समुद्रः रिक्तः जलशून्यो भवेत्तदानीं अस्य समुद्रस्य अवटो गर्तः कुहरं छिद्रं तयोरालोकने दर्शनेऽपि को नाम कथमपि कल्पः समर्थः स्यान्न कोऽपीत्यर्थः । अत्रोपमर्दनशीलस्य दुष्प्रभोः पूर्णतैव वरं न रिक्तता अत्यन्तोपमर्दनापत्तेरिति प्रस्तुतं प्रतीयमानम् अत्र वाच्यार्थस्य स्वत एव संभवितया न तत्र प्रतीयमानार्थाध्यारोप आवश्यकः । अत्र प्रभुः सम्पदि सुखसेव्यो विपदि कष्टसेव्य इति प्रभुवृत्तान्तः प्रकृतोऽप्रकृताब्धिवृत्तान्तेन सादृश्यमात्रादाक्षिप्यते अपुरुषेऽब्धावप्येतेऽर्था अबाधिता एवेति न प्रतीयमानार्थाध्यारोप इति ॥ ४४६ ॥

द्वितीयामाह-क्वचिदिति ध्वन्यालोके प्रश्नोत्तररूपं पद्यमिदम् । भोः त्वं क इति वृक्षं प्रति पथिकस्य प्रश्नः । कथयामि दैवेन हतकं शून्यं दुर्भाग्यं शाखोटकं भूतावासवृक्षविशेषं मां विद्धि इत्युत्तरम् वैराग्यादिव वक्षि वदसि इति प्रश्नः कथ्यते अत्र अस्मिन्प्रदेशे वामेन मार्गाद्वामभागेन वामाचारेण च उपलक्षितः वटो वटवृक्षः अस्ति तं वटं अध्वगजनः पान्थजनः सर्वात्मना छायारोहणभोजनशयनादिना वा सेवते आदरेणाश्रयति मार्गे रथ्यायां सदाचारे च स्थितस्यापि मे मम छायाऽपि परोपकारकरणे न भवतीत्युत्तरम् । अत्र सत्पात्रेण स्वदत्तस्यानङ्गीकारादतीव निर्विण्णः अधमजातिर्दित्सुः कश्चित्पुरुषः प्रस्तुतः प्रतीयते अचेतनेन वाच्यार्थेन शाखोटकेन उक्तिप्रत्युक्त्यसंभवात् वाक्यार्थे शाखोटकादिरूपे प्रतीयमानार्थस्य अधमजातिदित्सुप्रभृतेरारोप आवश्यकः । वाच्यशाखोटके सम्बोध्यत्वोच्चारयितृत्वादिकमनुपपन्नमिति प्रतीयमानाध्यारोपः ॥ ४४७ ॥

क्वचिदंशेष्वध्यारोपेण यथा--

सोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं
दृष्टिः सा मदविस्मृतस्वपरदिक् किंभूयसोक्तेन वा।
सर्वं विस्मृतवानसि भ्रमर ! हे यद्वारणोऽद्याप्यसौ
अन्तः शून्यकरो निषेव्यत इति भ्रातः ! क एष ग्रहः ॥४४८॥

अत्र रसनाविपर्यासः शून्यकरत्वं च भ्रमरस्यासेवने न हेतुः कर्णचापलं तु हेतुः मदः प्रत्युत सेवने निमित्तम्।

(१५३) निगीर्याध्यवसानन्तु प्रकृतस्य परेण यत्
प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् ॥१००॥
कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः।
विज्ञेयाऽतिशयोक्तिः सा

---

तृतीयामाह--क्वचिदिति हे भ्रमर ! यस्य वारणस्य स अपूर्वो नवीनः रसनाविपर्यासविधिः जिह्वापरिवृत्तिः परापरविपरीताभिधानं च। कर्णयोः तत्तादृशं चापलं अनवरतचालनं परवचनप्रतार्यत्वं च मदो गण्डजलं गर्वश्च तेन विस्मृता स्वपरदिक् निजपरमार्गः आत्मानात्मविवेकश्च यया तादृशी सा विलक्षणा दृष्टिः। वा अथवा भूयसा बहुना उक्तेन किं सर्वं एतत्सर्वं त्वं विस्मृतवानसि हे भ्रातः ! अन्तःशून्यकरः अस्थिमांसादिशून्यमध्यशुंडादंडः धनशून्यहस्तश्च असौ वारणः गजः अनुगतसेवकवारकश्च यत् अथापि निषेव्यते नितरामाग्रहेण सेव्यत इति एषः ग्रहः आग्रहः क इत्यर्थः एष दुराग्रहो न युक्त इति भावः। अत्राप्रस्तुतयोर्गजभ्रमरयोरभिधानेन तुल्ययोः प्रस्तुतयोः सेव्यसेवकयोर्निवारकानुगतयोः पुरुषयोः श्लेषेणाक्षेप इत्यप्रस्तुतप्रशंसा इयं हि कर्णचापलांशे वाच्ययोर्गजभ्रमरयोः सेव्यसेवकपुरुषरूपप्रतीयमानार्थानध्यारोपेण तदन्यत्र तु रसनाविपर्ययादिरूपांशत्रये तयोस्तदध्यारोपेणैव भवति तदेवाह अत्रेति। न हेतुरिति। अतोऽत्र प्रतीयमानपुरुषाध्यारोपः हेतुरिति भ्रमरस्यासेवने हेतुरेवेत्यर्थः अतस्तदंशे प्रतीयमानपुरुषस्य नाध्यारोप आवश्यक इति भावः। निमित्तमिति। हेतुरित्यर्थः अतस्तदंशे प्रतीयमानपुरुषाध्यारोपापेक्षेति भाव इत्यप्रस्तुतप्रशंसा ॥ ४४८ ॥ ११ ॥

अतिशयोक्तिं चतुर्था लक्षयति--निगीर्येत्यादि। परेण उपमानेन नि-

उपमानेनान्तर्निगीर्णस्योपमेयस्य यदध्यवसानं सैका, यथा—

कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम्।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥ ४४९ ॥

अत्र मुखादि कमलादिरूपतयाऽध्यवसितम्।

यच्च तदेवान्यत्वेनाध्यवसीयते साऽपरा यथा—

अण्णं लडहत्तणअं अण्ण विआ का विवत्तणच्छाआ।
सामा सामण्णापआवइणो रहच्चिअ ण होई ॥ ४५० ॥

---

गीर्य कवलीकृत्य पृथगनिर्दिश्य यत्प्रकृतस्य उपमेयस्य अध्यवसानं आहार्याभेदनिश्चयः सा एका प्रथमा यत्प्रस्तुतस्य बुद्धिसन्निहितस्य अन्यत्वमन्यत्वप्रकारेण वर्णनं सा द्वितीया यच्च यद्यर्थस्य यदिशब्देन चेच्छब्देन वा यदिशब्दार्थस्योक्तौ सत्यां कल्पनं असम्भाविनोऽर्थस्य कल्पनं सा तृतीया यश्च कार्यकारणयोः पौर्वापर्यस्य कारणानन्तरं कार्यमिति प्रसिद्धस्य पूर्वपरभावस्य विपर्ययो वैपरीत्यं सा चतुर्थी। अतिशयः अतिशयिता प्रसिद्धिमतिक्रान्ता लोकातीता उक्तिः अतिशयोक्तिः। एतेषां प्रभेदानामतिशयोक्तिरिति योगरूढं नामेत्यर्थः। प्रथमलक्षणं विवृण्वन् परेणेत्यस्यार्थमाह—उपमानेनेति। अन्तर्निगीर्णस्य अन्तर्गिलितस्येव स्ववाचकशब्देनानुपात्तस्य अध्यवसानं प्रकृततादात्म्यारोपः स च भेदप्रतिपत्त्यसहकृताहार्यनिश्चयरूपः। सैका निगीर्याध्यवसानरूपा प्रथमाऽतिशयोक्तिः।

उदाहरति—कमलमिति। प्रेयसीं दृष्ट्वा तत्सखीं प्रति नायकस्योक्तिः। अनम्भसि अनुदके देशे कमलं कान्तावक्त्ररूपं पद्मं तस्मिन्कमले च कुवलये नेत्रद्वयरूपं नीलोत्पलद्वयम् तानि त्रीण्यपि कनकलतिकायां कान्तातनुरूपायां सुवर्णलतिकायां सा च कनकलतिका सुकुमारा मृद्वी चासौ सुभगा सुन्दरा चेति उत्पातपरम्परा अद्भुतमाला केयमित्यर्थः। आर्या छन्दः। अत्र प्रकरणलभ्यानां नायिकावक्त्रादीनां कमलादितादात्म्येनाध्यवसानान्मुखादेरतिशयः प्रतीयत इति निगीर्याध्यवसानरूपा भेदेऽभेदाध्यवसायात्मिकाऽतिशयोक्तिरियम् तदेवाह—अत्रेति। अध्यवसितं निश्चितं कमल-कुवलय-कनकलतिकापदैर्मुखनेत्रतनूनां कमलत्वादिनाऽध्यवसानादतिशयोक्तिः ॥ ४४९ ॥

द्वितीयालक्षणं व्याकरोति—यच्चेति। तदेव प्रस्तुतमेव। अन्यत्वेनेति।

'यद्यर्थस्य' यदिशब्देन चेच्छब्देन वा उक्तौ यत्कल्पनम् (अर्थादसम्भविनोऽर्थस्य) सा तृतीया। यथा—

राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः।
तस्या मुखं तदा साम्यपराभवमवाप्नुयात् ॥ ४५१ ॥

कारणस्य शीघ्रकारितां वक्तुं कार्यस्य पूर्वमुक्तौ चतुर्थी यथा—

हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन।
चरमं रमणीवल्लभ ! लोचनविषयं त्वया भजता ॥ ४५२ ॥

---

तज्जातीयमेव वस्तु तज्जातीयभिन्नत्वेन वर्ण्यत इत्यर्थः। सा अपरेति। अभेदे भेदरूपाऽतिशयोक्तिः। उदाहरति—अण्णमिति।

अन्यं यत्सौकुमार्यमन्यैव च काऽपि वर्तनच्छाया।
श्यामा सामान्यप्रजापतेः रेखैव च न भवति ॥

इति संस्कृतम्। नायकं प्रति नायिकासख्या उक्तिः। अन्यदेव लोकप्रसिद्धसौकुमार्यभिन्नमेवेदं श्यामाविषयकं सौकुमार्यं सौन्दर्यं अन्यैव काप्यनिर्वचनीया वर्त्तनस्य शरीरस्य छाया कान्तिः। श्यामा शीतोष्णकाले उष्णशीता षोडशवार्षिकी इयं कान्ता सामान्यप्रजापतेः साधारणस्रष्टुः रेखा निर्मितिरेव न भवतीत्यर्थः। अन्यदेव लोकप्रसिद्धसौकुमार्याद्यभेदेऽपि भेदो वर्णितः। तथा चात्रान्यदेव सौकुमार्यमित्युक्त्याऽस्याः सौन्दर्ये सौन्दर्यान्तरादतिशयः प्रतीयते इत्यन्यत्ववर्णनरूपाऽभेदे भेदाध्यवसायात्मिकाऽतिशयोक्तिः ॥ ४५० ॥

तृतीयालक्षणं व्याकरोति—यद्यर्थस्येति। तृतीयेति। यद्यर्थातिशयोक्तिरित्यर्थः। तत्र यदि शब्देनोक्तौ यथा—

यदि स्यान्मण्डले सक्तमिन्दोरिन्दीवरद्वयम्।
तदोपमीयेतैतस्या वदनं लोललोचनम् ॥

इति। चेच्छब्देनोक्तावुदाहरति—राकायामिति। राकायां पूर्णिमायाममृतांशोश्चन्द्रस्य वपुः शरीरं मण्डलं अकलङ्कं कलङ्करहितं चेद्यदि भवेत्तदा तस्या नायिकाया मुखं कर्तृ साम्यं चन्द्रसादृश्यमेव पराभवस्तिरस्कारस्तमवाप्नुयात् निरुपमस्योपमानसंभव एव तिरस्कार इति भावः। अत्र चन्द्रेण सह मुखस्य साम्यं तर्कितमेव न तु वस्तुसत् तेन मुखस्यातिशयः प्रतीयते इति यद्यर्थातिशयोक्तिः ॥४५१॥

चतुर्थीलक्षणं व्याकुर्वन् तस्या अलङ्कारताबीजमाह—कारणस्येति। शीघ्रकारितां वक्तुमिति झटिति कार्यकारित्वं बोधयितुम् पूर्वं कार्यो-

(१५४) प्रतिवस्तूपमा तु सा ॥ १०१ ॥

सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः ।

साधारणो धर्मः उपमेयवाक्ये उपमानवाक्ये च कथितपदस्य दुष्टतयाऽभिहितत्वात् शब्दभेदेन यदुपादीयते सा वस्तुनो वाक्यार्थस्योपमानत्वात् प्रतिवस्तूपमा । यथा—

देवीभावं गमिता परिवारपदं कथं भजत्वेषा ।
न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम् ॥ ४५३ ॥

यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किन्ततः ।
लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता ॥ ४५४ ॥

इत्यादिका मालाप्रतिवस्तूपमा द्रष्टव्या एवमन्यत्राप्यनुसर्त्तव्यम् ॥

---

त्यत्युपयुक्तकालात्पूर्वं उक्तौ कथने चतुर्थी कार्यकारणयोः पौर्वापर्यविपर्ययरूपा चतुर्थी अतिशयोक्तिः । विपर्ययश्च द्विविधः कार्यस्य प्राथम्येन सहभावेन चेति तत्राद्यमुदाहरति-हृदयमिति । दामोदरगुप्तकृते कुट्टनीमताख्ये काव्ये पद्यमिदम् । हेरमणीवल्लभ ! कामिनीकान्त ! कुसुमचापबाणेन कामेन मालत्यास्तन्नामकनायिकाया हृदयमन्तःकरणं आदौ प्रथममधिष्ठितं आक्रान्तम् लोचनविषयं नेत्रगोचरतां भजता प्राप्नुवता त्वया चरमं पश्चादधिष्ठितमित्यर्थः । अत्र कारणस्य रमणीवल्लभाधिष्ठानस्य शीघ्रकारितां वक्तुं कार्यस्य कन्दर्पाधिष्ठानस्य प्रथममुक्तिरिति कार्यकारणयोः पौर्वापर्यविपर्ययरूपा चतुर्थी अतिशयोक्तिः । कार्य्यस्य सहभावेनेत्यस्योदाहरणम्-

सममेव समाक्रान्तं द्वयं द्विरदगामिना ।

इति रघुवंशे अत्र सिंहासनाक्रमणं कारणं महीभृन्मण्डलाक्रमणं कार्यमिति सममेव न तु पूर्वापरभावेनेति प्रतीतेः पौर्वापर्यविपर्ययरूपाऽतिशयोक्तिरित्यतिशयोक्तिः ॥ ४५२ ॥ १२ ॥

प्रतिवस्तूपमां लक्षयति-प्रतिवस्तूपमेति । एकस्य सामान्यस्य साधारणधर्मस्य वाक्यद्वये उपमानोपमेयवाक्ययोः यत्र यस्यामलंकृतौ द्विर्द्विवारं स्थितिः उपादानं अर्थाच्छब्दभेदेन कथितस्य पदस्य दुष्टत्वात् सा प्रतिवस्तूपमा, प्रतिवस्तु प्रतिवाक्यार्थमुपमा साधारणधर्मस्यामिति व्युत्पत्तेः । अत्र द्विरिति द्वये इति च पदे अनेकोपलक्षके मालानुरोधात् । तेन वाक्यार्थयोर्वाक्यार्थानां च उपमासम्पा-

(१५५) दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम् ॥ १०२ ॥

एतेषां साधारणधर्मादीनाम् दृष्टोऽन्तो निश्चयो यत्र स दृष्टान्तः।

त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम्

आलोके हि हिमांशोर्विकसति कुसुमं कुमुद्वत्याः ॥ ४५८ ॥

---

एकस्य एकस्यैव धर्मस्य विभिन्नशब्दोपात्तत्वं प्रतिवस्तूपमेति फलितम्। सामान्यपदार्थमाह—साधारणो धर्म इति। वाक्यद्वये इत्यस्यार्थमाह—उपमेयेति। अभिहितत्वात् सप्तमोल्लासे कथितत्वात्। सूत्रेऽनुक्तमपि शब्दभेदेनेति विशेषणमर्थवशलभ्यमित्याह—शब्दभेदेनेति। स्थितिपदार्थमाह—उपादीयत इति। प्रतिवस्तूपमापदस्य व्युत्पत्तिं दर्शयति—वस्तुत इति। उपमानत्वादिति एवं चोपमेयत्वमपि वाक्यार्थस्येति ध्वनितम्। सा च प्रतिवस्तूपमा द्विधा अमालारूपा मालारूपा चेति तत्राद्यामुदाहरति—देवीति। राजानं प्रति देवीसख्या उक्तिः। हे राजन् ! देवीभावं देवीत्वं गमिता कृताभिषेका एषा राज्ञी परिवारस्य साधारणकलत्रस्य पदं स्थानं शब्दं वा कथं भजतु अनौचित्यादिति भावः। न खलु दैवतरूपेण अङ्कितं चिह्नितं स्वर्णादिनिर्मितोत्कृष्टदेवताप्रतिमारूपं रत्नं श्रेष्ठं वस्तु परिभोगाय भूषणाद्यर्थमुपादानाय योग्यं भवतीत्यर्थः। अत्र कथं भजत्वित्यनेन परिवारपदभजनस्यानौचित्यं प्रत्याय्यते न खल्वित्यनेन च परिभोगस्येति एकस्यैवानौचित्यरूपसामान्यस्य शब्दभेदेन द्विवारमुपादानम् अत्र पूर्ववाक्यमुपमेयभूतम् उत्तरवाक्यमुपमानभूतम्। एवं च दैवतरूपाङ्कितरत्नस्य भोगयोग्यत्वं यथाऽनुचितं तथा देव्याः परिवारपदयोग्यत्वमनुचितमित्यौपम्यपर्यवसानमिति प्रतिवस्तूपमेयम् ॥ ४५३ ॥

मालारूपामुदाहरति—यदीति। सप्तमोल्लासे व्याख्यातमिदम्। अत्र स्वाभाविककार्यदर्शनं न विस्मयकरमिति स्वाभाविककार्यदर्शनस्य विस्मयाजनकत्वं साधारणो धर्मः शब्दभेदेन निर्दिष्टः। एवं चानलादेर्दाहकत्वादिकं यथा स्वाभाविकत्वान्नाश्चर्याय एवं सतामविषादिता स्वाभाविकीति नाश्चर्यायेत्यौपम्ये पर्यवसानमिति प्रतिवस्तूपमा। अत्र किमद्भुतं किन्ततः सदैव प्रकृतिरेवेति विभिन्नशब्दैरद्भुताभावरूपस्यैकस्य सामान्यधर्मस्य वाक्यचतुष्टयेऽप्युपादानान्मालात्वम् ॥

एवमन्यत्रेति। वैधर्म्यस्थलेऽपीत्यर्थः। यथा—

चकोर्य एव चतुराश्चन्द्रिकापानकर्मणि।

विनाऽवन्तीर्न निपुणाः सुदृशो रतनर्मणि ॥

एषः साधर्म्येण वैधर्म्येण तु —

तवाहवे साहसकर्मशर्मणः करं कृपाणान्तिकमानिनीषतः ।
भटाः परेषां विशरारुतामगुः दधत्यवाते स्थिरतां हि पांसवः॥४५६॥

---

इति पद्ये अवन्त्य एव सुदृशो रतिनर्माणि निपुणा इत्येवंरूपे वैधर्म्य-विपर्यये साधर्म्यपर्यवसानमिति प्रतिवस्तूपमा ॥ ४५४ ॥ १२ ॥

दृष्टान्तं लक्षयति-दृष्टान्त इति । अत्र पूर्वतो वाक्यद्वये इत्यनुवर्तते तथा च उपमेयवाक्ये उपमानवाक्ये च एतेषां उपमानोपमेयसाधारणधर्माणां सर्वेषां प्रतिबिम्बनं बिम्बप्रतिबिम्बभावः न त्वैकत्वं दृष्टान्तः-बिम्बप्रतिबिम्बभावापन्नसाधारणधर्मादिकं वाक्यार्थयोरार्थमौपम्यं दृष्टान्तालङ्कार इति फलितम् । एकस्यार्थस्य शब्दद्वयेनाभिधानं वस्तुप्रतिवस्तुभावः द्वयोरर्थयोर्द्विरुपादानं बिम्बप्रतिबिम्बभावः । एष च विशेषणयोर्विशेष्ययोश्च सादृश्यनिर्देशो भवति न त्वेकत्वस्य । स चायं दृष्टान्तः साधर्म्यवैधर्म्याभ्यां द्विधा तत्राद्यमुदाहरति-त्वयीति। नायिकासख्या नायकं प्रत्युक्तिः । मनोभवेन कामेन ज्वलितं तप्तं तस्या मनः त्वयि दृष्ट एव दृष्टमात्रे सति निर्वाति शाम्यति अत्र दृष्टांतमाह-आलोके हीति । हिमांशोरालोके दर्शने हि कुमुद्वत्याः कुमुदिन्याः कुसुमं विकसतीत्यर्थः। अत्र नृपचन्द्रयोः नायिकाकुमुद्वत्योः मनःकुसुमयोः मनोभवज्वलितसूर्य्यकिरणज्वलितयोः निर्वाणप्रकाशयोश्च बिम्बप्रतिबिम्बभावः इति दृष्टान्तालङ्कारः। कुमुद्वत्याः कुसुमस्य हिमांशुदर्शने विकास इव तस्या मनसस्त्वद्दर्शने उल्लास इति प्रतीयमानोपमायां मनःकुसुमयोर्बिम्बप्रतिबिम्बभावापन्नयोः साधारणधर्मत्वम् । एष दर्शितदृष्टान्तालङ्कारः साधर्म्येण समानधर्मसम्बंधेन वैधर्म्येण विरुद्धधर्मसम्बन्धेन । उदाहरति—तवेति । हे राजन् ! आहवे युद्धे साहसमात्मनिरपेक्षं यत्कर्म व्यापारस्तेन शर्म सुखं यस्य तादृशस्य करं पाणिं कृपाणान्तिकं खड्गसमीपं आनिनीषतः आनेतुमिच्छतः तव परेषां शत्रूणां भटाः योद्धारः विशरारुतां विशीर्णतां पलायमानतां अगुः प्रापुः ।तत्र दृष्टान्तमाह,पांसवो रजांसि हि निश्चयेन अवाते अनिलाभावे स्थिरतां दधतीत्यर्थः । अत्र वाते तु पांसवः स्थिरतां न दधतीत्येवंरूपे वैधर्म्यविपर्यये साधर्म्यपर्यवसानमिति दृष्टान्तालङ्कारत्वम् अत्र पांसुभटयोः पलायनास्थिरत्वयोर्बिम्बप्रतिबिम्बभाव इति दृष्टान्तः ॥ ४५६ ॥

(१५६) सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम्।
सैव क्रियासु बह्वीषु कारकस्येति दीपकम्॥ १०३॥

प्राकरणिकाप्राकरणिकानामर्थादुपमानोपमेयाना धर्मः क्रियादिः एक-वारमेव यदुपादीयते तत् एकस्थस्यैव समस्तवाक्यदीपनाद्दीपकम्, यथा—

किवणाणं धणं णाआणं फणमणी केशराई सीहाणं।
कुलवालिआणं त्थणआ कुतो छिप्पन्ति अमुआणम्॥ ४५७॥

---

दीपकं द्वेधा लक्षयति—सकृदिति। प्रकृतं प्राकरणिकमुपमेयं अप्र-कृतमप्राकरणिकमुपमानम् तदात्मनां तद्रूपाणां धर्मिणां धर्मस्य क्रि-यादिरूपस्य सकृद्वृत्तिः एकवारमेवोपादानं यत् तत् एकं दीपकम् ब-ह्वीषु क्रियासु सतीषु कारकस्य कर्त्रादिकारकमध्ये कस्याप्येकस्य सैव सकृद्वृत्तिरेव द्वितीयं दीपकमिति क्रियादिदीपकं कारकदी-पकं चेति द्विविधं दीपकम् एकस्य धर्मस्य एकवारं प्रस्तुताप्रस्तुतो-भयवृत्तित्वे आद्यं एकस्य कारकस्य एकवारमेवानेकासु क्रियासु स-म्बन्धे द्वितीयमिति भावः। दीपकपदयोगमाह—एकस्थस्यैवेति। सर्व-वाक्यदीपकत्वेन दीपसाम्याद्दीपकमित्यर्थः। प्रथमदीपकं द्विविधम् क्रियादीपकम् गुणदीपकं चेति तत्राद्यमुदाहरति—किवणाणमिति।

कृपणानां धनं नागानां फणमणिः केसराः सिंहानाम्।
कुलबालिकानां स्तना कुतः स्पृश्यन्तेऽमृतानाम्॥

इति संस्कृतम्। अमृतानां जीवतां कृपणानां लुब्धानां धनम् नागा-नां फणमणिः फणारत्नं सिंहानां केसराः स्कन्धलोमानि कुलाङ्गना-नां सतीनां स्तनाः कुतः स्पृश्यन्ते न कथंचित्स्प्रष्टुं शक्यन्त इत्यर्थः। अमृतानामित्यस्य सर्वत्रान्वयः कार्यः। अत्र वर्णनीयत्वेन प्रकृतानां कुलवधूस्तनानां तदुपमानत्वेनाप्रकृतानां कृपणधनादीनां च स्पर्शन-क्रियारूपसाधारणधर्मस्य सकृदुपादानमिति क्रियादीपकम्। गुण-दीपकस्योदाहरणम्—

श्यामलाः प्रावृषेण्याभिर्दिशो जीमूतपंक्तिभिः।
भुवश्च सुकुमाराभिर्नवशाद्वलराजिभिः॥

इति। अत्र श्यामलत्वं साधारणो धर्मः भुवश्चेति चकारेण पूर्ववा-क्यगतस्य श्यामला इति गुणवाचकपदस्य परामर्श इति गुणदीपकम्॥

कारिकाया उत्तरार्धं व्याचष्टे—कारकस्य चेति। तदुदाहरति—

कारकस्य च बह्वीषु क्रियासु सकृद्वृत्तिर्दीपकम् यथा—

स्विद्यति कूणति वेल्लति विचलति निमिषति विलोकयति तिर्यक् ।
अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने ॥ ४५८ ॥

(१५७) मालादीपकमाद्यं चेद्यथोत्तरगुणावहम् ।

पूर्वेण पूर्वेण वस्तुना उत्तरमुत्तरं चेदुपक्रियते तन्मालादीपकं, यथा—

संग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत्समासादितम् ।

---

स्विद्यतीति । नवः परिणयो विवाहो यस्याः सा नवोढा वधूर्नायिका शयने भर्तृपल्यंके स्विद्यति स्वेदं प्राप्नोति दयिते परिरम्भोद्यते सति कूणति सङ्कुचति अङ्गेषु सङ्कोचमालम्बते ततोऽप्यनिवर्तिनि वेल्लति वृत्तवर्तनं करोति विचलति परिवृत्य शेते निमिषति मृषा नेत्रे मुद्रयति तिर्यक् विलोकयति वक्रतया नेत्रत्रिभागेन मुखमवलोकयति अन्तर्नन्दति नवोढात्वेन बहिरानन्दाप्रकाशनात् अन्तरात्मन्येव हृष्यति अत एव चुम्बितुमिच्छति न तु चुम्बतीत्यर्थः । अत्रानेकासु क्रियासु एकस्य वधूरिति कर्तृकारकस्य शयने इत्यधिकरणकारकस्य वा सकृदुपादानमिति कारकदीपकम् अत्र सर्वक्रियाणां प्रकृतत्वमेव । अप्रकृतानामेव यथा—

दूरीकरोति कुमतिं विमलीकरोति
चेतश्चिरन्तनमघं चुलकीकरोति ।
भूतेषु किं च करुणां बहुलीकरोति ।
सङ्गः सतां किमु न मङ्गलमातनोति ॥

अत्र सर्वक्रियाणामप्रकृतत्वमेव । प्रकृताप्रकृतानां यथा—

वसु दातुं यशो दातुं विधातुमरिमर्दनम् ।
त्रातुं च मादृशान्राजन्नतीव निपुणो भवान् ॥

इत्यत्र वसुदानस्वत्राणरूपयोः प्रकृतयोः क्रिययोः अरिमर्दनयशोदानयोश्चाप्रकृतयोरेकस्य नृपरूपकारकस्यान्वयः ॥४५७॥४५८॥१४॥

मालादीपकं लक्षयति—मालादीपकेति । आद्यं पूर्वं पूर्वं वस्तु यथोत्तरम् उत्तरमुत्तरं वस्तु प्रति गुणावहं उपकारकं चेत्तदा मालादीपकमित्यर्थः । उदाहरति—सङ्ग्रामेति । सप्तमोल्लासे व्याख्यातमिदम् । अत्र कोदण्डेन अरिशिरः प्रापयता शरा उपक्रियन्ते शरैरपि भूमण्डलं प्रापयद्भिरिशिरः उपक्रियते शिरसापि सन्नायकं त्वां लम्भयता भूमं-

कोदंडेन शराः शरैररिशिरस्तेनापि भूमंडलं
तेन त्वं भवता च कीर्त्तिरतुला कीर्त्या च लोकत्रयम् ॥४५९॥

(१५८) नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता ॥१०४॥

नियतानां प्राकरणिकानामेव अप्राकरणिकानामेव वा, क्रमेणोदाहरणम्--

पाण्डुक्षामं वदनं हृदयं सरसं तवालसं च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि ! हृदन्तः ॥ ४६० ॥

कुमुदकमलनीलनीरजालिर्ललितविलासजुषोर्दृशोः पुरः का ।
अमृतममृतरश्मिरम्बुजन्म प्रतिहतमेकपदे तवाननस्य ॥ ४६१ ॥

---

डलं तेन च कीर्त्तिमासादयता नृपतिः तेनापि त्रैलोक्यं व्यापयता कीर्त्तिरिति पूर्वपूर्वेभ्यः परपरस्योपकारः एकस्या आसादनक्रियायाः सर्वत्र सम्बन्धाद्दीपकता । यथा मालायां पूर्वपूर्वग्रथितपुष्पाणामुत्तरोत्तरधारणादुपकारकत्वन्तथाऽत्रापि मालारूपतेति दीपकम् ॥ १० ॥

तुल्ययोगितां लक्षयति-नियतानामिति । नियतानां वर्णनीयत्वेन प्रकृतानामेव अन्योपमानत्वेन अप्रकृतानामेव वा धर्मः साधारणधर्मः गुणक्रियान्यतररूपः सकृदेकवारमेव यदुपादीयते सा धर्मस्य सकृदुपादानरूपा तुल्ययोगितेत्यर्थः । तुल्यश्चासौ योगः तुल्ययोगः एकधर्मान्वयः सोऽस्ति येषान्ते तुल्ययोगिनः तेषां भावस्तुल्ययोगितेति व्युत्पत्तिः । प्रकृताप्रकृतयोरुभयोरपि साधारणधर्मस्य सकृदुपादाने दीपकम् प्रकृतानामेव अप्रकृतानामेव वा साधारणधर्मस्य सकृदुपादाने तुल्ययोगितेत्यनयोर्भेदः ॥ १०४ ॥

आद्यामुदाहरति-पांड्विति । व्याख्यातमिदं सप्तमोल्लासे । अत्र विरहानुभावत्वेन प्रकृतानामेव पाण्डुतादीनां धर्मतया आवेदनक्रियारूपः साधारणो धर्मः सकृदुपात्त इति तुल्ययोगिता ॥ ४६० ॥

द्वितीयामुदाहरति-कुमुदेति । नायिकां प्रति नायकस्योक्तिः । हे कान्ते ! ललितविलासजुषोर्मनोहरकटाक्षादिचेष्टाभाजोस्तव दृशोः पुरोऽग्रे कुमुदानि श्वेतकमलानि कमलानि अर्थाद्रक्तकमलानि नीलनीरजानि नीलकमलानि च तेषामालिः पंक्तिः का कः पदार्थः न मनागपि शोभते अत्र प्रसादे कुमुदसाम्यं माने रक्तकमलसाम्यं प्रकृतदशायां नीलनीरजसाम्यमिति बोध्यम् । किञ्च तवाननस्य पुरः अमृतं पीयूषं अमृतरश्मिश्चन्द्रः अम्बुजन्म पद्मं च एकपदे युगपदेव प्रतिहतं निर्जि-

(१५९) उपमानाद्यदन्यस्य व्यतिरेकः स एव सः ।

अन्यस्योपमेयस्य व्यतिरेक आधिक्यम् ।

क्षीणः क्षीणोपि शशी भूयो भूयोऽभिवर्धते सत्यम्
विरम प्रसीद सुन्दरि ! यौवनमनिवर्ति यातं तु ॥ ४६२ ॥

---

तमित्यर्थः । अत्र पूर्वार्धे कामिनीनयनोपमानत्वेन अप्रकृतानामेव कुमुदादीनां धर्मतया कापदव्यङ्ग्योऽधिक्षेप उपात्तः । उत्तरार्धे आननोपमानत्वेनाप्राकृतानामेवामृतादीनां धर्मतया प्रतिहतत्वं चैको धर्म उपात्त इति उभयत्र तुल्ययोगितेयम् अधिक्षिप्तत्वेन कुमुदादीनां प्रतिहतत्वेन चामृतादीनां परस्परं साम्यप्रतीतावपि तावन्मात्रकृतो न चमत्कारः किन्त्वेकधर्मान्वयकृतोऽपि अत उपमया न निर्वाह इति तुल्ययोगिता ॥ ४६१ ॥ १६ ॥

व्यतिरेकं लक्षयति-उपमानादिति । उपमानात् उपमानापेक्षया अन्यस्योपमेयस्य यो व्यतिरेको गुणविशेषकृत उत्कर्षः स एव व्यतिरेक एव सः व्यतिरेकालङ्कारः । यत्त्वलङ्कारसर्वस्वे उपमानादुपमेयस्याधिक्ये विपर्यये व्यतिरेकः तत्र विपर्यये क्षीणः क्षीण इत्याद्युदाहरणमित्युक्तं तन्मतं दूषयितुमुपन्यस्यति-क्षीणः क्षीण इति । सत्यं निश्चयेन क्षीणः क्षीणोऽपि अत्यन्ताकृशोऽपि शशी चन्द्रः भूयो भूयः पुनः पुनरभिवर्धते यातं गतं यौवनन्तु अनिवर्त्ति अपरावृत्तिशीलम् । अतो हेतोः हे सुन्दरि ! विरम मानादिति शेषः मानं मुञ्चेति भावः प्रसीद प्रसन्ना भवेत्यर्थः । अत्रोपमानभूतस्य शशिनः क्षैण्येऽपि पुनर्वृद्धिरित्युत्कर्षः उपमेयभूतस्य यौवनस्य तु न पुनरावर्त्तनमित्यपकर्ष इत्युपमेयापेक्षयोपमानस्याधिक्यरूपो व्यतिरेकालङ्कार इति तन्मतं तदेवाह इत्यादाविति । उपमानस्य शशिनः उपमेयाद्यौवनात् आधिक्यमुत्कर्षः केनचित् अलंकारसर्वस्वकारेण रूय्यकेण । उक्तमिति । तथा चैतन्मते उपमानादुपमेयस्य न्यूनतायामपि व्यतिरेकालङ्कार इति बोध्यम् । दूषयति – तदयुक्तमिति । अनुचितमित्यर्थः तत्र हेतुमाह अत्रेति । अत्र श्लोके यौवनगतस्यास्थैर्यस्य क्षयस्याधिक्यं हि यतो विवक्षितं वक्तुरिच्छाविषयीभूतमित्यर्थः । अयं भावः नह्यत्र चन्द्रयौवनयोः सादृश्यं किन्तु तत्क्षययोः तत्र चन्द्रक्षयस्य वृद्धिबाध्यतया न्यूनत्वं यौवनक्षयस्य त्वबाध्यतयाऽऽधिक्यम् मानप्रसादनानुगुणतया प्रकृतवाक्यार्थानुगुणत्वादिति चन्द्रो हि पुनः पुनरागमनेन लोके सुलभः अतो न तादृशमाहात्म्यशाली इदं पुनर्यौवनमपुनरागमनेनातिदुर्लभ-

इत्यादावुपमानस्योपमेयादाधिक्यमिति केनाचिदुक्तं तदयुक्तं अत्र यौवनगतास्थैर्याधिक्यं हि विवक्षितम् ।

(१६०) हेत्वोरुक्तावनुक्तीनां त्रये साम्ये निवेदिते ॥ १०५ ॥
शब्दार्थाभ्यामथाक्षिप्ते श्लिष्टे तद्वत्त्रिरष्ट तत् ।

व्यतिरेकस्य हेतुः उपमेयगतमुत्कर्षनिमित्तम् उपमानगतमपकर्ष-कारणम् तयोर्द्वयोरुक्तिः एकतरस्य द्वयोर्वा अनुक्तिरित्यनुक्तित्रयम् । एतद्भेदचतुष्टयमुपमानोपमेयभावे शब्देन प्रतिपादिते आर्थेन च क्रमेणोक्ताश्चत्वार एव भेदाः आक्षिप्ते चौपम्ये तावन्त एव, एवं द्वादश एते श्लेषेऽपि भवन्तीति चतुर्विंशतिर्भेदाः । क्रमेणोदाहरणम्—

असिमात्रसहायस्य प्रभूतारिपराभवे ।
अन्यतुच्छजनस्येव न स्मयोऽस्य महाधृतेः ॥ ४६३ ॥

---

मिति । मानादिभिरन्तरायैर्विदग्धया भवत्या मुधा गमयितुं न सांप्रतमिति उपमानस्योत्कर्षे व्यतिरेकालङ्कार इति रिक्तं वच इति दिक् ।४६२।

व्यतिरेकं चतुर्विंशतिधा विभजते–हेत्वोरिति । व्यतिरेकस्य द्वौ हेतू उपमेयगतमुत्कर्षनिमित्तम् उपमानगतमपकर्षनिमित्तं च तयोरुक्तौ उपदाने सति एको भेदः । उत्कर्षनिमित्तमात्रस्य अपकर्षनिमित्तमात्रस्य वा एतयोर्द्वयोर्वा अनुक्तिरित्यनुक्तीनां त्रये सति त्रयो भेदाः । एते चत्वारः प्रत्येकं त्रिविधाः साम्ये साधर्म्ये शब्देन इवादिशब्देन निवेदिते प्रतिपादिते सति आर्थेन शब्दसामर्थ्येन निवेदिते सति साम्ये आक्षिप्ते व्यंजिते सति चेति इवादेः प्रयोगे शब्देन साम्यनिवेदनम् तुल्यादेश्च प्रयोगे आर्थेन जयत्यादेश्च प्रयोगे आक्षेपेण एवं द्वादश भेदाः ते च प्रत्येकमश्लिष्टे शब्दे सति श्लिष्टे शब्दे च सति भवन्तीति तद्वत् पुनर्द्वादश भेदाः तत् तस्मात् त्रिरष्टचतुर्विंशतिर्भेदा इत्यर्थः एतदेव व्याकरोति व्यतिरेकस्येत्यादिना अन्यत्सर्वं सुगमम् ॥

तत्राश्लिष्टभेदेषु हेत्वोरुक्तौ शाब्दे औपम्ये व्यतिरेकमुदाहरति–असीति । महाधृतेः शौर्यातिशयेनाधिकधैर्यस्य असिरेवासिमात्रं सहायो यस्य तादृशस्यास्य वीरस्य राज्ञः प्रभूताः प्रबला बहवो वा ये अरयस्तेषां पराभवे पराजये सति अन्यो यस्तुच्छजनो हीनगुणजनस्तस्येव स्मयो दर्पः गर्वो नेत्यर्थः । अत्युत्कृष्टजयलाभेऽपि गर्वो न जायत इति भावः । अत्र श्लेषाभावं राजा उपमेयः अन्यजन उपमानम् अरिपरा-

अत्रैव तुच्छेति महाधृतेरित्यनयोः पर्यायेण युगपद्वाऽनुपादानेऽन्यत् भेदत्रयम् एवमन्येष्वपि द्रष्टव्यम् अत्रेवशब्दस्य सद्भावाच्छाब्दमौपम्यम् ।

> असिमात्रसहायोऽपि प्रभूतारिपराभवे ।
> नैवान्यतुच्छजनवत्सगर्वोऽयं महाधृतिः ॥ ४६४ ॥

अत्र तुल्यार्थे वतिरित्यार्थमौपम्यम् ।

> इयं सुनयना दासीकृततामरसश्रिया ।
> आननेनाकलङ्केन जयतीन्दुं कलङ्किनम् ॥ ४६५ ॥

---

भवः समानो धर्मः उपमेये महाधृतित्वं उपमाने तुच्छत्वं चोत्कर्षापकर्षहेतू उपात्तौ इवशब्दसत्त्वाच्छाब्दमौपम्यमिति प्रथमो व्यतिरेकः। उदाहरणगौरवेण ग्रन्थगौरवमाशङ्कमानोऽत्रैव श्लोकेऽनुक्तित्रयनिबन्धनं व्यतिरेकं हेतुवाचकपदावापोद्धापाभ्यां कथयति—अत्रैवेति । तुच्छत्वमात्रस्य महाधृतित्वमात्रस्य वा द्वयोरपि वा क्रमेणानुपादाने हेत्वनुपादानत्रयेऽपि शाब्दौपम्यभेदत्रयं द्रष्टव्यम्। उत्तरत्राप्येषा रीतिरनुसरणीयेत्याह एवमन्येष्वपीति । एवं पर्यायेण युगपद्वा हेत्वनुपादाने अन्येष्वपि वक्ष्यमाणोदाहरणेष्वपि भेदत्रयं द्रष्टव्यम् चतुर्ष्वपि भेदेषु साम्यस्य शाब्दत्वं प्रतिपादयति अत्रैवेति । सद्भावाद्विद्यमानत्वात् शाब्दं श्रुतिमात्रगम्यम्। अश्लिष्टभेदेषु हेत्वोरुक्तौ आर्थे साम्ये व्यतिरेकमुदाहरति-असिमात्रेति । अत्रापि श्लेषासत्त्वम् राजा उपमेयः अन्यजन उपमानं महाधृतित्वं तुच्छत्वं चोत्कर्षापकर्षहेतू उपात्तौ । तुल्यार्थवतेः सत्त्वेन नार्थं साम्यम् अत्रापि उत्कर्षापकर्षहेत्वोः पर्यायेण युगपद्वाऽनुपादाने भेदत्रयं बोध्यम्। अश्लिष्टभेदेषु हेत्वोरुक्तौ आक्षिप्ते साम्ये व्यतिरेकमुदाहरति—इयमिति। इयमनुभूयमानोत्कर्षा सुनयना दासीकृता निर्जिता तामरसस्य पद्मस्य श्रीः शोभा येन तादृशेन अकलङ्केन निर्दोषेण आननेन कलङ्किनमिन्दुं जयतीत्यर्थः। अत्रापि श्लेषासत्त्वम् आननमुपमेयम् इन्दुरुपमानं अकलंकित्वकलंकित्वे उत्कर्षापकर्षहेतू उपात्तौ इवादीनां पदानामभावेऽपि जयतिपदेनाक्षिप्तं साम्यम् अत्रैव पूर्ववत् उत्कर्षापकर्षहेत्वोः पर्यायेण युगपद्वाऽनुपादाने भेदत्रयम् तथा हि 'आननेन मनोज्ञेन जयतीन्दुं कलंकिनमिति' पाठे उपमेयगतोत्कर्षहेतोरनुक्तिः, 'आननेनाकलंकेन जयत्यमृतदीधितिमिति' पाठे उपमानगतापकर्षहेतोरनुक्तिः, 'आननेन मनोज्ञेन जयत्यमृतदीधितिमिति' पाठे द्वयोरपि हेत्वोरनुक्तिरिति ॥ ४६२-४६५ ॥

अत्रेवादितुल्यादिपदविरहेण आक्षिप्तैवोपमा।

जितेन्द्रियतया सम्यग्विद्यावृद्धनिषेविणः।
अतिगाढगुणस्यास्य नाब्जवद्भङ्गुरा गुणाः॥ ४६६॥

अत्रेवार्थे वतिः गुणशब्दः श्लिष्टः शाब्दमौपम्यम्।

अखण्डमण्डलः श्रीमान् पश्यैष पृथिवीपतिः।
न निशाकरवज्जातु कलावैकल्यमागतः॥ ४६७॥

अत्र तुल्यार्थे वतिः कलाशब्दः श्लिष्टः।

---

श्लिष्टभेदेषु हेत्वोरुक्तौ शाब्दे साम्ये व्यतिरेकमुदाहरति–जितेन्द्रियेति। जितमिन्द्रियं मनो येन तस्य भावस्तत्ता तया सम्यक् विद्यावृद्धान् पण्डितान् निषेवते तच्छीलस्य अतिगाढो विरोधिसहस्रैरप्यनुच्छेद्यः गुणो धैर्यादिर्यस्य तादृशस्य अस्य राज्ञः गुणाः पांडित्यादयस्तन्तवश्च अब्जवत् कमलस्येव भंगुरा नश्वरा न किन्तु दृढा इत्यर्थः। अत्र श्लिष्टो गुणशब्दः तदर्थस्यातिगाढत्वभंगुरत्वे उत्कर्षापकर्षहेतू उपात्तौ इवार्थे वतेः सत्त्वेन शाब्दं साम्यम्। अत्रापि पूर्ववत् उत्कर्षापकर्षहेत्वोः पर्यायेण युगपद्वाऽनुपादाने भेदत्रयम् तथाहि 'सत्कर्मनिरतस्यास्य नाब्जवद्भंगुरा गुणाः' इति पाठे उपमेयगतोत्कर्षहेतोरनुक्तिः। 'अतिगाढगुणस्यास्य न तामरसवत्गुणा' इति पाठे उपमानगतापकर्षहेतोरनुक्तिः। 'सत्कर्मनिरतस्यास्य न तामरसवद्गुणा' इति पाठे द्वयोरपि हेत्वोरनुक्तिः॥

श्लिष्टभेदेषु हेत्वोरुक्तौ आर्थे साम्ये व्यतिरेकमुदाहरति–अखण्डेति। अखण्डं समृद्धं पूर्णं च मण्डलं राजचक्रं बिम्बं च यस्य सः श्रीः सम्पत्तिः शोभा च अस्यास्तीति श्रीमान् एषः पृथिवीपतिः राजा जातु कदाचिदपि निशाकरेण तुल्यं निशाकरवत् कलानां चतुःषष्टिसंख्याकानां चित्रादिकौशलानां षोडशभागानां च वैकल्यं विकलत्वं नाशं नागतः न प्राप्त इति पश्येत्यर्थः। अत्र कलाशब्दः श्लिष्टः पृथिवीपतिरुपमेयः निशाकरः उपमानं अखण्डमण्डलत्व–कलावैकल्ये उत्कर्षापकर्षहेतू उपात्तौ तुल्यार्थवतेः सत्त्वेन आर्थं साम्यम् अत्रापि पूर्ववत् उत्कर्षापकर्षहेत्वोः पर्यायेण युगपद्वाऽनुपादाने भेदत्रयम् तथा हि 'बहुलारिगतोऽप्येष श्रीमानुद्धतविक्रम' इति पाठे उपमेयगतोत्कर्षहेतोरनुक्तिः। 'न निशाकरवज्जातु दृश्यतां वसुधाधिप' इतिपाठे उपमानगतापकर्षहेतोरनुक्तिः। एवं पाठे अखण्डमण्डल-

मालाप्रतिवस्तूपमावत् मालाव्यतिरेकोऽपि सम्भवति तस्यापि भेदा एवमूह्याः दिङ्मात्रमुदाह्रियते यथा--

हरवन्न विषमदृष्टिर्हरिवन्न विभो विधूतविततवृषः ।
रविवन्न चातिदुःसहकरतापितभूः कदाचिदसि ॥ ४६८ ॥

अत्र तुल्यार्थे वतिः विषमादयश्च शब्दाः श्लिष्टाः ।

नित्योदितप्रतापेन त्रियामामीलितप्रभः ।
भास्वताऽनेन भूपेन भास्वानेष विनिर्जितः ॥ ४६९ ॥

अत्र ह्याक्षिप्तैवोपमा भास्वतेति श्लिष्टः ।

---

शब्दः श्लिष्टः । 'बहुलारिगतोऽप्येष श्रीमानुद्धतविक्रमः । न निशाकरवज्जातु दृश्यतां वसुधाधिपः ॥ इतिपाठे अखण्डमण्डलत्व-कलावैकल्ययोर्द्वयोरपि हेत्वोरनुक्तिरिति बोध्यम् ॥ ४६६ ॥ ४६७ ॥

मालाव्यतिरेकमाह-मालेति । एवमूह्या इति । ते चोदाहरणे स्फुटीभविष्यन्ति ॥ श्लिष्टभेदेषु आर्थे साम्ये मालारूपं व्यतिरेकमुदाहरति-हरवदिति । हे विभो ! राजन् ! त्वं कदाचिदपि हरेण तुल्यं विषमदृष्टिः त्रिलोचनः असमदृष्टिश्च नासि किन्तु समदृष्टिरेव हरिणा तुल्यं श्रीकृष्णवत् विधूतः क्षिप्तो विततो महान् वृषो वृषासुरो धर्मश्च येन एवं नासि किन्तु सदा धर्मशील एव रविणा तुल्यं अतिदुःसहा ये कराः किरणा राजग्राह्यभागाश्च तैस्तापिता दाहं प्रापिता उद्वेजिता च भूर्भूमिः भूमिस्थजनश्च येन एवं नासीत्यर्थः । अत्र राजा उपमेयः हरादिरुपमानं विषमादयः शब्दाः श्लिष्टाः विषमदृष्टित्वमपकर्षहेतुरुपात्तः समदृष्टित्वमुत्कर्षहेतुर्नोक्तः तुल्यार्थवतेः सत्त्वेनार्थं साम्यम् एकस्यैवोपमेयस्य बहूपमानापेक्षया आधिक्यवर्णनान्मालारूपता ॥४६८॥

श्लिष्टभेदेषु हेत्वोरुक्तो आक्षिप्ते साम्ये व्यतिरेकमुदाहरति-नित्योदितेति । नित्योदितो निरन्तरमुदितः प्रतापः पराक्रमः प्रकृष्टतापश्च यस्य तादृशेन भास्वता कान्तिमता रविणा च अनेन भूपेन त्रियामा रात्रिस्तस्यां मीलिता गता प्रभा यस्य तादृक् एषः गगनस्थो भास्वान् विनिर्जित इत्यर्थः । अत्र भास्वतेति प्रतापेति च श्लिष्टम् भूप उपमेयः सूर्य उपमानं नित्योदितत्वं रात्रौ गतप्रभत्वं चोत्कर्षापकर्षहेतू उपात्तौ इवादिशब्दाभावेऽपि विनिर्जितपदेनाक्षिप्तं साम्यम् अत्रैव पूर्ववत् उत्कर्षापकर्षहेत्वोः पर्यायेण युगपद्वाऽनुपादाने भेदत्रयम् तथा हि--'समरासक्तमनसा त्रियामामीलितप्रभ ।' इति पाठे उपमेयगतोत्कर्ष-

यथा वा—

स्वच्छात्मतागुणसमुल्लसितेन्दुबिम्बं बिम्बप्रभाधरमकृत्रिमहृद्यगन्धम् ।
यूनामतीव पिबतां रजनीषु यत्र तृष्णां जहार मधु नाननमङ्गनानाम् ४७०

अत्रेवादीनां तुल्यादीनां च पदानामभावेऽपि श्लिष्टविशेषणैराक्षिप्तैवोपमा प्रतीयते एवञ्जातीयकाः श्लिष्टोक्तियोग्यस्य पदस्य पृथगुपादानेऽन्येपि भेदाः सम्भवन्ति तेऽप्यनयैव दिशा द्रष्टव्याः ।

(१६१) निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया ॥१०६॥
वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः ।

---

त्कर्षहेतोरनुक्तिः । 'नित्योदितप्रतापेन पंकलिनन्दन' 'इति पाठे उपमानगतापकर्षहेतोरनुक्तिः' 'समरासक्तमनसा पंकजावलिनन्दन' इतिपाठे द्वयोरपि हेत्वोरनुक्तिः ॥

निर्जितजयत्यादिशब्दाभावेऽपि श्लिष्टविशेषणेनौपम्याक्षेपाद्यमपि भेदः सम्भवतीत्युदाहरति—स्वच्छात्मतेति । यत्र वसन्ते रजनीषु रात्रिषु अतीव अत्यन्तं पिबतां पानकर्तॄणां चुम्बतां च यूनां तृष्णां पानेच्छां मधुपानेच्छां अधरपानेच्छां च मधु मद्यं कर्तृ जहार अङ्गनानामाननं तु न जहार अधरपाने तृष्णा स्थितैवेति भावः । मध्वाननयोः श्लिष्टविशेषणान्याह—स्वच्छात्मतेति । स्वच्छात्मता निर्म्मलस्वरूपत्वमेव गुणस्तेन समुल्लसितं प्रतिबिम्बितं इन्दुबिम्बं यत्र तादृशम् बिम्बस्य फलविशेषस्य या प्रभा कान्तिः तस्याः धरति बिभर्तीति धरं धारकं जीर्णमधुनो रक्तत्वात् आननपक्षे बिम्बफलप्रभोऽधरो दशनवासो यत्र तादृशम् अकृत्रिमो गन्धान्तरयोगं विना मुखवासनादिकं विना च हृद्यो हृदयंगमो गन्धो यस्य तथाविधमित्यर्थः । अत्राङ्गनानामाननं मधुसदृशं हृद्यगन्धादिमत्त्वादित्येवं श्लिष्टविशेषणैरौपम्याक्षेपेऽपि मधुतृष्णां जहार नाननमित्यतो वैलक्षण्योद्व्यतिरेकः । अत्र सर्वलोकलभ्यत्वपुण्यैकलभ्यत्वरूपौ तृष्णाहरणाहरणरूपोत्कर्षापकर्षहेतू नोक्तौ निर्जितजयत्यादिपदाभावेऽपि श्लिष्टविशेषणमाहात्म्यान्मधुमुखयोरौपम्यं प्रतीयते तदाह-अत्रेवेति । पृथगिति । स्वातन्त्र्येणेत्यर्थः उपमानविशेषणतया उपमेयविशेषणतया चेति । यथाऽमृतममृतं कः सन्देह इत्यादि सप्तमोल्लासे तत्रोपमानभूतेष्वमृतादिषु उपमेयेऽधरे चातिमधुरत्वं पृथगुपात्तम् । इति व्यतिरेकः ॥ ४७० ॥ १७ ॥

आक्षेपमलंकारं लक्षयति—निषेध इति । वक्तुमिष्टस्य प्राकरणिकत्वात् वचनार्हस्य अवचनार्हस्य वा यो निषेधः अभिधाननिषेधः स

विवक्षितस्य प्राकरणिकत्वादनुपसर्जनीकार्यस्य अशक्यवक्तव्यत्व-मतिप्रसिद्धत्वं वा विशेषं वक्तुं निषेधो निषेध इव यः स वक्ष्यमाण-विषय उक्तविषयश्चेति द्विधा आक्षेपः । क्रमेणोदाहरणम्—

ए एहि किंपि कीएवि कएण णिक्किव भणामि अलमहवा ।
अविआरिअकज्जारम्भआरिणी मरउण भणिस्सम् ॥ ४७१ ॥

ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः
कर्पूरं कदली मृणालवलयान्यम्भोजिनीपल्लवाः ।

---

आक्षेपः । निषेधो निषेध इवेत्यर्थः निषेधाभास इति यावत् शब्दगत्या निषेधेऽपि अर्थगत्या विधेरेव प्रतिपत्तेः । वक्तुमिष्टस्य प्रकृतत्वादेवा-भिधातुं पतितस्य क्रियमाणो निषेधो बाधितः सन् आभासत्वे पर्य-वस्यन् विधेराक्षेपक इति भावः । निषेधप्रयोजनमाह—विशेषेति । वक्ष्य-माणविषयेऽशक्यवक्तव्यत्वं उक्तविषयेऽतिप्रसिद्धत्वं चेति विशेषस्त-स्याभिधित्सया बोधनेच्छयेत्यर्थः । विभजते—वक्ष्यमाणेति । वक्ष्यमाण उक्तश्च तौ विषयौ यस्य निषेधस्य तादृशः । तथासति स आक्षेपो द्विधा मत इति सूत्रं व्याकरोति—विवक्षितस्येति । तस्याप्यर्थमाह—अनुपेति । अनुपेक्षणीयस्येत्यर्थः । विशेषाभिधित्सयेति व्याचष्टे—अशक्ये-त्यादि । तत्र वक्ष्यमाणविषयं निषेधमुदाहरति—एएहीति ।

एएहि किमपि कस्या अपि कृते निष्कृप ! भणामि अलमथ वा ।
अविचारितकार्यारम्भकारिणी म्रियतां न भणिष्यामि ॥

इति संस्कृतम् । नायकं प्रति नायिकासख्युक्तिः । ए अरे ! निष्कृप ! त्वं एहि आगच्छ कस्या अपि कृते अर्थे किमपि तत्पीडातिशयरूपं भणामि वदामि अलमथवेति पूर्वाक्षेपे अलं न भणिष्यामीत्यर्थः अवि-चारितेत्यादि तु त्वत्प्रेमगः स्थैर्यास्थैर्ये अविचार्यैव प्रवृत्ता इत्यर्थकं अलमित्यनेनैव निषेधलाभे न भणिष्यामीति पुनः कथनं खेदातिशय-द्योतकम् । अत्र विरहजनितो नायिकासन्तापातिशयोऽवश्यं वक्तुमिष्टः न चासौ विशिष्य वक्तुं शक्य इति व्यंजयितुं निषिद्ध इत्याक्षेपा-लङ्कारः ॥ ४७१ ॥

उक्तविषयं निषेधमुदाहरति—ज्योत्स्नेति । नायकं प्रति दूत्युक्तिः । ज्योत्स्ना चन्द्रिका मौक्तिकदाम मुक्ताहारः चन्दनरसो मलयजद्रवः शीतांशुकान्तद्रवः चन्द्रकान्तमणिजलम् कर्पूरं घनसारः कदली रम्भा

अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिंगोत्कर-
व्यापाराय भवन्ति हन्त किमनेनोक्तेन न ब्रूमहे ॥ ४७२ ॥

(१६२) क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना ॥१०७॥

हेतुरूपक्रियाया निषेधेऽपि तत्फलप्रकाशनं विभावना यथा—

कुसुमितलताभिरहताऽप्यधत्तरुजमलिकुलैरदष्टाऽपि ।
परिवर्त्तते स्म नलिनीलहरीभिरलोलिताऽप्यघूर्णत सा ॥ ४७३ ॥

(१६३) विशेषोक्तिरखंडेषु कारणेषु फलावचः ।

---

मृणालस्य बिसस्य वलयानि कङ्कणानि अम्भाजिनीपल्लवाः कमलिनीकिसलयानि च एतानि कर्तृणि अन्तर्मानसं मानसमध्ये प्रभवता प्रकर्षेण स्थितवता दाहकारणसमर्थेन वा त्वया करणभूतेन तस्या नायिकायाः स्फुलिंगोत्करस्य अग्निकणसमूहस्य यो व्यापारो दाहोत्पादनं तस्मै तदर्थं भवन्ति हन्तेति विषादे आः इति कोपेऽव्ययम् अनेनोक्तेन किं न ब्रूमहे अतिप्रसिद्धत्वात् । अत्र वियोगिनीनां ज्योत्स्नादि स्फुलिङ्गायते इत्यत्रातिप्रसिद्धत्वं विशेषं व्यञ्जयितुं ज्योत्स्नादीत्युक्त्वा तत्कथनं प्रतिषिद्धमित्याक्षेपालङ्कारः ॥ ४७२ ॥ १८ ॥

विभावनां लक्षयति—क्रियाया इति । क्रियतेऽनयेति व्युत्पत्त्या क्रियाशब्दः प्रसिद्धकारणपरः तथा च क्रियायाः प्रसिद्धकारणस्य निषेधेऽपि तत्कार्यरूपफलस्य व्यक्तिः प्रकाशनं विभावना विभावयति कारणान्तरं कल्पयतीति विभावना प्रसिद्धकारणाभावेऽपि कार्योत्पत्तिर्हि कारणान्तरं कल्पयति । वैयाकरणाः क्रियाया एव हेतुतां स्वीकुर्वन्ति तन्मतेन व्याकरोति—हेतुरूपेति । तत्फलेति । तस्या हेतुरूपक्रियायोः यत्फलं कार्यं तस्य प्रकाशनं कथनमित्यर्थः ॥ १०७ ॥

विभावनामुदाहरति—कुसुमितेति । नायिकाया विरहावस्थावर्णनमिदम् सा नायिका कुसुमानि संजातानि यासां ताः कुसुमितास्ताभिर्लताभिः अहतापि अताडितापि रुजं पीडां अधत्त विरहवशाद्धृतवती अलिकुलैर्भ्रमरसमूहैः अदष्टापि परिवर्त्ततेस्म परावृत्य वर्ततेस्म नलिनीयुक्ताभिर्लहरीभिः अलोलितापि अचालितापि अघूर्णत भ्रमिमवापेत्यर्थः । अत्र लताहननं पीडाहेतुः भ्रमरदंशः परिवर्त्तनहेतुः तरङ्गसम्बन्धो घूर्णनहेतुः तेषामभावेऽपि तत्कार्यस्य पीडादिरूपस्य प्रकाशनमिति विभावना विरहातिशयरूपस्याप्रसिद्धस्य हेतोर्विभावनात्१९

विशेषोक्तिं लक्षयति—विशेषोक्तिरिति । अखण्डेषु मिलितेषु कारणेषु

मिलितेष्वपि कारणेषु कार्यस्याकथनं विशेषोक्तिः । अनुक्तनिमित्ता उक्तनिमित्ता अचिन्त्यनिमित्ता च । क्रमेणोदाहरणम्—

निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपदं पराप्ते ।
श्लथीकृताश्लेषरसे भुजंगे चचाल नालिङ्गनतोऽङ्गना सा ॥४७४॥

कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने ।
नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे ॥ ४७५ ॥

स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरताऽपि तनुं यस्य शंभुना न बलं हृतम् ॥ ४७६ ॥

---

प्रसिद्धकारणेषूक्तेषु सत्सु फलावचः कार्याभाववचनं विशेषोक्तिः । कार्यस्याकथनं निमित्तमपेक्षते तथा च निमित्तस्य त्रैविध्यात्त्रिधा विशेषोक्तिरित्याह—अनुक्तेति । प्रकरणादिना ज्ञातस्य निमित्तस्याकथनेऽनुक्तनिमित्ता निमित्तस्य कथने उक्तनिमित्ता दुरधिगम्यस्य तस्याकथनेऽचिन्त्यनिमित्ता चेत्यर्थः । तत्राद्यमुदाहरति—निद्रेति । निद्राया निवृत्तौ सत्यामपि द्युरत्ने सूर्ये उदिते सत्यपि सखीजने द्वारस्थानं पराप्ते प्राप्ते सत्यपि भुजङ्गे उपपतौ श्लथीकृतः शिथिलीकृतः आश्लेषरसः आलिङ्गनरसो येन तादृशेऽपि सा प्रसिद्धा अङ्गना आलिङ्गनतः आलिङ्गनान्न चचालेत्यर्थः । अत्र निद्रानिवृत्तिसूर्योदयादिरूपकारणसत्त्वेऽपि आलिङ्गनपरित्यागरूपकार्याभावोक्तिरिति विशेषोक्तिः । सा च निमित्तस्यानुरागातिशयस्यानुक्तेरनुक्तनिमित्ता ॥ ४७४ ॥

उक्तनिमित्तामुदाहरति—कर्पूर इति । यः कामः कर्पूर इव दग्धोऽपि जने जने शक्तिमान । शक्तिश्च घ्राणस्य मनसश्चाकर्षकता अवार्यवीर्याय अकुंठितशक्तये तस्मै मकरकेतवे नमोऽस्त्वित्यर्थः । अत्र शरीरदाहः शक्तिध्वंसे कारणं सत्यपि तस्मिन्कारणे शक्तिध्वंसरूपकार्याभावकथनमिति विशेषोक्तिः । सा च निमित्तस्यावार्यवीर्यत्वस्य कथनादुक्तनिमित्ता ॥ ४७५ ॥

अचिन्त्यनिमित्तां तामुदाहरति—स एक इति । एकोऽसहायः स कुसुमायुधः त्रीणि जगन्ति भुवनानि जयति यस्य कामस्य तनुं हरता दहता शंभुना बलं सामर्थ्यं न हृतमित्यर्थः । अत्र तनुहरणं बलहरणे कारणम् तस्मिन्सत्यपि बलहरणरूपकार्यस्याभावकथनमिति विशेषोक्तिः । सा च तनुं हरता हरेण कथं बलं न हृतमित्यत्र हेतुर्विशिष्य वक्तुं न शक्यते शास्त्रैकगम्यत्वादित्यचिन्त्यनिमित्तेयम् इति विशेषोक्तिः ॥ ४७६ ॥ २० ॥

(१६४) यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः ॥ १०८ ॥

एकस्त्रिधा वससि चेतसि चित्रमत्र
देव ! द्विषां च विदुषां च मृगीदृशां च ।
तापं च सम्मदरसं च रतिं च पुष्णन्
शौर्योष्मणा च विनयेन च लीलया च ॥४७७॥

(१६५) सामान्यं वा विशेषो वा तदन्येन समर्थ्यते ।
यत्तु सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा ॥१०९॥

साधर्म्येण वैधर्म्येण वा सामान्यं विशेषेण यत् समर्थ्यते विशेषो वा सामान्येन सोऽर्थान्तरन्यासः । क्रमेणोदाहरणम्—

निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम् ।
पश्यति पित्तोपहतः शशिशुभ्रं शंखमपि पीतम् ॥४७८॥

---

यथासंख्यमलंकारं लक्षयति—यथासंख्यमिति । क्रमिकाणां क्रमवतां पदार्थानां क्रमेण उपदेशक्रमेण समन्वयः सम्बन्धो यथासंख्यमित्यर्थः । यद्यपि कविप्रतिभानिर्मितत्वस्यालंकारताजीवातोर्लेशतोऽप्यभावादस्य नालङ्कारत्वन्तथापि एकत्र पद्ये बहूनां क्रमान्वये वैचित्र्यादलंकारत्वेनोक्तः ॥ १०८ ॥

उदाहरति—एक इति । राजानं प्रत्युक्तिरियम् हे देव ! राजन् ! एकस्त्वं द्विषां शत्रूणां विदुषां पण्डितानां मृगीदृशां रमणीनां च चेतसि चित्ते त्रिधा प्रकारत्रयेण वससि अत्र अस्मिन्विषये चित्रम् आश्चर्यं किं कुर्वन् शौर्यस्य प्रतापस्य ऊष्मणा उष्णत्वेन विनयेन नम्रतया लीलया विलासेन च क्रमेण तापं सन्तापं सम्मदरसमानन्दरसं रतिं प्रीतिं च पुष्णन्सन् । इति यथासंख्यम् ॥ ४७७ ॥ २१ ॥

अर्थान्तरन्यासं लक्षयति—सामान्यमिति । सामान्यं यत् विशेषेण विशेषो वा सामान्येन समर्थ्यते स द्विविधोऽर्थान्तरन्यासः । द्विविधेऽप्यस्मिन्पुनर्द्वैविध्यमाह—साधर्म्येणेति । तथा च साधर्म्येण समानधर्मवत्त्वेन इतरेण वैधर्म्येण चेति चतुःप्रकारः । अनुपपद्यमानतया सम्भाव्यमानस्यार्थस्योपपादनार्थं यदर्थान्तरं न्यस्यते सोऽर्थान्तरन्यासः । सामान्यं सामान्येन विशेषो विशेषेण यत्समर्थ्यते स दृष्टान्त इति भेदः । तत्र विशेषेण सामान्यस्य समर्थनं साधर्म्येणोदाहरति—निजेति । निजदोषेण आवृतमाक्रान्तम्मनो येषां तादृशानां अतिसुन्दरमपि वस्तु विपरीतम्

सुसितवसनालंकारायां कदाचन कौमुदी-
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः ।
तदनु भवतः कीर्तिः केनाप्यगीयत येन सा
प्रियगृहमगान्मुक्ताशंका क्व नासि शुभप्रदः ॥ ४७९ ॥

गुणानामेव दौरात्म्यात् धुरि धुर्यो नियुज्यते ।
असंजातकिणस्कन्धः सुखं स्वपिति गौर्गलिः ॥ ४८० ॥

अहो हि मे बह्वपराद्धमायुषा यदप्रियं वाच्यमिदं मयेदृशम् ।
त एव धन्याः सुहृदः पराभवं जगत्यदृष्ट्वैव हि ये क्षयं गताः ४८१

---

सुन्दरं भाति पित्तेन रोगविशेषेण उपहतो व्याप्तः पुरुषः शशिवत् शुभ्रमपि शंखं पीतं पीतवर्णं पश्यतीत्यर्थः । अत्र निजदोषेत्यादि सामान्यं शंखपीतिम्ना विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः । ॥

विशेषेण सामान्यस्य समर्थनं वैधर्म्येणोदाहरति—सुसितेति । सप्तमोल्लासे व्याख्यातमिदम् अत्र सुसितेत्यादिनाऽभिहितो विशेषः क्व नासि इत्यादिना सामान्येन समर्थित इत्यर्थान्तरन्यासः ॥

विशेषेण सामान्यस्य समर्थनं साधर्म्येणोदाहरति—गुणानामिति । धुरं कार्यभारं वहतीति धुर्यः श्रेष्ठः गुणानां दौरात्म्यात् गुणरूपदोषादेव धुरि कार्यभारे नियुज्यते नितरां सम्बध्यते गलिगौर्वृषभः असंजातः अनुत्पन्नः किणो व्रणः घर्षणाच्चिह्नं वा प्ररूढव्रणग्रन्थिर्वा यस्य तादृशः स्कन्धोऽसौ यस्य तथाविधः सन् सुखं यथा तथा स्वपिति न तु युगं वहतीत्यर्थः । धूःस्पर्शमात्रेण यः स्वयमेव पतति स गौर्गलिः । अत्र धुर्य इत्यादिनाऽभिहितं सामान्यं गौर्गलिरिति विशेषेण समर्थितमित्यर्थान्तरन्यासः । गुणाभावात् गलिगौर्न धुरि नियुज्यत इति वैधर्म्यम् ॥ ४७८-४८० ॥

सामान्येन विशेषस्य समर्थनं वैधर्म्येणोदाहरति—अहो इति । आपन्नं सुहृदं प्रति तदवस्थोचितमप्रियं वक्तुकामस्य खेदातिशयात् स्वजीवितं निन्दतः कस्यचिदुक्तिः । हि निश्चये मे मम आयुषा दीर्घकालजीवनेन बहु अपराद्धं यत् यस्मादीदृशं सुहृद्व्यसनरूपं इदमप्रियं मया वाच्यम् सुहृदप्रियोक्तिरेव आयुषोऽपराध इति भावः । एवंविधस्याप्रियस्य कदाप्यनुक्त्वाऽहो इत्याश्चर्यम् ये सुहृदो मित्रस्य पराभवं अदृष्ट्वैव क्षयं नाशं गताः ते एव जगति लोके धन्याः सुकृतिन इत्यर्थः । अत्र ते इत्यनेन सामान्यतो मदपरार्थस्यापि ग्रहणात्सामान्य-

(१९६) विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः ।
वस्तुवृत्तेनाविरोधेऽपि विरुद्धयोरिव यदभिधानं स विरोधः ।
(१९७) जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा स्याद्गुणैस्त्रिभिः ॥११०॥
क्रिया द्वाभ्यामपि द्रव्यं द्रव्येणैवेति ते दश ।

क्रमेणोदाहरणम्—

अभिनवनलिनीकिसलयमृणालवलयादिदवदहनराशिः ।
सुभग ! कुरंगदृशोऽस्या विधिवशतस्त्वद्वियोगपविपाते ॥४८२॥

गिरयोऽप्यनुन्नतियुजो मरुदप्यचलोऽब्धयोऽप्यगम्भीराः ।
विश्वंभराऽप्यतिलघुर्नरनाथ ! तवान्तिके नियतम् ॥ ४८३ ॥

---

त्वं ते धन्या इति सामान्येन अहमधन्य इति वैधर्म्यद्वारा स्वायुरपराधरूपो विशेषः समर्थ्यते इत्यर्थान्तरन्यासः ॥ २२ ॥

विरोधाभासं लक्षयति—विरोध इति । अविरोधेऽपि वस्तुगत्या विरोधाभावेऽपि द्वयोर्वस्तुनोर्विरुद्धत्वेन विरोधप्रतिभाप्रयोजकरूपेण यद्वचः अभिधानं स विरोधालंकारः । अयमेव विरोधाभास इत्युच्यते । एवं विरोधं दशधा विभजते जातिरिति । जातिगुणक्रियाद्रव्यात्मकानां पदार्थानां दशधा परस्परं विरोधाः सन्ति तथा हि जातिः जात्याद्यैश्चतुर्भिर्विरुद्धा स्यादिति चत्वारो विरोधाः । गुणः गुणक्रियाद्रव्यैस्त्रिभिर्विरुद्धः स्यादिति त्रयो विरोधाः । गुणेन जातेर्विरोध एव जात्या गुणस्य विरोध इति न पृथगुक्तिः । क्रिया क्रियाद्रव्याभ्यां द्वाभ्यां विरुद्धा स्यादिति द्वौ विरोधौ द्रव्यं द्रव्येण विरुद्धं स्यादित्येको विरोधः । इत्येवंप्रकारेण ते विरोधा दश सम्भवन्तीत्यर्थः ॥

तत्र जातेर्जात्या सह विरोधमुदाहरति—अभिनवेति । हे सुभग ! अस्याः कुरङ्गदृशः विधिवशतो दैववशात् त्वद्वियोग एव पविर्वज्रं तस्य पाते पतने सति अभिनवा नूतना या नलिनी कमलिनी किसलयं पल्लवं मृणालस्य वलयं कङ्कणं च आदिना चन्द्रचन्दनादि दवदहनस्य दावाग्नेः राशिर्भवतीत्यर्थः । अत्र नलिनीत्वादिजातीनां दवदहनत्वजात्या सह विरोधः स च नलिन्यादिषु विरहोद्दीपकतया दवदहनत्वोपचारेण परिहृत इत्याभासरूप इति विरोधाभासालङ्कारः ।

जातेर्गुणेन सह विरोधमुदाहरति–गिरय इति । हे नरनाथ ! राजन् ! तव अन्तिके इदं नियतम् किं गिरयोऽपि अनुन्नतियुजः अल्पोच्चताभाजः मरुदपि अचलः अल्पवेगः अब्धयोऽपि अगम्भीराः

येषां कंठपरिग्रहप्रणयिता संप्राप्य धाराधर-
स्तीक्ष्णः सोऽप्यनुरज्यते च कमपि स्नेहं पराप्नोति च ।
तेषां संगरसंगसक्तमनसां राज्ञां त्वया भूपते !
पांसूनां पटलैः प्रसाधनविधिर्निर्वर्त्यते कौतुकम् ॥ ४८४ ॥
सृजति च जगदिदमवति च संहरति च हेलयैव यो नियतम् ।
अवसरवशतः शफरो जनार्दन सोऽपि चित्रमिदम् ॥ ४८५ ॥

---

अल्पगम्भीराः विश्वंभरा भूमिरपि अतिलघुः अपकृष्टगुरुत्ववतीत्यर्थः अतिलघुरित्यनेन साहचर्यात्सर्वत्र नञोऽल्पार्थकत्वमित्येके नञोऽभावार्थकत्वेऽपि न क्षतिरिति मान्या । अत्र गिरित्वादिजातीनामनुन्नतित्वादिभिर्गुणैः सह विरोधः स च वर्णनीयराजगतौन्नत्याद्यतिशयविवक्षया परिहृत इति विरोधाभासः । भूमेरेकत्वाज्जातित्वाभावेऽपि सृष्टिभेदेन तद्भेदान्मण्डलभेदाद्वा जातित्वमिति दिक् ॥

जातेः क्रियया सह विरोधमुदाहरति—येषामिति । हे भूपते ! धाराधरः खड्गः तीक्ष्णो दारुणोऽस्ति सोऽपि खड्ग संगरसङ्गः संग्रामसम्बन्धस्तत्र सक्तं मनो येषां तथाभूतानां येषां राज्ञां प्रतिनृपाणां कण्ठपरिग्रहप्रणयितां आलिंगनप्रेमवत्तां सम्प्राप्य अनुरज्यते प्रीतिमान् रक्तवर्णश्च भवति कमपि अनिर्वचनीयं स्नेहं सौहार्दं चिक्कणतां च पराप्नोति प्राप्नोति च तेषां तादृशमनसां राज्ञां त्वया सर्वभूतानुकम्पकेन पांसूनां धूलीनां पटलैः समूहैः प्रसाधनविधिः अलङ्करणविधिः निर्वर्त्यते क्रियते कण्ठं छित्वा संग्रामधूलिधूसराः क्रियन्ते इति कौतुकमाश्चर्यमित्यर्थः । अत्र धाराधरत्वखड्गत्वजातेरनुरागस्नेहपराप्तिक्रियाभ्यां विरोधः स च रुधिरसंपर्कक्रृतलौहित्यचैक्कण्यार्थकत्वात्परिहृत इति विरोधाभासः एवं पांसुत्वजातेरलङ्करणक्रियया विरोधः सोऽपि कंठं छित्वेत्यादिप्रागुक्तरीत्या परिहृत इति ।

जातेर्द्रव्येण सह विरोधमुदाहरति—सृजतीति य इदं जगत् हेलया अनायासेनैव नियतं यथा तथा सृजति अवति रक्षति संहरति नाशयति च सोऽपि जनार्दनः अवसरवशतः कालवशात् शफरो मत्स्यो जातः इदं चित्रम् अत्र शफरत्वजातेर्जनार्दनेन द्रव्येण सह विरोधः स च लीलया सर्वं सम्भवात् मत्स्यशरीरपरिग्रहस्यागमसिद्धत्वात्परिहृत इति विरोधाभासः ॥ ४८२-४८५ ॥

गुणस्य गुणेन सह विरोधमुदाहरति सततमिति । हे नृपते ! सततं मुसलेषु अयोग्रेषु आसक्ताः बहुतरं यद्गृहकर्म तस्य जडतया सम्भा-

सततं मुसलासक्ता बहुतरगृहकर्मघटनया नृपते !।
द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः ॥४८६॥
पेशलमपि खलवचनं दहतितरां मानसं सतत्त्वविदाम् ।
परुषमपि सुजनवाक्यं मलयजरसवत् प्रमोदयति ॥ ४८७ ॥
क्रौञ्चाद्रिरुद्दामदृषद्दृढोऽसौ यन्मार्गणानर्गलशातपाते ।
अभून्नवाम्भोजदलाभिजातः स भार्गवः सत्यमपूर्वसर्गः ॥४८८॥
परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥ ४८९ ॥

---

दनेन कठिनाः द्विजपत्नीनां कराः पाणयो भवति त्वयि दातरि विद्यमाने सति सरोजवत्कमलवत् सुकुमाराः कोमलाः जाताः अत्र कठिनत्वसुकुमारत्वयोर्गुणयोः परस्परं विरोधः स च भवद्दानवशात्स्वयं गृहव्यापारनिवृत्त्या कालभेदेन परिहृत इति विरोधाभासः ॥ ४८६ ॥

गुणस्य क्रियया सह विरोधमुदाहरति—पेशलमिति । पेशलं कोमलमपि खलानां वचनं सतत्त्वविदां तत्त्वज्ञानां मानसमन्तःकरणं दहतितरामतिशयेन दहति परुषं कठोरमपि सुजनस्य वाक्यं मलयजरसवत् चन्दनद्रववत् प्रमोदयतीत्यर्थः । अत्र पेशलत्वपरुषत्वयोर्गुणयोर्दाहप्रमोदक्रियाभ्यां विरोधः स च खलत्वसुजनत्वाभ्यां परिहृत इति विरोधाभासः ॥ ४८७ ॥

गुणस्य द्रव्येण सह विरोधमुदाहरति-क्रौञ्चेति । असौ क्रौञ्चाद्रिः उद्दामा महत्यो या दृषदः शिलास्ताभिः दृढोऽपि यस्य भार्गवस्य मार्गणानां बाणानां अनर्गलोऽप्रतिहतः शातस्तीक्ष्णः यः पातः पतनं तस्मिन्सति नवाम्भोजदलवत् नूतनपद्मपत्रवत् अभिजातः कोमलः अभूत् स भार्गवः परशुरामः अपूर्वः सर्गः सृष्टिर्यस्य यत्कर्मको यत्कर्तृको वा तादृश इति सत्यमित्यर्थः । अत्र कोमलत्वगुणस्य क्रौञ्चाद्रिद्रव्येण सह विरोधः स च भार्गवमहिम्नाऽभिजातपदस्य सुखभेद्यत्वपरतया परिहृत इति विरोधाभासः ॥ क्रियायाः क्रियया सह विरोधमुदाहरति परिच्छेदेति । चतुर्थोल्लासे व्याख्यातमिदम् । अत्र जडयति च तापं च कुरुते इति जडीकरणतापकरणक्रिययोर्विरोधः विरहवैचित्र्येण कालभेदात्परिहार इति विरोधाभासः ॥ ४८८ ॥ ४८९ ॥

अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यात्तिमिमकरमापास्यति मुनिः ॥ ४९० ॥

समदमतंगजमदजलनिस्यन्दतरङ्गिणीपरिष्वङ्गात् ।
क्षितितिलक ! त्वयि तटजुषि शंकरचूडापगाऽपि कालिन्दी ॥४९१॥

(१६८) स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम् ॥१११॥

---

क्रियाया द्रव्येण सह विरोधमुदाहरति–अयमिति । अयं जलनिधिः वारां जलानां एको मुख्यो निलयः स्थानमिति हेतोः रत्नानामाकर इति हेतोश्च तृष्णया तरलितं व्याप्तं मनो येषान्तादृशैः अस्माभिः श्रित आश्रितः तृष्णा च वारिषु पिपासा रत्नेषु च लिप्सा मुनिरगस्त्यः एनं जलनिधिं क्षणात् क्षणमात्रेणैव आ समन्तात् पास्यति इत्येवं को जानीते कीदृशं जलनिधिं निजा स्वीया मुनिसम्बन्धिनी या करपुटी करसंपुटं सैव कोटरो गर्तस्तद्गतम् ताम्यन्तो ग्लायन्तः तिमयो मत्स्या मकराः नक्राश्च यस्मिंस्तादृशं चेत्यर्थः । अत्र पानक्रियाया अगस्त्येन कर्त्रा समुद्रेण कर्मणा च द्रव्येण सह विरोधः नरविशेषस्य अगस्त्यस्य समुद्रपानासंभवात् स च विरोधः अगस्त्यतपःप्रभावातिशयेन परिहृत इति विरोधाभासः ॥ ४९० ॥

द्रव्यस्यद्रव्येण सह विरोधमुदाहरति–समदेति । हे क्षितितिलक ! राजन् ! त्वयि तटजुषि तीरगते सति शंकरस्य चूडा जटासमूहस्तत्सम्बन्धिनी या आपगा गंगा साऽपि कालिन्दी यमुना भवति । कुतस्तत्राह समदाः मत्ता ये मतंगजाः करिणस्तेषां मदजलस्य निस्यन्दः प्रवाहः स एव तरङ्गिणी नदी तस्याः परिष्वङ्गात्सम्बन्धादित्यर्थः । अत्र गंगायमुनयोर्द्रव्ययोः परस्परं विरोधः स च कालिन्दीपदस्य श्यामाभामात्रपरत्वात्परिहृत इति विरोधाभासः । मदजलस्य श्यामवर्णत्वं प्रसिद्धमिति विरोधाभासः ॥ ४९१ ॥ २३ ॥

स्वभावोक्तिं लक्षयति–स्वभावोक्तिरिति । स्वभावस्य प्रकृतिसिद्धस्य धर्मस्योक्तिरित्यन्वर्थसंज्ञा तथा च डिम्भादेः शिशु-युवति-मुग्ध-कातर-तिर्यक्-भ्रान्त-हीनपात्रादेर्वस्तुमात्रस्य स्वयोः स्वमात्राश्रयकयोः क्रियारूपयोर्वर्णनं स्वभावोक्तिरलकारः । एनामेव केचिज्जातिरिति व्यवहरन्ति वर्णः नीलपीतादिः संस्थानं अवयवसन्निवेशः आकारो वा ॥

स्वयोस्तदेकाश्रययोः । रूपं वर्णः संस्थानं च उदाहरणम्--

पश्चादंघ्री प्रसार्य त्रिकनतिविततं द्राघयित्वाऽङ्गमुच्चै-
रासज्याभुग्नकण्ठो मुखमुरसि सटां धूलिधूम्रां विधूय ।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण ॥४९२॥

(१६९) व्याजस्तुतिर्मुखे निन्दास्तुतिर्वा रूढिरन्यथा ।

व्याजरूपा व्याजेन वा स्तुतिः । क्रमेणोदाहरणम्--

हित्वा त्वामुपरोधवन्ध्यमनसां मन्ये न मौलिः परः
लज्जावर्जनमन्तरेण न रमामन्यत्र संदृश्यते ।
यस्त्यागं तनुतेतरां मुखशतैरेत्याश्रितायाः श्रियः
प्राप्य त्यागकृतावमाननमपि त्वय्येव यस्याः स्थितिः ॥४९३॥

---

तामुदाहरति-पश्चादिति । शयनादुत्थितस्तुरंगोऽश्वः पश्चादंघ्री पश्चिमपादौ प्रसार्य त्रिकस्य पृष्ठवंशस्य नत्या नम्रतया विततं विस्तृतं अंगं उच्चैरतिशयेन द्राघयित्वा दीर्घं कृत्वा आभुग्नो वक्रः कंठो यस्य तादृशः सन् उरसि मुखं आसज्य संयोज्य धूल्या धूम्रां मलिनां सटां स्कन्धकेशावलिं विधूय विशेषेण कंपयित्वा घासग्रासाभिलाषात् तृणग्रासवाञ्छया अनवरतं चलन्तौ चंचलौ प्रोथतुंडौ ओष्ठाधरौ यस्य तादृशः मन्दं शनैः शब्दायमानः हेषां कुर्वाणः सन् खुरेण अग्रपादशफेन क्ष्मां भूमिं विलिखति उत्किरतीत्यर्थः । अत्र अश्वमात्रगतयोः क्रियासंस्थानयोर्वर्णनात्स्वभावोक्तिरिति स्वभावोक्तिः ॥ ४२२ ॥ २४ ॥

व्याजस्तुतिं लक्षयति-व्याजस्तुतिरिति । मुखे प्रारम्भे रूढिः पर्यवसानं अन्यथा स्तुत्या निन्दया वा तथा च स्तुतिपर्यवसायिनी निन्दा निन्दापर्यवसायिनी स्तुतिर्वा व्याजस्तुतिः अर्थात् यत्र मुखे निन्दा तत्र स्तुतौ पर्यवसानम् यत्र मुखे स्तुतिस्तत्र निन्दायां पर्यवसानम् । तत्र स्तुतिपर्यवसायिनीं निन्दामुदाहरति-हित्वेति। हेराजन् ! त्वां हित्वा त्वां विना उपरोधेन अनुरोधेन वन्ध्यं शून्यं मनो येषां अनुरोधहीनमनसां मौलिः शिरोमणिः परोऽन्यो नास्ति तथा लज्जावर्जनं निर्लज्जत्वं रमामन्तरेण लक्ष्मीं विना अन्यत्र न संदृश्यते इत्यहं मन्ये। क्रमेणोभयत्र हेतुमाह-यो भवान् मुखशतैः युद्धाद्यनेकोपायैः एत्य आगत्य आश्रितायाः सादरं स्थितायाः श्रियो लक्ष्म्याः त्यागं परित्यागं दानं

हे हेलाजितबोधिसत्त्व ! वचसां किं विस्तरैस्तोयधे !
नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः ।
तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशो-
भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः ॥ ४९४ ॥

(१७०) सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम् ॥ ११२ ॥

एकार्थाभिधायकमपि सहार्थबलात् यत् उभयस्याप्यवगमकं सा सहोक्तिः । यथा--

सह दिअहणिसाहिं दीहरा सासदण्डा
सह मणिवलयेहिं वाप्पधारा गलन्ति ।
तुह सुहअ विओए तीअ उव्विग्गिरीए
सह अतणुलदाए दुव्वला जीविदासा ॥ ४९५ ॥

---

तनुतेतरामतिशयेन विस्तारयति तथा त्यागकृतावमाननं परित्यागजन्यापमानं प्राप्यापि यस्याः श्रियः त्वय्येव स्थितिः स्थिरतेत्यर्थः । अत्र राज्ञ आश्रितत्यागरूपनिन्दाव्याजेन महादातृत्वेऽपि लक्ष्मीवत्त्वाभिधानात्स्तुतिरिति व्याजेन स्तुतिरियम् ॥ ४९३ ॥

निन्दापर्यवसायिनीं स्तुतिमुदाहरति—हे इति । हेलया अनायासेन जिता बोधिसत्त्वा बौद्धा येन तत्सम्बुद्धौ हे हेलाजितबोधिसत्त्व ! अतिकारुणिकस्यापि जेतः हे तोयधे ! लवणाकर ! वचसां विस्तरैः किं परहिताधाने परोपकारकरणे गृहीतं व्रतं येन स त्वत्सदृशः परो द्वितीयो नास्ति यत् यस्मात्कारणात् तृष्यन्तः तृषार्ता ये पांथजनास्तेषां जलदानेन य उपकारस्तस्य घटनायां संपादनविषये वैमुख्येन पराङ्मुखत्वेन लब्धं प्राप्तं यत् अयशः अकीर्तिस्तस्य यो भारो महदाधिक्यं तस्य प्रोद्वहने मरोः मरुदेशस्य साहायकं सहायत्वं कृपया करोषीत्यर्थः । अत्र समुद्रस्य स्तुतिव्याजेन निन्दाप्रतिपादनाच्चमत्कारातिशय इति व्याजरूपा स्तुतिः ॥ ४९४ ॥ २५ ॥

सहोक्तिं लक्षयति-सेति । एकं पदं सहार्थस्य सह सममित्यादिशब्दार्थान्वयस्य बलात्सामर्थ्यात् द्विवाचकं अनेकार्थाभिधायकं सा सहोक्तिः । तत्रैकस्यार्थस्य वाचकं अन्यस्याक्षेपकम् । उदाहरति-सहेति ।

सह दिवसनिशाभिर्दीर्घाः श्वासदण्डाः
सह मणिवलयैर्बाष्पधारा गलन्ति ।

श्वासदण्डादिगतं दीर्घत्वादि शाब्दम् दिवसनिशादिगतं तु सहार्थसामर्थ्यात्प्रतिपद्यते।

(१७१) विनोक्तिः सा विनाऽन्येन यत्रान्यः सन्न नेतरः।

क्वचिदशोभनः क्वचिच्छोभनः। क्रमेणोदाहरणम्—

अरुचिर्निशया विना शशी शशिना सापि विना महत्तमः।
उभयेन विना मनोभवस्फुरितं नैव चकास्ति कामिनोः॥ ४९६॥

मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः।
अमृतद्युतिसुन्दराशयोऽयं सुहृदा तेन विना नरेन्द्रसूनुः॥ ४९७॥

---

तव सुभग वियोगे तस्या उद्विग्नायाः।
सह च तनुलतया दुर्बला जीविताशा॥

इति संस्कृतम्। नायिकाया विरहावस्थावर्णनम्। हे सुभग! तव वियोगे उद्विग्नायाः विमनस्कायाः तस्या नायिकायाः दण्डाकाराः श्वासाः श्वासदण्डाः दिवसनिशाभिः सह दीर्घा जाताः दिवसनिशादौ दीर्घत्वं दुःखदायित्वादौपचारिकम् तथा बाष्पो नेत्राम्बु तस्य धाराः मणिवलयैः रत्नकङ्कणैः सह गलन्ति। पतन्ति कार्श्यान्मणिवलयगलनम्। तथा जीविताशा तनुलतया शरीरयष्ट्या सह दुर्बला जातेत्यर्थः। आशायां दुर्बलत्वं कादाचित्कम्। अत्र श्वासदण्डादिषु तु तृतीयान्तेषु सहशब्दार्थान्वयबलादार्थ इति सहोक्तिः॥२६॥

विनोक्तिं द्विधा लक्षयति—विनोक्तिरिति। यत्र यस्मिन्नलंकारे अन्येन विना अन्यः सन् शोभनो न किंत्वशोभनः नेतरः नाशोभनः किन्तु शोभनः सा प्रकारद्वयवती विनोक्तिरित्यर्थः। केनचिद्विना कस्यचिदशोभनत्वं शोभनत्वं वा प्रतिपाद्यते स विनोक्तिनामाऽलंकार इत्यर्थः। सन्नेत्यस्य व्याख्यानमाह—अशोभन इति। नेतर इत्यस्य व्याख्यानमाह शोभन इति। तत्राशोभनत्वमुदाहरति—अरुचिरिति। निशया रात्र्या विना शशी अरुचिः दीप्तिशून्यः अशोभनः। शशिना विना साऽपि निशापि महत् उत्कृष्टं तमः अन्धकाररूपेति रूपकम् अशोभना उभयेन शशिनिशाभ्यां विना कामिनोः मनोभवस्फुरितं कामविलासः नैव चकास्ति अशोभनं भवतीत्यर्थः। अपरवक्त्रं छन्दः। अत्रान्येन निशादिना विना अन्यस्य चन्द्रादेरशोभनत्वं प्रतिपाद्यते इति विनोक्तिः॥ ४९६॥

शोभनत्वमुदाहरति—मृगेति। अयं नरेन्द्रसूनुः राजपुत्रः मृगलोचनया विना विचित्रेषु व्यवहारेषु या प्रतिभा झटिति स्फूर्तिस्तस्याः

(१७२) परिवृत्तिर्विनिमयो योऽर्थानां स्यात्समासमैः ॥११३॥

परिवृत्तिरलङ्कारः । उदाहरणम्—

लतानामेतासामुदितकुसुमानां मरुदयं
मतं लास्यं दत्त्वा श्रयति भृशमामोदमसमम् ।
लतास्त्वध्वन्यानामहह दृशमादाय सहसा
ददत्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम् ॥ ४९८ ॥

अत्र प्रथमेऽर्धे समेन समस्य द्वितीये उत्तमेन न्यूनस्य ।

---

प्रभया प्रकाशेन प्रगल्भः प्रचुरः शोभनः तेन दुष्टप्रकृतिना सुहृदा मित्रेण विना अमृतद्युतिवच्चन्द्रवत्सुन्दरः स्वच्छः आशयोऽन्तः करणं यस्य तादृशो भवतीत्यर्थः । य एव राजपुत्रः स्त्रीमोहितः कृत्यविकलः स एव तया विनाऽतिव्यवहाराभिज्ञः य एव दुष्टसुहृदाऽऽलिंगितो विषमहृदयः स एव तेन विनाऽतिसदयहृदय इति भावः । मालभारिणी छन्दः । अत्र मृगलोचनया दुष्टसुहृदा च विना नरेन्द्रसूनोर्विचित्रव्यवहारप्रगल्भत्वचन्द्रसुन्दराशयत्वरूपं शोभनत्वं प्रतिपादितमिति विनोक्तिः ॥ ४९७ ॥ २७ ॥

परिवृत्तिं लक्षयति-परिवृत्तिरिति । समासमैर्वस्तुभिः यः अर्थानां वस्तूनां विनिमयः परिवर्त्तनं सा परिवृत्तिः क्वचित्समेन समस्य क्वचिदसमेनासमस्येति द्विविधोऽयमलङ्कारः । अन्त्यो द्विविधः क्वचिन्न्यूनेनोत्तमस्य क्वचिदुत्तमेन न्यूनस्येति । तत्र समेन समस्य उत्तमेन न्यूनस्य च विनिमयमुदाहरति लतानामिति । अयं मरुद्वायुः उदितकुसुमानां संजातपुष्पाणामेतासां लतानां असमं अनुपममामोदं परिमलं भृशमत्यर्थं श्रयति स्वीकरोति किं कृत्वा मतं सम्मतं मनोरमम्वा लास्यं नृत्यं दत्वा लतास्तु अध्वन्यानां पान्थानां दृशं दृष्टिं सहसा झटिति आदाय हृत्वा आधिर्मनःपीडा व्याधिः कायपीडा भ्रमिः दिग्भ्रमणदर्शको विकारः रुदितं रोदनं मोहो निश्चेष्टता एतेषां व्यतिकरं संपर्कं पथिकेभ्यः ददति इत्यनौचित्यादहहेति खेद इत्यर्थः । अत्र पूर्वार्धे लास्येनोपादेयतया समस्य आमोदस्य विनिमयः । उत्तरार्धे उपादेयतया उत्तमया दृशा आधिव्याधीनामतादृशतया न्यूनानां विनिमयः । मरुत्संबन्धेन लतानां लास्यदर्शनात् लतादर्शनेन च पथिकानामाध्यादिदर्शनाद्दातृत्वं कविकल्पितमिति ॥ ४९८ ॥

नानाविधप्रहरणैर्नृप ! संप्रहारे स्वीकृत्य दारुणनिनादवतः प्रहारान् ।
दृप्तारिवीरविसरेण वसुन्धरेयं निर्विप्रलम्भपरिरम्भविधिर्वितीर्णा ॥४९९॥

अत्र न्यूनेनोत्तमस्य ॥

(१७३) प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः ।
तद्भाविकम् ।

भूताश्च भाविनश्चेति द्वन्द्वः । भावः कवेरभिप्रायोऽत्रास्तीति भाविकम् । उदाहरणम्—

आसीदञ्जनमत्रेति पश्यामि तव लोचने ।
भाविभूषणसंभारां साक्षात्कुर्वे तवाकृतिम् ॥ ५०० ॥

आद्ये भूतस्य द्वितीये भाविनो दर्शनम् ।

(१७४) काव्यलिङ्ग हेतोर्वाक्यपदार्थता ॥ ११४ ॥

---

न्यूनेनोत्तमस्य विनिमयमुदाहरति—नानेति । हे नृप ! दृप्तो बलगर्वितो योऽरिर्वीरविसरः शत्रुवीरसमूहस्तेन संप्रहारे युद्धे नानाविधैः प्रहरणैः दारुणनिनादवतः भयंकरशब्दयुक्तान् प्रहारान् ताडनानि स्वीकृत्य निर्गतो विप्रलम्भो वियोगो यस्मात्तादृशः वियोगशून्यः परिरम्भस्यालिंगनस्य विधिः स्वीकारो यस्यास्तादृशी इयं वसुन्धरा वितीर्णा दत्ता तुभ्यमित्यर्थः । अत्रानुपादेयतया न्यूनैः प्रहारैः उत्तमाया वसुंधराया विनिमयस्योक्तेः परिवृत्तिः ॥ ४९९ ॥ २८ ॥

भाविकं द्विधा लक्ष्यति—प्रत्यक्षा इति । भूताः पूर्वकालिकाः भाविनः उत्तरकालिकाश्च भावाः वस्तूनि कविना यत् प्रत्यक्षा इव अलौकिकप्रत्यक्षविषया अपि लौकिकप्रत्यक्षविषया इव क्रियन्ते अभिधीयन्ते तत् प्रकारद्वयवत् भाविकमित्यर्थः । भूतभाविनोर्द्वयोरपि प्रत्यक्षतयाऽभिधानमेकेनैव पद्येनोदाहरति—आसीदिति । हे कान्ते ! अत्र अनयोर्लोचनयोः यदञ्जनं कज्जलं दत्तं आसीत् इति तद्युक्ते तव लोचने पश्यामि साक्षात्करोमि भावी भूषणानां सम्भारः समूहो यत्र तथाभूतां तव आकृतिं साक्षात्कुर्वे पश्यामीत्यर्थः । अत्र पूर्वार्धे भूतस्याञ्जनस्य उत्तरार्धे भाविनो भूषणसंभारस्य च प्रत्यक्षतयाऽभिधानमिति भाविकनामाऽलङ्कारः ॥ ५०० ॥ २९ ॥

काव्यलिंगं लक्ष्यति—काव्येति । वाक्यार्थरूपस्यानेकपदार्थरूपस्यै-

वाक्यार्थता यथा—

वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे न प्रायः क्वचिदपि भवन्तं प्रणतवान्।
नमन्मुक्तः संप्रत्यहमतनुरग्रेऽप्यनतिभाक्
महेश ! क्षन्तव्यं तदिदमपराधद्वयमपि ॥ ५०१ ॥

अनेकपदार्थता यथा—

प्रणयिसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत्।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥ ५०२ ॥

---

कपदार्थरूपस्य च हेतोरभिधानं काव्यलिङ्गम्। काव्याभिमतं लिंगं काव्यलिङ्गम्। लिंगं चात्र हेतुः अतएव हेत्वलङ्कार इत्युच्यते। वाक्यार्थरूपस्य हेतोरभिधानमुदाहरति वपुरिति। हे पुरारे ! त्रिपुरशत्रो ! अहं पुरा पूर्वस्मिन् क्वचित्कस्मिन्नपि जन्मनि प्रायः भवन्तं त्वां न प्रणतवान् नमस्कारं न कृतवान् कथं ज्ञातं इदं मया वपुःप्रादुर्भावात् शरीरोत्पत्तिरूपाल्लिंगादनुमितं ज्ञातम् त्वत्प्रणामे सति मुक्तिलाभेन शरीरोत्पत्तेरभावात् सम्प्रति इदानीं नमन् मुक्तः अहं अतनुः शरीरशून्यः इति अग्रे उत्तरकालेऽपि अनतिभाक् नतिरहितः मुक्तस्य पुनर्देहप्राप्त्यभावेनाग्रेऽपि प्रणामाभावः। हे महेश ! तदिदं अपराधद्वयमपि भवता क्षन्तव्यमित्यर्थः। अत्र पुरा क्वचिदपि नाहं भवन्तं प्रणतवान् अग्रेऽप्यहमनतिभागित्यवान्तरवाक्ययोरर्थोऽनमनमपराधे हेतुः तदिदं पदप्रतिपादितं दुरितविशेषरूपमपराधद्वयं हेतुमत् अनमनद्वयजन्यं दुरितविशेषरूपमपराधद्वयं नाशनीयम् तथा च भूतभाविजन्मनोरनमनरूपहेत्वोः न प्रणतवान् इति अनतिभागिति क्रियाद्वयेन समाप्तयोर्वाक्ययोरर्थतेति काव्यलिङ्गम् ॥ ५०१ ॥

अनेकपदार्थरूपस्य हेतोरभिधानमुदाहरति—प्रणयीति। मालतीवधोद्यतमघोरघंटम्प्रति—माधवोक्तिः। रे पाप ! प्रणयिनीनां प्रीतिमतीनां सखीनां सलीलो यः परिहासरसस्तेनाधिगतैः प्राप्तैर्ललितशिरीषपुष्पहननैः मनोहरकपीतनकुसुमपातनैरपि यत् वपुस्ताम्यति क्लेशं प्राप्नोति तत्र तस्मिन्वपुषि मालतीशरीरे वधाय शस्त्रमुपक्षि-

एकपदार्थता यथा—

भस्मोद्धूलन ! भद्रमस्तु भवते रुद्राक्षमाले ! शुभं
हा सोपानपरम्परां गिरिसुताकान्तालयालंकृतिम् ।
अद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखा-
लोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे ॥ ५०३॥

एषु अपराधद्वये पूर्वापरजन्मनोरनमनम् भुजपाते शस्त्रोपक्षेपः महामोहे सुखालोकोच्छेदित्वं च यथाक्रममुक्तरूपो हेतुः ।

**(१७५) पर्यायोक्तं विना वाच्यवाचकत्वेन यद्वचः ।**

वाच्यवाचकभावव्यतिरिक्तेनावगमनव्यापारेण यत्प्रतिपादनं तत्पर्यायेण भङ्ग्यन्तरेण कथनात्पर्यायोक्तम् ।

---

पतः तव शिरसि एषः करालो भुजो मद्बाहुदण्डः अकाण्डेऽकाले यमदण्ड इव पतत्वित्यर्थः । अत्र वपुषि शस्त्रमुपक्षिपतः इति प्रातिपदिकानां क्रियासाकांक्षतया वाक्यभावमनाप्तानामनेकपदानामर्थः शस्त्रोपक्षेपरूपो भुजपाते हेतुरिति काव्यलिङ्गमलङ्कारः ॥ ५०२ ॥

एकपदार्थरूपस्य हेतोरभिधानमुदाहरति—भस्मेति । शिवप्रसादेन जाततत्त्वज्ञानस्योक्तिः । हे भस्मोद्धूलन ! भूत्यालेपन ! भवते भद्रमस्तु हे रुद्राक्षमाले ! भवत्यै शुभमस्तु गिरिसुताकान्तस्य शिवस्य आलयः प्रासादस्तस्यालंकृतिं अलङ्कारभूतां सोपानपरम्परां हा तस्याः शोच्यतेत्यर्थः तत्संस्कारकर्त्रभावादिति भावः । अद्य अस्मिन्नहनि आराधनेन सेवया तोषितेन विभुना शिवेन कर्त्रा युष्माकं भस्मोद्धूलनादीनां भवतां या सपर्या सेवा तत्सुखस्य तदानन्दस्य आलोकोऽनुभवरूपः प्रकाशः तदुच्छेदिनि तन्नाशके मोक्षनामनि महामोहे महान्धकारे निधीयामहे निपात्यामहे । अत्र मोक्षस्य महामोहत्वे सुखालोकोच्छेदित्वं हेतुः तच्च समासादेकपदार्थ एव मोक्षे महामोहत्वाध्यवसायः । उक्तोदाहरणेषु प्रकृतालङ्कारं योजयति एष्वित्यादि । एषु उक्तोदाहरणेषु उक्तरूपः वाक्यार्थरूपः अनेकपदार्थरूपः एकपदार्थरूपश्चेति काव्यलिङ्गम् ॥ ५०३ ॥ २७ ॥

पर्यायोक्तं लक्षयति—पर्यायोक्तमिति । वाच्यवाचकत्वेन विना-वाच्यवाचकभावभिन्नेन व्यञ्जनारूपव्यापारेण यद्वचः अर्थाद्वाच्यार्थस्यैव प्रतिपादनं तत्पर्यायोक्तम् पर्यायेण प्रकारान्तरेण कथनात् तदेवाह—वाच्येत्यादि । उदाहरति—यमिति । रावणं प्रेक्ष्य मदेन कर्त्रा ऐरावणद्वयेन्द्र-

उदाहरणम्—

> यं प्रेक्ष्य चिररूढाऽपि निवासप्रीतिरुज्झिता ।
> मदेनैरावणमुखे मानेन हृदये हरेः ॥ ५०४ ॥

अत्रैरावणशक्रौ मदमानमुक्तौ जाताविति व्यंग्यमपि शब्देनोच्यते तेन यदेवोच्यते तदेव व्यंग्यम् यथा तु व्यंग्यन्न तथोच्यते यथा गवि शुक्ले चलति दृष्टे गौः शुक्लश्चलति इति विकल्पः यदेव दृष्टं तदेव विकल्पयति न तु यथादृष्टं तथा यतोऽभिन्नासंसृष्टत्वेन दृष्टं भेदसंसर्गाभ्यां विकल्पयति ।

---

गजस्य मुखे आनने मानेनाभिमानेन च कर्त्रा हरेरिन्द्रस्य हृदये चिररूढो वृद्धिं गताऽपि निवासप्रीतिः उज्झिता त्यक्तेत्यर्थः । अत्रैरावतेन्द्रौ मदमानशून्यौ जातावित्यर्थस्य व्यंग्यस्यैव भंग्यन्तरेणाभिधानात्पर्यायोक्तम् तदेवाह—अत्रेति । शब्देनोच्यते अभिधया प्रतिपाद्यते यदेव वस्तु इति शेषः उच्यते अभिधया प्रतिपाद्यते तदेव व्यंग्यं तदेव वस्तु व्यंजनया प्रतिपाद्यं भवति तथा च लक्षणसंगतिरिति भावः। नन्वेवं प्रतिपन्नस्यैव प्रतिपत्तिरफलेति किं व्यापारद्वयेनेति चेन्न यतो यथा व्यंग्यन्तथा नोच्यते प्रकारयोर्भेदात् तदेवाह यथात्विति । येन प्रकारेण तु व्यंग्यन्तेनरूपेण शब्देन नोच्यत इत्यर्थः । एकस्यैवार्थस्य प्रकारभेदेन वाच्यत्वव्यंग्यत्वयोरविरोधात् । एकेन प्रकारेणावगतस्याप्यर्थस्य प्रकारान्तरेण प्रतिपत्तौ दृष्टान्तमाह—यथागवीति। गवि गोत्वे तदाश्रये च शुक्ले शुक्लत्वगुणे तदाश्रये च चलति चलनक्रियायां तदाश्रये च दृष्टे निर्विकल्पज्ञानविषयीकृते विकल्पः विशिष्टज्ञानं जायते इति शेषः यदेव गोत्वादि दृष्टं निर्विकल्पज्ञानविषयीकृतं तदेव गोत्वादि विकल्पयति सविकल्पकज्ञानविषयीकरोति चैत्रादिरिति शेषः । न तु यथा येन प्रकारेण दृष्टं निर्विकल्पकज्ञानविषयीकृतं तथा तेनैव रूपेण यतोऽभिन्नेति भिन्नत्वेन भेदेन संसृष्टत्वेन संसर्गेण वा अदृष्टं वस्तु भेदसंसर्गाभ्यां भेदेन संसर्गेण वा विकल्पयति विशिष्टीकरोति । अयं भावः, निर्विकल्पके गोत्व—तदाश्रय—शुक्ल—तदाश्रय—चलन—तदाश्रयाः असम्बद्धा भासन्ते। सविकल्पके तु संसृष्टतया भासन्ते एवं च यथापूर्वं दृष्टानामपि गोत्वादीनां वस्तूनां सविकल्पकज्ञाने प्रकारान्तरेण पुनः प्रतीतिः तथा प्रकृते वाच्यस्यापि प्रकारभेदेन व्यंजनया पुनः प्रतीतिरिति दृष्टान्तसंगतिरिति पर्यायोक्तम् ॥५०४॥३१॥

**(१७६) उदात्तं वस्तुनः सम्पत् ।**

सम्पत्समृद्धियोगः यथा—

मुक्ताः केलिविसूत्रहारगलिताः सम्मार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः ।
दूराद्दाडिमबीजशंकितधियः कर्षन्ति केलीशुकाः
यद्विद्वद्भवनेषु भोजनृपतेस्तत् त्यागलीलायितम् ॥ ५०५ ॥

**(१७७) महतां चोपलक्षणम् ॥ ११५ ॥**

उपलक्षणमङ्गभावः अर्थादुपलक्षणीयेऽर्थे । उदाहरणम्—

तदिदमरण्यं यस्मिन्दशरथवचनानुपालनव्यसनी ।
निवसन् बाहुसहायश्चकार रक्षःक्षयं रामः ॥ ५०६ ॥

---

उदात्तं लक्षयति–उदात्तमिति । यस्य कस्यचिद्वस्तुनोऽसम्भाव्यमानायाः सम्पत्तेर्वर्णनमुदात्तालंकारः । उदाहरति—मुक्ता इति । विदुषां भवनेषु केलौ रतिक्रीडायां विसूत्रात् छिन्नसूत्रात् हारान्मौक्तिकदाम्नो गलिताः पतिताः सम्मार्जनीभिः शोधनीभिः हृता अपसारिताः, प्रातः प्रांगणसीम्नि अङ्गणप्रान्ते मन्थरं मन्दं यथा तथा चलन्त्यो या बालाः षोडशवर्षा वनितास्तासामंघ्रिलाक्षया चरणालक्तकेन अरुणा आरक्ता मुक्ता मौक्तिकानि दूरात् दाडिमबीजेषु शंकिता धीर्येषान्ताद्दृशाः केलीशुकाः क्रीडार्थं पालिताः कीराः कर्षन्ति यत् तत् भोजनृपतेः त्यागो दानं तस्य लीलेवाचरितं लीलायितमित्यर्थः । अत्र विद्वद्भवनस्थोत्कटसमृद्धिवर्णनादुदात्तालङ्कारः ॥ ५०५ ॥

अन्यविधमुदात्तं लक्षयति–महतामिति । अङ्गिनि वर्णनीयेऽर्थे महतामुदारचरितानां यदुपलक्षणमंगत्वं वर्ण्यते तदपरमुदात्तमित्यर्थः ।

उदाहरति–तदिदमिति । पुष्पकविमानस्थस्य लक्ष्मणस्याङ्कदम्प्रत्युक्तिः । दशरथस्य वचनमाज्ञा तस्यानुपालने रक्षणे व्यसनमासक्तिर्यस्य तादृशो रामः यस्मिन्नरण्ये निवसन् बाहुसहायः एकाकी रक्षसां क्षयं नाशं चकार तदिदमरण्यं दण्डकारण्यमित्यर्थः । अत्र वर्णनीये दण्डकारण्ये तदुत्कर्षाय महतो रामस्याङ्गत्वं वर्णितमित्यपर उदात्तभेदः । नन्वत्र वीररसध्वनिरेव स्यात् बाहुमात्रसाहाय्यात् रक्षःक्षयकरणरूपेणानुभावेनाभिव्यक्तस्योत्साहस्यैव चमत्कारित्वादित्याशङ्का-

न चात्र वीररसः, तस्येहाङ्गत्वात् ।

(१७८) तत्सिद्धिहेतावेकस्मिन् यत्रान्यत्तत्करं भवेत् ।

समुच्चयोऽसौ,

तस्य प्रस्तुतस्य कार्यस्य एकस्मिन्साधके स्थिते साधकान्तराणि यत्र सम्भवन्ति स समुच्चयः । उदाहरणम् —

दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं
गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्म्मलम् ।
स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत् कालः कृतान्तोऽक्षमो
नो सख्यश्चतुराः कथन्तु विरहः सोढव्य इत्थं शठः ॥ ५०७ ॥

---

यामाह–नचेति । तस्य वीररसस्य अङ्गत्वात् परम्परया उत्कर्षत्वेनोपकारकत्वात् । नात्र वीरो रसो वर्णनीयः किंत्वरण्यम् तथाच प्राधान्येन व्यपदेशा भवन्तीति न्यायेन न रसध्वन्यादिव्यवहारः किन्तु चित्रव्यववहार एवेति उदात्तम् ॥ ५०६ ॥ ३२ ॥

समुच्चयं लक्षयति–तत्सिद्धीति । यत्र यस्मिन्नलङ्कारे तस्य प्रस्तुतस्य कार्यस्य सिद्धिरुत्पत्तिस्तस्या हेतौ साधके एकस्मिन् स्थिते सति अन्यत् साधकान्तरं तत्करं कार्यसिद्धिकरं भवेत् असौ स समुच्चयः । सूत्रे लिङ्गवचनमतन्त्रमिति न्यायेन अन्यदित्येकवचनमविवक्षितम् अत एव वृत्तौ अन्यदित्यस्य व्याख्यानं साधकान्तराणीति । उदाहरति–दुर्वारा इति । दैवं प्रति विरहिण्या उक्तिः । स्मरमार्गणाः कामबाणाः दुर्वाराः दुःखेन वारयितुं शक्याः, प्रियतमः दूरे अस्ति मनः अत्युत्सुकम् प्रेम गाढमतिशयितम् वयो नवं प्राणा अतिकठिना अनश्वराः कुलं निर्मलं तेन स्वाच्छन्द्याभावः स्त्रीत्वं धैर्यविरोधि कालो वसन्तरूपः समयः मन्मथस्य विरहिणीशत्रुभूतस्य सुहृन्मित्रं कृतान्तो यमः अक्षमः अकाले प्राणानपहर्तुमसमर्थः सख्यः नो चतुराः नायकान्तरघटनेऽकुशलाः इत्थं सति शठो मर्मभेदी विरहः प्रियवियोगः कथन्नु सोढव्यः सहनीय इत्यर्थः । अत्र विरहासहत्वरूपं कार्यं स्मरमार्गणा एव कर्तुं समर्थाः तदुपरि प्रियतमदूरस्थित्यादीनि कारणान्तराणि उपात्तानीति समुच्चयालङ्कारः ॥५०७॥

रुद्रटादिभिः प्राचीनैः सद्योगसमुच्चयः असद्योगसमुच्चयः सदसद्योगसमुच्चय इति पृथक् लक्षिताः तदयुक्तं उक्तलक्षणसमुच्चयस्यैव

अत्र विरहासहत्वं स्मरमार्गणा एव कुर्वन्ति तदुपरि प्रियतमदूरस्थित्यादि उपात्तम् । एष एव समुच्चयः सद्योगेऽसद्योगे च पर्यवस्यतीति न पृथक् लक्ष्यते, तथाहि—

कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतिशालिनी
भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम् ।
प्रकृतिसुभगा ह्येते भावा अमीभिरयं जनो
व्रजति सुतरां दर्पं राजन् ! त एव तवांकुशाः ॥ ५०८ ॥

अत्र सतां योगः । उक्तोदाहरणे त्वसतां योगः ॥

शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे॥ ५०९ ॥

---

तथा पर्यवसानादित्याह–एष एवेति । उक्तलक्षण एव सतां शोभनानां योगे सम्बन्धे असतामशोभनानां योगे सदसतां शोभनाशोभनानां योग इत्यर्थः । सद्योगे समुच्चयमुदाहरति–कुलमिति । हे राजन् ! अमलिनं निर्म्मलं कुलम् भद्रा शोभना मूर्तिराकृतिः श्रुत्या वेदेन शालते शोभत इत्येवं मतिः अलमतिशयितं भुजबलं स्फीताऽभिवृद्धा लक्ष्मीः सम्पत् अखंडितमकुंठं प्रभुत्वं एते हि भावाः पदार्थाः प्रकृत्या स्वभावेन सुभगाः सुन्दराः अमीभिर्भावैः अयं दृश्यमानो जनः सुतरामत्यन्तं दर्पं गर्वं व्रजति तव तु ते एव भावाः अङ्कुशाः दर्पप्रतिबन्धका भवन्तीत्यर्थः । अत्र निर्म्मलकुलरूपे दर्पतद्भावहेतौ सत्येव भद्रमूर्त्यादिकमपि दर्पतद्भावहेतुत्वेनोपात्तमिति समुच्चयालङ्कारः । अयमेव हि सद्योगे पर्यवस्यतीत्याह–अत्र सतामिति । अत्र कुलादीनां प्रकृतिसुभगत्वेन उपादेयतया शोभनत्वम् । असतामिति । स्मरमार्गणादीनामशोभनानामेव योगः । तेषां हि विरहिण्या दुःखदत्वादनुपादेयत्वेनाशोभनत्वम् ॥ ५०८ ॥

सदसद्योगे समुच्चयं दर्शयति–शशीति । नीतिशतके पद्यम् । शशी चन्द्रो दिवसे धूसरो निस्तेजाः कामिनी कान्ता गलितयौवना नष्टतारुण्या सरः कासारः विगतवारिजं पद्मशून्यं स्वाकृतेः शोभनाकृतेः मुखं अनक्षरं विद्याहीनं प्रभुः धनपरायणो धनलुब्धः सज्जनः

अत्र शशिनि धूसरे शल्ये शल्यान्तराणीति शोभनाशोभनयोगः ।

(१७९) स त्वन्यो युगपत् या गुणक्रियाः ॥ ११६ ॥

गुणौ च क्रिये च गुणक्रिये च गुणक्रियाः । क्रमेणोदाहरणम्—

विदलितसकलारिकुलं तव बलमिदमभवदाशु विमलं च ॥
प्रखलमुखानि नराधिप ! मलिनानि च तानि जातानि ॥५१०॥

अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहो मे ।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः ॥ ५११ ॥

---

सततं दुर्गतो दरिद्रः खलः पिशुनो नृपाङ्गणगतः राजप्रासादप्रसिद्धः एतानि सप्त मे मम मनसि शल्यानि बाणाग्राणीत्यर्थः । अत्र धूसरशशिरूपे व्यथाहेतौ सत्येव गलितयौवनादिविशिष्टकामिन्यादिकमपि व्यथाहेतुत्वेनोपात्तमिति सद्सद्योगसमुच्चयः । शशी स्वरूपेण सन्नपि दिवसधूसरत्वेनासन् ॥ ५०९ ॥

अन्यविधं समुच्चयालङ्कारं लक्षयति—स त्वन्य इति । या गुणक्रियाः युगपदेककाले भवन्ति स तु अन्योऽपरः समुच्चयः । गुणक्रिया इत्यत्र गुणौ च क्रिये च गुणक्रियाः गुणश्च क्रिया च गुणक्रिये इति द्वन्द्वोत्तरं गुणक्रियाश्च गुणक्रिये च गुणक्रिया इत्येकशेषः तदेवाह—गुणौ चेति । तथा च गुणयोर्यौगपद्यम् क्रिययोर्यौगपद्यम् गुणक्रिययोर्यौगपद्यम् चेति त्रिविधोऽयं समुच्चयः । अत्र संख्याविशेषोऽविवक्षितस्तेन बहूनामपि गुणानां क्रियाणां च समुच्चयस्य सङ्ग्रहः । तत्र गुणयोर्यौगपद्यमुदाहरति—विदलितेति । हे नराधिप ! विदलितं खंडितं सकलानामरीणां कुलं येन तथाविधं इदन्तव बलं सैन्यं आशु शीघ्रं विमलं निर्म्मलञ्च अभवत् तानि प्रखलानां प्रकृष्टखलानां मुखानि मलिनानि च जातानीत्यर्थः । अत्र विमलत्वमलिनत्वयोर्गुणयोर्यौगपद्यं चकारद्वयगम्यमिति समुच्चयः ॥ ५१० ॥

क्रिययोर्यौगपद्यमुदाहरति—अयमिति । पुरूरवस उक्तिः । तथा प्रियया उर्वश्या सह मे मम एकपदे अकस्मात् अयं सुतरां दुःसहो वियोगो विरह उपनतः उपस्थितश्च प्राप्तश्च । अहोभिर्दिवसैः कर्तृभिः नववारिधरोदयात् नूतनमेघोदयात् तिरोहितत्वेन आतपराहित्येन रम्यैर्भवितव्यं भूतं चेत्यर्थः । तद्वियोग [illegible] वर्षासमयश्च समुपस्थितः मत्प्राणहरणायेति भावः । अत्रोपनतो भवितव्यं चेति क्रिययोर्यौगपद्यं चकारद्वयगम्यमिति समुच्चयः ॥ गुणक्रिययोर्यौगपद्यमुदा-

कलुषं च तवाहितेष्वकस्मात्सितपङ्केरुहसोदरश्रि चक्षुः।
पतितं च महीपतीन्द्र! तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥५१२॥

धुनोति चासिं तनुते च कीर्तिमित्यादेः,

कृपाणपाणिश्च भवान् रणक्षितौ स साधुवादाश्च सुराः सुरालये।

इत्यादेश्च दर्शनात् व्यधिकरणे इति एकस्मिन्देशे इति च न वाच्यम्।

(१८०) एकं क्रमेणानेकस्मिन् पर्यायः।

एकं वस्तु क्रमेणानेकस्मिन्भवति क्रियते वा स पर्यायः। क्रमेणोदाहरणम्—

नन्वाश्रयस्थितिरियं तव कालकूट! केनोत्तरोत्तरविशिष्टपदोपदिष्टा।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ कण्ठेऽधुना वससि वाचि पुनःखलानाम्५१३

---

हरति–कलुषमिति। हे महीपतीन्द्र! सितपङ्केरुहसोदरा श्वेतकमलतुल्या श्रीः शोभा यस्य तादृशं तव चक्षुः अहितेषु शत्रुषु अकस्मात् कलुषं कषायं च क्रोधादिदोषयुक्तं च तेषां शत्रूणां वपुषि आपदा विपत्तीनां कटाक्षैः कर्तृभिः प्रस्फुटं यथा तथा पतितं चेत्यर्थः। अत्र कलुषत्वपतनयोर्गुणक्रिययोर्यौगपद्यं चकारद्वयगम्यमिति समुच्चयालङ्कारः ॥ ५११ ॥ ५१२ ॥

परमतं दूषयन्ति–धुनोतीत्यादि। राजाऽसिं धुनोति कम्पयति च कीर्त्तिं तनुते चेत्यर्थः। रणक्षितौ भवान् कृपाणपाणिश्च सुरालये स्वर्गे सुराः देवा ससाधुवादाः साधुवादसहिताश्चेत्यर्थः। अयं भावः, केचित् व्यधिकरणे एव समुच्चय इत्याहुः। तत्र धुनोतीत्यादौ सामानाधिकरण्येऽपि क्रिययोः समुच्चयस्य दर्शनात्। केचित् सामानाधिकरण्ये एव एकस्मिन्देशे एव समुच्चय इत्याहुस्तत्र कृपाणपाणिश्चेत्यादौ वैयधिकरण्येऽपि विभिन्नदेशेपि क्रिययोः समुच्चयस्य दर्शनात् न वाच्यम् लक्षणे न निवेश्यम् तथा निवेशे एषामसङ्ग्रहः स्यात्। इति समुच्चयः ॥ ३३ ॥

पर्यायं लक्षयति–एकमिति। एकत्वेन विवक्षितं वस्तु यत्र क्रमेण कालभेदेन अनेकस्मिन्नाधारे भवति क्रियते वा स एकः पर्याय इत्यर्थः। तदेवाह–एकमिति। एकमनेकत्र भवतीत्यस्योदाहरणमाह–नन्विति। रे कालकूट! उत्कटविष! उत्तरोत्तरं विशिष्टं उत्कृष्टं उच्चं वा पदं स्थानं यस्यान्तादृशी इयमाश्रयस्थितिः आश्रयणरीतिस्तव केनोपदिष्टा आश्रयस्थितेर्विशिष्टपदत्वमेव दर्शयति प्राक् प्रथमं अर्णवस्य समुद्रस्य

यथा वा—

बिम्बोष्ठ एव रागस्ते तन्वि ! पूर्वमदृश्यत ।
अधुना हृदयेऽप्येष मृगशावाक्षि ! लक्ष्यते ॥ ५१४ ॥

रागस्य वस्तुतो भेदेऽप्येकतयाऽध्यवसितत्वादेकत्वमविरुद्धम् ।

तं ताण सिरिसहोअररअणाहरणम्मि हिअअमेक्करसम् ।
बिम्बाहरे पिआणं णिवेसिअं कुसुमवाणेण ॥ ५१५ ॥

(१८१) अन्यस्ततोऽन्यथा ।

---

हृदये अभ्यन्तरे अवसः अथानन्तरं वृषो वृषभो लक्ष्म वाहनतया चिह्नं यस्य तस्य शम्भोः कण्ठे अधुना इदानीन्तु खलानां दुर्जनानां वाचि वससीत्यर्थः । प्रथमं हृदि ततः कण्ठे ततो मुखे इतिस्थितेर्विशिष्टपदत्वम् । अत्रैकस्य कालकूटस्य वस्तुनोऽनेकत्र वासे प्रयोजकं किञ्चिदपि नोक्तमिति पर्यायोदाहरणम् ॥ ५१३ ॥

न केवलमयं वास्तविके एकत्वे किन्त्वारोपितेऽपीत्युदाहरणान्तरमाह–बिम्बोष्ठ इति । हे तन्वि ! पूर्वं ते तव बिम्बसदृशः ओष्ठः बिम्बोष्ठस्तस्मिन्नेव रागोऽदृश्यत हेमृगशावाक्षि ! कुरङ्गनयने ! अधुना एषो रागः तव हृदयेऽपि लक्ष्यते इत्यर्थः । ओष्ठे रागो लौहित्यं हृदये तु स्नेहः । अत्रैक एव रागः क्रमेणानेकत्र ओष्ठे हृदये च भवतीति पर्यायालङ्कारः । ननु रागशब्दे लौहित्यप्रीत्योरर्थयोर्भेदात्कथमेकस्यैवानेकत्र स्थितिरत आह–रागस्येति । अविरुद्धमिति श्लेषेण एकत्वस्याध्यवसानान्नैकत्वविवक्षाविरोध इति भावः ॥

एकमनेकत्र क्रियते इत्युदाहरति–तं ताणेति ।

तत्तेषां श्रीसहोदररत्नाभरणे हृदयमेकरसम् ॥
बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन—

इति संस्कृतम् श्रीसहोदररत्नं कौस्तुभः आभरणं यस्य तस्मिन् विष्णौ एकरसमेकतानं तत्परं तत्तेषामसुराणां हृदयं कर्म कुसुमबाणेन कामेन प्रियाणां प्रियायाः मोहिन्याः बिम्बसदृशेऽधरे निवेशितमित्यर्थः । विष्णावासक्तं दैत्यानां हृदयं कामेन प्रियाबिम्बाधरचुम्बनाद्यासक्तं कृतमिति भावः । अत्रैकस्य हृदयस्यानेकत्र विष्णौ ओष्ठे च स्थितौ कुसुमबाणेनेति प्रयोजकनिर्देश इति क्रियते इत्यस्योदाहरणम् ॥ ५१५ ॥

अन्यविधं पर्यायं लक्षयति–अन्य इति । ततः पूर्वस्मात्पर्यायात्

अनेकमेकस्मिन् क्रमेण भवति क्रियते वा सोऽन्यः । क्रमेणोदाहरणम्—

मधुरिमरुचिरं वचः खलानाममृतमहो प्रथमं पृथु व्यनक्ति ।
अथ कथयति मोहहेतुमन्तर्गतमिव हालहलं विषं तदेव ॥५१६॥

तद्गेहं नतभित्ति मन्दिरमिदं लब्धावकाशं दिवः
सा धेनुर्जरती नदन्ति करिणामेता घनाभा घटाः ।
स क्षुद्रो मुसलध्वनिः कलमिदं संगीतकं योषिता-
माश्चर्यं दिवसैर्द्विजोऽयमियतीं भूमिं समारोपितः ॥५१७॥

अत्रैकस्यैव हानोपादानयोरविवक्षितत्वान्न परिवृत्तिः ।

---

अन्यथा वैपरीत्यं अन्योऽपरः पर्यायस्तदेवाह—अनेकमिति । अनेकं वस्तु एकस्मिन्नाधारे क्रमेण कालभेदेन यत् भवति क्रियते वा सोऽन्य इत्यर्थः । अनेकस्याधेयस्यैकस्मिन्नाधारे क्रमेण सम्बन्धे द्वितीयः पर्याय इति भावः । तत्र भवत्यर्थे उदाहरति—मधुरिमेति । अहो महदाश्चर्यम् मधुरिम्णा माधुर्येण रुचिरं मनोहरं खलानां वचो वाक्यं कर्तृ प्रथमं पूर्वं पृथु बहुलं सम्पन्नं वा अमृतं व्यनक्ति प्रकाशयति अथ विचारदशायां तदेव वचः अन्तर्गतं उदरप्राप्तं हालहलं विषमिव मोहहेतुं कथयतीत्यर्थः । अत्रैकस्मिन् खलवचसि क्रमेण अमृतव्यञ्जने विषकथने च न प्रयोजकनिर्देश इति भवतीत्यस्योदाहरणम् । क्रियते इत्यर्थे उदाहरति—तद्गेहमिति । सुदाम्नो मन्दिरमवलोक्य कस्यचिदुक्तिः । अयं द्विजः सुदामा कर्म दिवसैः कर्तृभिः इयतीं भूमिं समृद्धिसीमां अवस्थां वा समारोपितः प्रापित इत्याश्चर्यम् तदेव दर्शयति तत् पूर्वदृष्टं गेहं गृहं नता नम्रा भित्तिर्यस्यैवंविधम् इदानीन्तु दिवः स्वर्गाल्लब्धः प्राप्तः अवकाशो यस्य तादृशं इदं मन्दिरं राजयोग्यं गृहं जातम् सा पूर्वदृष्टा जरती धेनुः दोहनशीला गौः । इदानीन्तु घनाभाः मेघतुल्याः करिणां गजानां घटाः श्रेणयः नदन्ति स क्षुद्रः विकृष्टोऽल्पो वा मुसलध्वनिः अयोग्रशब्दः इदानीन्तु कलं मधुरस्वरं योषितां सङ्गीतकं गायनं जातमित्यर्थः । अत्रैकस्मिन्द्विजे तद्गृहे तन्मन्दिरादीनामनेकेषां सम्बन्धे दिवसैरिति प्रयोजकनिर्देश इति क्रियत इत्यस्योदाहरणम् । अत्र परिवृत्त्यलङ्कारशङ्कां वारयति—अत्रेति । हानं स्वीयवस्तुसमर्पणम् उपादानं परकीयवस्तुग्रहणम् एककर्तृक-

(१८२) अनुमानं तदुक्तं यत् साध्यसाधनयोर्वचः ॥ ११७ ॥

पक्षधर्मान्वयव्यतिरेकित्वेन त्रिरूपो हेतुः साधनम् धर्मिणि अयोगव्यवच्छेदो व्यापकस्य साध्यत्वम् । यथा—

यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं
यत्तत्रैव पतन्ति सन्ततममी मर्मस्पृशो मार्गणाः ।

---

हानोपादानयोरुक्तौ हि परिवृत्तिः न त्वत्र तथेति भावः इति पर्यायः ॥ ५१६ ॥ ५१७ ॥ ३४ ॥

अनुमानं लक्षयति-अनुमानमिति । साधयितुं योग्यं साध्यं वह्न्यादिः साध्यते वह्न्यादिरनेनेति साधनं हेतुर्धूमादिः तयोर्यद्वचो वचनन्तदनुमानमुक्तमित्यर्थः । ननु पक्ष-साध्य-हेतु-दृष्टान्ताद्यनुमानम् अत्र तु साध्यसाधनयोर्वचनमात्रं तदित्युच्यते तत्कथमिति मनस्याशङ्क्य साधनपदार्थमाह-पक्षधर्मेति । पक्षधर्मत्वेन अन्वयित्वेन व्यतिरेकित्वेन च त्रिरूपो हेतुः साधनपदेनोच्यत इत्यर्थः त्रिरूपः पक्षसत्त्व-सपक्षसत्त्व-विपक्षासत्त्वानीति त्रीणि रूपाणि यत्रानुमिनोति स पक्षः यथा पर्वतादिः तत्र हेतोर्वृत्तित्वं पक्षधर्मत्वम् सपक्षे निश्चितसाध्यवति महानसादौ हेतोर्वृत्तित्वमन्वयित्वम् विपक्षे निश्चितसाध्याभाववति ह्रदादौ हेतोरवृत्तित्वं व्यतिरेकित्वम् । एवं च साध्यसाधनग्रहणादेव पक्षादिकं सर्वं संगृहीतमिति भावः । साध्यपदार्थमाह—धर्मिणीति । धर्मिणि हेतुमति पक्षे पर्वतादौ व्यापकस्य वह्न्यादेः अयोगव्यवच्छेदो नियतः सम्बन्धः साध्यत्वमित्यर्थः । उदाहरति—यत्रेति । एताः पुरो दृश्यमानाः लहरीचलाचलदृशः तरङ्गवत्यन्तचंचलाक्ष्यः यत्र यस्मिन्तरुणविशेषे भ्रुवं दृगूर्ध्वभागं व्यापारयन्ति कटाक्षं कुर्वन्ति तत्रैव तरुणविशेषे अमी अनुभूतप्रकर्षाः मर्मस्पृशो मर्मभेदिनः मार्गणाः कामबाणाः सन्ततं पतन्ति इति यत तत् कस्मात्तेतोः शासनधरो योषिदाज्ञानुवर्ती अत एव क्रोधनः कोपशीलः अत एव चक्रीकृतः वर्तुलीकृतश्चापो धनुर्यस्मिन्कर्मणि तद्यथा तथा अञ्चितेषु धनुषि योजितेषु शरेषु प्रेङ्खत्करः अनवरतचलद्धस्तः स्मरः आसां कामिनीनां अग्रतः पुर एव सत्यं सदा धावतीत्यर्थः । अत्र पूर्वार्धे सन्ततनिपतन्मर्मभेदिबाणकलसद्भ्रूव्यापारकस्थानकत्वं साधनं पक्षवृत्तित्वेनोक्तम् परार्धे अग्रतस्तादृशमदनधावनरूपं साध्यमुक्तम् यत्तद्भ्यां व्याप्तिः सूचिता तत्र वस्तुतो व्याप्त्यसत्त्वेऽपि कविप्रौढोक्त्या तथाऽभिधानम् । अनुमानप्रयोगश्चेत्थम् एताः स्त्रियः

तच्चक्रीकृतचापमंचितशरप्रेङ्खत्करः क्रोधनो
धावत्यग्रत एव शासनधरः सत्यं सदाऽऽसां स्मरः ॥५१८॥

साध्य–साधनयोः पौर्वापर्यविकल्पे न किंचिद्वैचित्र्यमिति न तथा दर्शितम्।

(१८३) विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः।

अर्थाद्विशेष्यस्य। उदाहरणम्—

महौजसो मानधना धनार्चिता धनुर्भृतः संयति लब्धकीर्तयः।
नसंहतास्तस्य नभेदवृत्तयः प्रियाणि वांछन्त्यसुभिः समीहितुम्॥५१९॥

यद्यप्यपुष्टार्थस्य दोषताभिधानात्तन्निराकरणेन पुष्टार्थस्वीकारः

---

चक्रीकृतचापं यथा तथा सदा पुरोधावदञ्चितशरत्वादिविशिष्टमनोभवाः सन्ततनिपतन्मर्मभेदिबाणकलसद्भ्रूव्यापारकस्थानकत्वादिति॥ ननु साध्यसाधनयोः पौर्वापर्यविपर्ययस्यात्रावश्यं सम्भवादनुमानालङ्कारस्य द्वैविध्यं कथं नोक्तमत आह–साध्येति। विकल्पे विपर्यये वैचित्र्यं चमत्कारः। इत्यनुमानम्॥ ५१८॥ ३५॥

परिकरं लक्षयति–विशेषणैरिति। साकूतैः साभिप्रायैर्विशेषणैर्या उक्तिः विशेष्यस्य परिपुष्टिः स परिकर इत्यर्थः। अत्र विशेषणैरित्युपलक्षणं विशेष्यस्यापि तेन साभिप्राये विशेष्येऽप्ययम् यथा—

चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुज इति। अत्र चतुर्भुज इति विशेष्यं पुरुषार्थचतुष्टयदानसामर्थ्याभिप्रायगर्भम्। परिकरमुदाहरति–महौजस इति। धनुर्भृतः भटाः तस्य दुर्योधनस्य प्रियाणि अभिलषितानि असुभिः प्राणैरपि समीहितुं कर्तुं वाञ्छन्ति इच्छन्ति किम्भूताः महौजसः तेजस्विनः एतेन परानभिभवनीयत्वं व्यज्यते मानधनाः मानिनः एतेन मानभङ्गभीरुत्वं धनार्चिताः धनपूजिताः एतेनोपकृतत्व संयति रणे लब्धकीर्तयः प्राप्तकीर्तयः एतेन युद्धोत्सुकत्वम् न संहताः न परैरुपजप्ताः एतेन कार्यकरणापेक्षित्वम् न भेदवृत्तयः परस्परमैकमत्यप्राप्ताः एतेन तदेकप्रयोजनापेक्षत्वम् तेनायं दुर्योधनो रूढमूलो दुर्जय इति व्यङ्ग्यम् अत्र महौजस इत्यादिविशेषणानां परानभिभववीयत्वाद्यभिप्रायकत्वात् धनुर्भृत इति विशेष्यस्य परिपुष्टिः तेन च प्रधानस्य दुर्योधनस्य अतिशयः प्रतीयते इति परिकरालङ्कारः॥ अस्यालङ्काराभावत्वमाशङ्कते–यद्यपीति। अपुष्टार्थस्य अपुष्टार्थत्वस्य दोषताऽभिधानात् सप्तमोल्लासे-

कृतः तथाप्येकनिष्ठत्वेन बहूनां विशेषणानामेवमुपन्यासे वैचित्र्यमित्यलंकारमध्ये गणितः।

(१८४) व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपनिगूहनम् ॥ ११८ ॥

निगूढमपि वस्तुनो रूपं कथमपि प्रभिन्नं केनापि व्यपदेशेन यदपह्नूयते सा व्याजोक्तिः। न चैषाऽपह्नुतिः प्रकृताप्रकृतोभयनिष्ठस्य साम्यस्येहासम्भवात्, उदाहरणम्—

शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लसत्-
रोमाञ्चादिविसंष्ठुलाखिलविधिव्यासंगभंगाकुलः।
हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
शैलान्तःपुरमातृमंडलगणैर्दृष्टोऽवताद्वः शिवः ॥ ५२० ॥

---

पुष्टार्थस्य पुष्टार्थत्वस्य कृतः, अयं भावः अपुष्टार्थत्वस्य दोषत्वाभिधानादर्थासिद्ध पुष्टार्थत्वमिति दोषाभावत्वमात्रतया कुतोऽलङ्कारमध्ये पठितोऽयमिति। समाधत्ते—तथापीति। एवं च साभिप्रायबहुविशेषणोपादानेऽयमलङ्कार इति भावः। इति परिकरः॥ ५१९ ॥ ३६ ॥

व्याजोक्तिं लक्षयति—व्याजोक्तिरिति। उद्भिन्नस्य स्फुटस्य वस्तुरूपस्य वस्तुस्वरूपस्य छद्मना कपटेन यन्निगूहनं गोपन सा व्याजोक्तिः। उद्भिन्नपदसामर्थ्यलभ्यमाह—निगूढमपीति। अस्फुटमपि रूपं स्वरूपं कथमपि चिह्नविशेषादिना प्रभिन्नं स्फुटं छद्मनेत्यस्य व्याख्यानमाह—केनेति। येन केनचित् अतात्त्विककारणाद्युपन्यासेन निगूहनपदार्थमाह—अपह्नूयते इति। गोप्यते इत्यर्थः। अस्या अपह्नुतावन्तर्भावमाशंक्य परिहरति—न चैषेति। साम्यमूलकापह्नवोऽपह्नुतिः अत्र तु न साम्यविवक्षेति भेद इति भावः। उदाहरति—शैलेन्द्रेति। भवानीशङ्करयोर्वैवाहिकेतिवृत्तस्य वर्णनमिदम्। शिवः वो युष्मान् अवतात् रक्षतु। कीदृशः शैलेन्द्रेण हिमाद्रिणा प्रतिपाद्यमाना या गिरिजा तस्या हस्तस्य उपगूढं सम्बन्धस्तेनोल्लसदाविर्भवत् यत् रोमाञ्चादि तेन विसंष्ठुलो व्यग्रहस्तः स चासौ अखिलविधिव्यासङ्गस्य सकलवैवाहिकेतिकर्तव्यतारूपव्यापारस्य भङ्गेन आकुलः मद्वृत्तिः प्रकटीभूतेति चकितः अत एव शैलान्तःपुरैः हिमाद्रिस्त्रीजनैः मातृमंडलेन ब्राह्म्यादिसमूहेन गणैर्नन्द्यादिभिश्च सस्मितं यथा तथा दृष्टः सन् रोमाञ्चादिसात्त्विकभावगोपनाय हा शैत्यं तुहिनाचलस्य

अत्र पुलकवेपथू सात्त्विकरूपतया प्रसृतौ शैत्यकारणतया प्रकाशितत्वादपलपितस्वरूपौ व्याजोक्तिं प्रयोजयतः ॥

(१८५) किंचित्पृष्टमपृष्टं वा कथितं यत्प्रकल्पते ।
ताद‍ृगन्यव्यपोहाय परिसंख्या तु सा स्मृता ॥११९॥

प्रमाणान्तरावगतमपि वस्तु शब्देन प्रतिपादितं प्रयोजनान्तराभावात्सदृशवस्त्वन्तरव्यवच्छेदाय यत्पर्यवस्यति सा भवेत्परिसंख्या अत्र च कथनं प्रश्नपूर्वकं तदन्यथा च परिदृष्टम् तथोभयत्र व्यपोह्यमानस्य प्रतीयमानता वाच्यं चेति चत्वारो भेदाः । क्रमेणोदाहरणम्—

किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः

---

करयोर्हिमवद्धस्तयोर्महच्छैत्यमित्यूचिवानित्यर्थः । अत्र पार्वतीकरस्पर्शजन्यस्य सात्त्विकभावरूपस्य रोमाञ्चादेर्हिमवत्करस्पर्शनिमित्तकत्वेन गोपनाद्व्याजोक्तः । तदेवाह-अत्रेति । सात्त्विकेति । पार्वतीविषयकरतिभावानुभावतयेत्यर्थः प्रसृतौ उद्भिन्नौ अपलपितस्वरूपौ गोपितस्वरूपौ प्रयोजयतः प्रकाशयतः । इति व्याजोक्तिः ॥ ५२० ॥ ३७ ॥

परिसंख्यां लक्षयति-किञ्चिदिति । किञ्चिद्वस्तु पृष्टमपृष्टं वा कथितं शब्देन प्रतिपादितं सत् ताद‍ृगन्यव्यपोहाय स्वतुल्यान्यवस्तुव्यवच्छेदाय यत्प्रकल्पते पर्यवस्यति सा तु परिसंख्या स्मृतेत्यर्थः । तदन्यनिषेधाय तस्योक्तिः परिसंख्येति फलितम् । ननु अन्यस्य कथनमन्यव्यपोहाय कथं कल्पते इत्यत आह-प्रमाणान्तरेति । शास्त्रपुराणादिमानान्तरेण अवगतं ज्ञातमपि वस्तु शब्देन प्रतिपादितं सत्, प्रयोजनान्तरेति । स्वसदृशवस्त्वन्तरव्यवच्छेदरूपं यत्प्रयोजनं तदपेक्षया यत् प्रयोजनान्तरं तदभावात् व्यवच्छेदाय व्यावृत्तये पर्यवस्यति फलति मानान्तरप्राप्तस्यानुवादो व्यर्थः सन् परिशेषादन्यव्यावृत्तिं फलतीति भावः पृष्टमपृष्टं वेति व्याचष्टे-अत्र चेति । अस्यां परिसंख्यायां, तदन्यथा अप्रश्नपूर्वकम् । तथा च प्रश्नपूर्विकाऽप्रश्नपूर्विकेति द्विविधा परिसंख्येति भावः । सूत्रानुक्तमपि उदाहरणेषु दृष्टं प्रभेदद्वयं पुनराह-तथेति । उभयत्र प्रश्नपूर्वकाप्रश्नपूर्वककथनस्थले व्यपोह्यमानस्य व्यवच्छेद्यस्य प्रतीयमानता व्यङ्ग्यता वाच्यत्वं शाब्दत्वं । तथा चोक्ता द्विविधा प्रतीयमानव्यवच्छेद्या वाच्यव्यवच्छेद्या, चेति चत्वारो भेदा इत्यर्थः । तत्र प्रश्नपूर्विकां प्रतीयमानव्यवछेद्यां परिसंख्यामुदाहरति-किमिति । पुंसां आसेव्यं सेवनीयं किम् द्युसरितो गंगायाः अनवद्यं

किमेकान्ते ध्येयं चरणयुगलं कौस्तुभभृतः ।
किमाराध्यं पुण्यं किमभिलषणीयं च करुणा
यदासक्त्या चेतो निरवधि विमुक्त्यै प्रभवति ॥ ५२१ ॥

किं भूषणं सुदृढमत्र यशो न रत्नं किं कार्यमार्यचरितं सुकृतं न दोषः ।
किं चक्षुरप्रतिहतं धिषणा न नेत्रं जानाति कस्त्वदपरः सदसद्विवेकम्॥५२२॥

कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते ।

---

मनिन्द्यं सविधं समीपं तट एकान्ते ध्येयं किं कौस्तुभभृतो विष्णोः चरणयुगलम् आराध्यं किम् पुण्यं अभिलषणीयं किम् करुणा दया तत्र हेतुमाह येषु द्युसरित्सविधादिषु आसक्त्या प्रीत्या चेतश्चित्तं निरवधिरवधिशून्या या विमुक्तिः सायुज्यरूपा तदर्थं प्रभवति समर्थं भवतीत्यर्थः । अत्र गङ्गातटादेः सेव्यत्वादिकं शास्त्रपुराणादिना सर्वावगतमेवेति न तदवगमायेदं पद्यमुक्तम् किन्तु गङ्गाभिन्ननदीतटादेरसेव्यत्वादिप्रतिपादनाय गङ्गातीरादेः सेव्यत्वादिकमुक्तमिति परिसंख्येयम् अत्र च कथनं किमासेव्यमित्यादि प्रश्नपूर्वकमिति अन्यनदीतटादेः सेव्यत्वादिकं व्यवच्छेद्यं प्रतीयमानमिति च प्रश्नपूर्विका प्रतीयमानव्यवच्छेद्या चेयम् ॥ ५२१ ॥

प्रश्नपूर्विकां वाच्यव्यवच्छेद्यान्तामुदाहरति-किं भूषणमिति । अत्र लोके सुदृढं अविनाशि भूषणं किम् यशः कीर्त्तिरेव न रत्नं कार्यं कर्त्तव्यं किं आर्यचरितं शिष्टसेवितं सुकृतं पुण्यकर्म न दोषः अप्रतिहतं व्यवधानेऽपि ग्राहकं चक्षुः किं धिषणा बुद्धिः न नेत्रम् अभिमतोत्तरदानादाह त्वदपरः त्वदन्यः कः सदसद्विवेकं उत्कृष्टनिकृष्टविभागं जानाति न कोपीत्यर्थः । अत्र यशः प्रभृतेर्भूषणत्वादिकमागमादितः सर्वावगतमेवेति न तदवगमायेदं पद्यमुक्तं किन्तु यशोभिन्नरत्नादेरभूषणत्वादिप्रतिपादनायेति परिसंख्येयम् अत्र च कथनं किं भूषणमित्यादिप्रश्नपूर्वकमिति रत्नादेर्भूषणत्वादिकं व्यवच्छेद्यं वाच्यमिति च प्रश्नपूर्विका वाच्यव्यवच्छेद्या चेयम् ॥ ५२२ ॥

अप्रश्नपूर्विकां प्रतीयमानव्यवच्छेद्यां तामुदाहरति-कौटिल्यमिति । हे प्रेयसि ! ते तव कचनिचये केशसमूहे एव कौटिल्यं वसति न तु हृदये कौटिल्यमत्र वक्रता कपटं च करचरणाधरदलेषु हस्तपादोष्ठपल्लवेष्वेव रागः न परपुरुषे रागोऽत्र रक्तिमा प्रीतिश्च कुचयुगले एव काठिन्यं न हृदये काठिन्यमत्र दृढता निर्दयत्वं च नयनयोरेव तरल·

काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति ॥ ५२३ ॥

भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे ॥

चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम् ॥ ५२४ ॥

**(१८६) यथोत्तरं चेत्पूर्वस्य पूर्वस्यार्थस्य हेतुता।**

**तदा कारणमाला स्यात्,**

उत्तरमुत्तरम्प्रति यथोत्तरम् उदाहरणम्—

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते।

गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः ॥५२५॥

---

त्वं न मनसि तरलत्वमत्र चञ्चलता अविचार्यकारित्वं चेत्यर्थः। अत्र कथनमप्रश्नपूर्वकमिति कौटिल्यादेरितराधिकरणत्वं व्यवच्छेद्यं व्यङ्ग्यमिति चाप्रश्नपूर्विका प्रतीयमानव्यवच्छेद्या चेयम् अत्र श्लेषमूलेयम् ॥ ५२३ ॥

अप्रश्नपूर्विकां वाच्यव्यवच्छेद्यान्तामुदाहरति—भक्तिरिति। प्रायः बहुधा महतां भक्तिरासक्तिः भवे शिवे एव न विभवे ऐश्वर्ये व्यसनं रुचिः शास्त्रे एव न युवतिरूपे कामास्त्रे चिन्ता यशस्येव न वपुषि परिदृश्यत इत्यर्थः। अत्र कथनमप्रश्नपूर्वकमिति भक्त्यादेरितराधिकरणत्वं व्यवच्छेद्यं वाच्यमिति चाप्रश्नपूर्विका वाच्यव्यवच्छेद्या चेयम्। यत्र कविप्रतिभानिर्मिता इतरव्यावृत्तिस्तत्रैवालङ्कारताऽस्याः। तेन पञ्च पञ्च नखा भक्ष्या इत्यादिशास्त्रीयपरिसंख्यायां नालङ्कारत्वम् ॥ इति परिसंख्या ॥ ५२४ ॥ ३८ ॥

कारणमालां लक्षयति—यथोत्तरमिति। उत्तरमुत्तरमर्थम्प्रति पूर्वस्य पूर्वस्यार्थस्य हेतुता चेत्तदा कारणमाला स्यादित्यर्थः। इदमुपलक्षणम् यथापूर्वं परस्य परस्य कारणत्वे इत्यपि बोध्यम्, यथा—

भवन्ति नरकाः पापात् पापं दारिद्र्यसम्भवम्।

दारिद्र्यमप्रदानेन तस्माद्दानपरो भव ॥ इति।

मालादीपके उत्तरोत्तरं प्रति पूर्वपूर्वस्यार्थस्य हेतुत्वेऽपि सर्वेषामेकक्रियान्वयः अत्र तु न तथेति ततो भेदः ॥ उदाहरति—जितेन्द्रियत्वमिति। सप्तमोल्लासे व्याख्यातमिदम्। अत्र जितेन्द्रियत्वाद्विनयः तस्माद्गुणप्रकर्षः तस्माज्जनानुरागस्तस्मात्सम्पद इति पूर्वपूर्वस्योत्तरोत्तरं प्रति कारणत्वात्कारणमाला। नन्वत्र कार्यकारणभावालंकारप्रपञ्चनप्रसङ्गेन हेत्वलङ्कारोऽपि लक्षणार्हः लक्षितश्चायं भट्टोद्भटेन·

हेतुमता सह हेतोरभिधानमभेदतो हेतुरिति हेत्वलंकारो न लक्षितः। आयुर्घृतमित्यादिरूपो ह्येष न भूषणतां कदाचिदर्हति वैचित्र्याभावात्।

अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः।

रम्योऽयमेति संप्रति लोकोत्कंठाकरः कालः ॥ ५२६ ॥

इत्यत्र काव्यरूपतां कोमलानुप्राससमहिम्नैव समाम्नासिषुर्न पुनर्हेत्वलंकारकल्पनयेति पूर्वोक्तकाव्यलिंगमेव हेतुः ॥

**(१८७) क्रियया तु परस्परम् ॥ १२० ॥**

---

त्यत आह-हेतुमतेति। हेतुमता कार्येण सह हेतोः कारणस्याभेदतोऽभेदेनाभिधानं हेतुः हेत्वलङ्कार इत्यर्थः। एवं तन्मतमनूद्य दूषयति-न लक्षित इति। अस्माभिरिति शेषः। कुतो न लक्षित इत्यत्र हेतुमाह-आयुरिति। घृतं हेतुः आयुर्हेतुमत् लक्षणया तयोरभेदः। एषः उपदर्शितहेत्वलङ्कारः भूषणतां अलङ्कारताम्। वैचित्र्याभावादिति। अयंभावः सादृश्याख्यसम्बन्धसत्त्वे एव वैचित्र्यादलङ्कारत्वम् आयुर्घृतमित्यादिरूपस्यास्य कार्यवाचकपदेन कारणभिधाने वैचित्र्याभावेनालङ्कारत्वस्यैवाभाव इति ॥ ५२५ ॥

ननु हेतोरनलङ्कारत्वे अविरलकमलविकास इत्यादौ प्राचां काव्यरूपताऽभिधानं विरुद्धमित्यत आह-अविरलेति। अविरलं निरन्तरं कमलानां विकासरूपः सकलाः सम्पूर्णा येऽलयो भ्रमरास्तेषां मदरूपः कोकिलानामानन्दरूपः। लोकानामुत्कण्ठा कान्तेच्छा तत्करः रम्यो रमणीयः अयं वसन्तरूपः कालः सम्प्रति एति आगच्छतीत्यर्थः। अत्र वसन्तकालो हेतुः शेषा हेतुमन्तः। तथा चात्र कमलविकासादिभिः कार्यैः सह कारणस्य वसन्तकालस्याभेदेनाभिधानात् आयुर्घृतमितिवत् शुद्धसारोपा लक्षणा। एवं चात्र यद्यपि कार्यवाचकपदेन कारणाभिधाने वैचित्र्याभावेनालङ्कारत्वं नास्ति तथापि प्राचां काव्यरूपताभिधानं न विरुध्यते। अनुप्रासादिनैव तत्सम्भवादित्याह-इत्यत्रेति। समाम्नासिषुः उचुः भामहादय इति शेषः। एवकारव्यवच्छेद्यमेवाह-न पुनरिति। तर्हि किं हेत्वलङ्कारो नास्त्येवेत्याशङ्क्याह-पूर्वोक्तेति। पूर्वोक्तं काव्यलिङ्गमेव हेतुर्हेत्वलङ्कार इत्यर्थः [illegible] ॥ ५२६ ॥ ३९ ॥

अन्योन्यं लक्षयति-क्रियेति। क्रियया क्रियाद्वारेण वस्तुनोः पदार्थ-

वस्तुनोर्जननेऽन्योन्यम् ।

अर्थयोरेकक्रियामुखेन परस्परं कारणत्वे सति अन्योन्यनामाऽलंकारः ।

उदाहरणम्—

हंसाणं सरेहिं सिरी सारिज्जइ अह सराण हंसेहिं ।

अण्णोण्णं चिअ एए अप्पाणं णवर गरुअन्ति ॥ ५२७ ॥

अत्रोभयेषामपि परस्परं जनकता मिथः श्रीसारतासम्पादनद्वारेण ।

(१८८) उत्तरश्रुतिमात्रतः ।

प्रश्नस्योन्नयनं यत्र क्रियते तत्र वा सति ॥ १२१ ॥

असकृद्यदसंभाव्यमुत्तरं स्यात्तदुत्तरम् ॥

प्रतिवचनोपलम्भादेव पूर्ववाक्यं यत्र कल्प्यते तदेकं तावदुत्तरम्

---

योः परस्परं मिथो जनने उत्पादने सति यद्वैचित्र्यं चमत्कारस्तत् अन्योन्यमित्यर्थः । वस्तुनोरिति व्याचष्टे—अर्थयोरिति । पदार्थयोरित्यर्थः । क्रिययेति व्याचष्टे—एकेति । एकजातीयक्रियाजननद्वारेणेत्यर्थः । कारणत्वे कारणत्वकल्पने । परस्परं परस्परगतयोरेकजातीयक्रिययोर्जननेऽन्योन्यालङ्कार इति फलितम् उदाहरति—हंसाणमिति ।

हंसानां सरोभिः श्रीः सार्यते अथ सरसां हंसैः ।

अन्योन्यमेव एते आत्मानं केवलं गरयन्ति ॥

इति संस्कृतम् । श्रीः शोभा सार्यते उत्कृष्टा क्रियते गरयन्ति गुरुकुर्वन्ति । अत्र सरोहंसयोः परस्परं शोभासारीकरणरूपोपकारजनकत्वादन्योन्यालङ्कारः । ननु पूर्वसतोर्हंससरसोर्न मिथो जन्यजनकभाव इत्यत आह—अत्रेति । तथा च पूर्वोत्पन्नयोरेवान्योपकारोपरागेणान्योन्यजनकत्वाभिधानमिति लक्षणार्थ इति भावः । एव शशिना च निशा निशया च शशीत्यादावयमेवालङ्कार इति बोध्यमित्यन्योन्यम् ॥ ५२७ ॥ ४० ॥

द्विविधमुत्तरनामानमलङ्कारं लक्षयति—उत्तरेति । यत्र यस्मिन्नलङ्कारे प्रश्नेऽसति उत्तरस्य प्रतिवचनस्य श्रुतिमात्रतः श्रवणमात्रेण प्रश्नस्य पूर्ववाक्यस्य उन्नयनं कल्पनं क्रियते तदेकमुत्तरम् असकृत् अनेकवारं तत्र सति प्रश्ने सति असम्भाव्यं सर्वैरपि दुर्ज्ञेयं असकृत् यदुत्तरं स्यात्तत्पुनरपरमुत्तरमित्यर्थः । उत्तरश्रुतिमात्रत इति व्याचष्टे—प्रतिवचनेति । पूर्ववाक्यं प्रश्नवाक्यं कल्प्यते अनुमीयते तावदिति

उदाहरणम्—

वाणिअअ हत्थिदन्ता कुत्तो अम्हाणं वग्घकित्तीअ ।
जावलुलिआलअमुही घरम्मि परिसक्कए सोण्ह ॥ ५२८ ॥

हस्तिदन्तव्याघ्रकृत्तीनामर्थी ताः मूल्येन पयच्छेति क्रेतुर्वचनम् अमुना वाक्येन समुन्नीयते । नचैतत् काव्यलिंगम् उत्तरस्य ताद्रूप्यानुपपत्तेः । नहि प्रश्नस्य प्रतिवचनं जनको हेतुः । नापीदमनुमानम् एकधर्मिनिष्ठतया साध्यसाधनयोरनिर्देशादित्यलकारान्तरमेवोत्तरं साधीयः । प्रश्नादनन्तरं लोकातिक्रान्तगोचरतया यदसंभाव्यरूपं प्रतिवचनं स्यात्त-

---

वाक्यालङ्कारे । तत्राद्यमुदाहरति-वाणीति ।

वाणिजक ! हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च ।
यावल्लुलितालकमुखी गृहे परिष्वक्कते स्नुषा ॥

इति संस्कृतम् क्रेतारं वणिजम्प्रति जरद्व्याधस्योक्तिः । हे वाणिजक ! हस्तिदन्ताः व्याघ्रकृत्तयः व्याघ्रचर्माणि च अस्माकं कुतः यावत् लुलिताश्चलिताश्चञ्चलाः अलकाः कुटिलकेशा यत्र तादृशं मुखं यस्या एवंविधा स्नुषा पुत्रभार्या गृहे परिष्वक्कते परिभ्रमतीत्यर्थः । वधूसमासक्तो मत्सुतो मृगयार्थं न गच्छतीति व्यज्यते । अत्र हस्तिदन्तव्याघ्रकृत्तीनामहमर्थी मूल्येन ताः प्रयच्छेति क्रेतृवचनमनेनोत्तरवाक्येनानुमीयत इत्युत्तरालङ्कारोऽयम् । तदेवाह-हस्तीति । अस्य प्रश्नरूपत्वाभावेऽपि सूत्रे प्रश्नपदं पूर्ववाक्यमात्रपरमित्यदोषः ॥ केचित्तु हस्तिदन्तादयः किन्तव सन्तीति प्रश्नवाक्यमिहोन्नेयमित्याहुः ।

ननु उत्तरस्य प्रश्नवाक्यं प्रति हेतुत्वात्काव्यलिङ्गमेवैतदित्याशंक्याह-न चैतदिति । ताद्रूप्यानुपपत्तेरिति हेतुत्वानुपपत्तेः अनुपपत्तिमेवोपपादयति-नहीति । हेतुर्द्विधा भवति जनको ज्ञापकश्च । तत्र प्रश्नस्य प्रतिवचनं न जनको हेतुः किन्तु ज्ञापकः । ज्ञापकहेतोश्च न काव्यलिङ्गविषयतेति भावः । ननु तर्हि अनुमानालङ्कारः स्यादित्याशंक्याह-नापीति । एकेति । एको यो धर्मी पक्षस्तन्निष्ठतया साध्यं प्रश्नः क्रेतृवणिग्गततयोन्नीयते साधनमुत्तरन्तु विक्रेतृजरद्व्याधगतमिति नानयोरेकधर्मिनिष्ठतया निर्देश इति भावः ।

तत्र वा सति इत्यादिसूत्रभागं व्याचष्टे-प्रश्नादिति । असम्भाव्यतायां हेतुमाह-लोकेति । प्रमाणान्तरागोचरतया । सूत्रे असकृदित्यस्य

दपरमुत्तरम् अनयोश्च सकृदुपादाने न चारुता प्रतीतिरित्यसकृदित्युक्तम् । उदाहरणम्—

का विसमा देव्वगई किं लद्धं जं जणो गुणग्गाही ।

किं सोक्खं सुकलत्तं किं दुक्ख जं खलो लोओ ॥ ५२९ ॥

प्रश्नपरिसंख्यायामन्यव्यपोहे एव तात्पर्यम् इह तु वाच्ये एव विश्रान्तिरित्यनयोर्विवेकः ॥

**(१८९) कुतोऽपि लक्षितः सूक्ष्मोऽप्यर्थोऽन्यस्मै प्रकाश्यते ॥ १२२॥**
**धर्मेण केनचिद्यत्र तत्सूक्ष्मं परिचक्षते ।**

कुतोऽपि आकारादिङ्गिताद्वा सूक्ष्मस्तीक्ष्णमतिसंवेद्यः, उदाहरणम्—

वक्त्रस्यंदिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुंकुमं कापि कंठे ।

---

प्रश्नोत्तरयोर्द्वयोरप्यन्वयमभिप्रेत्याह—अनयोश्चेति । प्रश्नप्रतिवचनयोः । न चारुतेति । तत्प्रयोजकस्यैवालङ्कारत्वादिति भावः । द्वितीयमुत्तरमुदाहरति—काविसमेति ।

का विषमा दैवगतिः किं लब्धव्यं यज्जनो गुणग्राही ।

किं सौख्यं सुकलत्रं किं दुःखं यत्खलो लोकः ॥

इति संस्कृतम् । विषमा कठिना । अत्र का विषमेत्यादिरूपेऽसकृत्प्रश्ने सति लोकातिक्रान्तगोचरतयाऽसम्भाव्यरूपं दैवगतिरित्यादि असकृत्प्रतिवचनमिति द्वितीयः उत्तरालङ्कारः । नन्वत्र प्रश्नोत्तरयोर्नियमात्प्रश्नपरिसंख्यैवेयं स्यादित्याशङ्क्याह—प्रश्नेति । प्रश्नपूर्विकायां परिसंख्यायाम् व्यपोहे व्यवच्छेदे तात्पर्यम् । वाच्यस्य प्रमाणान्तरप्राप्तत्वादिति भावः । इह तु अत्र तु । वाच्ये एव वाच्यार्थे एव अत्र तु निगूढविषयतया वाच्यार्थे एव तात्पर्यविश्राम इति भावः । अनयोः प्रश्नपरिसंख्योत्तरयोः । विवेको भेदः ॥ इत्युत्तरम् ॥ ४१ ॥

सूक्ष्मं लक्षयति—कुतोऽपीति । यत्रालङ्कारे सूक्ष्मः सहृदयैकवेद्योऽप्यर्थः कुतोपि कस्मादपि ज्ञापकात् लक्षितो वितर्कितः केनचित्स्मारकेण धर्मेण अन्यस्मै स्वाभिप्राय प्रकाश्यते तत् सूक्ष्मालङ्कारं परिचक्षते कथयन्तीत्यर्थः । कुतोऽपीति व्याचष्टे—आकारादिङ्गिताद्वेति । आकारः रूपादेरन्यथात्वं संस्थानविशेषो वा इङ्गितं चेष्टाविशेषः नेत्रभंग्यादिरूपक्रियाविशेषो वा अभिप्रायानुरूपचेष्टितम्वा । तथा च आकारालक्षितस्य प्रकाशनम् इङ्गिताल्लक्षितस्य प्रकाशनं चेति द्विविधोऽयं सूक्ष्मालङ्कारः । तत्राद्यमुदाहरति—वक्त्रेति । कापि विदग्धा वयस्या सखी

पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गलेखां लिलेख ॥ ५३० ॥

अत्राकृतिमवलोक्य कयाऽपि वितर्कितं पुरुषायितं असिलतालेखनेन वैदग्ध्यादभिव्यक्तिमुपनीतम् पुंसामेव कृपाणपाणितायोग्यत्वात् । यथा वा—

संकेतकालमनसं विटं ज्ञात्वा विदग्धया ।
ईषन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥ ५३१ ॥

अत्र जिज्ञासितः संकेतकालः कयाचिदिङ्गितमात्रेण विदितो निशासमयशंसिना कमलनिमीलनेन लीलया प्रतिपादितः ॥

---

वक्त्रान्नायिकामुखात् स्यन्दिनः स्रुतस्य स्वेदस्य बिन्दूनां प्रबन्धैस्ततिभिः कण्ठे कुङ्कुमं केशरं भिन्नं भेदं प्रापितं दृष्ट्वा स्मित्वा विहस्य तन्व्याः तन्नायिकायाः पुंस्त्वं पुरुषायितं रात्रौ विपरीतसुरते व्यञ्जयन्ती सती पाणौ नायिकाहस्ते खड्गरेखां लिलेख । स्त्रीहस्ते चन्दनादिभिरलङ्कारार्थं लतापत्रावल्ल्यादिलिखनं सम्प्रदायसिद्धमपि तद्विहाय तस्याः पुरुषायितं सूचयितुं पुरुषहस्ते लेखनीयां खड्गरेखां लिलेखति भावः । प्रसिद्धरतौ उत्तानाया वक्त्राद्गलितस्य स्वेदस्य पृष्ठभाग एव गमनम् कण्ठे तद्गमनन्तु विपरीतरतावेवेति वक्त्रस्यन्दीत्यादेरभिप्रायः । अत्र विपरीतरतिप्रसक्ताया वक्त्रस्यन्दिस्वेदात् कण्ठकुङ्कुमभेदः परं भवतीति कण्ठकुङ्कुमभेदलक्षणेनाकारेण लक्षितं तीक्ष्णमतिवेद्यतया सूक्ष्मं पुरुषायितं सख्या नायिकाहस्ते खड्गलेखालिखनेन धर्मेण वैदग्ध्यान्नायिकायै वयस्यान्तरेभ्यो वा प्रकाशितमिति—सूक्ष्मालङ्कारः । तदेतत्सर्वं वृत्तिकार आह—अत्रेति । आकृतिं कण्ठे स्वेदकृतकुङ्कुमभेदरूपाम् ॥ ५३० ॥

द्वितीयमुदाहरति—सङ्केतेति । विदग्धया चतुरया उपनायिकया ईषत्स्वल्पं यथा तथा नेत्राभ्यामर्पितं सूचितं आकूतं रहस्यं येन तादृशं विटं जारं सङ्केतकाले मनो यस्य तादृशं ज्ञात्वा लीलापद्मं क्रीडासम्बन्धि कमलं निमीलितं सङ्कोचितमित्यर्थः । अत्र नेत्रेङ्गितेन लक्षितः तीक्ष्णमतिवेद्यतया सूक्ष्मः कामिनः सङ्केतकालाभिलाषः कामिन्याः निशासूचकेन पद्मनिमीलनेन विटाय लीलया प्रकाशित इति सूक्ष्मालङ्कारः । तदेतदाह—अत्रेति । इति सूक्ष्मम् ॥ ५३१ ॥ ४२ ॥

**(१९०) उत्तरोत्तरमुत्कर्षो भवेत्सारः परावधिः ॥ १२३ ॥**

परः पर्यन्तभागोऽवधिर्यस्य धाराधिरोहितया तत्रैवौत्कर्षस्य विश्रान्तेः । उदाहरणम्—

राज्ये सारं वसुधा वसुधायां पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनाऽनङ्गसर्वस्वम् ॥ ५३२ ॥

**(१९१) भिन्नदेशतयात्यन्तं कार्यकारणभूतयोः ।**
**युगपद्धर्मयोर्यत्र ख्यातिः सा स्यादसंगतिः ॥ १२४ ॥**

इह यद्देशं करणं तद्देशमेव कार्यमुत्पद्यमानं दृष्टं यथा धूमादि यत्र तु हेतुफलरूपयोरपि धर्मयोः केनाप्यतिशयेन नानादेशतया युगपदवभासनम् सा तयोः स्वभावोत्पन्नपरस्परसंगातित्यागादसंगतिः । उदाहरणम्—

जस्सेअ वणो तस्सेअ वेअणा भणइ तं जणो अलिअम् ।
दन्तक्खअं कवोले वहूए वेअणा सवत्तीणम् ॥ ५३३ ॥

---

सारं लक्षयति—उत्तरोत्तरमिति । उत्तरोत्तरं यथा स्यात्तथा परः काव्यपर्यन्तभागोऽवधिश्चरमसीमा यस्य तथाविधः उत्कर्षो यत्र प्रतीयते स सारालङ्कारो भवेदित्यर्थः । पर्यन्तभागः वाक्यानां शेषांशः धाराधिरोहितया प्रवाहरूपेण तत्रैव पर्यन्तभागे एव उत्तरोत्तरमधिकतया वर्णनीयस्योत्कर्षस्य वाक्यशेषांशरूपचरमसीमागामित्वेऽयमलङ्कार इति भावः । उदाहरति राज्ये इति । राज्ये वसुधा पृथिवी सारं श्रेष्ठम् पुरं नगरं इत्येवमन्वयः । अत्र पूर्वपूर्वापेक्षयोत्तरोत्तरस्योत्कर्षः चरमस्य सर्वोत्कृष्टत्वपर्य्यवसन्न इति सारालंकारः ॥ ४३ ॥

असङ्गतिं लक्षयति—भिन्नेति । यत्र कार्यकरणाभूतयोर्धर्मयोरत्यन्तं भिन्नदेशतया युगपदेककाले ख्यातिः कथनं साऽसङ्गतिः । सूत्रं व्याचष्टे-इहेति । इह लोके यद्देशमिति । यथा शैलस्थो वह्निः शैलस्थमेव धूमं जनयति । केनापीति । केनापि विशेषेण कारणगतं कमपि विशेषं प्रतिपादयितुं ख्यातिरित्यस्यार्थमाह-अवभासनमिति । असङ्गतिरिति संज्ञाया अन्वर्थतां दर्शयति तयोरिति । कार्यकारणयोः स्वभावोत्पन्ना स्वाभाविकी या सङ्गतिः एकदेशत्वलक्षणः सम्बन्धस्तस्यास्त्यागादित्यर्थः । उदाहरति—जस्से इति ।

एषा च विरोधबाधिनी न विरोधः भिन्नाधारतयैव द्वयोरिह विरोधितायाः प्रतिभासात् विरोधे तु विरोधित्वं एकाश्रयनिष्ठमनुक्तमपि पर्यवसितम् अपवादविषयपरिहारेणोत्सर्गस्य व्यवस्थितेः तथा चैवं निदर्शितम् ।

**(१९२) समाधिः सुकरं कार्यं कारणान्तरयोगतः ।**

साधनान्तरोपकृतेन कर्त्रा यदक्लेशेन कार्यमारब्धं समाधीयते स

---

यस्यैव व्रणस्तस्यैव वेदना भणति तज्जनोऽलीकम् ।
दन्तक्षतं कपोले वध्वा वेदना सपत्नीनाम् ॥

इति संस्कृतम् तस्यैव वेदनेति यज्जनो भणति तदलीकमनृतम् । वध्वा नवोढायाः कपोले दन्तक्षतं सपत्नीनां वेदनेत्यर्थः । अत्र वध्वाः कपोले स्वामिकृतदन्तक्षतादिः सपत्नीनामतीव क्लेशदायकः इत्यर्थविशेषप्रतिपत्तये वेदनादन्तक्षतयोः कार्यकारणयोर्भिन्नदेशताऽभिधानमिति वैयधिकरण्यरूपाऽसङ्गतिरलङ्कारः । नन्वत्र विरोधाभास एवास्तु अनुपपत्तिर्हि विरोधः सा च भिन्नदेशकयोरेकदेशकत्वे इव एकदेशकयोर्भिन्नदेशकत्वेऽपि समानेति पूर्वपक्षं निराकरोति—एषा चेति । विरोधबाधिनी विरोधाभासबाधिका न विरोधः न विरोधाभासः । तत्र हेतुमाह—भिन्नेति । भिन्नदेशकत्वेनैव द्वयोः कार्यकारणयोः इह असङ्गत्यलंकारे विरोधितायाः अनुपपत्तिरूपविरोधस्य प्रतिभासात् स्फूर्तेः विरोधे तु विरोधाभासे तु एकाश्रयनिष्ठं भिन्नदेशकयोरेकदेशकत्वप्रयुक्तं अनुक्तमपि विरोधाभासलक्षणे इति शेषः पर्यवसितं फलितम् पर्यवसाने हेतुमाह—अपवादेति । अपवादो विशेषस्तस्य विषयः स्थलं तत्परिहारेण तत्त्यागेनैव उत्सर्गस्य सामान्यस्य व्यवस्थितेः व्यवस्थितत्वात् 'प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशत' इति न्यायात् । तथाचैवमिति । भिन्नदेशकयोरेकदेशकत्वप्रयुक्तो विरोध इत्यर्थः । निदर्शितम् विरोधाभासोदाहरणतयाऽस्माभिरिति शेषः ॥ अयंभावः, एकदेशकयोर्भिन्नदेशकत्वे एवासङ्गतिः संभवति विरोधाभासस्तु अन्यत्रापीति चमत्कारान्तरविधायिनी विशेषरूपासंगतिः सामान्यविशेषन्यायेन विरोधाभासं बाधते अत एव विरोधाभासोदाहरणानि भिन्नदेशकयोरेकदेशकत्वे एव पूर्वन्दत्तानीति । इत्यसङ्गतिः ॥ ५२२ ॥ ४४ ॥

समाधिं लक्षयति समाधिरिति । यत्रालंकारे कारणान्तरयोगतः हेत्वन्तरयोगात् कार्यं सुकरं सुकरत्वेन विवक्षितं स समाधिरित्यर्थः ।

समाधिर्नाम उदाहरणम्—

मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम् ॥ ५३४ ॥

**(१९३) समं योग्यतया योगो यदि सम्भावितः क्वचित् १२५॥**

इदमनयोः श्लाघ्यमिति योग्यतया सम्बन्धस्य नियतविषयमध्यवसानं चेत्तदा समम्, तत्सद्योगेऽसद्योगे च। उदाहरणम्—

धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी
रूपे देवोऽप्ययमनुपमो दत्तपत्रः स्मरस्य।
जातं दैवात्सदृशमनयोः संगतं यत्तदेतत्
शृंगारस्योपनतमधुना राज्यमेकातपत्रम् ॥ ५३५ ॥

---

सूत्रं व्याचष्टे साधनेति। आरब्धं कार्यं साधनान्तरोपकृतेन कर्त्रा अक्लेशेन यत्समाधीयते सम्यक् सुकरत्वेन क्रियते स समाधिः। यत्रैकमेव कारणं प्रधानतया विवक्षितं अपरञ्च सहकारितया तत्रैवायमलङ्कारः उभयोः प्राधान्ये विवक्षिते समुच्चय इति। उदाहरति—मानमिति। अस्या मानं निराकर्तुं अपगमयितुं नायिकायाः पादयोः पतिष्यतो मे मम उपकाराय दिष्ट्या भाग्येन इदं घनगर्जितं उदीर्णमुद्भूतमित्यर्थः। अत्र पादपतनरूपकारणेन आरब्धस्य मानापगमरूपकार्यस्य आकस्मिकघनगर्जितरूपकारणान्तरयोगेन सुकरत्वात्समाधिः। घनगर्जितस्य कामोद्दीपकत्वेन मानापगमहेतुत्वम्। इति समाधिः ॥ ५३४ ॥ ४५ ॥

समं लक्षयति—सममिति। क्वचिद्योगो वस्तुविशेषयोः सम्बन्धः यदि योग्यतया औचित्येन सम्भावितः लोकसम्मतस्तदा समं समनामालङ्कारः। सूत्रं व्याचष्टे इदमिति। नियतविषयं नियतौ विषयौ यस्य तादृशं निश्चयरूपं अध्यवसानं प्रतीतिः। वर्णनीयद्वयं विषयीकृत्यानयोरिदं श्लाघ्यमिति ज्ञानं चेज्जायते तदाऽयमलङ्कारः। अनुरूपयोर्योगो हि श्लाघ्यःस च सतोरिव असतोरपि सम्भवतीत्याह तदिति। योगः संयोगादिरूपः कार्यकारणभावश्च। तत्र सद्योगे उदाहरति—धातुरिति। एषा मृगाक्षी धातुर्ब्रह्मणः यत् शिल्पं निर्माणकौशलं तदतिशयस्य तदुत्कर्षस्य निकषस्थानं परीक्ष्योपलरूपा अतिसुन्दरी अनुपमोऽयं तस्या भर्ता देवो-राजापि रूपे रूपविषये सम-

चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रम्,
जातो दैवादुचितरचनासंविधाता विधाता ।
यन्निम्बानां परिणतफलस्फीतिरास्वादनीया
यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥ ५३६ ॥

(१९४) क्वचिद्यदतिवैधर्म्यान्न श्लेषो घटनामियात् ।
कर्तुः क्रियाफलावाप्तिर्नैवानर्थश्च यद्भवेत् ॥ १२६ ॥
गुणक्रियाभ्यां कार्यस्य कारणस्य गुणक्रिये ।
क्रमेण च विरुद्धे यत्स एष विषमो मतः ॥ १२७ ॥

---

राय दत्तं पत्रं पत्रावलम्बनं येन तादृशः स्मराधिकरूपः यदनयोः मृगाक्षीदेवयोः सदृशं सङ्गतं योगो मेलनं समागमो वा दैवाज्जातं तदेतत् शृङ्गारस्य शृङ्गाररसस्य एकातपत्रं एकच्छत्रं राज्यमधुना उपनतं प्राप्तमित्यर्थः । अत्र मृगाक्षीदेवयोः सतोर्योगस्यौचित्यवर्णनात्समालंकारः ॥ ५३५ ॥

असद्योगे सममुदाहरति-चित्रमिति । चित्रबतशब्दयोर्वीप्सा विस्मयातिशयद्योतनाय विधाता ब्रह्मा दैवाददृष्टयोगात् उचिताया रचनायाः संविधाता कर्त्ता जातः । यत् निम्बानां परिणतानि पक्कानि यानि फलानि तेषां स्फीतिः सम्पत्समृद्धिः आस्वादनीया इदं चित्रं चित्रम् यच्चैतस्याः फलसम्पदः कवलनकला भक्षणचातुरी तत्र कोविदः पंडितः काकरूपो लोकः एतन्महच्चित्रमित्यर्थः । अत्र निम्बकाकयोर्द्वयोरपि निकृष्टतयोचितयोग इति समालङ्कारः ॥ इति समम् ॥ ५३६ ॥ ४६ ॥

विषमं चतुर्धा लक्षयति-क्वचिदिति । क्वचित् यत्सम्बन्धिनोः अतिवैधर्म्यात् अत्यन्तवैसादृश्यात् श्लेषः सम्बन्धः घटनां श्लाघ्यत्वरूपामुपपद्यमानतां न इयात् नागेति किन्त्वनुपपद्यमानतयैव प्रतीयते स एको विषमः । यत्र कर्त्तुः क्रियाया व्यापारस्य यत्फलं तस्यावाप्तिः प्राप्तिर्नैव भवेत् प्रत्युत अनर्थश्च भवेत् स द्वितीयः । कार्यस्य गुणक्रियाभ्यां कारणस्य गुणक्रिये विरुद्धे क्रमेण यत् कार्यस्य गुणेन कारणस्य गुणो विरुद्धो भवेत् स तृतीयः । यत्कार्यस्य क्रियया कारणस्य क्रिया विरुद्धा भवेत् स चतुर्थ इत्यर्थः सर्वत्र समताया विप

द्वयोरत्यन्तविलक्षणतया यत् अनुपपद्यमानतयैव योगः प्रतीयते (१)यच्च किंचिदारभमाणः कर्त्ता क्रियायाः प्रणाशात् न केवलमभीष्टं यत्फलं न लभेत यावदप्रार्थितमप्यनर्थं विषयमासादयेत् (२)तथा सत्यपि कार्यस्य कारणरूपानुकारे यत् तयोर्गुणौ क्रिये च परस्परं विरुद्धतां व्रजतः (३,४)स समविपर्ययात्मा चतूरूपो विषमः । क्रमेणोदाहरणम् ।

शिरीषादपि मृद्वङ्गी क्वेयमायतलोचना ।
अयं क्व च कुकूलाग्निकर्कशो मदनानलः ५३७ ॥

सिंहिकासुतसंत्रस्तः शशः शीतांशुमाश्रितः
जग्रसे साश्रयं तत्र तमन्यः सिंहिकासुतः ॥ ५३८ ॥

---

वैयाद्विषमत्वम् । सूत्रं व्याकुर्वन्क्वचिदित्यादि व्याचष्टे–द्वयोरिति । सम्बन्धिनोरित्यर्थः। अतिवैधर्म्यादित्यस्यार्थमाह–अत्यन्तविलक्षणतयेति । श्लेषपदार्थमाह–योग इति । सम्बन्ध इत्यर्थः । कर्त्तुरित्यादि व्याचष्टे–यच्चेति । प्रणाशात् उद्देश्यफलजननासामर्थ्यात् यावत् किन्तु अप्रार्थितमपि मनसाऽनास्वादितमपि । गुणेत्यादि व्याचष्टे–तथेति । किञ्चेत्यर्थः कारणरूपानुकारे कारणरूपस्यानुकारेऽनुकरणे सादृश्ये औत्सर्गिके इति शेषः जनकानुरूपमेव जन्यमिति नियमात् न हि कदाचिदपि भेकसुतो गगनोड्डयनाय प्रभवति काकशिशुर्वा शुक्लीभवितुम् । तयोः कार्यकारणयोः परस्परं क्रमेणेति शेषः विषमपदार्थमाह–समेति । समालङ्कारविपर्यासस्वरूपः । चतूरूपः चतुर्विधः । तत्र प्रथमं विषममुदाहरति–शिरीषादिति । शिरीषात् कपीतनपुष्पादपि मृद्वङ्गी इयमायतलोचना क्व कुकूलाग्निरिव कर्कशो दुःसहः अयं मदनानलः मन्मथाग्निः क्वेत्यर्थः । अत्र नायिकामदनानलयोरत्यन्तवैलक्षण्यात्तयोः सम्बन्धोऽनुपपद्यमानतयैव क्वशब्दद्वयेन प्रतीयत इति–विषमालङ्कारः ॥५३७॥

द्वितीयं विषममुदाहरति–सिंहिकेति । सिंहिकासुतः सिंहशावस्तस्मात्सन्त्रस्तो भीतः शशो मृगविशेषः स्वरक्षार्थं शीतांशुमाश्रितः तत्र अन्यो द्वितीयः सिंहिकासुतो राहुः साश्रयं सचन्द्रं तं शशं जग्रसे भक्षयामासेत्यर्थः । अत्रेष्टसाधने प्रवृत्तस्य शशस्य विपरीतानर्थप्राप्तिरूपो विषमालङ्कारः । अत्र शशः कर्त्ता शीतांशवाश्रयणं क्रिया । सिंहिकासुतात्त्राणं फलं अन्येन साश्रयग्रासोऽनर्थ इति बोध्यम् ॥५३८॥

सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा ।
तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोक्याभरणं प्रसूते ॥५३९॥

आनन्दममन्दमिमं कुवलयदललोचने ! ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥ ५४० ॥

अत्रानन्ददानं शरीरतापेन विरुध्यते । एवं—

विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुनः स पुरस्त्रियैकतमयैकया दृशा ॥५४१॥

इत्यादावपि विषमत्वं यथायोगमवगन्तव्यम् ।

---

तृतीयमुदाहरन्ति—सद्य इति । तमालवन्नीला कृपाणलेखा यस्य राज्ञः करस्पर्शमवाप्य सद्यस्तत्कालं रणे रणे प्रतिसंग्रामं शरदिन्दुवत्पांडु शुभ्रं त्रिलोक्या आभरणभूतं यशः कीर्त्तिं प्रसूते जनयति एतच्चित्रमित्यर्थः । अत्र कार्यकारणयोर्यशःकृपाणयोः पांडुरनीलाख्यौ गुणौ विरुद्धाविति विषमालङ्कारः ॥५३९॥

चतुर्थमुदाहरति—आनन्दमिति । हेकुवलयदललोचने ! त्वमिममन्दमनल्पमानन्दं ददासि त्वयैव जनितो विरहः मे शरीरं अत्यन्तं तापयतीत्यर्थः । अत्र नायिकाविरहयोर्जन्यजनकयोः आनन्ददानतापनक्रिये विरुद्धे इति विषमालङ्कारः । न चात्रासंगतिर्विरोधो वा विरोधे विरोधिनोः सामानाधिकरण्यस्य असंगतौ कार्यकारणयोर्वैयधिकरण्यस्य चमत्कारप्रयोजकता अत्र तु कार्यकारणवृत्तिविजातीयक्रियागुणयोगस्य चमत्कारितेति विशेषात् ॥५४०॥

सूत्रे विभाग उपलक्षणपरस्तेन सम्बन्धिनोरानुगुण्याभावात्मकस्य विषमस्यान्येऽपि भेदाः सम्भवन्ति तत्रावयवावयविनोर्वैषम्ये यथा— विपुलेनेति । सागरशयस्य यस्य विष्णोः कृष्णस्य विपुलेन विस्तृतेन कुक्षिणा उदरेण कर्त्रा युगक्षये प्रलयकाले भुवनानि चतुर्दशजगन्ति पपिरे जग्रसिरे स पुनः सोऽपि कृष्णः एकतमया कयाचित् पुरस्त्रिया नगरकामिन्या कर्त्र्या मदेन विभ्रमः शोभातिशयो यस्यां सा चासावसकलाऽसंपूर्णा च तथाभूतया दृशा चक्षुःकोणमात्रेण पपे पीतः सादरमवलोकित इत्यर्थः । अत्र कुक्षिशरीरयोरवयवावयविनोर्योगवैषम्यं पानकर्तृत्व-पानकर्मत्वरूपं पानपदार्थयोर्भेदेऽपि अभेदोपचारेण विषमत्वमिति विषमम् ॥ ५४१ ॥ ४१ ॥

**(१९५) महतोर्यन्महीयांसावाश्रिताश्रययोः क्रमात् ।**
**आश्रयाश्रयिणौ स्यातां तनुत्वेऽप्यधिकं तु तत् ॥१२८॥**

आश्रितमाधेयम् आश्रयस्तदाधारः तयोर्महतोरपि विषये तदपेक्षया तनू अप्याश्रयाश्रयिणौ प्रस्तुतवस्तुप्रकर्षविवक्षया यथाक्रमं यत् अधिकतरतां व्रजतः तदिदं द्विविधम् अधिकं नाम, क्रमेणोदाहरणम्—

अहो विशालं भूपाल ! भुवनत्रितयोदरम् ।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥ ५४२ ॥

युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाशमासत ।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः ॥५४३॥

**(१९६) प्रतिपक्षमशक्तेन प्रतिकर्तुं तिरस्क्रिया ।**
**या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते ॥ १२९ ॥**

---

**द्विविधमधिकं लक्षयति**—महतोरिति । **महतोर्विशालयोराश्रिताश्रययोः आधेयाधारयोः सतोः आश्रयाश्रयिणौ आधाराधेयौ तनुत्वेऽपि अल्पत्वेऽपि क्रमात् यन्महीयांसौ स्यातां महीयस्तया वर्ण्येते तद्द्विविधमधिकमित्यर्थः । सूत्रं व्याचष्टे**—आश्रितमिति । **विषये सम्बन्धे सति तदपेक्षया आश्रिताश्रयापेक्षया तनू अपि अल्पावपि प्रस्तुतेति वर्णनीयवस्तूत्कर्षं बोधयितुम्**—अधिकेति । **महीयस्तया वर्ण्येते । तत्राधारस्य महत्ववर्णनरूपमधिकमुदाहरति**-अहो इति । **हे भूपाल ! भुवनत्रितयोदरं विशालं विस्तृतम् अहो आश्चर्यम् यत् यस्मात् अत्र भुवनत्रितयोदरे मातुमशक्योऽपि ते यशोराशिः माति अवकाशं लभते इत्यर्थः । अत्राश्रयस्य भुवनत्रितयस्य महत्तया वर्णनादधिकम् ॥५४२॥**

**आधेयस्य महत्ववर्णनरूपं द्वितीयमुदाहरति**—युगान्तेति । **युगान्तकाले प्रतिसंहृता आत्मन्युपसंहृता आत्मानो जीवा येन तादृशस्य कैटभद्विषः श्रीकृष्णस्य यस्यां तनौ शरीरे जगन्ति चतुर्दश भुवनानि सविकाशं सावकाशं यथा तथा आसत उपविशन्तिस्म तत्र तस्यां तनौ तपोधनस्य नारदस्यागमेन सम्भवाः तज्जन्या मुदः प्रीतयः न ममुः नावकाशं प्रापुरित्यर्थः । अत्राधेयभूताया मुदो महत्तया वर्णनादधिकमित्यधिकम् ॥ ५४३ ॥ ४८ ॥**

**प्रत्यनीकं लक्षयति**—प्रतिपक्षमिति । **प्रतिपक्षं शत्रुं प्रतिकर्तुं अपकर्तुं अशक्तेन केनापि कर्त्रा तत्स्तुत्यै तस्य प्रतिपक्षस्योत्कर्षाय या तदीयस्य प्रतिपक्षसम्बन्धिनोऽन्यस्य तिरस्क्रिया तत्प्रत्यनीकम् उच्यते**

न्यक्कृतपरमपि विपक्षं साक्षान्निरसितुमशक्तेन केनापि यत् तमेव प्रतिपक्षमुत्कर्षयितुं तदाश्रितस्य तिरस्करणम् तदनीकप्रतिनिधितुल्यत्वात्प्रत्यनीकमभिधीयते यथाऽनीकेऽभियोज्ये तत्प्रतिनिधिभूतमपरं मूढतया केनचिदभियुज्यते तथेह प्रतियोगिनि विजेये तदीयोऽन्यो विजीयते इत्यर्थः। उदाहरणम्—

त्वं विनिर्जितमनोभवरूपः सा च सुन्दर! भवत्यनुरक्ता।
पञ्चभिर्युगपदेव शरैस्तां तापयत्यनुशयादिव कामः॥ ५४४॥

यथा वा—

यस्य किंचिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः।
कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनाऽपि बाधते॥५४५॥

इन्दोरत्र तदीयता सम्बन्धिसम्बन्धात्॥

---

इत्यर्थः। सूत्रं व्याचष्टे—न्यक्कृतेति। अपकारिणमपि निरसितुमपकर्तुं। तत्स्तुत्यै इति व्याचष्टे—तमेवेति। प्रतिपक्षोत्कर्षफलकम् तदाश्रितस्य प्रतिपक्षाश्रितस्य। कथं तत्प्रत्यनीकमित्याह—अनीकेति। प्रत्यनीकशब्देन सैन्यप्रतिनिधिरुच्यते तत्साम्यात् प्रकृतार्थलक्षणया प्रयोगः। साम्यमेवोपपादयन् अनीकेत्यादि स्वोक्तमेव विवृणोति—यथेति। अभियोज्ये पीडनीये सति अशक्तेनेति शेषः तत्प्रतिनिधिभूतं तन्मित्रादिभूतं मूढतया मूर्खतया अभियुज्यते पीड्यते प्रतियोगिनि शत्रौ विजेये जेतव्ये सति अशक्तेनेति शेषः तदीयः प्रतियोगिसम्बन्धी विजीयते अभिभूयते।

तदीयत्वं चात्र द्विविधं साक्षात्सम्बन्धेन परंपरासम्बन्धेन च। तत्राद्यमुदाहरति—त्वमिति। नायकं प्रति नायिकासख्या उक्तिः। हे सुन्दर! त्वं विनिर्जितमनोभवरूपः जितकामसौन्दर्यः सा च कामिनी भवति त्वय्येवानुरक्ता अतः कामोऽनुशयात् द्वेषादिव पञ्चभिरपि शरैः युगपदेव तां कामिनीं तापयतीत्यर्थः। अत्र स्वरूपनिर्जयेन स्वशत्रुभूतं नायकं जेतुमशक्तेन कामेन तत्प्रतिनिधिभूतायाः तदीयकामिन्याः पीडनात्प्रत्यनीकः। नायकयोः साक्षादेवात्र स्वस्वामिभावः सम्बन्धः॥५४४॥

द्वितीयमुदाहरति यस्येति। कायस्य शरीरावयवस्य शिरसः निग्रहेण छेदनेन गृहीतोऽङ्गीकृतो विग्रहो विरोधो येन तथाविधः कृती विचक्षणः वैरनिर्यातने कुशलः राहुर्यस्य श्रीकृष्णस्य किञ्चित् स्वल्प-

(१९७) समेन लक्ष्मणा वस्तु वस्तुना यन्निगह्यते ।
निजेनागन्तुना वापि तन्मीलितमिति स्मृतम् ॥१३०॥

सहजमागन्तुकम्वा किमपि साधारणं यत् लक्षण तद्द्वारेण यत्किंचित् केनचिद्वस्तुना वस्तुस्थित्यैव बलीयस्तया तिरोधीयते तन्मीलितमिति द्विधा स्मरन्ति, क्रमेणोदाहरणम्—

अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरो
विलासभरमन्थरा गतिरतीव कान्तं मुखम् ।
इति स्फुरितमङ्गके मृगदृशः स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥ ५४६ ॥

---

मपि अपकर्तुमक्षमः सन् कान्तं कमनीयं यद्वक्त्र अर्थात् श्रीकृष्णस्य तेन सदृशी आकृतिर्यस्य तथाभूतमिन्दुं अधुनापि बाधत इत्यर्थः । अत्र स्वकायनिग्रहेण स्वशत्रुभूतं कृष्णं जेतुमसमर्थेन राहुणा कृष्णसम्बन्धिन इन्दोः पीडनात्प्रत्यनीकः । कथमिन्दोस्तदीयत्वमत आह–इन्दोरिति । कृष्णसम्बन्धिनो मुखस्य सम्बन्धात् उपमानोपमेयभावसम्बन्धादिति परंपरासम्बन्धेन तदीयत्वमिति भावः । इति प्रत्यनीकम् ॥ ४९ ॥

मीलितं लक्षयति–समेनेति । निजेन वस्तुस्वभावसिद्धेन आगन्तुना निमित्तविशेषसंपर्कजनितेन वा समेन साधारणेन लक्ष्मणा चिह्नेन वस्तु यत्किञ्चिद्वस्तु वस्तुना वस्तुगत्या स्वभावतः यन्निगूह्यते अन्तर्धीयते तन्मीलितं स्मृतमित्यर्थः । सूत्रं व्याकुर्वन् विशदार्थमाह–सहजमिति । वस्तुनेति पदं लाक्षणिकमिति मनसि निधाय व्याचष्टे–वस्तुस्थित्यैवेति । बलीयस्तया प्रबलतया । द्विधेति । लक्ष्मणः स्वाभाविकत्वात् क्वचिदागन्तुकत्वाच्च द्विविधं मीलितमित्यर्थः । तत्र स्वाभाविकेन लक्ष्मणा मीलितमुदाहरति–अपाङ्गेति । अपाङ्गः प्रान्तस्तरलश्चञ्चलः ययोस्तादृशे दृशौ नेत्रे मधुराः कोमलाः वक्राः वक्रोक्तिसम्पर्का वर्णा यासु तथाभूताः गिरः उक्तयः । विलासभरेण विलासातिशयेन मन्थरा मन्दा गतिः अतीव कान्तं अत्यन्तमनोहरं मुखम् इति एवं प्रकारेण मृगदृशः कामिन्याः अङ्गके कोमलाङ्गे लीलया स्वतः स्फुरितं स्वभावादेवोल्लसितं तत् तस्मात् अत्र अङ्गके कृतं पदं स्थानं येन तादृशोऽपि मदस्य मधुपानजन्यस्योदयो न संलक्ष्यते न ज्ञायत इत्यर्थः । अत्र सहजलीलाजन्यत्वात् स्वाभाविकं दृक्तरलतादिकमङ्गनिष्ठं लिङ्गं तच्च लीलामदसाधारणम् एवं च प्रसिद्धतया बलिष्ठेन

अत्र दृक्तरलतादिकमङ्गस्य लिङ्गं स्वाभाविकं साधारणं च मदोदयेन तत्राप्येतस्य दर्शनात् ।

ये कन्दरासु निवसन्ति सदा हिमाद्रे-
स्त्वत्पातशंकितधियो विवशा द्विषस्ते ।
अप्यङ्गमुत्पुलकमुद्वहता सकम्पं
तेषामहो बत भियां न बुधोऽप्यभिज्ञः ॥ ५४७ ॥

अत्र तु सामर्थ्यादवसितस्य शैत्यस्य आगन्तुकत्वात्तत्प्रभवयोरपि कम्पपुलकयोस्ताद्रूप्यं समानता च भयेष्वपि तयोरुपलक्षितत्वात् ।

(१९८) स्थाप्यतेऽपोह्यते वापि यथापूर्वं परं परम् ।
विशेषणतया यत्र वस्तु सैकावली द्विधा ॥ १३१ ॥

पूर्वं पूर्वं प्रति यथोत्तरस्य वस्तुनो वीप्सया विशेषणभावेन य-

---

लीलारूपवस्तुना स्वाभाविकसाधारणदृक्तरलतादिरूपलक्ष्मद्वारा मदरूपं वस्तु तिरोहितमिति मीलितालङ्कारः । तदेवाह-अत्रेति । तत्रापि मदोदयेऽपि एतस्य दृक्तरलतादिरूपस्य, आगन्तुकेन लक्ष्मणा मीलितमुदाहरति-ये इति । हे राजन् ! ये त्वत्पाते त्वदागमने त्वत्पातेन त्वदाक्रमणेन वा शङ्किता धीर्येषान्तथाभूताः ते तव द्विषः शत्रवः विवशाः विह्वलाः सन्तः हिमाद्रेः कन्दरासु सदा निवसन्ति उत्पुलकमुद्गतरोमाञ्चं सकम्पं कम्पसहितं च अङ्गं उद्वहतामपि तेषां शत्रूणां भियां तन्निष्ठभयानां अहो बतेति खेदातिशये बुधः पंडितोऽपि अभिज्ञः ज्ञाता न भवतीत्यर्थः । अत्र कम्पपुलके अङ्गस्य लिङ्गे हिमाद्रिकन्दरनिवाससामर्थ्यादधिगतशीतरूपकारणस्य आकन्तुकत्वेन तत्कार्यम् तयोः कम्पपुलकयोरप्यागन्तुकत्वं भयैः समानता च भयेष्वपि कम्पपुलकयोरुपलम्भात् एवं च हिमाद्रिसन्निधानतया बलिष्ठेन शीतरूपवस्तुना आगन्तुकसाधारणकम्पादिचिह्नद्वारा भयरूपं वस्तु तिरोहितमिति मीलितालङ्कारः। तदेवाह-अत्रेति । ताद्रूप्यम् आगन्तुकत्वं समानता शैत्यभयोभयसाधारणता तयोः कम्पपुलकयोः । इति मीलितम् ॥५०॥

एकावलीं लक्षयति-स्थाप्यते इति । यत्रालङ्कारे यथापूर्वं पूर्वं पूर्वं वस्तु प्रति परं परमुत्तरमुत्तरं वस्तु विशेषणतया विशेषणभावेन स्थाप्यते विधीयते अपोह्यते निषिध्यते वा सा द्विधा एकावलीत्यर्थः । सूत्रं व्याचष्टे-पूर्वमिति। सूत्रेऽनुक्तमपि वीप्सयेति विवक्षितमित्या-

स्स्थापनं निषेधो वा सम्भवति सा द्विधा बुधैरेकावली भण्यते क्रमेणोदाहरणम्—

पुराणि यस्या सवराङ्गनानि वराङ्गना रूपपुरस्कृताङ्गाः ।
रूपं समुन्मीलितसद्विलासमस्त्रं विलासाः कुसुमायुधस्य ॥५४८॥

न तज्जलं यन्न सुचारुपंकजं न पंकजं तद्यदलीनषट्पदम् ।
न षट्पदोऽसौ कलगुञ्जितो न यो न गुंजितं तन्न जहार यन्मनः ॥५४९॥

पूर्वत्र पुराणां वराङ्गनाः, तासामङ्गविशेषणमुखेन रूपम् तस्य विलासाः तेषामप्यस्त्रमित्यमुना क्रमेण विशेषणं विधीयते उत्तरत्र प्रतिषेधेऽप्येवं योज्यम् ॥

**(१९९) यथाऽनुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः ।**
**स्मरणम्,**

---

ह—वीप्सयेति । बाहुल्येन ॥ तत्र विधावुदाहरति—पुराणीति । यस्यां उज्जयिन्यां पुराणि गृहाणि सवराङ्गनानि वराङ्गनासहितानि सन्ति वराङ्गनाः कान्ताः रूपेण पुरस्कृतं भूषितमङ्गं यासां तथाभूताः रूपं समुन्मीलिताः उत्फुल्लाः सद्विलासा यस्मिंस्तादृशम् विलासाः कुसुमायुधस्य कामस्य अस्त्रं अस्त्रभूता इत्यर्थः । अत्र पूर्वपूर्वस्मिन् उत्तरोत्तरस्य विशेषणतया बाहुल्येन विधानमित्येकावली । अत्र पुराणामङ्गनाः तासामङ्गविशेषणक्रियामुखेन रूपं तस्य विलासाः तेषामस्त्रमिति क्रमेण विशेषणतया विधिः । निषेधे उदाहरति—न तदिति । यत्सुचारुपंकजन्न तत् जलं प्रशस्तजलन्न यत् न विद्यते लीनः स्थिरः षट्पदो यत्र तादृशं तत् प्रशस्तपंकजन्न यः कलं मंजुलं गुञ्जितं गुञ्जारवो यस्य तादृशो न असौ षट्पदो न यन्मनो न जहार तत् गुञ्जितन्नेत्यर्थः । अत्र जले पंकजस्य तत्र षट्पदानां तत्र गुञ्जितस्य तत्रापि मनोहारितायाः विशेषणतया बाहुल्येन निषेध—इत्येकावली । न चात्र सुचारुपङ्कजम्विना जलन्न रमणीयमिति विनोक्तिध्वनिरेव युक्तः तत्कृतस्यैव चमत्कारस्य सत्वादिति वाच्यम् । वाच्यार्थकृतस्य चमत्कारस्यानपलपनीयत्वात् । पूर्वोदाहरणे विधिम् उत्तरोदाहरणे निषेधं च दर्शयति—पूर्वत्रेति । इत्येकावली ॥ ५४८ ॥ ५४९ ॥ ५१ ॥

स्मरणं लक्षयति—यथेति । तत्सदृशे तत्समाने वस्तुनि दृष्टे केनचिदिन्द्रियेण अवगते सति अर्थस्य वस्तुनः यथानुभवं पूर्वानुभूतप्रकारेण या स्मृतिः तत्स्मरणम् । सदृशदर्शनोद्बुद्धसंस्कारजन्या

यः पदार्थः केनचिदाकारेण नियतः यदा कदाचिदनुभूतोऽभूत् स कालान्तरे स्मृतिप्रतिबोधाधायिनि तत्समाने वस्तुनि दृष्टे सति यत्तथैव स्मर्यते तद्वत्स्मरणम उदाहरणम्—

निम्ननाभिकुहरेषु यदम्भः प्लावितं चलदृशां लहरीभिः ।
तद्भवैः कुहरुतैः सुरनार्यः स्मारिताः सुरतकण्ठरुतानाम् ॥५५०॥

यथा वा—

करजुअगहिअजसोआत्थणमुहविणिवेसिआहरपुडस्स ।
संभरिअपंचजण्णस्स णमह्वराहस्स रोमाञ्चम् ॥ ५५१ ॥

(२००) भ्रान्तिमानन्यसंवित्तत्तुल्यदर्शने ॥ १३२ ॥

तदिति अन्यत् अप्राकरणिकं निर्दिश्यते तेन समानं अर्थादिह

---

स्मृतिः स्मरणमिति भावः । सूत्रं व्याचष्टे-यः पदार्थ इति । नियतः निर्धारितः अनुभूतः केनचित्प्रमाणेनानुभवविषयीकृतः सः पदार्थः स्मृतीति स्मृतेः स्मरणस्यानुगुणो यः प्रतिबोधः संस्कारोद्बोधः तदाधायिनि तज्जनके तथैव अनुभूतेन प्रकारेण । सा हि स्मृतिर्द्विविधा एतज्जन्मानुभूतार्थस्य जन्मान्तरानुभूतार्थस्य चेति । तत्राद्यामुदाहरति-निम्नेति । अप्सरसां जलक्रीडावर्णनम् । चलदृशां अप्सरोरूपनायिकानां निम्ननाभिकुहरेषु गम्भीरनाभिरूपबिलेषु गंभीरूपगर्तेषु वा लहरीभिस्तरङ्गैः जलक्रीडासमये यदम्भः प्लावितं संचारितं तद्भवैस्तज्जन्यैः कुहरुतैः ध्वनिविशेषैः सुरतकालिककण्ठध्वनिविशेषैः सुरनार्यः अप्सरोरूपसुराङ्गनाः सुरतकण्ठरुतानां रतिकूजितानां स्मारिताः इत्यर्थः । अत्र रतिकालककण्ठध्वनिसदृशेषु कुहरुतेषु श्रुतेषु सुरतकालिककण्ठरुतानामनुभूतार्थानां स्मृतिरिति स्मरणालङ्कारः ॥५५०॥ अन्यामुदाहरति-करेति ।

करयुगगृहीतयशोदास्तनमुखविनिवेशिताधरपुटस्य ॥
संस्मृतपंचजन्यस्य नमत कृष्णस्य रोमाञ्चम् ॥

इति संस्कृतम् । करयुगेन गृहीतस्य यशोदायाः स्वमातुः स्तनस्य मुखेऽग्रे विनिवेशितः स्थापितोऽधरपुटो येन तस्य अत एव स्मृतः पाञ्चजन्यः शङ्खविशेषो येन तादृशस्य कृष्णस्य रोमाञ्चं यूयं नमत । अत्र शङ्खसदृशे स्तने दृष्टे जन्मान्तराऽनुभूतस्य पाञ्चजन्यस्य स्मृतिरिति स्मरणम् ॥ ५५१ ॥ ९२ ॥

भ्रान्तिमदलङ्कारं लक्षयति-भ्रान्तिमानिति । तत्तुल्यस्य अप्राकरणि-

प्राकरणिकम् आश्रीयते तस्य तथाविधस्य दृष्टौ सत्यां यत् अप्राकराणिकतया संवेदनं स भ्रान्तिमान् । नचैष रूपकं प्रथमातिशयोक्तिर्वा तत्र वस्तुतो भ्रमस्याभावात् इह च अर्थानुगमनेन संज्ञायाः प्रवृत्तेः तस्य स्पष्टमेव प्रतिपन्नत्वात् उदाहरणम्—

कपाले मार्जारः पय इति करान् लेढि शशिनः
तरुच्छिद्रप्रोतान् बिसमिति करी संकलयति ।
रतान्ते तल्पस्थान् हरति वनिताऽप्यंशुकमिति
प्रभामत्तश्चन्द्रो जगदिदमहो विप्लवयति ॥ ५५२ ॥

(२०१) आक्षेप उपमानस्य प्रतीपमुपमेयता ।

कसदृशस्य अर्थात्प्राकरणिकस्य दर्शने सति याऽन्यसंवित् अन्यत्वेनाप्राकणिकत्वेन ज्ञानं स भ्रान्तिमानित्यर्थः । प्राकणिकार्थदर्शनोद्बुद्धसंस्कारजन्यस्मृत्युपनीताप्राकरणिकात्मतया प्राकरणिकज्ञानं भ्रान्तिमानिति भावः । सूत्रे तत्पदेन पूर्वोक्तमन्यपदं बोध्यं अप्राकरणिकमेव परामृश्यते तेन अप्राकरणिकेन तस्य प्राकरणिकस्य तथाविधस्य प्राकरणिकस्य मानस्य अप्राकरणिकतया अप्राकरणिकतादात्म्येन संवेदनं निश्चयात्मकं ज्ञानं । रूपकादावतिप्रसङ्गशङ्कां निराकरोति—नचैषेति । प्रथमातिशयोक्तिः निगीर्याध्यवसानरूपा वस्तुतो भ्रमस्य स्वारसिकभ्रमस्य इह च अस्मिन्नलङ्कारे तु अर्थस्य भ्रान्तिमदिति शब्दार्थस्य भ्रमसम्बन्धस्य अनुगमनेन अन्वयेन संज्ञायाः भ्रान्तिमदिति नाम्नः प्रवृत्तेरित्यर्थः । तस्य भ्रमस्य प्रतिपन्नत्वात् प्रतिपत्तेः ॥ उदाहरति—कपाले इति । अहो महदाश्चर्यम् । प्रभया मत्तः कान्तिगर्वोन्मत्तः चन्द्रः इदं जगत् विप्लवयति सर्वस्यापि भ्रममुत्पादयति तथाहि मार्जारः कपाले शिरोस्थिनि स्थितान् शशिनश्चन्द्रस्य करान् किरणान् पय इति पयोभ्रान्त्या लेढि आस्वादयति करी हस्ती तरूणां छिद्रेषु प्रोतान्प्रविष्टान् तान् बिसमिति मृणाल इति संकलयति गृह्णाति वनिता योषिदपि रतान्ते तल्पस्थान् तान् । अंशुकमिति शुभ्रवस्त्रभ्रान्त्या हरति गृह्णातीत्यर्थः । अत्र शुभ्रतया अप्रकृतदुग्धादितुल्यानां प्रकृतानां चन्द्रकिरणानां दर्शने सति मार्जारादीनामप्रकृतदुग्धादित्वेन ज्ञानमिति सदृशदर्शनजन्या भ्रान्तिः । इति भ्रान्तिमान् ॥ ५५२ ॥ ५३ ॥

प्रतीपं द्विधा लक्षयति—आक्षेप इति । उपमानस्य आक्षेपः निन्दा

तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धनम् ॥१३३॥

अस्य धुरं सुतरामुपमेयमेव वोढुं प्रौढमिति कैमर्थ्येन यदुपमानमाक्षिप्यते यदपि तस्यैवोपमानतया प्रसिद्धस्य उपमानान्तरविवक्षयाऽनादरार्थमुपमेयभावः कल्प्यते तदुपमेयस्योपमानप्रतिकूलवर्तित्वादुभयरूपं प्रतीपम् क्रमेणोदाहरणम्—

लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिना
देव ! त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा ।
इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं
चिन्तारत्नमहो मुधैव किममी सृष्टाः कुलक्ष्माभृतः ॥ ५५३ ॥

---

निषेधो वा एकं प्रतीपम् यदि वा अथ वा तस्यैव उपमानस्यैव तिरस्कारनिबन्धनं अनादरहेतुः उपमेयता उपमेयभावः कल्प्या कल्पनीया तदपरं प्रतीपमित्यर्थः ॥ आक्षेपशरीरमाह—अस्येति । उपमानस्य धुरं प्रयोजनं सुतराम् अत्यन्तं वोढुं निर्वाहयितुं प्रौढं समर्थम् कैमर्थ्येन किमर्थमिदमिति न्यायेन प्रयोजनविरहेण वा आक्षिप्यते निन्द्यते निषिध्यते वा उपमेयसत्त्वे उपमानस्य वैफल्येनाक्षेप एकं प्रतीपमिति भावः । द्वितीयं दर्शयति—यदपीति । तस्यैव उपमानस्यैव उपमानान्तरेति मुखादिरूपोपमानान्तरविवक्षया कल्प्यते उपमानतिरस्कारार्थं उपमानस्य उपमेयेन उपमाकल्पनमपरं प्रतीपमित्यर्थः । प्रतीपपदप्रवृत्तिनिमित्तमाह—उभयस्येति । उपमेयस्योपमाने विरुद्धवर्त्तित्वात् । तत्राद्यं प्रतीपमुदाहरति—लावण्येति हे देव ! राजन् ! लावण्यौकसि लावण्याश्रये प्रतापस्य गरिम्णा गौरवेण सहिते प्रतापातिशयसहिते त्यागिनां दातॄणामग्रेसरे मुख्ये अवनीभरे भूभरणविषये क्षमौ समर्थौ भुजौ यस्यैवंभूते त्वयि वेधसा विधात्रा निष्पादिते सृष्टे सति इन्दुः किं किमर्थं घटितः रचितः एषः पूषा सूर्यः किं कुतो विहितः अहः चिन्तारत्नं चिन्तितार्थदायकं रत्नं चिन्तामणिः किमर्थमुत्पादितं अमी कुलक्ष्माभृतः कुलपर्वताः मुधैव वृथैव किमर्थं सृष्टा इत्यर्थः । अत्र लावण्यादिगुणविशिष्टस्य राजरूपोपमेयस्य सत्त्वे इन्द्वादीनामुपमानानां वैफल्येन आक्षेप इति प्रथमः प्रतीपः ॥ ५५३ ॥

[illegible] तु क्वचिदुपमेयानिष्पत्त्या तिरस्कारः । क्वचित्तु निष्पन्ना

ए एहि दाव सुन्दरि कण्णं दाऊण सुणसु वअणिज्जम् ।
तुज्झ मुहेण किसोअरि चन्दो उअमिज्जइ जणेण ॥ ५५४ ॥

अत्र मुखेनोपमीयमानस्य शशिनः स्वल्पतरगुणत्वादुपमित्यनिष्पत्त्या वअणिज्जमिति वचनीयपदाभिव्यंग्यस्तिरस्कारः ।

क्वचित्तु निष्पन्नैवोपमितिक्रियाऽनादरनिबन्धनम् । यथा—

गर्वमसंवाह्यमिमं लोचनयुगलेन किं वहसि मुग्धे ! ।
सन्तीदृशानि दिशि दिशि सरःसु ननु नीलनलिनानि ॥ ५५५ ॥

इहोपमेयीकरणमेवोत्पलानामनादरः । अनयैव रीत्या यदसामान्यगुणयोगात् नोपमानभावमपि अनुभूतपूर्वि तस्य तत्कल्पनायामपि

---

सैव तिरस्कारहेतुरिति तत्राद्यमुदाहरति—ए एहीति ।

अयि एहि तावत्सुन्दरि कर्णं दत्वा शृणुष्व वचनीयम् ॥
तव मुखेन कृशोदरि ! चन्द्र उपमीयते जनेन ॥

इति संस्कृतम् । वचनीयं निन्दा मुखेन तुल्यश्चन्द्रः इति जनो वदतीत्यर्थः । अत्रोपमानत्वेन लोकप्रसिद्धस्य चन्द्रस्य तिरस्कारार्थमुपमेयत्वकल्पनमपरं प्रतीपम् । तदेवाह—अत्रेति । वअणिज्जमित्यनेन उपमित्यनिष्पत्तिः तया च शशिनः स्वल्पगुणत्वरूपस्तिरस्कार इति भावः ॥ ५५४ ॥

क्वचिदुपमितिनिष्पत्त्याऽनादरमाह-क्वचित्त्विति । अनादरनिबन्धनं तिरस्कारहेतुः । उदाहरति-गर्वामिति । हेमुग्धे ! असंवाह्यं संवहनायोग्यं इमं गर्वं लोचनयुगलेन किं वहसि ननु यतः दिशि दिशि सरःसु ईदृशानि त्वल्लोचनतुल्यानि नीलनलिनानि नीलोत्पलानि सन्तीत्यर्थः । अत्रोपमानत्वेन प्रसिद्धानां नलिनानां लोचनोपमेयीकरणमेवानादरहेतुः उपमेयस्य न्यूनगुणत्वस्थितेः । अत्रोपमितिनिष्पत्तावपि उपमेयाधिक्यप्रतीतेर्व्यतिरेकतो भेदः । तदेवाह-इहेति । सूत्रे भेदद्वयकथनमुपलक्षणं भेदान्तरस्यापि सम्भवादित्यभिप्रेत्याह-अनयैवेति । यत् वस्तु असामान्यगुणयोगात् असाधारणगुणसम्बन्धात् उपमानभावमपि उपमानत्वमपि-अनुभूतपूर्वीति । अनुभूतं पूर्वमनेन तस्य वस्तुनः तत्कल्पनायामपि उपमानभावकल्पनायामपि प्रतीपं-प्रतीपालङ्कारः । अर्थात् येन वस्तुनाऽसाधारणगुणसम्बन्धादुपमानत्वमपि पूर्वं नानुभूतं तस्य वस्तुन उपमानत्वकल्पनायामपि प्रतीपालङ्कारो भवतीति । तदुदाहरति-अहमेवेति । तातेति सानुकम्पसम्बोधनम् हे

भवति प्रतीपमिति प्रत्येतव्यम् यथा—

अहमेव गुरुः सुदारुणानामिति हालाहल तात मास्म दृप्यः ।

ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन् वचनानि दुर्जनानाम् ॥५५६॥

अत्र हालाहलस्योपमानत्वमसम्भाव्यमेवोपनिबद्धम् ।

(२०२) प्रस्तुतस्य यदन्येन गुणसाम्यविवक्षया ।

ऐकात्म्यं बध्यते योगात्तत्सामान्यमिति स्मृतम् ॥१३४॥

अतादृशमपि तादृशतया विवक्षितुं यत् अप्रस्तुतार्थेन संपृक्तमपरित्यक्तनिजगुणमेव तदेकात्मतया निबध्यते तत्समानगुणनिबन्धनात्सामान्यम् उदाहरणम्—

मलयजरसविलिप्ततनवो नवहारलताविभूषिताः

सिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुकाः ।

तात ! हालाहल ! उत्कटविष ! सुदारुणानाम्मध्ये अहमेव गुरुः श्रेष्ठ इति त्वं मास्म दृप्यः गर्वं मा कृथाः ननु यतः अस्मिन्भुवने दुर्जनानां वचनानि भवादृशानि भवदुपमेयानि भूयः बहु यथा स्यात्तथा सन्तीत्यर्थः । अत्रात्युत्कटदुःखहेतोर्हालाहलस्य खलवचनोपमानत्वमसम्भाव्यमानमेवोपनिबद्धं तिरस्कारहेतुरिति प्रतीपम् ॥ ५४ ॥

सामान्यं लक्षयति-प्रस्तुतस्येति । प्रस्तुतस्य प्राधान्येन वर्णनीयस्य पदार्थस्य अन्येन अप्रस्तुतपदार्थेन योगात्सम्बन्धात् गुणसाम्यविवक्षया गुणसाम्यं प्रतिपादयितुं यत् ऐकात्म्यं एकरूप्यं पृथक्त्वेनाप्रतीयमानत्वं बध्यते प्रतिपाद्यते तत्सामान्यं स्मृतमित्यर्थः । तुल्यतया विवक्षितयोर्वस्तुनोर्मेलनात्तयोरुभयोरपि एकतया प्रतीतौ सामान्यमिति यावत् । विवक्षापदस्वरसलब्धं व्याचष्टे अतादृशमपीति । वस्तुतोऽप्रस्तुतार्थासमानमपि प्रस्तुतं वस्तु तादृशतया अप्रस्तुतार्थसमानतया विवक्षितुं वक्तुरिच्छां बोधयितुं अस्य एकात्मतया निबध्यते इत्यनेनान्वयः । अन्येनेत्यस्यार्थमाह-अप्रस्तुतार्थेनेति । योगादित्यस्यार्थमाह-संपृक्तमिति । सम्बद्धं सूत्रे प्रस्तुतस्येत्यस्य अपरित्यक्तनिजगुणस्येत्यपि विशेषणं विवक्षितमित्याह-अपरित्यक्तेति । तदेकात्मतया अप्रकृतेनैकरूपतया । सामान्यपदप्रवृत्तिनिमित्तमाह-समानेति । समानगुणयोगात् । न च भ्रान्तिमता सङ्करः तत्र स्मर्यमाणस्यारोपोऽत्रानुभूयमानस्येति विशेषात् । उदाहरति-मलयजेति । विततं धाम तेजो यस्य तादृशे शशभृति चन्द्रे धरां पृथिवीं धवलयति सति

शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः
प्रियवसतिं प्रयान्ति सुखमेव निरस्तभियोऽभिसारिकाः ॥५५७॥

अत्र प्रस्तुततदन्ययोरन्यूनानतिरिक्ततया निबद्धं धवलत्वमेकात्मताहेतुः अत एव पृथग्भावेन न तयोरुपलक्षणम्, यथा वा—

वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि ।
भृङ्गाः सहेलं यदि नापतिष्यन् कोऽवेदयिष्यन्नवचम्पकानि ॥५५८॥

---

अभिसारिकाः कान्तार्थिन्यः अविभाव्यतां अलक्ष्यतां चन्द्रिकयैकरूपतां गताः प्राप्ताः अत एव निरस्तभियः अपगतलोकलक्ष्यत्वभीतयः सत्यः प्रियवसतिं भर्तृगृहं सुखमेव प्रयान्ति अविभाव्यतायां हेतुगर्भविशेषणान्याह मलयजस्य चन्दनस्य रसेन द्रवेण विलिप्ततनवः लिप्ताङ्गाः नवहारलताभिः नूतनमौक्तिकमालाभिः विभूषिता अलंकृताः सिततरेण शुभ्रतरेण दन्तपत्रेण हस्तिदन्तनिर्मितताटङ्केन कृता जनिता वक्त्ररुक् मुखदीप्तिर्यासां ताः । रुचिराणि रम्याणि अमलानि निर्मलानि अंशुकानि शुभ्रवस्त्राणि यासां तथाभूता इत्यर्थः । पादाकुलकं छन्दः ।

यदतीतकृतविविधलक्ष्मयुतैर्मात्रासमादिपादैःकलितम् ।
अनियतवृत्तपरिणामसहितं प्रथितं जगत्सु पादाकुलकम् ॥

इति लक्षणात् । अत्र प्रस्तुताप्रस्तुतयोरभिसारिकाचन्द्रिकयोर्वैवक्षिकशुक्लगुणसाम्येनैकात्मतावर्णनात्सामान्यमलङ्कारः । तदेवाह—अत्रेति । प्रस्तुततदन्ययोः अभिसारिकाचन्द्रिकयोः, तयोः अभिसारिकाचन्द्रिकयोः उपलक्षणं प्रतीतिः क्वचितु प्रस्तुताप्रस्तुतयोरुत्तरकालं भेदप्रतीत्या पूर्वकालिकाया ऐक्यप्रतीतेरुन्नीयमानत्वेऽपि सामान्यं संभवतीत्याह—यथावेति । यदि भृङ्गाः सहेलं सलीलं यथा स्यात्तथा नापतिष्यत् न पतेयुः तदा नवचम्पकानि कः अवेदयिष्यत् चम्पकत्वेन अज्ञास्यत् नकोऽपि कीदृशानि चम्पकानि वेत्रस्य वेतसस्य त्वचा वल्केन तुल्यरुचां समानकान्तीनां बधूनां कर्णाग्रतः कर्णाग्रात् गण्डतले कपोलप्रदेशे आगतानि अवतंसरूपाणीत्यर्थः । वेत्रत्वचो गौरवर्णतयोपमानता । गण्डचम्पकयोर्गौरवर्णत्वान्न कोऽप्यवेदयिष्यत् भृङ्गपाते तु वेदितानीति भावः । अत्र प्रस्तुताप्रस्तुतयोर्गण्डचम्पकयोर्भ्रमरपातानन्तरं भेदप्रतीत्या पूर्वकालिकाया ऐक्यप्रतीतेरुन्नयनात्सामान्यमलङ्कारः । नन्वत्र भृङ्गपातस्य विशेषस्य दर्शनात्कथमैकात्म्य-

अत्र निमित्तान्तरजनिताऽपि नानात्वप्रतीतिः प्रथमप्रतिपन्नमभेदं न व्युदसितुमुत्सहते प्रतीतत्वात्तस्य प्रतीतेश्च बाधायोगात् ।

(२०३) विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः ।
एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा ॥ १३५ ॥
अन्यत्प्रकुर्वतः कार्यमशक्यस्यान्यवस्तुनः ।
तथैव करणं चेति विशेषस्त्रिविधः स्मृतः ॥ १३६ ॥

प्रसिद्धाधारपरिहारेण यत् आधेयस्य विशिष्टा स्थितिरभिधीयते स प्रथमो विशेषः । यथा---

दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिह कवयो न ते वन्द्याः ॥ ५५९ ॥

---

मित्याशङ्क्याह-अत्रेति । निमित्तान्तरं भृङ्गपतनं नानात्वप्रतीतिः भेदप्रतीतिः प्रथमं भ्रमरपतनात्पूर्वं प्रतिपन्नं भातं व्युदसितुं निरसितुं उत्सहते समर्था भवति तस्य अभेदस्य प्रतीतेः उत्पन्नाया इत्यादि । बाधेति । बाधोऽनुत्पादः उत्पन्नायाश्च नानुत्पादः सम्भवतीति पूर्वमुत्पन्नया ऐक्यप्रतीत्यैव सामान्यालङ्कारस्य सम्भव इति सामान्यम्॥५५

त्रिविधं विशेषं लक्षयति-विनेति । प्रसिद्धमाधारं विना आधेयस्य व्यवस्थितिर्विशिष्टा निराधारैव अवस्थितिः अवस्थानं यदभिधीयते स एको विशेषः । एकस्य वस्तुनः युगपत् एककाले या एकात्मा एक आत्मा स्वभावो यस्यां सा अनेकगोचरा अनेकविषया वृत्तिर्वर्तनं स्थितिः सा द्वितीयो विशेषः । रभसेन अन्यत्कार्यं प्रकुर्वतः कर्त्तुः यत् अशक्यस्य अन्यस्यापि वस्तुनः कार्यस्य तथैव तेनैव प्रकारेण करणमुत्पादनं स तृतीयो विशेषः । इति एवंरीत्या विशेषस्त्रिविधः । अत्र त्रिविध इत्युपलक्षणं दोषेऽपि गुणं दृष्ट्वा तदभ्यर्थनायामप्ययमलङ्कारः । यथा-'विपदः सन्तु नः शश्वत्तासु सङ्कीर्त्यते हरि'रिति । एवं गुणे दोषं दृष्ट्वा तदभ्यर्थनायामप्ययम् यथा-

नैर्गुण्यमेव साधीयो धिगस्तु गुणगौरवम् ।
शाखिनोऽन्ये विराजन्ते खण्ड्यन्ते चन्दनद्रुमाः ॥

इति । तत्र प्रथमं व्याचष्टे-प्रसिद्धेति । कविप्रसिद्धः परिहारेण त्यागेन प्रसिद्धाधारं परित्यज्य विशिष्टा निराधारैव, उदाहरति-दिवमिति । दिवं स्वर्गमुपयातानां गतानामपि येषां कवीनां अनल्पा बहवो गुणगणा यासु तथाभूता गिरः काव्यरूपा वाण्यः आकल्पं प्रलयकालप-

एकमपि वस्तु यत् एकेनैव स्वभावेन युगपदनेकत्र वर्तेते स द्वितीयः। यथा--

सा वसइ तुज्झ हिअए सा च्चिअच्छीसु साअ वअणेसु।
अह्मारिसाण सुन्दर ओआसो कत्थ पावाणम्॥ ५६०॥

यदपि किंचिद्रभसेन आरभमाणस्तेनैव यत्नेनाशक्यमपि कार्यान्तरमारभते सोऽपरो विशेषः। यथा--

स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजताऽनवद्यविद्यम्।
विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च॥५६१॥

---

र्यन्तं जगन्ति कर्माणि रमयन्तीति कवयः इह लोके कथन्न वन्द्या इत्यर्थः। अत्र कविरूपं कविप्रसिद्धमाधारं विना आधेयभूतानां गिरामवस्थितिवर्णनादिको विशेषालङ्कारः गिरां वास्तविक आधारस्तु आकाशः॥ ५५९॥

द्वितीयं विशेषमाह—एकमपीति। उदाहरति--सेति।

सा वसति तव हृदये सैवाक्षिषु सा च वचनेषु॥
अस्मादृशीनां सुन्दर अवकाशः कुत्र पापानाम्॥

इति संस्कृतम्। सपत्नीसक्तं कान्तं प्रति पत्न्या उक्तिः॥ हे सुन्दर! सा सपत्न्येव तव हृदये चित्ते वसति एवमग्रेऽप्यन्वयः। पापं किल्बिषमस्ति आसामिति पापाः तासामस्मादृशीनामवकाशः स्थलं कुत्र न क्वापीत्यर्थः। अत्रैकस्याः सपत्नीरूपकामिन्याः एकरूपेण युगपदनेकत्र हृदयादौ स्थितिवर्णनादपरो विशेषः॥ ५६०॥

तृतीयं विशेषमाह—यदपीति। रभसेन वेगेन। उदाहरति—स्फुरदिति। हे राजन्! त्वां सृजता विधिना भुवि नवो मनोभूः कामः सविता सूर्यः बृहस्पतिश्च ससृजे उत्पादित इति सत्यम्। एतदेवोपपादयितुं यथाक्रमं विशिनष्टि स्फुरत् प्रकाशमानं अद्भुतं रूपं यस्य तादृशं उत्प्रतापज्वलनं उद्गतप्रतापानलम् अनवद्यविद्यम् शुद्धविद्यम्। ईदृशं त्वां सृजता ब्रह्मणा त्वत्सर्जनयत्नेन आनुषङ्गिकास्ते सृष्टा इति भावः। मालभारिणी छन्दः। अत्र राजसर्जनरूपमेकं कार्यं कुर्वता विधिना तेनैव यत्नेन अशक्यस्य मनोभूप्रभृतिसर्जनरूपकार्यान्तरस्य करणात्तृतीयो विशेषः॥ ५६१॥

पूर्वं शाब्दं कार्यान्तरकरणमुदाहृत्य सम्प्रति व्यङ्ग्यन्तदुदाहर-

यथा वा—

गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना हरता त्वां बत किं न मे हृतम् ॥ ५६२ ॥

सर्वत्र एवंविधविषयेऽतिशयोक्तिरेव प्राणत्वेनावतिष्ठते तां विना प्रायेणालंकारत्वायोगात् अत एवोक्तम्—

सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते
यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना ॥ इति ।

---

नि-गृहिणीति । हे इन्दुमति ! त्वं मे मम गृहिणी पत्नी सचिवः मन्त्री मिथः रहसि सखी ललिते मनोहरे कलाविधौ कामकलाविधिविषये प्रियभूता शिष्या वर्तेति खेदं एतादृशीं त्वां हरता करुणाविमुखेन निर्दयेन मृत्युना यमेन मे मम किं न हृतम् अपि तु एकेन यत्नेन सर्वमनेकं हृतमित्यर्थः । अत्र इन्दुमतीहरणरूपमेकं कार्यं कुर्वता मृत्युना तेनैव यत्नेन अशक्यस्य सचिवादिहरणरूपकार्यान्तरस्य करणात्तृतीयो विशेषः । अत्रान्यस्य करणं व्यङ्ग्यम् ॥ ननु आधारं विना आधेयस्यावस्थानम् एकस्यैकदाऽनेकत्रावस्थानं एकेन यत्नेन कार्यद्वयकरणं च वस्तुतो नोपपन्नमिति कथमेतेषामलङ्कारत्वमिति पूर्वपक्षे उत्तरमाह-सर्वत्रेति । एवंविधविषये एतादृशस्थले अतिशयेन लोकसीमातिक्रमेण उक्तिः कथनम् । ननु पूर्वोक्तातिशयोक्त्यलङ्कारोऽत्र विवक्षितः तस्यात्रासम्भवात् एवं चातिशयोक्तिसामान्यलक्षणेऽतिशयोक्तिपदं योगरूढं अत्र तु यौगिकमेवेति नास्या अलङ्कारत्वम् किन्तु सर्वालङ्कारबीजभूतत्वमेव तदेवाह-प्राणत्वेनेति । जीवत्वेनेत्यर्थः । अयं भावः, वास्तविकानामेतेषामनुपपद्यमानत्वमस्तु वैचित्र्यविशेषप्रतिपत्तये प्रतिभाकल्पितानामेतेषामलङ्कारत्वे का हानिः कविर्हि गिरां वास्तविको नाधारः किन्तु आधारतया कविसमयसिद्ध इति तादृशाधारं विना आधेयानां गिरामवस्थितेर्नानुपपत्तिः एवमेकस्यैकदाऽनेकत्रावस्थानं एकेन यत्नेन कार्यद्वयकरणं च नानुपपन्नमिति ॥ स्वोक्तेऽर्थे वृद्धसम्मतिमाह-अत एवेति । भामहेनेति शेषः । सैषेति । याऽतिशयोक्तिर्लक्षिता सैव सर्वा वक्रोक्तिरलङ्कारः एवं चात्रातिशयोक्तिरिति वक्रोक्तिरिति पर्यायः । सर्वत्र सर्वेष्वलङ्कारस्थलेषु वक्रतया गौणतयोक्तिर्वक्रोक्तिः अनया वक्रोक्त्या अर्थः सकलजनप्रसिद्धोऽपि विचित्रतया भाव्यते अतः अस्यां व-

(२०४) स्वमुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत् ।
वस्तु तद्गुणतामेति भण्यते स तु तद्गुणः ॥ १३७ ॥

वस्तु तिरस्कृतनिजरूपं केनापि समीपगतेन प्रगुणतया स्वगुणसंपदोपरक्तं तत्प्रतिभासमेव यत्समासादयति स तद्गुणः तस्याप्रकृतस्य गुणोऽत्रास्तीति । उदाहरणम्--

विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या ।
रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः ॥ ५६३ ॥

---

क्रोक्तौ अनया विना सर्वालङ्कारबीजमेषेति भावः । अयम्भावः, अस्या वक्रोक्त्यपरपर्यायायाः अतिशयोक्तेरलङ्कारत्वं सर्वालङ्कारबीजभूतत्वं च सर्वत्रैवातिशयोक्तिसद्भावेऽपि वैचित्र्यान्तरेणालङ्कारान्तरव्यपदेशाः प्राधान्येन व्यपदेशा भवन्तीति न्यायात् वैचित्र्यान्तराभावे त्वतिशयोक्तिव्यपदेश इति विशेषः ॥ ५६ ॥

तद्गुणं लक्षयति–स्वमिति । यन्न्यूनगुणं प्रस्तुतं वस्तु अत्युज्ज्वलगुणस्य अत्युत्कृष्टगुणस्य अप्रस्तुतस्य वस्तुनो योगात्सम्बन्धात् स्वं गुणं स्वकीयं रूपं उत्सृज्य तद्गुणतां तद्रूपतां अप्रस्तुतवस्तुरूपतां एति प्राप्नोति स तु तद्गुणो भण्यते कथ्यते इत्यर्थः । सूत्रं व्याचष्टे–वस्त्विति । प्रस्तुतं वस्तु स्वमुत्सृज्य गुणमिति व्याचष्टे–तिरस्कृतेति समीपगतेन कर्त्रा प्रगुणतया प्रकृष्टगुणत्वेन स्वगुणसम्पदा करणभूतया तत्प्रतिभासमेव समीपगतवस्तुरूपतामेव समासादयति प्राप्नोति तद्गुणपदस्य व्युत्पत्तिमाह–तस्येति । मीलिते धर्मिणोऽपि तिरस्कारः सामान्ये अपरित्यक्तनिजगुणस्यापृथक्प्रतिभासः इह तु गुणमात्रस्यैव तिरस्कारः धर्मिणश्च पृथगवभासः भ्रान्तिमति स्मर्यमाणस्यारोपः अत्र गृह्यमाणस्येति भेदः ॥

उदाहरति–विभिन्नेति । गरुडाग्रजेनारुणेन परितः स्फुरन्त्या रुचा स्वकान्त्या करणभूतया विभिन्नो भेदं प्रापितो वर्णो येषां तादृशाः स्वतो हरिद्वर्णा अपि रक्तीकृताः सूर्यस्य रथ्याः रथतुरगाः यत्र रैवतकगिरौ वंशकरीरवत् वेण्वङ्कुरवत् नीलैः हरिद्वर्णैः रत्नैः मरकतमणिभिः परितः स्फुरन्त्या रुचा पुनः स्वां रुचं स्वकीयां हरिद्वर्णतां आनिन्यिरे प्रापिता इत्यर्थः । अत्र रवितुरगाणां प्रस्तुतानामप्रस्तुतगरुडाग्रजवर्णस्याप्तिः अप्रस्तुतनीलरत्नवर्णस्याप्तिश्चेति तद्गुणालङ्कार-

अत्र रवितुरगापेक्षया गरुडाग्रजस्य तदपेक्षया च हरिन्मणीनां प्रगुणवर्णना ।

(२०५) तद्रूपाननुहारश्चेदस्य तत्स्यादतद्गुणः ।

यदि तु तदीयं वर्णं सम्भवन्त्यामपि योग्यतायां इदं न्यूनगुणं न गृह्णीयात्तदा भवेदतद्गुणो नाम ॥ उदाहरणम्—

धवलोसि जहवि सुन्दर तहवि तुए मज्झ रञ्जिअं हिअअम् ।
राअभरिएवि हिअए सुहअ णिहित्तो ण रत्तोसि ॥ ५६४ ॥

---

हृदयम् । तदेवाह-अत्रेति । प्रगुणवर्णनेति । प्रकृष्टगुणवर्णत्वम् । इति तद्गुणः ॥ ५७ ॥

अतद्गुणं लक्षयति-तद्रूपेति । अस्य न्यूनगुणस्याप्रस्तुतस्य अत्युज्ज्वलगुणयोगेऽपि तद्रूपाननुहारः तस्यात्युज्ज्वलगुणस्य प्रस्तुतस्य यद्रूपं गुणस्तस्य अननुहारः अग्रहणं चेत्तदा अतद्गुण इत्यर्थः । अत्युज्ज्वलगुणयोगेऽपि यदि न्यूनगुणोऽप्रकृतः प्रकृतस्य गुणं नानुहरति तदाऽयमिति भावः । सूत्रं व्याचष्टे-यदीति । तदीयं प्रकृतसम्बन्धि वर्णं रूपं । ननु परगुणाननुहारः परस्य स्वतः सिद्ध एव किन्तत्र वैचित्र्यमित्यतः पूरयित्वा व्याचष्टे-सम्भवन्त्यामपीति । योग्यतायां तद्वर्णग्रहणोपाये अस्येनेदं शब्दार्थमाह—इदमिति । अप्रस्तुतं कर्तृ इति शेषः । तदित्यस्यार्थमाह-तदेति । अतद्गुणः तस्याधिकगुणस्यास्मिन्गुणा न सन्तीत्यतद्गुण इत्यर्थः । नन्वस्य विशेषोक्तावन्तर्भावः योग्यतारूपकारणसत्त्वेऽपि गुणग्रहणरूपकार्याभावादिति चेन्न गुणाग्रहणरूपविच्छित्तिविशेषाश्रयणात् । उदाहरति-धवलोसीति ।

धवलोऽसि यद्यपि सुन्दर ! तथापि त्वया मम रञ्जितं हृदयम् ।
रागभरितेऽपि हृदये सुभग ! निहितो न रक्तोऽसि ॥

इति संस्कृतम् । अनुरक्तायामपि मयि नानुरक्तोऽसीति नायकं प्रति कस्याश्चित्सोपालम्भोक्तिः । हे सुन्दर ! यद्यपि त्वं धवलः श्वेतो निर्मलश्चासि तथापि त्वया मम हृदयं रञ्जितम् शोणीकृतमनुरक्तीकृतं च हेसुभग ! रागेण लौहित्येन अनुरागेण च भरिते पूरिते मम हृदये निहितो निवेशितोऽपि न रक्तः लोहितोऽनुरक्तश्च असि इत्यर्थः । अत्र पूर्वार्धे धवलिमारुणिम्नोर्गुणयोर्विरोधाभासः उत्तरार्धमेवोदाहरणम् एवं चात्रोत्तरार्धेऽप्रस्तुतेन नायकेन निवेदनीयवृत्तान्ततया प्रकृतस्य हृदयस्य गुणाननुहरणादतद्गुणोऽलङ्कारः । श्लेषोऽत्र मूलम् ।

अत्रातिरक्तेनापि मनसा संयुक्तो न रक्ततामुपगत इत्यतद्गुणः। किं च तदिति अप्रकृतम् अस्येति च प्रकृतमत्र निर्दिश्यते तेन यत् अप्रकृतस्य रूपं प्रकृतेन कुतोऽपि निमित्तान्नानुविधीयते सोऽतद्गुण इत्यपि प्रतिपत्तव्यम् यथा--

गांगमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः।
राजहंस ! तव सैव शुभ्रता चीयते न च नचापचीयते ॥५६५॥

(२०६) यद्यथा साधितं केनाप्यपरेण तदन्यथा ॥ १३८ ॥
तथैव यद्विधीयेत स व्याघात इति स्मृतः।

येनोपायेन यत् एकेनोपकल्पितं तस्यान्येन जिगीषुतया तदुपायकमेव यदन्यथाकरणं स साधितवस्तुव्याहतिहेतुत्वाद्व्याघातः। उदाहरणम्—

---

तदेतत्सर्वमाह—अत्रेति। अत्र सूत्रे तत्पदेन प्रकृतमिवाप्रकृतमप्युच्यते तथाऽस्येत्यनेनाप्रकृतमिव प्रकृतमप्युपस्थाप्यते इत्याह—किञ्चेति। नानुविधीयते न गृह्यते सम्भवन्त्यामपि योग्यतायामिति शेषः। तथा च अप्रस्तुतेन प्रस्तुतरूपाननुहरणवत् प्रस्तुतेनाप्रस्तुतरूपाननुहारोऽप्यन्यः प्रकार इति भावः। उदाहरति—गाङ्गमिति। गाङ्गं गङ्गासम्बन्धि अम्बु सितं शुभ्रं यामुनं यमुनासम्बन्धि अम्बु कज्जलाभं कृष्णम् हे राजहंस ! उभयत्र जलद्वये प्रयागे मज्जतः स्नानं कुर्वतः तव शुभ्रता न चीयते न वर्धते नापचीयते नापक्षीयते किन्तु सैवास्तीत्यर्थः। रथोद्धता छन्दः। अत्र वर्ण्यतया प्रकृतेन राजहंसेन गङ्गायमुनयोर्गुणस्याग्रहणादतद्गुणः ॥ ५६५ ॥ ५८ ॥

व्याघातं लक्षयति—यद्यथेति। केनापि केनचित्कर्त्रा यद्वस्तु यथा येनोपायेन साधितं कृतं अपरेण तदन्येन कर्त्रा जिगीषुतया तद्वस्तु तथैव तेनैवोपायन तज्जातीयेनैवोपायेन यदन्यथा विधीयेत स व्याघात इत्यर्थः। सूत्रं व्याकुर्वन् यथाशब्दार्थमाह—येनेति। साधनेन यद्वस्तु; केनापीत्यस्यार्थमाह—एकेनेति। कर्त्रा साधितमित्यस्यार्थमाह—उपकल्पितमिति। तस्य वस्तुनः। अपरेणेत्यस्यार्थमाह—अन्येनेति। अन्यथाकरणे हेतुमाह—जिगीषुतयेति। जेतुमिच्छया, तथैवेत्यस्यार्थमाह—तदुपायकमेवेति। तज्जातीयोपायकमेवेत्यर्थः। व्याघातेति नाम्नो निरुक्तिमाह—साधितेति। साधितस्य प्रथमसाधितस्य वस्तुनो या व्याहृति-

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥ ५६६ ॥

(२०७) सेष्टा संसृष्टिरेतेषां भेदेन यदिह स्थितिः ॥ १३९ ॥

एतेषां समनन्तरमेवोक्तस्वरूपाणां यथासम्भवमन्योन्यनिरपेक्षतया यदेकत्र शब्दभागे एव अर्थविषये एव उभयत्रापि वा अवस्थानं सा एकार्थसमवायस्वभावा संसृष्टिः । तत्र शब्दालंकारसंसृष्टिर्यथा—

---

नाशस्तस्य यो हेतुस्तत्त्वात् । उदाहरति-दृशेति । दृशा हरनेत्रेण दग्धं भस्मीभूतं मनसिजं दृशैव याः जीवयन्ति प्राणवन्तं कुर्वन्ति अत एव विरूपाक्षस्य हरस्य जयिनीः जयनशीलाः ताः वामानि वक्राणि रम्याणि वा लोचनानि यासां ताः कामिनीः स्तुवे स्तौमीत्यर्थः । अत्र हरेण दृग्रूपोपायेन दग्धस्य कामस्य हरं जिगीषुभिः कामिनीभिर्दाहहेतुभूतेन दृग्रूपोपायेनैव तद्विपरीतजीवनसम्पादनाद्व्याघातः । यद्यपि विरूपाक्षवामलोचनादृशोर्नैक्यन्तथा च न व्याघातः तथाप्येकजातीयत्वादैक्यमित्यदोषात् । प्रत्यक्षानुमानोपमानशब्दाः ऐतिह्यमर्थापत्तिरनुपलब्धिः सम्भवश्चेत्यष्टौ प्रमाणालङ्काराः कैश्चिदुक्ता न निरूपणार्हाः केषांचिदुक्तेष्वेवान्तर्भावात् केषां चिच्चमत्कारित्वाभावात् । इति व्याघातः ॥ ५६६ ॥ ५९ ॥

अस्ति च विषयः कश्चित् यत्र भूषणसम्बद्धपद्मरागादिमणिमेलकवत् प्रोक्तानामलङ्काराणां सम्वलने एवाधिकश्चमत्कारः अत एव सोऽप्यलङ्कारोऽवश्यं वक्तव्यस्तत्र द्वयी विधा परस्परमनपेक्ष्य व्यवस्थितेस्तदभावाच्च तत्राद्या संसृष्टिः द्वितीया तु सङ्करः स च त्रिधेति प्रकारचतुष्टयं लक्षयति-सेष्टेति । एतेषां समनन्तरमेवोक्तानामलङ्काराणां भेदेन परस्परनिरपेक्षत्वेन इह एकत्र यत्स्थितिः या व्यवस्थितिः सा संसृष्टिरिष्टा । सेयं संसृष्टिः शब्दालङ्कारमात्रस्य अर्थालङ्कारमात्रस्य शब्दार्थलङ्कारयोर्वेति त्रिप्रकारा ॥ सूत्रं व्याचष्टे-एतेषामिति । बहुत्वमत्राविवक्षितन्तेन द्वयोरपि सङ्ग्रहः समनन्तरं उल्लासद्वये यथासम्भवं शब्दालङ्कारयोः अर्थालङ्कारयोरुभयालङ्कारयोर्वा । भेदपदार्थमाह-अन्योन्येति । इहेत्यर्थमाह-एकत्रेति । तस्याप्यर्थमाह-शब्देत्यादि । शब्दरूपे काव्यस्य भागेंऽशे एव । संसृष्टिपदार्थमाह-एकार्थेति । एकस्मिन्नर्थे वस्तुनि शब्दरूपकाव्यभागादौ समवायः अर्थादलङ्कारयोः सम्बन्धः स एव स्वभावः स्वरूपं यस्याः सा एवचालङ्कारयोः समवधानं चमत्कारान्तरमादधदलङ्कारान्तरमेव भवतीति

वदनसौरभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया ।
चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशाऽन्यया ॥५६७॥

अर्थालंकारसंसृष्टिस्तु—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥ ५६८ ॥

पूर्वत्र परस्परानिरपेक्षौ यमकानुप्रासौ संसृष्टिं प्रयोजयतः उत्तरत्र तु तथाविधे उपमोत्प्रेक्षे । शब्दार्थालंकारयोस्तु संसृष्टिः—

सो णात्थि एत्थ गामे जो एअं महमहन्तलाअण्णम् ।
तरूणाण हिअअलूडिं परिसक्कन्तीं णिवारेइ ॥ ५६९ ॥

---

भावः। तत्राद्यस्य शब्दालङ्कारमात्रस्योदाहरति–वदनेति । भ्रमरव्याकुलितायाः क्रियावर्णनमिदम् । वदने मुखे यत्सौरभं पद्मिनीत्वेन अद्भुतसौगन्ध्यं तस्य लोभने परितो भ्रमन्तो ये भ्रमरास्तेषां संभ्रमो भ्रमणं भयं वा तेन सम्भृता पूर्णा उपचिता वा शोभा यस्यास्तथाभूतया चलितया अलिसम्भ्रमात्प्रस्थितया अत एव अलकैश्चूर्णकुन्तलैः लोले चञ्चले दृशौ यस्यास्तादृश्या अन्यया भिन्नया कयाचिन्नायिकया कलोऽव्यक्तमधुरो मेखलायाः कलकलः कोलाहलः विदधे अकारीत्यर्थः। अत्र पूर्वार्धे भकारानुप्रासः तृतीयचरणे लकारानुप्रासः चतुर्थचरणे यमकम् तथा च तयोः शब्दालङ्कारयोः परस्परनिरपेक्षयोर्योगात्संसृष्टिः ॥ ५६७ ॥

द्वितीयामुदाहरति–लिम्पतीति । व्याख्यातमिदं प्राक् । अत्र पूर्वार्धे लेपनविषयोत्प्रेक्षा उत्तरार्धे असत्पुरुषसेवाविषयोपमा । तयोरर्थालङ्कारयोः परस्परनिरपेक्षयोर्योगात्संसृष्टिः ।

श्लोकद्वये विवेकमाह–पूर्वत्रेति । तथाविधे परस्परनिरपेक्षे ॥५६८॥

तृतीयामुदाहरति–सोणात्थीति ।

स नास्त्यत्र ग्रामे य एनां महमहायमानलावण्याम् ।
तरुणानां हृदयलुंठाकीं परिष्वक्कमाणां निवारयति ॥

इति संस्कृतम् महमहायमानलावण्याम् उत्सवोत्सवायमानलावण्यां तरुणानां हृदयलुंठाकीं हृदयस्तेयकर्त्रीं परिष्वक्कमाणां स्वानुरूपरमणाभावादितस्ततो गच्छन्तीम् एनां नायिकां यः निवारयति पुरुषान्तरात् व्यावर्तयति स अत्र अस्मिन्ग्रामे नास्तीत्यर्थः। अत्र पूर्वार्धे णत्थि एत्थेति तकार–थकारात्मकस्यानेकव्यञ्जनस्य सकृत्सा-

अत्रानुप्रासो रूपकं चान्योन्यानपेक्षे संसर्गश्च तयोरेकत्र वाक्ये छन्दसि वा समवेतत्वात् ।

(२०८) अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु संकरः ।

एते एव यत्रात्मनि अनासादितस्वतन्त्रभावाः परस्परमनुग्राह्यानुग्राहकतां दधति स एषां संकीर्यमाणस्वरूपत्वात्संकरः । उदाहरणम्-

आत्ते सीमन्तरत्ने मरकतिनि हृते हेमताटंकपत्रे
लुप्तायां मेखलायां झटिति मणितुलाकोटियुग्मे गृहीते ।
शोणं विम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये
राजन्गुञ्जाफलानां स्रज इति शबरा नैव हारं हरन्ति ॥५७०॥

---

म्यमिति छेकानुप्रासः शब्दालङ्कारः । उत्तरार्धे हृद्वयलुंठाकीमिति रूपकमर्थालङ्कारः तयोश्च परस्परनिरपेक्षयोर्योगात्संसृष्टिः । तदेवाह-अत्रेति । अन्योन्यानपेक्षे संसृष्टिं प्रयोजयत इति शेषः ।

नन्वनयोः अनुप्रासरूपकयोः शब्दार्थरूपाश्रयभेदेन कथमेकार्थसमवायलक्षणा संसृष्टिरित्यत आह-संसर्गश्चेति । तयोः अनुप्रासरूपकयोः एकत्र वाक्ये क्रिया वा कारकान्वितेत्यमरोक्तेरर्थावच्छिन्नशब्दस्यैव वाक्यत्वं तथा चैकं वाक्यमिति प्रतीतिसिद्धमेकत्वमादाय तयोरेकार्थसमवायः । वाक्यभेदेऽप्याह-छन्दसि वेति । चतुःपादात्मके इत्यर्थः । समवेतत्वात् सम्बन्धत्वात् । इति संसृष्टिः ॥ ५६९ ॥

अङ्गाङ्गित्वेन सन्देहास्पदत्वेन एकपदप्रतिपाद्यत्वेन च सङ्करस्त्रिविधः तत्र प्रथमं लक्षयति-अविश्रान्तीति । आत्मनि स्वस्वरूपमात्रे अविश्रान्तिजुषां अनासादितस्वतन्त्रभावानां एतेषां उक्तानामेवालङ्काराणां अङ्गाङ्गित्वमनुग्राह्यानुग्राहकत्वं उपकार्योपकारकत्वं सङ्कर इत्यर्थः । तदेव व्याचष्टे-एते इति । उक्ता एव, सङ्करपदयोगार्थमाह-संकीर्यमाणेति । मिश्रीभवमाणेत्यर्थः । उदाहरति-आत्ते इति । हे राजन् ! शबराः किराताः अरण्ये इत्वरीणां गतिशीलानां त्वद्भयादितस्ततो गच्छन्तीनां त्वदरिमृगदृशां मरकतिनि मरकतमणिशालिनि सीमन्तरत्ने शिरोभूषणे आत्ते गृहीते सति हेमताटङ्कपत्रे सौवर्णकर्णभूषणे हृते सति मेखलायां काञ्च्यां लुप्तायां छिन्नायां सत्यां मणितुलाकोटियुग्मे रत्नखचितनूपुरद्वये झटिति गृहीते सति विम्बसदृशौष्ठकान्त्या शोणमारक्तं हारं मुक्तादाम गुञ्जाफलानां स्रज इति बुद्ध्या नैव हरन्तीत्यर्थः । अत्र बिम्बोष्ठकान्त्या शोणमिति तद्गुणालङ्कारस्य गुञ्जाफलभ्रान्त्य-

अत्र तद्गुणमपेक्ष्य भ्रान्तिमता प्रादुर्भूतं तदाश्रयेण च तद्गुणः सचेतसां प्रभूतचमत्कृतिनिमित्तमित्यनयोरङ्गाङ्गिभावः। यथा वा—

जटाभाभिर्भाभिः करधृतकलंकाक्षवलयो
वियोगिव्यापत्तेरिव कलितवैराग्यविशदः।
परिप्रेंखत्तारापरिकरकपालाङ्किततले
शशी भस्मापांडुः पितृवन इव व्योम्नि चरति॥ ५७१॥

उपमा रूपकं—उत्प्रेक्षा—श्लेषश्चेति चत्वारोऽत्र पूर्ववत् अङ्गाङ्गितया प्रतीयन्ते। कलंक एवाक्षवलयमिति रूपकपरिग्रहे करधृतत्वमेव

---

लङ्काराङ्गत्वात्तयोरङ्गाङ्गिभावलक्षणः सङ्करः। तदेवाह अत्रेति। तदाश्रयेण भ्रान्तिमदाश्रयेण सचेतसां सहृदयानां अनयोः तद्गुणभ्रान्तिमतोः अङ्गाङ्गिभावः तद्गुणोऽङ्गम् भ्रान्तिमानङ्गी॥ ५७०॥

बहूनां सङ्करमुदाहरति—जटेति। चन्द्रे योगिधर्मं समारोपयति। शशी चन्द्रः पितृवने श्मशाने इव व्योम्नि आकाशे चरति कीदृशः जटाभाभिः जटातुल्याभिः पिङ्गाभिः भाभिः कान्तिभिः उपलक्षितः करः किरणं हस्तश्च तेन तस्मिन्वा धृतं कलङ्क एव अक्षवलयं वलयाकाररुद्राक्षमाला येन तादृशः। वियोगिनो विरहिणः विषयाश्च तेषां व्यापत्तेर्विनाशादिव कलितं स्वीकृतं यद्वैराग्यं विरक्तता विषयस्पृहाराहित्यं च तेन विशदः शुभ्रः शुद्धचित्तश्च भस्मेव आपांडुः भस्मना आपांडुश्च कीदृशे व्योम्नि परिप्रेंखन् चपलः यः ताराणां परिकरः समूहः स एव कपालानि शिरोऽस्थीनि तैरंकितं चिह्नितं तलं स्वरूपं यस्य तादृशे इत्यर्थः। अत्र जटाभाभिर्भाभिरिति पितृवन इव व्योम्नीति चोपमा कलङ्काक्षवलयेति तारापरिकरकपालेति च रूपकं वियोगिव्यापत्तेरिवेत्युप्रेक्षा वैराग्यविशद इति श्लेषः। चत्वारोऽप्येते परस्परमङ्गाङ्गिभावेन प्रतीयन्ते इति सङ्करः॥ ५७१॥

ननु कलङ्क एवाक्षवलयमिति मयूरव्यंसकादिसमासे रूपकं कलङ्कोऽक्षबलयमिवेत्युपमितसमासे उपमाऽपि तथा चात्र किं रूपकोपमयोः सन्देहसङ्करः उत रूपकमेवेति संशयं निराकरोति—कलंक एवेति। इदमत्र निराकरणम्। अलङ्काराणामेकतरसाधकबाधकप्रमाणाभावे एव सन्देहसङ्करो भवति नचात्र तथा करधृतेति विशेषणस्यैव रूपकसाधकत्वादिति। तदेवाह—करधृतत्वमेवेति। कथं तद्रूपक-

साधकप्रमाणतां प्रतिपद्यते अस्य हि रूपकत्वे तिरोहितकलंकरूपं अक्षवलयमेव मुख्यतयाऽवगम्यते तस्यैव च करग्रहणयोग्यतायां सार्वत्रिकी प्रसिद्धिः । श्लेषच्छायया तु कलंकस्य करधारणं असदेव प्रत्यासत्त्या उपचर्य योज्यते शशांकेन केवलं कलंकस्य मूर्त्यैव उद्वहनात् कलंकोऽक्षवलयमिवेति तु उपमायां कलंकस्योत्कटतया प्रतिपत्तिः । नचास्य करधृतत्वं तत्त्वतोऽस्तीति मुख्येऽप्युपचार एव शरणं स्यात् ॥ एवंरूपश्च संकरः शब्दालंकारयोरपि परिदृश्यते । यथा—

> राजति नटीयमभिहतदानव रामाऽतिपाति सारावनदा ।
> गजता च यूथमविरतदानवरा साऽतिपाति सारावनदा ॥५७२॥

---

साधकमत आह—अस्य हीति । कलङ्काक्षवलयमित्यस्य हीत्यर्थः । तिरोहितेति । तिरोहितमाच्छादितं कलङ्करूपं येन तथाविधम् मुख्यतया विशेष्यतया तस्यैव अक्षवलयस्यैव करग्रहणं सर्वत्र प्रसिद्धम् न कलङ्कस्य ॥ ननु त्वन्मतेऽपि कलङ्के करधृतत्वाभावेन साधारणधर्माभावात्सादृश्याभावेन कथं सादृश्यघटितं रूपकमित्यत आह—श्लेषच्छाययेति । करपदश्लेषेण किरणे पाण्यभेदाध्यवसायात् प्रत्यासत्त्या कलङ्काधारमंडलस्य सान्निध्यसम्बन्धेन उपचर्य आरोप्य योज्यते सम्बध्यते । करधारणस्यासत्त्वे हेतुमाह—शशाङ्केनेति । मूर्त्यैव मण्डलात्मकशरीरेणैव न तु करेण उद्वहनात् धारणात् ॥ ननूपमायामपि असदेव करधृतत्वमुपचर्यताम् तथासत्युपमापरिग्रहे को दोष इत्यत आह—कलङ्क इति । उत्कटया विशेष्यतया अस्य कलङ्कस्य तत्त्वतः वस्तुनः मुख्येऽपि विशेष्यभूतेऽपि उपचारो लक्षणा शरणं स्यात् तथाच गुणे त्वन्याय्यकल्पनेति न्यायेन मुख्यविषयोपचारापेक्षया चामुख्योपचार एव श्रेयानिति रूपकमेवाश्रीयत इति भावः । लक्षणाया अन्याय्यत्वन्तु स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामहे इत्युक्तन्यायात् ॥ अयमङ्गाङ्गिभावरूपः सङ्करः शब्दालङ्कारयोर्न सम्भवति शब्दस्वरूपतया उपकार्योपकारकत्वाभावात् किन्तु [illegible]एव इत्यलङ्कारसर्वस्वकारमतं दूषयति—एवंरूपश्चेति । अनुग्राह्या[illegible]रूपश्चेत्यर्थः । उदाहरति—राजतीति । पर्वतवर्णनप्रस्तावे हर[illegible] पद्यमिदम् । इयं तव स्थली राजति शोभते कीदृशी अ-

अत्र यमकमनुलोमप्रतिलोमश्च चित्रभेदः पादद्वयगते परस्परापेक्षे ।

(२०९) एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः ॥ १४०॥

द्वयोर्बहूनां वा अलंकाराणामेकत्र समावेशेऽपि विरोधान्न यत्र युगपदवस्थानम् नचैकतरस्य परिग्रहे साधकम् तादितरस्य वा परिहारे बाधकमस्ति येनैकतर एव परिगृह्येत स निश्चयाभावरूपो द्वितीयः संकरः समुच्चयेन संकरस्यैवाक्षेपात् , उदाहरणम्—

जह गहिरो जह रअणणिब्भरो जह अ णिम्मलच्छाओ ।

तह किं विहिणा एसो सरसवाणीओ जलणिही ण किओ ॥ ५७३ ॥

भिहतोऽभिघातं प्राप्तः दानवानां दैत्यानां रासः क्रीडा सिंहनादशब्दो वा यस्यां सा । पुनः अतिपाती शीघ्रगामी सारावश्च आरावेण शब्देन सहितश्च नदोऽम्बुप्रवाहो यस्यां सा एवं सा प्रसिद्धा गजता गजसमूहः यूथं स्वकुलं अतिपाति अतिशयं रक्षति च किंभूना अविरतेन सन्ततेन दानेन मदजलेन वरा श्रेष्ठा । पुनः सारा बलिष्ठा । पुनः वनं द्यति खण्डयतीति वनदा वनखण्डिकेत्यर्थः ॥ आर्यागीतिश्छन्दः। आर्यापूर्वार्धे यदि गुरुणैकेनाधिकेन निधने युक्तम् ॥ इतरत्तद्वन्निखिलं यदीयमुदितेयमार्यागीतिरिति लक्षणात् ॥ अत्र यमकानुलोमप्रतिलोमयोः शब्दालङ्कारयोः परस्परापेक्षत्वेनाङ्गाङ्गिसंकरः तमेव दर्शयति अत्रेति । चित्रभेदः चित्रः चित्रनामा शब्दालङ्कारः । पादद्वयगते द्वितीयचतुर्थपादे ॥ ५७२ ॥

द्वितीयं सन्देहसङ्करं लक्षयति–एकस्येति । एकस्यैकतरस्यालङ्कारस्य ग्रहे निश्चये न्यायः साधकप्रमाणं दोषो बाधकप्रमाणन्तयोरभावात् योऽनिश्चयः सन्देहस्तद्रूपः सङ्कर इत्यर्थः । उभयत्र साधकबाधकप्रमाणाभावप्रयुक्तस्तुल्यकोटिकः संशयः सन्देहसङ्कर इति भावः। सूत्रं व्याचष्टे–द्वयोरिति । एकत्र एकस्मिन् काव्ये समावेशेऽपि स्वरूपतः सत्त्वेपि विरोधात् एकत्रावस्थानासहस्वभावत्वात् यत्र यस्मिन्काव्ये अवस्थानं निश्चयः । ननु वस्तुस्वरूपसत्त्वे किमिति न निश्चय इत्यत आह–नचेति । न्यायदोषाभावादित्यस्य व्याख्यानमिदम् परिग्रहे ग्रहणे परिहारे त्यागे । सङ्कर इति कथं लब्धमत आह–समुच्चयेनेति । समुच्चयबोधकेन सूत्रस्थचकारेण आक्षेपात् पूर्वसूत्रतोऽनुवृत्तेः । उदाहरति—जहेति ।

अत्र समुद्रे प्रस्तुते विशेषणसाम्यादप्रस्तुतार्थप्रतीतेः किमसौ समासोक्तिः किमप्रस्तुतस्य मुखेन कस्यापि तत्समगुणतया प्रस्तुतस्य प्रतीतेः इयमप्रस्तुतप्रसंशा इति सन्देहः ॥ यथा वा—

नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति ।
अधुनापि निरुद्धाशमविशीर्णमिदन्तमः ॥ ५७४ ॥

अत्र किं कामस्योद्दीपकः कालो वर्तते इति भंग्यन्तरेणाभिधानात्पर्यायोक्तम् उत वदनस्येन्दुबिम्बतयाऽध्यवसानादतिशयोक्तिः किं वा एतदिति वक्त्रं निर्दिश्य तद्रूपारोपवशाद्रूपकम् अथ वा तयोः समुच्चय-

---

**यथा गभीरो यथा रत्नलिर्भरो यथा च निर्मलच्छायः ।**
**तथा किं विधिना एष सरसपानीयो जलनिधिर्न कृतः ॥**

**इति संस्कृतम् । गभीरः गम्भीरः रत्ननिर्भरः रत्नपूर्णः निर्मलच्छायः स्वच्छकान्तिकः । आर्या मुखविपुलाछन्दः । अत्र समासोक्त्यप्रस्तुतप्रसंशयोः सन्देहरूपः सङ्करः । एकसाधकापरबाधकप्रमाणाभावात्तद्दर्शयति-अत्रेति । विशेषणसाम्यात् गभीरादिश्लिष्टविशेषणमहिम्ना ।** अप्रस्तुतार्थेति । **अप्रस्तुतपुरुषविशेषप्रतीतेः ।** समासोक्तिरिति । **ननु सरसपानीयत्वस्य पुरुषेऽसम्भवात्कथं विशेषणसाम्यमिति चेन्न अत्र पक्षे सरसपानीयशब्देन लक्षणया परोपभोग्यवस्तुमत्त्वस्य विवक्षितत्वात् सरसवाणीक इत्यर्थाद्वा । मुखेन वर्णनद्वारा प्रस्तुतस्य प्रस्तुतपुरुषविशेषस्य । इति सन्देहः इति सन्देहसङ्करः ॥ ५७३ ॥**

**बहूनां सन्देहसङ्करमुदाहरति-नयनेति । नयनयोरानन्दं ददातीति-नयनानन्ददायि एतदिन्दोर्बिम्बं प्रसीदति प्रसन्नं भवति निरुद्धा आशा येन तत् निरुद्धाशमिदं तमः अधुनापि अविशीर्णं न नष्टमित्यर्थः** बिम्बपक्षे **आशा दिक्** वक्त्रपक्षे **आशाऽभिलापः । अत्र बहूनां सन्देहसङ्करं दर्शयति-अत्रेति । भंग्यन्तरेण प्रकारान्तरेण पर्यायोक्तं कामोद्दीपकः कालो वर्तते इत्यर्थस्य व्यङ्ग्यस्यैव भङ्ग्यन्तरेणाभिधया प्रतिपादनात्पर्यायोक्तम् । अध्यवसानात् निश्चयात् अतिशयोक्तिः निगीर्याध्यवसानरूपा तयोः वक्त्रबिम्बयोः ।** समुच्चयेति । **इन्दुबिम्बं प्रसीदति एतद्वक्त्रं च प्रसीदति इत्यन्वयविवक्षायाम् दीपकम् एकस्य प्रकृतत्वेऽपरस्याप्रकृतत्वे क्रियादीपकम् । तुल्ययोगिता उभयोर-**

विवक्षायां दीपकम् अथ वा तुल्ययोगिता किमु प्रदोषसमये विशेषण-साम्यादानस्यावगतौ समासोक्तिः आहोस्विन्मुखनैर्मल्यप्रस्तावादप्रस्तुतप्रशंसा इति बहूनां सन्देहादयमेव संकरः ॥

यत्र तु न्यायदोषयोरन्यतरस्यावतारः तत्रैकतरस्य निश्चयान्न संशयः । न्यायश्च साधकत्वमनुकूलता दोषोऽपि बाधकत्वं प्रतिकूलता तत्र

सौभाग्यं वितनोति वक्त्रशशिनो ज्योत्स्नेव हासद्युतिः ॥ ५७५ ॥

इत्यत्र मुख्यतयाऽवगम्यमाना हासद्युतिर्वक्त्रे एवानुकूल्यं भजते इत्युपमायाः साधकम् शशिनि तु न तथा प्रतिकूलेति रूपकं प्रति तस्या अबाधकता ।

वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्यतः ॥ ५७६ ॥

---

पि प्रकृतत्वेऽप्रकृतत्वे वा तुल्ययोगिता प्रदोषसमये प्रदोषसमयवर्णने चन्द्रबिम्बस्य प्रकृतत्वे। विशेषणेति । आनन्ददायित्वरूपेत्यर्थः । अवगतौ प्रतीतौ समासोक्तिः प्रस्तुतवर्णने विशेषणमहिम्नाऽप्रस्तुतप्रतीतौ समासोक्तेरुक्तत्वात् । मुखेति । मुखनैर्मल्यवर्णनप्रस्तावात् चन्द्रस्याप्रस्तुतत्वेनाप्रस्तुतप्रसंशा । अयमेव सन्देहात्मा सङ्कर एव न्यायदोषयोरभावादिति भावः ॥ ५७४ ॥

न्यायदोषयोः सम्भवेऽयं सङ्करो न भवतीत्याह—यत्रत्विति । न संशयः न सन्देहसङ्करः, न्यायदोषशब्दयोरर्थमाह—न्यायश्चेति ।तत्र साधकबाधकयोर्मध्ये । साधकावतारमुदाहरति—सौभाग्यमिति । यथा ज्योत्स्ना शशिनः सौभाग्यं सुभगत्वं वितनोति एवं हासद्युतिः हासशोभा शशिसदृशवक्त्रस्य सौभाग्यं वितनोतीति वाक्यार्थः । अत्र हासद्युतिः वक्त्र शशीव इत्युपमायाः साधिका न तु वक्त्रमेव शशीति-रूपकस्य बाधिका । तदेवाह—इत्यत्रेति । मुख्यतया स्वारस्येन लक्षणादिकं विना सम्बद्धतया वक्त्रे विशेष्यतया प्रतीते वक्त्रे । उपमायाः वक्त्रं शशीवेत्युपमायाः साधकं प्रमाणम् शशिनीति विशेष्यतया प्रतीते शशिनि तथा आनुकूल्यानुरूपेण रूपकं वक्त्रमेव शशीतिरूपकम् तस्याः हासद्युतेः । अबाधकता हासपदेन विकासलक्षणायां कथंचिदर्थघटनात् ॥ रूपकस्य साधकावतारमुदाहरति—वक्त्रेन्दाविति । तव वक्त्रमेव इन्दुस्तस्मिन्सति अयं प्रसिद्धः अपरो द्वितीयः शीतांशुः यदभ्युद्यतः उदयं प्राप्तः तद्वृथेत्यर्थः । अत्रापरत्वं वक्त्रमेव इन्दुरिति

इत्यत्रापरत्वमिन्दोरनुगुणं न तु वक्त्रस्य प्रतिकूलमिति रूपकस्य साधकतां प्रतिपद्यते न तूपमाया बाधकताम् ।

राजनारायणं लक्ष्मीस्त्वामालिंगति निर्भरम् ॥ ५७७ ॥

इत्यत्र पुनरालिंगनमुपमां निरस्यति सदृशं प्रति परप्रेयसीप्रयुक्तस्यालिङ्गनस्यासम्भवात् ॥

पादाम्बुजं भवतु नो विजयाय मञ्जु—
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥ ५७८ ॥

इत्यत्र मञ्जीरशिञ्जितं अम्बुजे प्रतिकूलम् असम्भवादिति रूपकस्य बाधकम् न तु पादेऽनुकूलमित्युपमायाः साधकमभिधीयते विघ्न्युपम-

---

रूपकस्य साधकम् न तु वक्त्रं इन्दुरिवेत्युपमाया बाधकन्तदेवाह-इत्य त्रेति । इन्दोः इन्दोः प्रधानतया प्रतीतौ अनुगुणम् अनुकूलम् । अपरत्वस्य पूर्वापेक्षितत्वात् प्रथमेनेन्दुनाऽवश्यंभाव्यमिति वक्त्रेन्दाविन्यत्र वक्त्रे इन्दुतादात्म्यारोपरूपस्य साधकम् उपमायान्तु वक्त्रत्वेन मुखस्य प्रतीतौ शीतांशावपरत्वप्रतीतिर्न स्यात् इन्द्वन्तरस्याप्रतीतेरिति भावः ॥ बाधकावतारे उदाहरति-राजेति । हे नृप ! लक्ष्मीः नारायणप्रेयसी राजैव नारायणस्तं त्वां निर्भरं गाढं यथा स्यात्तथा आलिङ्गतीत्यर्थः । अत्रालिङ्गनं राजा नारायण इवेत्युपमायां बाधकम् स्वामिसदृशं प्रति प्रेयसीप्रयुक्तस्यालिङ्गनस्यानौचित्यात् तदेवाह इत्यत्रेति । पुनःशब्दस्त्वर्थे असम्भवात् अनुचितत्वात् । रूपकस्य बाधकावतारे उदाहरति— पादाम्बुजमिति ।

आनन्दमन्थरपुरन्दरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य ।

इति पूर्वार्धम् । अम्बिकायाः पार्वत्याः पादाम्बुजं अम्बुजसदृशः पादो नोऽस्माकं विजयाय भवतु कीदृशं मंजुना मधुरेण मंजीरस्य नूपुरस्य शिंजितेन शब्देन मनोहरम् आनन्देन मन्थरं मन्दं यथा स्यात्तथा पुरन्दरेण मुक्तानि समर्पितानि माल्यानि यत्र तादृशम् महिषासुरस्य मौलौ मस्तके हठेन निहितं चेत्यर्थः । अत्र मंजीरशिंजितं पाद एवाम्बुजमिति रूपके बाधकम् अम्बुजे मञ्जीरशिञ्जितस्याभावात्तदेवाह—इत्यत्रेति । बाधकमिति । तथा चात्र पादोऽम्बुजमिवेत्युपमैव न रूपकमिति भावः । ननु मञ्जीरशिञ्जितं यथाऽम्बुजप्रतिकूलत्वेन बाधकतया व्यपदिश्यते तथा पादेऽनुकूलत्वेन साधकतयाऽपि कथं न व्यपदिश्यते इति शङ्कां निराकरोति—नन्विति । तत्र हेतुमाह—विघ्न्युपमर्दिन इति ।

र्दिनो बाधकस्य तदपेक्षयोत्कटत्वेन प्रतिपत्तेः । एवमन्यत्रापि सुधीभिः परीक्ष्यम् ॥

(२१०) स्फुटमेकत्र विषये शब्दार्थालंकृतिद्वयम् ।
व्यवस्थितं च,

अभिन्ने एव पदे स्फुटतया यदुभावपि शब्दार्थालङ्कारौ व्यवस्थां समासादयतः सोऽप्यपरः संकरः । उदाहरणम्—

स्पष्टोल्लसत्किरणकेसरसूर्यबिम्बविस्तीर्णकर्णिकमथो दिवसारविन्दम् ।
श्लिष्टाष्टदिग्दलकलापमुखावतारबद्धान्धकारमधुपावलि संचुकोच ॥५७९॥

---

विधेर्विधानस्य पादेऽम्बुजत्वविधानरूपस्य रूपकस्य उपमर्दिनः निराकर्तुः बाधकस्य प्रकृते मञ्जीरशिञ्जितरूपस्य तदपेक्षया उपमासाधकापेक्षया उत्कटत्वेन बलीयस्तया प्रतिपत्तेः प्रतीतेरित्यर्थः । इदमत्र निराकरणम् प्राधान्यं हि व्यपदेशनियामकम् प्राधान्यं च बलवत्त्वं प्रकृते च स्वपक्षरक्षणात्परपक्षनिराकरणस्यैव उपमासाधनात् रूपकबाधनस्यैव बलीयस्त्वमिति बाधकतयैव व्यपदेशो युक्त इति दिक् ।

एवमिति । एवमन्यत्रापि साधकबाधकत्वं सुधीभिः परिभावनीयम् यथा—

यस्यानिशं दिविषदश्चरणारविन्द-
मुत्तंसयन्त्यमितभक्तिभरावनम्राः ।

इत्यत्रा त्तंसनमुपमाबाधकमिति ॥ ५७५–५७८ ॥

एकपदप्रतिपाद्यं तृतीयं सङ्करं लक्षयति—स्फुटमिति । एकत्र विषये अभिन्ने एव पदे यत् शब्दार्थालंकृतिद्वयं स्फुटं स्पष्टं यथा स्यात्तथा व्यवस्थितं भवति सोऽपि सङ्कर इत्यर्थः । सूत्रं व्याकरोति—अभिन्ने इति । अभिन्ने समाने एव सुप्तिङन्तरूपे पदे स्पष्टमन्यत् । अत्र शब्दार्थालंकारावित्युपलक्षणम् 'कलकलोऽलकलोलदृशाऽन्यथा' इत्यादौ शब्दालङ्कारयोरनुप्रासयमकयोः ।

वक्त्रारविन्दमधुलुब्धमधुव्रताश्च
धावन्त्यमी बकुलवंजुलकुंजमध्ये ।

इत्यादावर्थालङ्कारयोः रूपकातिशयोक्त्योश्चायमेव सङ्कर इति बोध्यम् । उदाहरति—स्पष्टेति । संध्यावर्णनम् अथोऽनन्तरं दिवस एवारविन्दं पद्मं संचुकोच निमिमील कीदृशं स्पष्टं यथा स्यात्तथा उल्लसन्तः किरणा एव केसराः किञ्जल्का यस्य तादृशं सूर्यबिम्बमेव विस्तीर्णा

अत्रैकपदानुप्रविष्टौ रूपकानुप्रासौ ।

(२११) तेनासौ त्रिरूपः परिकीर्तितः ॥ १४१ ॥

तदयमनुग्राह्यानुग्राहकतया सन्देहेन एकपदप्रतिपाद्यतया च व्यवस्थितत्वात्त्रिप्रकार एव संकरो व्याकृतः । प्रकारान्तरेण तु न शक्यो व्याकर्तुम् आनन्त्यात्तत्प्रभेदानामिति प्रतिपादिताः शब्दार्थोभयगतत्वेन त्रैविध्यजुषोऽलंकाराः । कुतः पुनरेष नियमो यदेतेषां तुल्येऽपि काव्यशोभातिशयहेतुत्वे कश्चिदलंकारः शब्दस्य कश्चिदर्थस्य कश्चिच्चोभयस्येति चेन्न । उक्तमत्र यथा काव्ये दोषगुणालंकाराणां शब्दार्थोभयगतत्वेन व्यवस्थायामन्वयव्यतिरेकावेव प्रभवतः निमित्तान्तरस्या-

---

कर्णिका वराटो बीजकोशो यस्य तथाभूतं पुनः श्लिष्टाः मिथः संबद्धाः अष्टौ दिश एव दलकलापाः दलसमूहा यस्य तच्च तन्मुखं रात्रेरारम्भस्तदवतारेण बद्धा निरुद्धाऽन्धकारात्मिका मधुपावलिर्भ्रमरपंक्तिर्यत्र तादृशं चेत्यर्थः । अत्र किरणकेसरेत्यत्र सूर्यबिम्बविस्तीर्णकर्णिकेत्यत्र दिग्दलकलापेत्यत्र च रूपकानुप्रासयोरेकपदानुप्रवेशरूपः सङ्करस्तदेवाह–अत्रेति । अत्र पादत्रये प्रत्येकं रूपकानुप्रासौ प्रविष्टौ ॥५७२॥

सङ्करस्योक्तं त्रैविध्यमुपसंहरति–तेनेति । तद्व्याचष्टे–तदयमिति । तत्तस्मात् अयं सङ्करः अनुग्राह्येति अङ्गाङ्गित्वेन सन्देहेन सन्देहास्पदत्वेन । एकेति । एकपदाश्रितत्वेन गम्यमानतया । चकारो भिन्नक्रमः व्यवस्थितत्वाच्चेति सम्बन्धः । प्रकारान्तरेण उपमारूपकयोः अनुप्रासोपमयोः अनुप्रासरूपकयोरित्येवं रीत्या । अशक्ये हेतुमाह–आनन्त्यादिति । शब्दगतत्वेन अर्थगतत्वेन शब्दार्थोभयगतत्वेन चानुगतीकृत्योक्तम् उपमारूपकादीन् विशिष्योपादाय तु अनन्तत्वात्तत्सङ्करो वक्तुं न शक्यते तदेवाह–शब्दार्थेति । त्रैविध्यजुषः उक्तत्रैविध्यवन्तः ।

ननु त्रिविधानामप्येषामलङ्काराणां काव्यशोभातिशयहेतुत्वस्य तुल्यत्वेऽपि कुत एष नियमः यत् कश्चिच्छब्दस्य कश्चिदर्थस्य कश्चिच्छब्दार्थयोरितीति शङ्कते–कुत इत्यादि । समाधत्ते–उक्तमत्रेति । अस्मिन्विषये नवमोल्लासे उक्तमपि दृढीकर्तुं पुनः स्मारयति–यथेति । न केवलमलङ्कारेष्वेवायं नियमः अपि तु दोषगुणयोरपीति सूचयितुं दोषगुणोक्तिः । [illegible] रसैकगतत्वेन शब्दार्थोभयगतत्वाभावात्तथापि गुणग्रहणं वामनादिपरमतेनोक्तम् । प्रभवतः समर्थौ भवतः अभावात् योऽ

भावात् । ततश्च योऽलंकारो यदीयान्वयव्यतिरेकावनुविधत्ते स तदलंका-
रो व्यवस्थाप्यते इति एवं च यथा पुनरुक्तवदाभास. परम्परितरूपकं
चोभयोर्भावाभावानुविधायितया उभयाऽलंकारौ तथा शब्दहेतुकार्थो-
न्तरन्यासप्रभृतयोऽपि द्रष्टव्याः । अर्थस्य तु तत्र वैचित्र्यम् उत्कटतया
प्रतिभासते इति वाच्यालंकारमध्ये वस्तुस्थितिमनपेक्ष्यैव लक्षिताः ।
योऽलंकारो यदाश्रितः स तदलंकार इत्यपि कल्पनायां अन्वयव्यतिरे-
कावेव समाश्रयितव्यौ तदाश्रयणमन्तरेण विशिष्टस्याश्रयाश्रयिभावस्या-
भावादित्यलंकाराणां यथोक्तनिमित्त एव परस्परव्यतिरेको ज्यायान् ॥

---

लङ्कारो यदाश्रित इत्यादिवक्ष्यमाणरीत्या । फलितमाह-ततश्चेति । अनु-
विधत्ते अनुसरति व्यवस्थाप्यते एवं च शब्दस्य परिवृत्त्यसहत्वे शब्द-
गतत्वं शब्दस्य परिवृत्तिसहत्वेऽर्थगतत्वं कस्यचित्परिवृत्त्यसहत्वे क-
स्यचिच्च परिवृत्तिसहत्वे उभयगतत्वमिति भावः-एव चेति । योऽलङ्का-
रो यदीयान्वयव्यतिरेकौ इत्याद्युक्तरीत्या शब्दार्थलङ्कारत्वव्यवस्थाऽ
भ्युपगमे च उभयोः शब्दार्थयोः । भावाभावेति । भावः सत्त्वम् अभावोऽ
सत्त्वन्तदनुविधायितया तदनुसारित्वेन उभयेति शब्दार्थालङ्कारौ अ-
र्थभाव । तनुवपुरित्यादि पुनरुक्तवदाभासे तनुशब्दस्य कृशत्ववाचक-
स्य परिवृत्त्यसहत्वाच्छब्दान्वयव्यतिरेकौ वपुःशब्दस्य परिवृत्तिसह-
त्वाच्चार्थान्वयव्यतिरेकावित्युभयालङ्कारत्वम् एवं विद्वन्मानसहंसेत्या
दिपरम्परितरूपके मानसशब्दस्य श्लिष्टतया परिवृत्त्यसहत्वात् हंस
शब्दस्य परिवृत्तिसहत्वादुभयालङ्कारत्वमिति । इत्थं दृष्टान्तं प्रदर्श्य
दार्ष्टान्तिकं दर्शयति-तथेति । शब्दहेतुकेति । शब्दमूलकार्थान्तरन्यासेत्य-
र्थः । नन्वेतेषामर्थान्तरन्यासप्रभृतीनामुभयालङ्कारत्वे कथमुभयाल-
ङ्कारप्रस्तावमुल्लंघ्यार्थमात्रालङ्कारप्रस्तावे गणनमित्यत आह-अर्थस्ये-
ति । तत्र अर्थान्तरन्यासादौ वैचित्र्यं चमत्कारकारित्वं उत्कटतया प्र-
कटतया । वाच्येति । अर्थालङ्कारमध्ये वस्तुस्थितिमनपेक्ष्यैव उभयाल-
ङ्कारत्वमविवक्षित्वैव लक्षिताः पठिताः ॥

यत्त्वलङ्कारसर्वस्वे योऽलङ्कारो यदाश्रितः स तदीयोऽलङ्कारः तेनाश्र-
याश्रयिभाव एव शब्दार्थोभयलङ्कारव्यवस्थायां बीजम् नान्वयव्यति-
रेकाविति तद्दूषयति-योऽलंकार इति । विशिष्टस्य प्रसिद्धस्य आश्रयेति ।
आधाराधेयभावस्य फलितमाह-इतीति । तस्मादित्यर्थः-यथोक्तेति । य-
थोक्तं अन्वयव्यतिरेकरूपं निमित्तं यस्य स एवेत्वर्थः । परस्परव्यति-
रेकः अन्योन्यभेदः । ज्यायान् अतिशयेन प्रशस्यः ॥

(२१२) एषां दोषा यथायोगं सम्भवन्तोऽपि केचन ।
उक्तेष्वन्तर्भवन्तीति न पृथक् प्रतिपादिताः ॥ १४२ ॥

तथाहि अनुप्रासस्य प्रसिद्ध्यभावो वैफल्यं वृत्तिविरोध इति ये त्र- यो दोषाः ते प्रसिद्धिविरुद्धताम् अपुष्टार्थत्व प्रतिकूलवर्णतां च यथा- क्रमं न व्यतिक्रामन्ति तत्स्वभावत्वात् क्रमेणोदाहरणम्—

चक्री चक्रारपङ्क्तिं हरिरपि च हरीन् धूर्जटिर्मूर्द्धजाग्रान्
अक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूबराग्रं कुबेरः ।
रंहः संघः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य
स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः ॥५८०॥

---

नन्वलंकाराणां दोषाः प्राचीनैरभिहिताः ते किं न सन्त्येव आहो- स्वित्संभविनोऽपि उपेक्षिता आद्येऽनुभवविरोधः अन्त्ये न्यूनतेत्यत- स्तान्दोषान्स्मारयित्वा उक्तदोषेष्वन्तर्भावयन्नाह—एषामिति । एषां शब्दा- लंकाराणामर्थालंकाराणां च केचन कतिचित् दोषाः सम्भवन्तोऽपि उक्तेषु सप्तमोल्लासोक्तेषु काव्यदोषेषु यथायोगं यथासंभवं अन्तर्भव- न्तीति हेतोः अस्माभिः पृथक् न प्रतिपादिता इत्यर्थः । तदुपपादयति— तथाहीति । वैफल्यं चमत्काराजनकत्वम् वृत्तिविरोधः वृत्तेरुपनागरिका- देर्विरोधः प्रतिकूलता त्रयो दोषाः प्राचीनैरुक्ताः प्रतिकूलवर्णतां माधु- र्यव्यंजिकायां वृत्तौ शब्दत एव टवर्गादेः ओजोव्यंजिकायामुद्धतगुम्फ- विधानमुखेन शिथिलबन्धस्यार्थतः पर्युदासादिति भावः । व्यतिक्रामन्ति नातिवर्तन्ते किन्तु तत्रैवान्तर्भूता भवन्तीत्यर्थः । अत्र हेतुमाह—तत्स्वभा- वत्वादिति । तत्तल्लक्षणाक्रान्तत्वादित्यर्थः ॥ अत्र प्रसिद्ध्यभावस्य प्रसि- द्धिविरुद्धतायामन्तर्भावे उदाहरति—चक्रीति ॥ सूर्यरथवर्णनमिदम् अहि- मरुचेः सूर्यस्य स स्यन्दनो रथो वो युष्मान् अवतात् रक्षतु स कः जग- दुपकृतये नित्ययुक्तस्य सदासज्जितस्य यस्य रथस्य चक्रारपंक्तिं चक्र- गतानामाराणां कीलकानां पंक्तिं चक्री विष्णुः स्तौति हरीन् अश्वान् हरिरिन्द्रः धूर्यानमुख्यं तत्रत्यध्वजानां पताकानां अग्रान् अग्रभागान् धूर्जटिः शिवः अक्षं चक्रं नक्षत्रनाथः चन्द्रः अरुणं सारथिं वरुणः कूब- राग्रं युगन्धराग्रं कुबेरः रंहः वेगं सुराणां संघः देवसमूहः अन्वहं प्र- तिदिनं प्रीत्या प्रसन्नः सन् स्तौतीति सर्वान्वयि । अत्र चक्रिप्रभृतीनां कर्तॄणां चक्रारपंक्त्यादीनां कर्मणां प्रतिनियमेन स्तुतिरनुप्रासानुरोधे- नैव निबद्धा न पुनः पुराणेतिहासादिषु तथा प्रसिद्धेति प्रसिद्ध्यभावः ।

अत्र कर्तृकर्मप्रतिनियमेन स्तुतिः अनुप्रासानुरोधेनैव कृता न पुराणेतिहासादिषु तथा प्रतीतेति प्रसिद्धिविरोधः ॥

भण तरुणि ! रमणमन्दिरमानन्दस्यन्दिसुन्दरेन्दुमुखि ! ।
यदि सल्लीलोल्लापिनि गच्छसि तत् किं त्वदीयम्मे ॥ ५८१ ॥
अनणुरणन्मणिमेखलमविरतशिंजानमञ्जुमञ्जीरम् ।
परिसरणमरुणचरणे रणरणकमकारणं कुरुते ॥ ५८२ ॥

अत्र वाच्यस्य विचिन्त्यमानं न किंचिदपि चारुत्वं प्रतीयते इत्यपुष्टार्थतैवानुप्रासस्य वैफल्यम् । अकुण्ठोत्कण्ठया इति अत्र शृङ्गारे परुषवर्णाडम्बरः पूर्वोक्तरीत्या विरुध्यत इति परुषानुप्रासोऽत्र प्रतिकूलवर्णतैव वृत्तिविरोधः ।

---

सोऽयं प्रसिद्धिविरोध एव तदेवाह अत्रेति प्रतिनियमेन चक्री चक्रारपंक्तिं स्तौतीति रीत्या ।

वैफल्यस्यापुष्टतार्थतायामन्तर्भावे उदाहरति–भणेति । भर्तृगृहगमनाय कृतावधारणां प्रति उपनायकस्योक्तिः । युग्मकमिदम् । हे आनन्दस्यन्दी सुंदरश्च यइन्दुः शारदपूर्णिमाचन्द्रस्तद्वत्प्रकाशमानं मुखं यस्यास्तादृशि सतीभिरुत्कृष्टाभिर्लीलाभिरुल्लपितुं वक्तुं शीलं यस्यास्तथाभूते अरुणौ सालक्तकौ चरणौ यस्यास्तथाभूते हे तरुणि ! त्वं यदि रमणमन्दिरं गच्छसि तत्तदा त्वदीयं परिसरणं गमनं मे मम अकारणं निमित्तं विना रणरणकं उत्कंठां किं कुतः कुरुते तद्गुण कीदृशं परिसरणम् अनणु बहुतरं यथा तथा रणन्तः शब्दायमानाः मणयो यस्यां तादृशी मेखला यत्र तथाभूतं अविरतं सन्ततं शिंजानं शब्दायमानं मंजु सुन्दरं मंजीरं नूपुरं यत्र तादृशं चेत्यर्थः । अत्र वैफल्यस्यापुष्टार्थतायामन्तर्भावं दर्शयति-अत्रेति । अत्रानणुरणन्मणिमेखलमिति अविरतशिंजानमंजुमंजीरमिति च परिसरणविशेषणद्वयं त्वदीयं परिसरण[illegible]रणं वृथा रणरणकं कुरुते इति वाच्यार्थस्य तेन व्यंग्य[illegible]भावविर[illegible] च न किंचिदुपकारे वर्त्तते केवलमनुप्रासार्थमेव तदुपात्तमिति अपुष्टार्थत्वमेवानुप्रासस्य वैफल्यमुच्यत इति भावः ॥ ५८१ ॥ ५८२ ॥

वृत्तिविरोधस्य प्रतिकूलवर्णतायामन्तर्भावे उदाहरति—अकुंठेति । इदं पद्यं सप्तमोल्लासे उदाहृतम् । पुरुषवर्णेति ठकाररूपेत्यर्थः आडम्बरः समारंभः पूर्वोक्तरीत्या अष्टमोल्लासे गुणविवेचनप्रस्तावोक्तरी-

यमकस्य पादत्रयगतत्वेन यमनमप्रयुक्तत्वं दोषः । यथा—

भुजङ्गमस्येव मणिः सदम्भा ग्राहावतीर्णेव नदी सदम्भाः ।
दुरन्ततां निर्णयतोऽपि जन्तोः कर्षन्ति चेतः प्रसभं सदम्भाः ॥५८३॥

उपमायामुपमानस्य जातिप्रमाणगतन्यूनत्वं अधिकता वा तादृशी अनुचितार्थत्वं दोषः । धर्माश्रये तु न्यूनाधिकत्वे यथाक्रमं हीनपदत्वमधिकपदत्वं च न व्यभिचरतः । क्रमेणोदाहरणम्—

चण्डालैरिव युष्माभिः साहसं परमं कृतम् ॥ ५८४ ॥

---

त्या विरुध्यते प्राक् ( ९.९. ) सूत्रे अटवर्गाः टवर्गस्य पर्युदासात् वृत्तिविरोधः शृंगारे हि उपनागरिकावृत्तिरुचिता तां विहाय परुषाया अङ्गीकारात् यो माधुर्यव्यंजकवृत्तिविरोधोऽनुप्रासदोषः स प्रतिकूलवर्णतैवेति भावः ॥

यमकस्य पादत्रयगतत्वेन यमनं दोषः स चाप्रयुक्तेऽन्तर्भवति कविभिस्तथाऽप्रयोगादित्याह–यमकस्येति । यमनं निबन्धनम् अप्रयुक्तत्वं ।

यमकन्तु विधातव्यं न कदाचिदपि त्रिपात् ।

इति निषेधात् अतः पादत्रये यमकमप्रयुक्तत्वदोष एव ॥ तदुदाहरति–भुजंगमस्येति । सदम्भाः सकपटाः खलाः दुरन्ततां दुःखग्राह्यान्तःकरणतां निर्णयतोऽपि निश्चिन्वतोऽपि जन्तोः प्राणिनः चेतश्चित्तं प्रसभं कर्षन्ति क इव सदम्भाः सत् विद्यमानं अम्भः कान्तिर्यत्र तादृशो भुजंगमस्य मणिरिव तथा ग्राहैर्नक्रैः अवकीर्णा व्याप्ता सदम्भाः सत् समीचीनं स्वच्छतरं अम्भः उदकं यस्यास्तथाभूता नदीवेत्यर्थः ॥ ५८३ ॥

अथार्थालंकारदोषेषु उपमादोषाणामुक्तेष्वन्तर्भावमाह–उपमायामिति । जातिर्गोत्वादिः प्रमाणं परिमाणन्तद्गतं न्यूनत्वं तादृशी जातिप्रमाणगता अनुचितार्थत्वं अयम्भावः उपमायां यौ न्यूनाधिकोपमानत्वे दोषौ तत्रोपमाने उपमेयापेक्षया जातिगतं प्रमाणगतं वा यन्न्यूनत्वमधिकत्वं वा तदनुचितार्थत्वमेवेति ॥ साधारणधर्मगतावपि दोषावुक्तदोषयोरन्तर्भवत इत्याह–धर्माश्रयेत्विति । धर्मः साधारणधर्मः आश्रयो ययोस्ते तथा च साधारणधर्मगते न्यूनाधिकत्वे अपि उपमानस्य न्यूनधर्मत्वं अधिकधर्मत्वं चेति फलितोऽर्थः । हीनेति । न्यूनपदत्वमधिकपदत्वं च दोषं न व्यभिचरतः नातिवर्तेते किन्तु तत्रैवान्तर्भवतः तत्र जातिगतन्यूनत्वस्यानुचितार्थतायामन्तर्भावे उदाहरति चंडालैरिति । साहस

वह्निस्फुलिङ्ग इव भानुरयं चकास्ति ॥ ५८५ ॥

अयं पद्मासनासीनश्चक्रवाको विराजते ।
युगादौ भगवान्वेधा विनिर्मित्सुरिव प्रजाः ॥ ५८६ ॥

पातालमिव ते नाभिः स्तनौ क्षितिधरोपमौ ।
वेणीदण्डः पुनरयं कालिन्दीपातसन्निभः ॥ ५८७ ॥

अत्र चण्डालादिभिरुपमानैः प्रस्तुतोऽर्थोऽत्यर्थमेव कदर्थित इत्यनुचितार्थता

समुनिर्लांछितो मौञ्ज्या कृष्णाजिनपटं वहन् ।
व्यराजन्नीलजीमूतभागाश्लिष्ट इवांशुमान् ॥ ५८८ ॥

---

मविचारकृतं कम स्पष्टमन्यत् । अत्र चंडालत्वजातेर्न्यूनतया दुष्कर्मकारित्वव्यक्तेरनुचितार्थत्वम् ॥ ५८४ ॥

प्रमाणगतन्यूनत्वस्यानुचितार्थतायामन्तर्भावे उदाहरति-वह्नीति । वह्निस्फुलिंग इव अयं भानुश्चकास्ति । अत्र भगवतः सहस्रधाम्ना ज्वलनस्फुलिंगरूपमुपमानं परिमाणतो न्यूनम् ॥ ५८५ ॥

जातिगताधिकताया अनुचितार्थतायामन्तर्भावे उदाहरति—अयमिति । अयं चक्रवाकः पद्ममेव आसनन्तत्रासीन उपविष्टः युगादौ प्रजाः विनिर्मित्सुः निर्मातुमिच्छुः भगवान्वेधा ब्रह्मेव विराजते अत्र ब्रह्मत्वजात्या उपमानमधिकम् । कल्पभेदेन भेदाद्ब्रह्मत्वं जातिः ॥५८६॥

प्रमाणगताधिकताया अनुचितार्थायामन्तर्भावे उदाहरति—पातालमिति । ते नाभिः पातालमिव ते स्तनौ क्षितिधरोपमौ पर्वततुल्यौ ते अयं पुनः वेणीदंडः कालीन्दीपातसन्निभः यमुनाप्रवाहतुल्यः । अत्र परिमाणत उपमानमधिकम् ॥ एषूदाहरणेषु चंडालादिभिरुपमानैरुपमेयभूता अर्था अत्यन्तमेव तिरस्कृताः निन्दोपहासादिप्रतीतेरित्यनुचितार्थता तदेवाह—अत्रेति । प्रस्तुतः उपमेयरूपः पूर्वोदाहरणद्वये निन्दाप्रतीतेः उत्तरोदाहरणद्वये उपहासप्रतीतेरनुचितार्थत्वमिति भावः ॥ धर्माश्रितस्य न्यूनत्वस्य हीनपदतायामन्तर्भावे उदाहरति—समुनिरिति । मौञ्ज्या मेखलया लांछितः चिह्नितः कृष्णाजिनरूपं पटं वहन् स मुनिः नारदः नीलेन नीलवर्णेन जीमूतभागेन मेघखंडेन आश्लिष्टः सम्बद्धः अंशुमान् सूर्य इव व्यराजदित्यर्थः । अत्रोपमेयमौञ्जीस्थानीयस्तडिल्लक्षण उपमानस्य धर्मो न केनापि पदेन प्रतिपादितः न चाक्षेपादिना

अत्रोपमानस्य मौञ्जीस्थानीयस्तडिल्लक्षणो धर्मः केनापि पदेन न प्रतिपादित इति हीनपदत्वम् ।

स पीतवासाः प्रगृहीतशार्ङ्गो मनोज्ञभीमं वपुराप कृष्णः ।

शतह्रदेन्द्रायुधवान्निशायां संसृज्यमानः शशिनेव मेघः ॥५८९॥

अत्रोपमेयस्य शङ्खादेरनिर्देशे शशिनो ग्रहणमतिरिच्यते इत्यधिकपदत्वम् । लिङ्गवचनभेदोऽपि उपमानोपमेययोः साधारणं चेत् धर्ममन्यरूपं कुर्यात्तदा एकतरस्यैव तद्धर्मसमन्वयावगतेः सविशेषणस्यैव तस्योपमानत्वमुपमेयत्वं वा प्रतीयमानेन धर्मेण प्रतीयते इति प्रक्रान्तस्या-

---

स्पष्टं प्रतीयते इति न्यूनपदत्वन्तदेवाह-अत्रेति । उपमानस्य अंशुमतः ॥

धर्माश्रितस्य धर्मगतस्य अधिकत्वस्याधिकपदतायामन्तर्भावे उदाहरति—सपीतेति । पीतं पीतवर्णं वासो वस्त्रं यस्य तादृशः प्रगृहीतं शार्ङ्गं धनुर्येन तथाभूतः स कृष्णः मनोज्ञं सुन्दरं तद्भीमं च वपुः आप क इव शतह्रदा विद्युत् इन्द्रायुधं शक्रधनुश्च तद्वान् निशायां शशिना संसृज्यमानः संबध्यमानः मेघ इवेत्यर्थः । अत्रोपमेये श्रीकृष्णे शंखाद्यनिर्देशात् उपमाने मेघे शंखतुल्यस्य शशिनो ग्रहणमतिरिक्तमिति धर्माधिक्यं दोषः सोऽयमधिकपदत्वमेव तदेवाह--अत्रेति । उपमेयस्य श्रीकृष्णस्य ॥ ५८९ ॥

उपमायामुपमानोपमेययोर्भिन्नलिंगत्वं भिन्नवचनत्वं चेति दोषद्वयं प्राचीनैरुक्तं तदपि भग्नप्रक्रमतायामन्तर्भवतीत्याह—लिंगेति । उपमानोपमेययोर्लिङ्गवचनभेदोऽपि चेद्यदि साधारणं साधारणत्वेन विवक्षितं धर्म अन्यरूपं असाधारणरूपं कुर्यात् । यथा चिन्तारत्नमित्युदाहरणे चिन्तारत्नमित्युपमानस्य त्वमित्युपमेयस्य यः नपुंसकत्वपुंस्त्वरूपयोर्लिंगयोर्भेदः साधारणत्वेन विवक्षितं च्युतत्वरूपं पुंस्त्वावरुद्धं धर्मं च्युतमिति नपुंसकत्वावरुद्धमसाधारणं करोतीति ॥ एकतरस्यैव उपमानस्यैव उपमेयस्यैव वा । तद्धर्मेति । उपात्तधर्मेत्यर्थः । नन्वस्तु एकतरस्यैवोपात्तधर्मसमन्वयावगतिः का नो हानिरिति चेत्तथा सति कथमुपमानत्वमुपमेयत्वं च स्यात् यतः उपमानत्वमुपमेयत्वं च विशेषणान्वितयोरेव वस्तुनोर्भवति नन्तु केवलयोरित्याह—सविशेषणेति । विशेषणीभूतसाधारणधर्मान्वितस्यैव तस्य वस्तुनः उपमानत्वं उपमेयत्वं वेति प्रतीतिर्न भावः । एतदनन्तरं तच्चेति शेषः । तच्च उपमानत्वमुपमेयत्वं च प्रतीयमानेन गम्यमानेन धर्मेण प्रतीयत इत्यर्थः । प्रक्रान्तस्यार्थ-

र्थस्य स्फुटमनिर्वाहादस्य भग्नप्रक्रमरूपत्वम् । यथा—

चिन्तारत्नमिव च्युतोऽसि करतो धिङ्मन्दभाग्यस्य मे ॥ ५९० ॥

सक्तवो भक्षिता देव ! शुद्धाः कुलवधूरिव ॥ ५९१ ॥

यत्र तु नानात्वेऽपि लिङ्गवचनयोः सामान्याभिधायि पदं स्वरूपभेदं नापद्यते न तत्रैतद्दूषणावतारः उभयथापि अस्यानुगमक्षमस्वभावत्वात् यथा—

---

स्य उपमालंकारस्य स्फुटमिति । झटिति प्रतीत्यनुदयात् लिंगादिविपरिणामप्रयुक्तविलम्बात् अस्य लिंगवचनयोर्भेदरूपस्य दोषस्य–भग्नेति । उक्तरीत्या उपमाने प्रतीयमानतया वाच्यतया वा उपक्रान्तस्य साधारणधर्मस्य उपमेये तदन्यथा वाच्यतया प्रतीयमानतया वा उपसंहाराद्भग्नप्रक्रमत्वमेति भावः ॥ उदाहरति–चिन्तेति । चिन्तितार्थदायकं रत्नं चिन्तामणिरिवेत्यर्थः । अत्रोपमेये पुंसि च्युत इति वाच्यो धर्मः उपमाने चिन्तारत्ने तु च्युतमिति लिंगविपरिणामेन प्रतीयमानो धर्मः । तथा चात्र च्युत इति साधारणधर्मः पुंस्त्वविशिष्टे उपमेयमात्रेऽन्वेति न तु नपुंसकत्वविशिष्टे उपमाने विशेष्यविशेषणभावान्वये समानलिंगवचनयोस्तन्त्रत्वादिति वाच्यधर्मविशिष्टप्रतीयमानधर्मविशिष्टयोरुपमेयोपमानत्वप्रतीतिर्भग्नप्रक्रमत्वमेवेति लिंगभेदरूपदोषस्य भग्नप्रक्रमतायामन्तर्भाव इति दिक् ॥ ५९० ॥

वचनभेदरूपदोषस्य भग्नप्रक्रमतायामन्तर्भावे उदाहरति–सक्तव इति । हे देव ! राजन् ! मया कुलवधूरिव शुद्धाः पवित्राः सक्तवः भक्षिता इत्यर्थः । अत्र बहुत्वविशिष्टः शुद्धत्वरूपः साधारणो धर्मः बहुत्वविशिष्टेषु सक्तुषु उपमेयेष्वेवान्वेति न त्वेकत्वविशिष्टे वधूरूपे उपमाने इति वाच्यधर्मविशिष्टप्रतीयमानधर्मविशिष्टयोरुपमेयोपमानत्वप्रतीतिर्भग्नप्रक्रमत्वमेव ॥ ५९१ ॥

यत्र तु लिंगयोर्वचनयोर्वा भेदेऽपि साधारणधर्मवाचकं पदमुपात्तस्वरूपभेदं न प्राप्नोति किन्तु उपात्तेनैव रूपेणोभयत्राप्यन्वेति तत्र दोषत्वमेव नास्ति आनुपूर्वीसाम्येनोभयत्राप्यस्यान्वययोग्यस्वभावत्वादित्याह–यत्र त्विति । नानात्वेऽपि भेदेऽपि लिङ्गेति लिङ्गयोर्वचनयोर्वा सामान्येति साधारणधर्मवाचकम् । स्वरूपभेदं आनुपूर्वीभेदम् । नापद्यते न प्राप्नोति न तत्रेति । भग्नप्रक्रमत्वरूपदोषावतारः । तत्र हेतुमाह–उभयथेति । उभयप्रकारेणापि उपमानलिंगवचनविशिष्टत्वेनोपमेयलिंगवचनविशिष्टत्वेनापि अस्य सामान्याभिधायिपदस्य अनु-

गुणैरनर्घ्यैः प्रथितो रत्नैरिव महार्णवः ॥ ५९२ ॥

तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृत ।
दधते स्म परां शोभां तदीया विभ्रमा इव ॥ ५९३ ॥

कालपुरुषविध्यादिभेदेऽपि न तथा प्रतीतिरस्खलितरूपतया विश्रान्तिमासादयतीत्यसावपि भग्नप्रक्रमतयैव व्याप्तः । यथा--

अतिथिं नाम काकुत्स्थात्पुत्रमाप कुमुद्वती ।
पश्चिमाद्यामिनीयामात्प्रसादमिव चेतना ॥ ५९४ ॥

---

गमेति अन्वययोरयस्वभावत्वात् । तत्र लिंगभेदेऽपि भग्नप्रक्रमत्वरूपदोषाभावे उदाहरन्ति-गुणैरिति । महार्णवः अनर्घ्यैः बहुमूल्यैः रत्नैरिव स राजा अनर्घ्यैः पूज्यैर्गुणैः प्रथितः प्रसिद्धः अभूदित्यर्थः । अत्रोपमेयोपमानवाचकयोर्गुणरत्नशब्दयोर्लिङ्गभेदेऽपि अनर्घ्यैरिति साधारणधर्मवाचकपदस्य तृतीयाबहुवचनान्तस्य लिंगद्वयेऽपि तुल्यरूपत्वान्न भग्नप्रक्रमत्वदोषः ॥ ५९२ ॥

वचनभेदेऽपि भग्नप्रक्रमत्वरूपदोषाभावे उदाहरन्ति-तद्वेष इति । तस्या नायिकाया वेषः भूषणाम्बरादिधारणपरिपाटी तदीयाः प्रकृतनायिकासम्बन्धिनः विभ्रमा हावभेदा इव परां शोभां दधतेस्म कीदृशः मधुरतया भृतः पूरितः विभ्रमपक्षे मधुरतां बिभ्रति धारयन्ति ये ते मधुरताभृतः अतएव अन्याभिः स्त्रीभिः अन्यस्त्रीवेषैः असदृशः असमानः विभ्रमपक्षे अन्यस्त्रीविभ्रमैरसमान इत्यर्थः । अत्र तद्वेष इत्युपमेयम् विभ्रमा इत्युपमानं असदृश इति मधुरताभृत इति दधत इति च साधारणधर्माभिधायीति पदानि उभयत्रान्वयसमर्थानीति वचनभेदेऽपि रूपसाम्यान्न दोषः । अत्र च श्लेषोऽप्युपमोपपादक एवेति ॥ ५९३ ॥

उपमायां कालादिभेदरूपदोषान्तरमपि भग्नप्रक्रमतायामन्तर्भवतीत्याह-कालेति । कालो भूतादिः पुरुषः प्रथममध्यमोत्तमरूपः विधिः प्रेरणाप्रवर्त्तनादिशब्दाभिधेयः प्रवृत्त्यनुकूलव्यापारः लिङ् लोट् तव्यप्रत्ययार्थः आदिना आशीर्वादादिः तथा कालादीनामैक्यस्थल इव अस्खलितेति । अपरिवर्त्तितस्वरूपेण विश्रान्तिं परिसमाप्तिं नासादयति न प्राप्नोति । असावपि कालादिभेदरूपदोषोऽपि व्याप्तः आक्रान्तः न पृथगिति भावः । तत्र कालभेदरूपदोषस्य भग्नप्रक्रमतायामन्तर्भावे उदाहरन्ति-अतिथिमिति । कुमुद्वती कुमुदनागराजस्य भगिनी काकुत्स्थात् कुशात् अतिथिं नाम प्रसिद्धं पुत्रं आप का कस्मात् कमिव चेतना धीः पश्चिमात् चरमात् यामिन्याः निशायाः यामात्प्रहरात्

अत्र चेतना प्रसादमाप्नोति न पुनरापेति कालभेदः ॥

प्रत्यग्रमज्जनविशेषविविक्तमूर्त्तिः
कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।
विभ्राजसे मकरकेतनमर्चयन्ती
बालप्रवालविटपप्रभवा लतेव ॥ ५९५ ॥

अत्र लता विभ्राजते न तु विभ्राजसे इति सम्बोध्यमाननिष्ठस्य परभागस्य असम्बोध्यमानविषयतया व्यत्यासात्पुरुषभेदः ।

गङ्गेव प्रवहतु ते सदैव कीर्त्तिः ॥ ५९६ ।

इत्यादौ च गङ्गा प्रवहति न तु प्रवहतु इति अप्रवृत्तप्रवर्त्तना-

---

प्रसादं उद्बोधमिवेत्यर्थः । अत्र चेतनाप्रसादमाप्नोति इति प्रकृतं न तु तमापेति कालभेदे प्रक्रमभेद एव । तदेवाह–अत्रेति ॥ ५९४ ॥

पुरुषभेदरूपदोषस्य भग्नप्रक्रमतायामन्तर्भावे उदाहरति–प्रत्यग्रेति । वासवदत्तां प्रति वत्सराजस्योक्तिः । हे सखि ! त्वं लतेव विभ्राजसे कीदृशी प्रत्यग्रो नूतनो यो मज्जनविशेषस्तेन विविक्ता शुद्धा स्वच्छा मूर्त्तिर्यस्यास्तादृशी कौसुम्भेन कुसुम्भसम्बन्धिना रागेण लौहित्येन रुचिरः सुन्दरः स्फुरन् देदीप्यमानः अंशुकस्य वस्त्रस्यान्तः प्रान्तो यस्यास्तादृशी । लतापक्षे कुसुम्भमेव कौसुम्भं पुष्पं तद्वद्रागो लौहित्यं तेन रुचिरा चासौ स्फुरद्भिरंशुभिः पुष्पधूलिभिः कान्ता मकरकेतनं काममर्चयन्ती लतापक्ष समुद्रं शोभयन्ती कथंभूता लता बालानि नूतनानि प्रवलानि किसलयानि यस्य तादृशो यो विटपः प्रभवः उत्पत्तिस्थानं यस्यास्तथाभूता । अत्र लता विभ्राजते त्वं विभ्राजसे इति प्रथममध्यमरूपपुरुषभेदः । तदेवाह–अत्रेति । सम्बोध्यमाना वासवदत्ता तन्निष्ठस्य तद्विषयकस्य परभागस्य से प्रत्ययस्य असंबोध्येति अचेतनत्वेन लतायाः सम्बोध्यत्वाभावात्तद्विषयकतया व्यत्यासात् विभ्राजते इति परिवर्तनात् । सोऽयं भग्नप्रक्रमतयैव व्याप्तः ॥ ५९५ ॥

विधिभेदरूपदोषस्य भग्नप्रक्रमतायामन्तर्भावे उदाहरति–गङ्गेवेति । स्पष्टार्थः अत्र गंगा प्रवहतीति विवक्षितं न तु सा प्रवहतु इति अप्रवृत्तप्रवर्तनारूपस्य विधेर्व्यत्यासाद्भग्नप्रक्रमतैव तदाह–इत्यादाविति । अप्रवृत्तस्य कस्मिंश्चित्कार्ये प्रवृत्तिरहितस्य भृत्यादेर्या प्रवर्त्तना प्रवृत्त्यनुकूल. स्वाम्यादेः व्यापारः त्वमिदं कुर्वित्यादिरूपस्तदात्मनस्तद्रूपस्य ॥ ५९६ ॥

त्मनो विधिः। एवंजातीयकस्यान्यस्यार्थस्य उपमानगतस्यासम्भवाद्विध्यादिभेदः।

न तु समानमुच्चारितं प्रतीयमानं वा धर्मान्तरमुपादाय पर्यवसितायामुपमायामुपमेयस्य प्रकृतधर्माभिसम्बन्धात्र कश्चित्कालादिभेदोऽस्ति यत्राप्युपात्तेनैव सामान्यधर्मेण उपमाऽवगम्यते यथा युधिष्ठिर इवायं सत्यं वदतीति तत्र युधिष्ठिर इव सत्यवाद्ययं सत्यं वदतीति प्रतिप-

---

विध्यादीत्यादिपदार्थमाह—एवमिति। एवंविधस्येत्यर्थः। अन्यस्यार्थस्य-'चिरं जीवतु ते पुत्रो मार्कण्डेयो मुनिर्यथा' इत्याशीर्वादादिरूपस्य। उपमानेति। उपमानगतत्वेनोपमेयेऽसम्भवात् विध्यादिभेदः विध्यादिव्यत्यासः तेन भग्नप्रक्रमत्वमिति भावः॥

ननूदाहृतेषु इवादिपदेनोभयान्वययोग्यधर्मान्तरेणैव साम्यं बोध्यताम् उपात्तधर्मस्तु उपमेय एवान्वेतु इति कथं लिङ्गादिभेदो दोष इति शंकते—नत्विति। समानं साधारणम् धर्मान्तरमित्यनेनान्वेति प्रतीयमानं अनुक्तमपि गम्यम्। धर्मान्तरम् कालाद्युपहितोपात्तभिन्नरूपम् कालविशेषाद्यविरुद्धम्। पर्यवसितायां निष्पन्नायां प्रकृतेति। कालविशेषाद्यविरुद्धधर्माभिसम्बन्धात्। न कश्चिदिति। काम इव सुन्दरोऽयं राजा भातीत्यादौ काम इवायं राजा भातीत्यादौ च यथाक्रमे उच्चारितं प्रतीयमानं च सौन्दर्यरूपं धर्मान्तरमवलम्ब्य उपमा प्रतीयते भातीति क्रिया चोपमेये राज्ञ्येवान्वेति ननूपमानीभूते कामेऽपीति कथं कालादिभेदो दोष इति समुदायार्थः॥ ननु यत्र नास्ति समानधर्मान्तरम् अपितु निरुक्तवाक्यमेवौपम्ये घटकम् यथा युधिष्ठिर इवायं सत्यं वदतीति तत्र का गतिः युधिष्ठिरो हि सत्यमवादीत् तु सत्यं वदति तथा चात्रोपात्तं सत्यं वदतीति सत्यवदनकर्तृत्वमेव साधारणो धर्मः स च वस्तुगत्या भिन्नकालक एवेति कथमत्र पूर्वोक्तं समाधानमित्याह—यत्रापीति। यत्र साधारणधर्मान्तरासत्त्वस्थले अपिः पूर्वोक्तसमुच्चये उपात्तेनैव भिन्नकालादितया उच्चारितशब्दप्रतिपादितेनैव सामान्यधर्मेण साधारणधर्मेण अवगम्यते ज्ञायते यथेति। अत्र सत्यं वदतीत्युपात्त एव साधारणो धर्मः स च 'वर्त्तमाने लडि'ति सूत्राद्वर्त्तमानकालावच्छिन्न एवेति भिन्नकाल एव युधिष्ठिरे वर्त्तमानसत्यवचनाभावात् धर्मान्तरं तु नास्त्येवेति भावः। निर्दोषत्वमुपपादयति—तत्रेति। प्रतिपत्स्यामहे आस्यामहे। एवं च युधिष्ठिर इव सत्यवदनशीलोऽयमिति तच्छीलत्वस्यातीतादिकाले-

स्यामहे सत्यवादी सत्यं वदतीति च न पौनरुक्त्यमाशङ्कनीयम् रैपोषं पुष्णातीतिवत् युधिष्ठिरसत्यवदनेन सत्यवाद्ययमित्यर्थावगमात्। सत्यमेतत् किन्तु स्थितेषु प्रयोगेषु समर्थनमिदन्नतु सर्वथा निरवद्यम् प्रस्तुतवस्तुप्रतीतिव्याघातादिति सचेतस एवात्र प्रमाणम्। असादृश्या-सम्भवावप्युपमायामनुचितार्थायामेव पर्यवस्यतः। यथा—

ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम्॥ ५९७॥

अत्र काव्यस्य शशिना अर्थानां च रश्मिभिः साधर्म्यं कुत्रापि न प्रतीतमित्यनुचितार्थत्वम्।

निपेतुरास्यादिव तस्य दीप्ताः शरा धनुर्मण्डलमध्यभाजः।
जाज्वल्यमाना इव वारिधारा दिनार्धभाजः परिवेषिणोऽर्कात्॥५९८॥

---

एवपि साम्यादुपमा न तु वर्त्तमानेन सत्यवदनेन योगात् येनातीते युधिष्ठिरे तद्वाधात्कालभेदः स्यादिति भावः। ननु सत्यवादित्वमात्रेणोपमायां सत्यं वदतीति पुनरुक्तं स्यादत आह–सत्यवादीति। तत्र दृष्टान्तमाह–रैपोषमिति। अत्र धनकरणकपोषणाभिन्ना पुष्टिरिति रीत्या धात्वर्थस्य सामान्यविशेषभावेन विशेषणविशेष्यभावात् यथा न पुनरुक्तिस्तथाऽत्रापीति भावः। यथा युधिष्ठिरो लोभादिना न सत्यं वदति किंतु सत्यवदनस्वभावात्तथाऽयमपीत्यर्थलाभान्न पौनरुक्त्यमिति तत्त्वम्।

एतदृशान्वयाध्याहारादिकल्पनंमानुभविकमित्याशयवानर्धाङ्गीकारेण परिहरति–सत्यमेतदिति। सत्यमित्यर्धाङ्गीकारे स्थितेषु रैपोषमित्यादिषु साधुत्वार्थं नियमितेष्वनुप्रयोगेषु कथंचित्समर्थनन्न तु सर्वथैव तन्निरवद्यम्। अत्र हेतुमाह–प्रस्तुतेति। प्रस्तुतस्य प्रक्रान्तस्य वस्तुनः उपमायाः प्रतीतेर्विलम्बरूपाद्विघातात् तथाचौपम्यप्रतीतौ कालादेरेकमात्रान्वयित्वादन्यत्र भङ्गेन भग्नप्रक्रमत्वानपाय एवेति भावः सचेतसः सहृदयाः अत्र उक्तार्थे प्रमाणं साक्षिणः असादृश्यासम्भवयोरुपमादोषयोरनुचितार्थायामन्तर्भावमाह–असादृश्येति। पर्यवस्यतः अन्तर्भवतः तत्राद्यमुदाहरति–ग्रथ्नामीति। काव्यं शशीव अर्था रश्मय इवेत्युपमित समासः न प्रतीतम् न क्वापि प्रसिद्धम्॥ ५९७॥

असम्भवरूपदोषस्यानुचितार्थायामन्तर्भावे उदाहरति–निपेतुरिति। धनुर्मंडलमध्यभाजः धनुर्मण्डलमध्यगतस्य तस्य राज्ञः आस्यान्मुखादिव दीप्ताः शराः निपेतुः दिनार्धभाजो मध्याह्नगतात् परिवेषिणः

अत्रापि ज्वलन्त्योऽम्बुधाराः सूर्यमण्डलान्निष्पतन्त्यो न सम्भव-न्तीत्युपनिबध्यमानोऽर्थोऽनौचित्यमेव पुष्णाति ।

उत्प्रेक्षायामपि सम्भावनं ध्रुवेवादय एव शब्दा वक्तुं सहन्ते न यथाशब्दोऽपि केवलस्यास्य साधर्म्यमेव प्रतिपादयितुं पर्याप्तत्वात् तस्य चास्यामविवक्षितत्वादिति तत्राशक्तिरस्यावाचकत्वं दोषः । यथा—

उदयौ दीर्घिकागर्भान्मुकुलं मेचकोत्पलम् ।
नारीलोचनचातुर्यशङ्कासंकुचितं यथा ॥ ५९९ ॥

उत्प्रेक्षितमपि तात्त्विकेन रूपेण परिवर्जितत्वात् निरुपाख्यप्रख्यं तत्समर्थनाय यदर्थान्तरन्यासोपादानं तत् आलेख्यमिव गगनतलेऽत्य-न्तमसमीचीनमिति निर्विषयत्वमेतस्यानुचितार्थतैव दोषः । यथा —

दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।

---

परिवेषशालिनः अर्कात् जाज्वल्यमाना अतिशयेन ज्वलन्त्यो वारि धारा इत्यर्थः । अत्रोपमानाप्रसिद्धिर्दोषः स चोक्तायामनुचितार्थता-यां पर्यवस्यति तदेवाह—अत्रेति । न सम्भवन्तीति । मेघमण्डलापेक्षया ऊर्ध्वं सूर्यमण्डलस्य स्थितत्वात् । अर्थः उपमानरूपः अनौचित्यं उप-मेयस्येति शेषः । पुष्णाति प्रकाशयति । उत्प्रेक्षादोषस्याशक्तशब्दत्व-स्यावाचकत्वेऽन्तर्भावमाह—उत्प्रेक्षायामिति । केवलस्य पदान्तरेणासम-स्तस्य अस्य यथाशब्दस्य साधर्म्यं साधारणधर्मसम्बन्धं पर्याप्तत्वात् समर्थत्वात् तस्य च साधर्म्यस्य च अस्यां उत्प्रेक्षायां तत्र सम्भाव-नाभिधाने अस्य यथाशब्दस्य । उदाहरति—उदयाविति । मुकुलं मुकुल-भावापन्नं मेचकोत्पलं नीलोत्पलं नारीलोचनचातुर्यशङ्कासङ्कुचितं यथा सुन्दरीनयनचातुर्यमधिकमिति शङ्कया सङ्कुचितमिव दीर्घिकागर्भात् उदयौ प्रादुरासीदित्यर्थः । अत्र यथाशब्दस्योत्प्रेक्षायामवाचकत्व-मेव दोषः ॥ ५९९ ॥

निर्विषयत्वमपि उत्प्रेक्षितार्थसमर्थकार्थान्तरन्यासदूषणमनुचिता-र्थतायामन्तर्भवतीत्याह—उत्प्रेक्षितमपीति । सम्भावितमपि तात्त्विकेन वास्तविकेन परिवर्जितत्वात् रहितत्वात् निरुपाख्यं अलीकं शशवि-षाणादि तत्प्रख्यं तत्तुल्यं तत्समर्थनाय उत्प्रेक्षितार्थसाधनाय निर्विष-यत्वं एतन्नामकदूषणम् एतस्य अर्थान्तरन्यासस्य । उदाहरति—दि-वाकरादिति । यो हिमालयः दिवा दिवसे दिवाकराद्भीतं त्रस्तमिव अत

क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसामतीव ॥ ६०० ॥

अत्राचेतनस्य तमसो दिवाकरात्त्रास एव न सम्भवतीति कुत एव तत्प्रयोजितमद्रिणा परित्राणम् सम्भावितेन तु रूपेण प्रतिभासमानस्यास्य न काचिदनुपपत्तिरवतरतीति व्यर्थ एव तत्समर्थनायां यत्नः ।

साधारणविशेषणवशादेव समासोक्तिरनुक्तमपि उपमानविशेषं प्रकाशयतीति तस्यात्र पुनरुपादाने प्रयोजनाभावात् अनुपादेयत्वं यत्तत् अपुष्टार्थत्वं पुनरुक्तं वा दोषः । यथा--

स्पृशति तिग्मरुचौ ककुभः करैर्दयितयेव विजृम्भिततापया ।
अतनुमानपरिग्रहया स्थितं रुचिरया चिरयापि दिनश्रिया ॥ ६०१ ॥

---

एव गुहासु लीनं अन्धकारं रक्षति । ननु क्षुद्ररक्षणमनर्हमित्याशंक्यार्थान्तरं न्यस्यति-क्षुद्रेपीति । नूनं निश्चितं शरणं प्रपन्ने प्राप्ते क्षुद्रे नीचेऽपि उच्चैरुन्नतं शिरो येषां तादृशानां महतां अतीव अत्यन्तं ममत्वं ममायमित्यभिमानः भवति । अत्र दिवाकरादित्यादिनाऽभिहितो विशेषः क्षुद्रेऽपीत्यादिना सामान्येन समर्थित इत्यर्थान्तरन्यासोऽलंकारः । तत्प्रयोजितं त्रासनिमित्तकम् । ननु, अद्रिकर्तृकतत्परित्राणमप्युत्प्रेक्षितमुच्यते चेतनधर्मस्य परित्राणस्याचेतनेऽद्रावसम्भवादित्यत आह--सम्भावितेनेति । उत्प्रेक्षितेन प्रतिभासमानस्य प्रतीयमानस्य अस्य अद्रिकर्तृकपरित्राणस्य तद्रूपस्य वाक्यार्थस्य तत्समर्थनायाम् अद्रिकर्तृकपरित्राणसमर्थने । यत्नः अर्थान्तरन्यासरूपः ॥ ६०० ॥

अथ समासोक्तावुपमानविशेषोपादानेऽनुपादेयत्वं दोषः स चापुष्टार्थे पुनरुक्तत्वे वाऽन्तर्भवतीत्याह--साधारणेति । सदृशविशेषणबलादेव तस्य उपमानविशेषस्य अत्र समासोक्तौ अपुष्टार्थत्वं प्रतीतस्यापि पुनरुपादानं न प्रस्तुतार्थं पुष्णातीत्यपुष्टार्थत्वम् । उदाहरति--स्पृशतीति । हरविजयकाव्ये ग्रीष्मवर्णनम् तिग्मरुचौ सूर्ये ककुभो दिशः करैः स्पृशति सति विजृम्भिततापया विवृद्धतापया दयितयेव दिनश्रिया ग्रीष्मदिवसशोभया अतनुर्दीर्घो मानपरिग्रहो यस्यास्तथाभूतया स्थितमित्यन्वयः । करा रश्मयो हस्ताश्च तापो ज्वाला खेदश्च मानं परिमाणं कोपश्च किंभूतया चिरया दीर्घया चिरकालीनया च रुचिरया मनोहरयेत्यर्थः । अत्र समासोक्तौ श्लिष्टविशेषणबलेन लिंगविशेषबलेन च तिग्मरुचेर्नायकत्वेन ककुभां च नायिकात्वेनाभिव्यक्तिवत् ग्रीष्मदिवसश्रियोऽपि प्रतिनायिकात्वेनाभिव्यक्तिसम्भवाद्दयितयेत्यपुष्टार्थत्वं तं-

अत्र तिग्मरुचेः ककुभां च यथा सदृशविशेषणवशेन व्यक्तिवि-शेषपरिग्रहेण च नायकतया नायिकात्वेन च व्यक्तिः तथा ग्रीष्मदिवसश्रियोऽपि प्रतिनायिकात्वेन भविष्यतीति किं दयितयेति स्वशब्दोपादानेन ।

श्लेषोपमायास्तु स विषयः यत्रोपमानस्योपादानमन्तरेण साधारणेष्वपि विशेषणेषु न तथा प्रतीतिः । यथा—

स्वयं च पल्लवाताम्रभास्वत्करविराजिना ।
प्रभातसंध्येवास्वापफललुब्धेहितप्रदा ॥ ६०२ ॥ इति

अप्रस्तुतप्रशंसायामपि उपमेयमनर्थैव रीत्या प्रतीतं न पुनः प्रयोगेण कदर्थतां नेयम् । यथा—

---

देवाह–अत्रेति सदृशेति । तिग्मरुचेः करेण स्त्रीस्पर्शकारित्वं नायकोचितं विशेषणं ककुभां च पुरुषस्पृश्यत्वं नायिकायोग्यं विशेषणम्–व्यक्तीति । लिङ्गविशेषपरिग्रहणेन तिग्मरुचेः पुल्लिङ्गयोगेन ककुभां च स्त्रीलिङ्गयोगेन व्यक्तिः प्रतीतिः तथा तद्वत्–प्रतिनायिकात्वेनेति । अभिव्यक्तिरिति शेषः । स्वशब्देति । उपमानशब्दग्रहणेन ॥ ६०१ ॥

ननु स्पृशति तिग्मरुचौ इत्यत्र यथा दयिते दयितां करैः स्पृशति सति दयितान्तरस्य तापः तथा रवौ करैर्दिशः स्पृशति सति ग्रीष्मदिवसश्रियोऽपि ताप इत्येवं श्लेषात् श्लेषोपमैवेयं स्यान्न तु समासोक्तिः तथा चोपादेयमेव दयितयेति पदमित्यत आह श्लेषोपमायास्त्विति । श्लेषमूलकोपमायाः स विषयः तत्स्थले साधारणेष्वपि श्लिष्टेष्वपि न तथेति न पूर्वोदाहरणवत् स्फुटा प्रतिपत्तिः । पूर्वोदाहरणे उपमानस्योपादानं विनापि लिङ्गविशेषादिना यथोपमानस्य स्फुटा प्रतीतिर्भवति तथा नेति भावः । श्लेषोपमामुदाहरति–स्वयं चेति । नवमोल्लासे व्याख्यातम् । अत्र श्लेषोपमायां प्रभातसन्ध्येवेत्यस्योपादानं विना उपमानाप्रतीतेः ॥ ६०२ ॥

अप्रस्तुतप्रशंसायामपि साधारणविशेषणैः प्रस्तुतस्य प्रतीतौ पुनः स्वशब्दोपादानस्य यद्वैयर्थ्यं तदपुष्टार्थत्वमेव दोष इत्याह–अप्रस्तुतेत्यादि । उपमेयं प्रस्तुतं अनर्थैवेति । साधारणविशेषणबलात् इति समासोक्तिदूषणोक्तरीत्या । प्रतीतं अभिव्यक्तं कदर्थतां दुष्टतां पुनः प्रयोगेणापुष्टार्थतां न नेयं न प्रापणीयम् तेन स एव दोष इति भावः । तदुदाहर-

आहूतेषु विहङ्गमेषु मशको नायान् पुरो वार्यते
मध्येवारिधि वा वसंस्तृणमणिर्धत्ते मणीनां रुचम् ।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक् सामान्यमचेतनं प्रभुमिवानामृष्टतत्त्वान्तरम् ॥ ६०३ ॥

अत्राचेतनस्य प्रभोरप्रस्तुतविशिष्टसामान्यद्वारेणाभिव्यक्तौ न युक्तमेव पुनः कथनम् ॥

---

ति–आहूतेष्विति । अविवेकिनः प्रभोर्निन्द्येयम् । पादत्रये यत्रेति शेषः । यत्र सामान्ये विहंगमेषु पक्षिषु आहूतेषु आकारितेषु सत्सु पुरः अग्रे आयान् आगच्छन् मशकः मक्षिकातोऽप्यतिलघुः कीटविशेषः न वार्यते नोपरुध्यते तस्यापि विहंगमत्वात् तथा यत्र सामान्ये तृणमणिः मध्येवारिधि वारिधिमध्ये वा वसन् अतिशयेन वसन् मणीनां रत्नानां रुचं कान्तिं धत्ते स्वस्यापि मणित्वात् तथा यत्र सामान्ये खद्योतः कीटविशेषोपि तेजस्विनां अग्निसूर्यादीनां मध्ये प्रचलितुं गन्तुं न कम्पते न बिभेति स्वस्यापि तेजस्वित्वात् एतत्सामान्यं समानधर्मवत्त्वं धिक् कीदृशं अचेतनं विवेकशून्यं अत एव अनामृष्टं अनालोचितं तत्त्वान्तरं स्वरूपतारतम्यं येन तादृशम् कमिव अचेतनं अनामृष्टतत्त्वान्तरं प्रभुमिवेत्यर्थः । तृणापकर्षको मणिविशेषस्तृणमणिः । अत्र तादृशं सामान्यं धिगित्येतावतैवाविवेकिनः प्रभोरवगतिसम्भवात्पुनस्तदुक्तिरयुक्तेत्यपुष्टार्थत्वं पुनरुक्तत्वं वाऽप्रस्तुतप्रसंशायां दोषः । तदेवाह–अत्रेति । अप्रस्तुतं यद्विशिष्टं विशेषणयुक्तं सामान्यं तद्द्वारेण तन्मुखेन अभिव्यक्तौ प्रतीतौ सत्याम् ॥ ६०२ ॥

अलङ्कारदोषाणामुक्तदोषेष्वन्तर्भावमुपसंहरति–तदिति । तस्मात् एते उक्ताः अन्येऽपि रुद्रटाद्यैरुक्ताः एवंजातीयकाः उपमायामुपमाविरुद्धोक्तिर्यथा—

दिलीप इति राजेदुरिन्दुः क्षीरनिधाविव ।

इत्यत्र राजनि इन्दुतादात्म्यारोपः उपमाविरुद्धः । तथा समासोक्तौ नपुंसके नायकव्यवहारसमारोपः । यथा—

अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमा ।

इत्यस्य स्थाने—

ऐन्द्रीमुखं चुम्बतीदं रक्तं सच्चन्द्रमंडलम्–

इत्युक्तौ नपुंसके चन्द्रमण्डले नायकव्यवहारसमारोपः । एवं वि-

तदेतेऽलंकारदोषाः यथासम्भविनोऽन्येऽप्येवंजातीयकाः पूर्वोक्तैव दोषजात्याऽन्तर्भाविताः न पृथक् प्रतिपादनमर्हन्तीति सम्पूर्णमिदं काव्यलक्षणम् ॥

इत्येषमार्गो विदुषां विभिन्नोऽप्यभिन्नरूपः प्रतिभासते यत् ।
न तद्विचित्रं यदमुत्र सम्यग्विनिर्मिता संघटनैव हेतुः ॥ १ ॥

इति काव्यप्रकाशेऽर्थालंकारनिर्णयो नाम दशमोल्लासः ।
समाप्तश्चायं काव्यप्रकाशः ॥

---

रोधालङ्कारे भिन्नाधारयोर्विरोधवर्णनम् यथा—

याधर्मभासस्तनयापि शीतलैः स्वसा यमस्यापि जनस्य जीवनैः ।

इत्यादौ धर्मभासस्तनयात्वादीनां शीतलत्वादीनां विरोध उक्तः स च भिन्नाधारतयैव निर्देशान्न सम्भवति एकाश्रयत्वेनैव विरोधस्य निरूपितत्वात् । तदेतत्सर्वमनुचितार्थत्वादावन्तर्भावमर्हतीति स्वयमूहान्तदेवाह पूर्वोक्तयैवेति । सप्तमोल्लासोक्तयैव । काव्यं लक्ष्यते स्वरूपतो विशेषतश्च ज्ञाप्यतेऽनेनेति काव्यलक्षणं प्रकृतग्रन्थरूपं सम्पूर्णम् लेशतोऽपि न्यूनताविरहादिति भाव इति शिवम् ।

ननु पूर्वग्रन्थेषु सत्सु किमनेनेत्यत आह—इत्येष इति । इति एतदन्तः एषो मार्गः अद्भुतं वर्त्म विदुषां ध्वनिकारादीनां नानाग्रन्थतया विभिन्नोऽपि अनेकरूपोऽपि यत् अभिन्नरूपः एकरूपतया प्रतिभासते भाति न तद्विचित्रम् यत् यस्मात् अमुत्र ग्रन्थे सम्यग्विनिर्मिता संघटना विक्षिप्तस्य सुखावबोधायैकत्र संग्रहणं सैव हेतुः तद्ग्रन्थादेकादृशेना प्रतीतेः । कृतसर्वसंग्रहोऽयं ग्रन्थः अतो न तैः सिद्धिरिति भावः । अथवा—

कृतः श्रीमम्मटाचार्यवर्यैः परिकरावधिः ।
प्रबन्धः पूरितः शेषो विधायाल्लटसूरिणा इति ।
काव्यप्रकाश इह कोपि निबन्धकृद्भ्यां
द्वाभ्यांकृतेऽपि कृतिनां रसतत्वलाभः ।
लोकेऽस्ति विश्रुतमिदं नितरां रसालं
रन्ध्रप्रकाररचितस्य तरोः फलं यत् ॥ इति च प्राचीनसम्मत्या

महामतीनां प्रसरणहेतुरेव ग्रन्थो ग्रन्थकृताऽनेन—मम्मटेन कथमप्यसमाप्तत्वादपरेण च पूरितावशेषत्वात् द्विखण्डोऽपि अखण्डतया यद्भासते तत्र संघटनैव हेतुः न हि सुघटितस्य सन्धिबन्धः कदाचिदपि विलक्ष्यत इत्यर्थो ध्वन्यत इति शिवम् ॥ १ ॥

इति काव्यप्रकाशे नागेश्वरीटीकायां दशमोल्लासः समाप्तः ।

## टीकाकारपरिचयः ।

रसाब्धिवसुचन्द्रांके शके श्रावणकृष्णगे ।
चतुर्दश्यां बुधे पूर्णा हरिशङ्करसल्लिपिः ॥

यस्यासीत्प्रपितामहः सुधिषणो वंशीधरो यद्वशं
नीता गीरसनाङ्गणे नियमिता खेलत्यजस्रं मुदा ।
सान्वर्थश्च पितामहः सकरुणः श्रीबुद्धिनाथाभिध-
स्तस्यासीत्स दिगम्बरश्च जनको माता ह्युषा सुव्रता ॥ १ ॥

काशीपुरीमधिवसन् निखिलागमानां
वेत्ता समस्तभुवने यशसा नितान्तम् ।
नाम्नानुरूपवपुरुद्भटवाग्विलासः
शैवो गुरुः शिवकुमार इति प्रसिद्धः ॥ २ ॥

सर्वतन्त्रस्वतन्त्रश्च विख्यातः शिवशंकरः
यस्याग्रजस्तस्य कृतिः शिवयोः पादमंजरी ॥ ३ ॥

